# शिवतत्त्वरत्नाकरः

(प्रथमसंपुटम्)



प्राच्य विद्या संशोधनालयः
मैसूरुविश्वविद्यानिलयः, मैसूरु
१९६४

ORIENTAL RESEARCH INSTITUTE PUBLICATIONS
SANSKRIT SERIES 108

GENERAL EDITOR:
H. DEVEERAPPA, M.A.
*Director*

# ŚIVATATTVA RATNĀKARA

OF

BASAVARĀJA OF KELADI

Vol. I

EDITOR:
VIDWAN S. NARAYANASWAMY SASTRY
*Research Assistant*




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE, MYSORE
1964

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १०८

प्रधानसम्पादकः

एच्. देवीरप्प, एम्.ए.,

डैरेक्टर्

# शिवतत्त्वरत्नाकरः

केळदि बसवभूपालविरचितः

( प्रथमसम्पुटम् )

सम्पादकः

विद्वान् सु. नारायणस्वामिशास्त्री

रिसर्च् असिस्टेण्ट्




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः, मैसूरु

१९६४

# PREFACE

THE Śivatattvaratnākara is an encyclopedia in sanskrit verse, consisting of 108 Tarangas or sub-sections distributed under 9 Kallolas or main sections. Almost all branches of our ancient lore have been dealt with in this great work. The author mentions that the work was written in answer to his son's request to learn all knowledge (Sarvavidyā). While this claim is partly true, it must be said that the author's desire was to make known the achievements of his ancestors. The author of the work, Basava Rāja was a distinguished scholar and therefore has been successful in carefully fusing into the texture of the work, the chronicle of his glorious ancestry. In the work, the History of the Kings of Keladi is presented up to Somaśekhara and Channāmbā, the parents of Basava Rāja, the author of the present work, going back to the time of Chaudappa the founder of the Kingdom.

Basava Bhūpāla (1684 A.C. to 1710 A.C.) was the ruler of the Keladi Kingdom which flourished from about 1500 A.C. to 1763 A.C. in the area corresponding to the whole coast of Kanara from Goa in the North to Cannanore in the South as also parts of the Shimoga district of Mysore. Keladi was known as Ikkeri and also as Bednur and its rulers were great patrons of art, literature and architecture. The temples of Rāmeśwara and Vīrabhadra in Keladi, the Aghoreśvara temple at Ikkeri, the Devagaṅgā ponds at Nagar, the Campakesaras at Ānandapura bear ample testimony to their love of Art.

These rulers, apart from being great patrons of learning have produced several notable works both in Kannada and Sanskrit. Basava Bhūpāla who has also written *Subhāṣita Suradruma* in Sanskrit and *Sūktisudhākara* in Kannada was the most outstanding author among them.

This remarkable work is an encyclopædia which gives information on all the leading topics of learning such as History, Religion, Philosophy, Science and Literature. Some of the rare works mentioned and authorities cited on varied branches of knowledge in this work still remain to be traced. These indicate the keen interest evinced by

Basava Rāja to make his work, factual and authoritative. Rare indeed are works of this type. Some well-known encyclopædic works known to us are: The Mānasollāsa or Abhilaṣitārthacintāmaṇi of the Western Cālukya King Someśvara (1127 A.C. to 1138 A.C.) and the *Saugandhikā Pariṇaya* of Mummadi Krisna Rāja Wodeyar (1850 A.C.) written in Kannada. *The Saugandhikā Pariṇaya* draws most of its material from the *Sivatattva Ratnākara.*

The press copy of this work was prepared on the basis of the following manuscripts :

1. 'Ka'–S. P. 2557 belonging to the Manuscripts Library of the Institute.
2. 'Kha' SA. 46. belonging to the Manuscripts Library of the Institute.
3. 'Ga'–a paper manuscript from Madras Oriental Manuscripts Library.
4. 'Mu'–Edited by Sri B. Rama Rau, M.A., LL.B. and Vidwan P. Sundara Sastriar and published by Sri B. M. Nath & Co., Vepery, Madras.

Vidwan Sri S. Narayanaswamy Sastry, Research Assistant of the Oriental Research Institute, Mysore, prepared the press copy and went through the proofs of the whole work. Vidwan Sri R. Rama Sastry, Research Assistant of the Institute, prepared the detailed table of contents of the work and the Samuchitapāṭha since Sri S. Narayanaswamy Sastry retired from service.

Our thanks are due to the Curator, Madras Oriental Manucripts Library, for having given the manuscripts for collation work and to the Deputy Director, Government Branch Press, Mysore, for getting the work printed well in time.

H. DEVEERAPPA,
*Director.*

# भूमिका

महाशयाः ! एतत्प्राच्यविद्यासंशोधनालयतः प्रकटितायां संस्कृतग्रन्थमालायामिदंप्रथममेतादृशग्रन्थरत्नप्रग्रथनम् । विचित्रानेकरत्नानामाकरत्वात् समुद्रस्य रत्नाकर इति संज्ञावत् शिवेन परमात्मना साक्षात् परम्परया वा निर्मितानां तत्त्वरत्नानां प्रतिपाद्यविषयरूपाणामाकरत्वादस्य ग्रन्थस्य शिवतत्त्वरत्नाकर इत्यन्वर्था संज्ञा । लोके तावदेकैकं विषयमधिकृत्यैकैको ग्रन्थो रचितो दृश्यते । अयं तु सर्वेषामत्यन्तमावश्यकानामन्यत्र क्लेशेनावगम्यमानानां चतुर्दशभुवनवर्णनादीनां बहूनां विषयाणां सुबोधरीत्या ग्रथनरूपत्वात् विलक्षण एव भवति ॥

यद्यप्यत्र प्रतिपाद्या विषयास्तत्र तत्र पुराणेतिहासादिषु प्रसिद्धा एव। अथापि तावद्ग्रन्थपर्यटनं विनाऽनायासेनैकत्रैव तावतामपि विषयाणामवगन्तुमनुकूलत्वादयं ग्रन्थः संस्कृतवाङ्मयग्रन्थशिरोभूषणतामर्हतीत्युक्तिः केवलं नार्थवादरूपा । एतद्ग्रन्थकारेणापि "विचित्रनानाविषयाभिरामे" (१मे पुटे) इति प्रबन्धविशेषणं दत्तम् ॥

प्रबन्धे चास्मिन् नानाविषयवैचित्र्याणि च ३५८तमे पुटे—

"तैलजामरसम्भूय, भूपतिर्गजमारथ, ॥ ८ ॥
सभापतिर्गजोमूर्ख, पतङ्गदमरासभाः, ।
दाशीरथोभयत्यागी, रथभूकान्तगर्दभ, ॥ ९ ॥
गजमूर्खसभायाति, भानुवारादिषु क्रमात् ।
मृत्युर्वधः श्रियश्चैव सुवार्ता विजयः शुभम् ॥ १० ॥
सन्तापः कलहश्चैव सृगालक्षुतगौलिकाः ।" इति ।

तथा —४२८ प्रभृति ४३८ अन्तेषु पुटेषु—

"चैत्रवैशाखमासौ द्वौ नभोभाद्रपदावपि ॥ ४५ ॥

माघफाल्गुनमासानामेका पद्धतिरीरिता ।
शून्यं कालं तथावर्तममृतं रोगसंज्ञिकम् । ॥ ४६ ॥
पञ्चवेलास्तु कथिता घटिके द्वे मुहूर्तकम् ।"

इत्यादीनि च बहूनि दृश्यन्ते ॥

किञ्चैकैकस्य विषयस्य एकैकस्मिन्नेव ग्रन्थे सम्पूर्णतया विद्यमानत्वेऽपि द्वित्रेभ्यो ग्रन्थेभ्यः किञ्चित्किञ्चिदुपसङ्गृह्य ग्रथनरूपं वैचित्र्यं च बहुत्र दृश्यते—यथा भूरादिलोकवर्णनस्य भारताद्यनेकपुराणेभ्यः सङ्ग्रहणम् । कामशास्त्रस्य शृङ्गारतिलकरतिरहस्याभ्यामित्यादि । एवं सङ्गीत-नृत्त-तालादिप्रकरणेषु तत्र तत्र स्पष्टीभविष्यति । तत्तच्छास्त्रेभ्यो विषयान् सङ्गृह्य यथायोगं घटनरूपं महद्वैचित्र्यं चानितरसाधारणं दृश्यते ॥

विस्तृतविषयगर्भत्वादयं ग्रन्थः सोमेश्वरकृतान्मानसोल्लासनाम्नः संस्कृतग्रन्थात्, अनेकविषयगर्भत्वाच्च श्रीतत्त्वनिधिसंख्यारत्नमालाद्यनेकसंस्कृतकन्नडग्रन्थप्रणयनप्रकटितनिजमनीषा--वैभवेन मैसूरुमहाराजेन मुम्मडि श्रीकृष्णराजमहाशयेन विरचितात् सौगन्धिकापरिणयनाम्नः कन्नडग्रन्थात् प्रशस्यतमो भवति ॥

एतादृशो विश्वकोशस्थानीयोऽयं ग्रन्थः सर्वशास्त्रविशारदेन सर्वज्ञेनापि नैकेन कर्ता रचयितुं शक्य इति तत्तच्छास्त्रविदुषामनेकेषां पण्डितानां सहायेन सङ्कलितो भवेदिति बहवः सन्दिहन्ति । ग्रन्थकृतोऽस्य बसवक्षोणीपालस्य सौशील्यौदार्यपाण्डित्याद्यनेकगुणगणपर्यालोचनायां तेनैव सङ्कलित इति वयं भावयामः । तदुक्तं वीरशैवानन्दचन्द्रिकायाम्—

"नानादेशसमागतान् कविवरान् षट्छास्त्रवेत्तॄन् बुधान्
नीतिज्ञानपि वैणिकान् समुचितैर्वाचां प्रपञ्चैः स्वयम् ।
तत्तच्छास्त्ररहस्यतत्त्वकलनासंसूचकैः प्रीणय-
न्निष्टार्थार्पणतो ननन्द बसवक्ष्मापालचूडामणिः ॥" इति ॥

अस्य ग्रन्थस्य कर्ता केळदिराजवंशीयः हिरियबसवप्पनायक इति प्रसिद्धो बसवभूपालः । अयं तत्पारम्पर्यक्रमागतस्य

हिरियसोमशेखरनायकस्य भार्यायाः स्वपत्युर्मरणानन्तरं तद्राज्येऽभिषिक्तायाश्चन्नम्माजीनाम्न्याः स्वीकृतः पुत्रः। तत्कथा चेत्थं दृश्यते ॥[1]

सोमशेखरनायकस्य ज्येष्ठभ्राता भद्रप्पनायकः। तद्भार्या सिद्धम्माजीनाम्नी। तस्या अनुजा गौरम्माजी। तत्पतिर्मरियप्पनायको हानगल्लुग्रामवासी अत्यन्तं शिवे भक्तः। तस्य च स्वप्ने श्रीबसवेश्वरः समागत्य 'अहं तावककुले जनित्वा युवाभ्यां संवर्धितोऽनन्तरं केळदिराजकुले चन्नमाम्बायाः पुत्रो भूत्वा वीरशैवमतमुद्धरिष्यामि' इत्यवादीत्। अनन्तरं तथैव मरियप्पभार्याया गौरम्मनाम्न्या उदरे जनिमभजत। भद्रप्पनायकश्च स्वयमपुत्रः हलिकीपतेः (षड्डकस्य) मरियप्पनायकस्य पुत्रं बसवनामानं स्वपुत्रत्वेन पुपोष। अनन्तरं सोमशेखरनायकभार्या चन्नमाम्बा तमेव पुत्रत्वेन स्वीकृतवतीति। तदुक्तं वीरशैवानन्दचन्द्रिकायां क्रियाकाण्डे—

स्वप्ने जातु स हानगल्लुबसवाधीशोऽब्रवीद्वत्सलो
भो मर्यप्प सुशील तावककुले प्राप्योदयं वर्धयन्।
तद्वंशं केळदीमहीपतिकुलं स्थानं मदीयं स्थिरं
यास्याम्युन्नतवीरशैवमतमुद्धर्तुं धरित्र्यामिति ॥
एतस्मादनु हानगल्लुबसवाधीशः शिवार्चापर-
श्रीमर्यप्पकुले प्रपद्य जननं तत्राभिवर्ध्याधिकम्।
राज्ञां वर्धयितुं कुलं च बसवक्ष्मापाख्यया विश्रुत-
श्चन्नाम्बातनयोऽभवद्रचयितुं श्रीवीरशैवोन्नतिम् ॥ इति ॥

अयं बसवभूपालः स्वकाले इष्टापूर्तादिसद्धर्माचरणे सततं कृतादरो वर्णाश्रमाचारपरिपालनबद्धदीक्षश्च स्वराज्यं सम्यक् पालयन्नासीत्[2]। एनं महाराजमधिकृत्य विरचिते सेवन्तिकापरिणयाख्यनाटके तत्कर्त्रा श्रीचोक्कनाथकविनापि—

---

[1] केळदिनृपविजये १३१तमे पुटे। [2] अस्य राज्यपालनकालः शालिवाहनशकवर्षे १६२० प्रभृति १६३७ पर्यन्त; इति केळदिनृपविजये विद्यते।

"यस्यौदार्यममर्त्यभूरुहयशोज्योत्स्नापयोदागमः"
(से. १-११)

"वितरणमुखा गुणगणा यस्मिन्निवसन्ति कृतसमयबन्धाः"
(से. १-१२)

इत्यादिनास्यौदार्यादयो गुणाः सम्यगवर्णिषत॥

किंच न केवलमयमेवैतादृशगुण आसीत्। परं तु तद्वंशीयाः प्राचीनाश्चौडप्पनायकप्रभृतयः, अर्वाचीनाः सोमशेखरनायकाद्याः सोमशेखरनायकान्ताश्च सर्वेऽपि राजानः एतादृशा एवेति तत्तच्चरित्रपर्यालोचनायामवगम्यते। तदुक्तमस्मिन्नेव ग्रन्थे-२७८ तमे पुटे—

"अनन्तरं मल्लराष्ट्रे मन्नाम्ना ख्यातिमेयिवान्।"

इत्यारभ्य

"तेषां राष्ट्रे कृतयुगधर्मश्च स्थितिमेष्यति।"

इत्यन्तैश्चतुर्भिः श्लोकैः। तथा ३१२तमे पुटे—

"मल्लनामाङ्कदेशोऽयं यत्र मत्पूर्वजा जनाः।
धर्मतेजोयशोभाजो धरणीमन्वपालयन्॥" इति।

६६०तमे पुटे च—

[1] "तत्र शृङ्गपुराधीशस्वामिनां मठमातनोत्।
अग्रहारं च तत्रैव ब्राह्मणानामकल्पयत्॥
भूरुद्रास्पदमत्यर्थं महान्तं मठमातनोत्।
तेषामनितरापेक्षं भुवं भूयो वितीर्णवान्॥" इति च।

३१४तमपुटमारभ्य केळदिवंशपरम्परा। वनवासदेशकुटजाद्र्योर्मध्यवर्तिनि मल्लदेशे केळदिनामकं नगरमस्ति। तत्र बसवम्मनाम्न्या

---

[1] अत्र च केळदिराजपरम्परायां षष्ठेन वेङ्कटपतिनायकेन शृङ्गेरिमठमधिष्ठितेभ्यः श्रीसच्चिदानन्दभारतीस्वामिभ्यः शालिवाहनशकवर्षे १५५१तमे विभवसंवत्सरीयपुष्यमासे कृतस्य दानस्य, तत्पौत्रेण वीरभद्रनायकेन सप्तमेन शा. श. १५५२तमे शुक्लसंवत्सरीयपुष्यमासे विलिख्य दत्तं ५४संख्याकं ताम्रशासनं शृङ्गेरिमठे विद्यते। उपलक्षणमेतद्बहूनां शासनानाम्॥

स्वभार्यया सह गार्हस्थ्यं धर्ममाचरन् बसवो नाम शिवभक्त आसीत् । तस्य चत्वारस्तनया आसन् । कालक्रमेण बसवः, तत्पुत्रेषु द्वौ च शिवसायुज्यमगमन् । अवशिष्टौ चौडभद्रनामानावुभावपि स्वमात्रा सम्यक् परिपोषितौ कृतविवाहमङ्गलौ च सुखमवर्धेताम्। अनन्तरं श्रीरामेश्वरानुग्रहेण सम्प्राप्तनिधौ चौडे परिमितां सेनां सङ्गृह्य स्वविक्रमेण परान्निगृह्णति सति अस्य वृत्तान्तं श्रुत्वा सन्तुष्टः सार्वभौमः (हस्तिकोणनगरवासी विजयनगरराजपरम्परायामेकोनविंशः कृष्णदेवरायः)[1] तमानाय्य तद्वृत्तान्तमखिलं श्रुत्वा तस्मै 'केळदिचौडप्पनायकः' इति नामधेयं मल्लदेशं च दत्वा प्राहिणोत् । 'अस्य राज्यपरिपालनकालः शालिवाहनशकवर्षे १४२२ प्रभृति १४३६ पर्यन्तः' इति केळदिनृपविजये दृश्यते। एतदाद्यास्तत्परम्परागताः सर्वेऽपि राजानः स्वयं वीरशैवमतानुयायिनोऽपि "विशुद्धवैदिकाद्वैतसिद्धान्तप्रतिष्ठापकाः" इति बिरुदाङ्किता इति शृङ्गेरिमठस्थितशासनेभ्योऽवगम्यते। इदं चैतद्वंशीयानां राज्ञामितरापेक्षया वैशिष्ट्यम् ॥

अनेन बसवभूपालेन संस्कृतभाषायां शिवतत्त्वरत्नाकरः, सुभाषितसुरद्रुमः, संस्कृतकन्नडोभयभाषामिश्रणेन सूक्तिसुधाकर इति च सर्वविद्वज्जनमनस्तुष्टिकरास्त्रयो ग्रन्थाः, वीरशैवानन्दहेतुभूता सिद्धान्तशिखामणिग्रन्थव्याख्या च विरचिता ज्ञायन्ते। तदुक्तं वीरशैवानन्दचन्द्रिकायाम्—

'सुधामधुरया गिरा बसवभूमिपालाग्रणीः
सुभाषितसुरद्रुमं सशिवतत्त्वरत्नाकरम् ।
सुधाकरमचीकरत्तदनु सूक्तिशब्दादिमं
कृतित्रितयमप्यदः सरससन्मनस्तुष्टये ॥

श्रीसिद्धान्तशिखामणिनाम्नो ग्रन्थस्य विरचयन् व्याख्याम् ।
श्रीवीरशैववर्यानानन्दयति स्म बसवभूमीन्द्रः ॥' इति ।

तेषु शिवतत्त्वरत्नाकररचनाकालः शा.श. १६३१, क्रि. श. १७०९ तमो वत्सर इति ।

---

[1] २९८तमे पुटे द्रष्टव्यम् ।

'श्रीमत्युन्नतशालिवाहनशके चन्द्राग्न्यृतुक्ष्मासिते
वर्षे विश्रुतसर्वधारिणि तथा मासे नभस्याह्वये।
वारे निर्जरवैरिणामपि गुरोः श्रीपौर्णमासीतिथौ
ग्रन्थोऽयं परिपूर्णतामवहत प्रख्यातसारार्थयुक्॥'

इत्येवमेतद्ग्रन्थस्थितश्लोकेन सुस्पष्टमवगम्यते। एतादृशग्रन्थरचनया चायं भूपतिः सकलसूरिनिचयहृदयाह्लादनेन 'सूरिनिकरकल्पद्रुमः' इति बिरुदसमलङ्कृतश्चासीत्॥

इतः पूर्वमयं ग्रन्थः १९२७तमे क्रिस्ताब्दे बि. रामराव्, एं.ए., एल्एल्.बि., विद्वान् पि. सुन्दरशास्त्री इत्येताभ्यां मङ्गलपुर्यां (Mangalore) मुद्रापयित्वा मद्रपुरीतः (Madras) प्रकाशित आसीत्। इदानीं तस्य दुर्लभत्वात् पुनर्मुद्रणे यत्न आस्थिषत। तदर्थमुपलब्धाभिः तिसृभिर्लिखितमातृकाभिः, मुद्रितपुस्तकेन, यथोपलब्धमूलग्रन्थैश्च सह सम्यक् परिष्कृत्य विशिष्य तत्र तत्र शिरोलेखनपूर्वकं सम्मुद्र्यमाणस्यास्य ग्रन्थस्य बृहत्त्वात् वाचकानुरोधाच्च भागद्वयात्मना प्रकटनमुचितमिति कृत्वा षष्ठकल्लोलस्य त्रयोदशतरङ्गान्तः प्रथमो भाग इदानीं प्रकाशमनीयत। प्रकटीकरिष्यते चाचिरादेवावशिष्टो द्वितीयोऽपि भागः॥

अस्मिन् प्रथमभागे चौडप्पनायकप्रभृतीनां सोमशेखरनायकपर्यन्तानां शालिवाहनशकवर्षेषु १४२२तमवत्सरप्रभृति १६८५ तमवत्सरपर्यन्तं केळदिराज्यं परिपालितवतामष्टादशानां राज्ञां मध्ये सप्तमस्य वीरभद्रनायकस्य पट्टाभिषेकान्तः कथाभागो विद्यते। तथाहि—

(१) चौडप्पनायककथारम्भः ३१४तमे पुटे। तस्य पट्टाभिषेकः, सदाशिव-भद्रनाम्नोः तत्पुत्रयोर्जननं च ३२८तमे पुटे।

(२) सदाशिवनायकस्य पट्टाभिषेकः ३२८ तमे पुटे। तत्पुत्रयोर्दोड्डसङ्कण्णनायक-चिक्कसङ्कण्णनायकयोर्जननम् ३३३तमे पुटे।

(३) भद्रभूपस्य (इम्मडि सदाशिवनायकस्य) पट्टाभिषेकः ३४२तमे पुटे।

(४) दोड्डसङ्कण्णनायकस्य पट्टाभिषेकः, तदनुजस्य चिक्कसङ्कण्णनायकस्य यौवराज्याभिषेकश्च ३४३तमे पुटे। दोड्डसङ्कण्णनायकस्य रामराज-वेङ्कटप्पनायकयोः पुत्रयोर्जननम् ३५९तमे पुटे।

(५) चिक्कसङ्कण्णनायकस्य पट्टाभिषेकः ४००तमे पुटे। तस्य सिद्धप्पनायकाभिधपुत्रोत्पत्तिः ४४९तमे पुटे।

(६) वेङ्कटप्पनायकस्य दोड्डसङ्कण्णनायकपुत्रस्य पट्टाभिषेकः, रामराजस्य यौवराज्याभिषेकश्च ४४९तमे पुटे। वेङ्कटप्पनायकपुत्रस्य भद्रप्पनायकस्य, तत्पुत्रस्य वीरभद्रनायकस्य च जननम् ६५८तमे पुटे।

(७) वीरभद्रनायकस्य पट्टाभिषेकः ६६२तमे पुटे। अत्रैव दोड्डसङ्कण्णनायकसन्तानपरम्परासमाप्तिः। पूर्वभागकथासमाप्तिश्च।

(८) द्वितीयभागे शिवप्पनायकादारभ्य हिरियबसवप्पनायक-(बसवभूपाल) पर्यन्तानां राज्ञां वृत्तान्तो वर्णितः। तत्क्रमस्तत्र स्पष्टयिष्यते।

इयं परम्परा प्रकृतग्रन्थरीत्या प्रदर्शिता। वीरशैवानन्दचन्द्रिकायां केळदिनृपविजये च तृतीयं भद्रभूपं परित्यज्य चिक्कसङ्कण्णनायक-वेङ्कटप्पनायकयोर्मध्ये रामराजनायकः प्रवेशितः। सोऽत्र युवराजेति सूचितः। वेङ्कटप्पनायकरामराजनायकयोर्ज्येष्ठकनिष्ठभावव्यत्यासश्च विद्यते। अत्र परम्पराघटकबसवभूपालकृतैतद्ग्रन्थरीतिरेवादरणीयेति प्रतिभाति॥

प्रतिपाद्यविषयाश्च ग्रन्थारम्भस्थविषयसूचिकायां अनुपदनिर्दिष्टविस्तृतविषयानुक्रमणिकायां च सम्यक् स्पष्टीभविष्यन्तीत्यत्र पृथङ्नानूद्यन्ते॥

एतद्ग्रन्थशोधनार्थमादृता लिखितकोशास्त्रयः। एको मुद्रितश्च। तेषु--

एतत्प्राच्यविद्यासंशोधनालयस्थितः (SP-2557) तालपत्रात्मकः नन्दिनागरीलिपिः षष्ठकल्लोलीयदशमतरङ्गान्तः शुद्धो मध्ये क्वचिल्लुप्तपत्रश्च क-संज्ञक एकः।

कागदपत्रात्मक आन्ध्रलिपिः प्रायः शुद्धोऽसमग्रः ख-संज्ञकोऽपरः (SA-46) एतत्कोशागारस्थः।

मद्रपुरीस्थप्राच्यलिखितपुस्तकालयस्थः आन्ध्रलिपिः कागद-पत्रात्मकः शुद्धो भागचतुष्टयात्मकस्तृतीयो ग-संज्ञकः।

मुद्रितकोशश्चतुर्थः॥

एतद्ग्रन्थान्तर्गतपाठपरिष्करणार्थमादृता मूलग्रन्थाः, तेषां संज्ञाक्षरविवृतिश्चैवम्—

१. पु-पा—पुराणपाठः। (महाभारते भीष्मपर्व, विष्णुपुराणम्, गरुडपुराणम्, कूर्मपुराणम्, स्कन्दपुराणम्, पद्मपुराणम्, लिङ्गपुराणम्.)

२. बृ-सं—बृहत्संहिता।

३. नर-च—नरपतिचर्या।

४. मान—मानसोल्लासः। (अभिलषितार्थचिन्तामणिः)

५. सं-र—सङ्गीतरत्नाकरः।

६. अ-र, अन—अनङ्गरङ्गः।

७. र-र—रतिरहस्यम्।

८. सङ्गीतसमयसारः।

९. (बृ-सं)उ-वि—उपवनविनोदः।

१०. सङ्गीतदर्पणः।

११. वृक्षायुर्वेदः।

१२. सङ्ग्रामविजयः।

१३. सोमोत्पत्तिः।

१४. विद्यारण्यकालज्ञानम्।

१५. विद्यारण्यशकः।

१६. पितामहसंहिता।

१७. शिल्परत्नम्।

१८. (बृ-सं) दका—दकार्गलम्।

१९. वीरशैवाचारकौस्तुभः।

२०. सौगन्धिकापरिणयः ।

२१. शकुनशास्त्रम् ।

२२. स्वप्नाध्यायः ।

२३. वीरशैवानन्दचन्द्रिका ।

तत्तत्कल्लोलान्ते ग्रन्थकृता निर्दिष्टेषु ग्रन्थेषु केचिदेत्रोपलभ्यन्ते । एवं मुद्रणानुकूलमातृकालेखने मातृकान्तरैस्तत्तुलने च विदुषां पि. श्रीमरिबसवाराध्यानां साहाय्यकं लब्ध्वा तत्र तत्र श्लोकार्थस्फुटीकरणाय विलिखितैः प्रस्तारैः विस्तृतविषयसूच्या विशेषपदानुक्रमणिकया च समलङ्कृत्य प्रकाशितोऽयं ग्रन्थः—

"नीतिं नीतिपरा विलोक्य सुकलाभेदान्विनोदार्थिनः
तन्त्राण्यत्र च तान्त्रिका सुमहितान् योगांश्च योगेप्सवः ।
मोक्षं चापि मुमुक्षवो बत जना जानन्त्विति प्रेक्षया
ग्रन्थः सोऽयमुदाररीतिरधुना निर्मातुमारभ्यते ॥" (१-२-१२)

इति ग्रन्थोक्तप्रकारेण सर्वेषामपि विदुषां तत्तदभिलषितविषयप्रतिपादनेनात्यन्तमाह्लादं जनयन् सर्वादरणपात्रं भूयादित्यभ्यर्थयन्

सु. नारायणस्वामिशास्त्री

# विषयानुक्रमणिका



## प्रथमकल्लोले

### प्रथमस्तरङ्गः

(सकलविद्योद्देश)

## तृतीयस्तरङ्गः

(अनादिभक्तनिरञ्जनजङ्गमसृष्टिक्रमवर्णनम्)



## चतुर्थस्तरङ्गः

(शून्यनिष्कलमहालिङ्गादिसृष्टिक्रमनिरूपणम्)

## षष्ठस्तरङ्गः

(नादतत्त्वत्रयद्विपञ्चाशन्मूर्तिभेदप्रदर्शनम्)

## सप्तमस्तरङ्गः

(विराट्पुरुषादिमूर्तित्रयस्वरूपतत्त्वप्रभेदपञ्चीकरणविभागप्रदर्शनम्)

---

## द्वितीयकल्लोले

### प्रथमस्तरङ्गः

(कालाग्निरुद्रनरककूश्माण्डरुद्रलोकानुवर्णनम् )

## पञ्चमस्तरङ्गः

### (मेरुवर्णनम्)

## सप्तमस्तरङ्गः

(नवखण्डविभागवर्णनम्)

## अष्टमस्तरङ्गः

(शाकद्वीपादिकटाहान्तवर्णनम्)

---

## तृतीयकल्लोले

### प्रथमस्तरङ्गः

(मेघाश्रयग्रहलोकवर्णनम्)

| विषयाः | पृटसं. | श्लो. सं. |
|---|---|---|
| ऐन्द्र्यादिदिग्भेदेन विद्युतो फलभेदः .... | 136 | 50-52 |
| सततं गर्जतां मेघानां प्रभूतजलदायित्वं, प्रथमविद्युद्वीक्षणे दिगादिपर्यालोचनस्यावश्यकर्तव्यता च .... | ,, | 53½ |
| विद्युतो मेघानां मार्गदर्शकचक्षुस्स्थानीयत्वं, मदोन्मत्तमेघानां गर्जनकर्तृत्वं, विद्युदीशमेघानां विना गर्जनं प्रभूतजलवर्षणं सुभिक्षदेशानुगुणतया विद्युद्गमनं च .... .... | ,, | 54-55½ |
| ज्येष्ठमासीयशुभाशुभफलावहसूचकपरिस्थितिः, तत्र ज्येष्ठशुक्लतृतीयादौ प्रथमतः चन्द्रनिरीक्षणेन स्वात्यन्तदशनक्षत्रेषु स्तनिते मेघगर्भपातः .... | 137 | 56-57½ |
| ज्येष्ठपूर्णिमायां मूलर्क्षे वृष्टिसम्भवे मासद्वयमनावृष्ट्या भूतले छिद्रोत्पत्तिः .... .... | ,, | 58½ |
| भानौ रोहिणीमध्यभागे वृष्टिसम्भवे मासद्वयमनावृष्टिः, भयङ्करेतिबाधासम्भवश्च ... .... | ,, | 59 |
| अतिक्रम्यज्येष्ठमासं पूर्वाषाढादिनक्षत्रेषु महावृष्टिसम्भवः, ज्येष्ठकृष्णपक्षे धनिष्ठया सह श्रवणयोगे मेघानां सुगर्भैः सुवृष्ट्या शुभावहत्वं च .... | ,, | 60½ |
| ज्येष्ठाषाढयो रोहिणीयोगस्तस्य अभ्रत्वसाभ्रत्वाभ्यां क्रमादवृष्टिवृष्टिकारणत्वं, जलपाततदभावाभ्यां क्रमात् सुभिक्षभयहेतुत्वं च .... .... | ,, | 61-62 |
| वृष्टिपातस्य प्रथमादियामभेदेन शुभाशुभफलभेदः, सूर्यचन्द्रयोः क्रमात् ज्येष्ठामाद्वितीययो रक्तवर्णदर्शनतो वृष्टिनिर्णयश्च .... .... | ,, | 63-66 |
| सूर्यचन्द्रयोर्गतिविशेषेण कालस्योत्तममध्यमनीचभावः .... | 138 | 67 |
| आर्द्रायां वृष्टिपाते तस्य कालस्य शुभावहत्वं, ज्येष्ठमासे मृगादिमूलपर्यन्तनक्षत्रेषु नैर्मल्ये वृष्टिलाभः, ज्येष्ठोपसंहारः, आषाढोपक्रमश्च .... .... | ,, | 68-69 |
| आषाढे नवम्यां स्वातीयोगे वृष्टिसम्भवः, तत्रत्यमेघविद्युदादीनां धान्योद्भवकारणत्वं च .... | ,, | 70 |

## तृतीयस्तरङ्गः

### (गुह्यकादिलोकसूर्यरथगतिवर्णनम्)

## चतुर्थस्तरङ्गः

### (सूर्यादिगतिभेदनिरूपणम्)

[1] विषयोऽयमत्राप्रकृत इति भाति।

## पञ्चमस्तरङ्ग:

### (सुवर्लोक-महोलोक-जनोलोकवर्णनम्)

## षष्ठस्तरङ्गः

(तपोलोक-सत्यलोक-विष्णुलोकवर्णनम्)

## सप्तमस्तरङ्गः

(शिवलोकादिकटाहान्तवर्णनम्)

## चतुर्थकल्लोले

### प्रथमस्तरङ्गः

(सामान्यतो नदीदेशादिवर्णनम्)

## द्वितीयस्तरङ्गः

(प्रधानशैलतीर्थक्षेत्रवर्णनम्)

| विषया: | पृष्ठसं. | श्लो. सं. |
|---|---|---|

## चतुर्थस्तरङ्गः

(चतुर्वर्णधर्म-ब्रह्मचारिधर्मवर्णनम् ).

## पञ्चमस्तरङ्गः

(गृहस्थ-वानप्रस्थ-सन्न्यासिधर्मवर्णनम्)

## दशमस्तरङ्गः

### (कलिधर्मवर्णनम्)

## पञ्चमकल्लोले

### प्रथमस्तरङ्गः

(कुटजाद्रिवर्णन-वयस्स्तम्भ-कालवञ्चन-मृतसञ्जीविनी-पादुकागत्य-दृश्यकरण-परकायप्रवेशादिनिरूपणम्)

## तृतीयस्तरङ्गः

### (शुभाशुभस्वप्नफलनिरूपणम्)

## चतुर्थस्तरङ्गः

### (निधिचिह्नाञ्जनसाधारणराजनीतिवर्णनम्)

## पञ्चमस्तरङ्गः

(सदाशिवनृपचरित्र–मायोपवर्णनम्)

## षष्ठस्तरङ्गः

(राजगुण-करादान-दुर्गलक्षण-बलानुवर्णनम्)

## सप्तमस्तरङ्गः

(शक्तित्रय-दोड्डसङ्कण्णनायकवृत्तान्तवर्णनम्)

## अष्टमस्तरङ्गः

## ( शकुनकथनम् )

* क्षत्रियश्वगमने फलप्रतिपादकग्रन्थो मातृकासु नोपलभ्यते ।

## नवमस्तरङ्गः

### (दोड्डसङ्कण्णनायकयात्रावृत्तान्त-खड्गलक्षणकथनम्)

## दशमस्तरङ्गः

### (देवताप्रतिष्ठाकाल-गृहनिर्माणादिनिरूपणम्)

## एकादशस्तरङ्गः

(पट्टाभिषेकविधिसन्धिविग्रहयानस्वरूपवर्णनम्)

## द्वादशस्तरङ्गः

(आसनद्वैधीभावसमाश्रयचतुरुपायवर्णनम्)

## पञ्चदशस्तरङ्गः

### (राज्यसप्ताङ्गकथनम्)

———

## षष्ठकल्लोले

### प्रथमस्तरङ्गः

(पुरभवननिर्माणकथनम्)

## द्वितीयस्तरङ्गः

(वर्णसंयोजन–चित्रलेखन–प्रतिमालक्षणनिरूपणम् )

## तृतीयस्तरङ्गः

### ( नाट्यक्रमनिरूपणम् )

## चतुर्थस्तरङ्गः

(भरतेरितशीर्षादिकण्ठान्ताभिनयनिरूपणम्)

* इतः परं परावृत्तादयः सप्त शिरोभेदाः ग्रन्थे नोपलभ्यन्ते ।

## पञ्चमस्तरङ्गः

(हस्ताभिनयवर्णनम्)



## षष्ठस्तरङ्गः

(वक्षःप्रभृतिपादान्ताभिनयस्थानचरीमण्डलभेदवर्णनम्)

## सप्तमस्तरङ्गः

(नादादिगमकान्तनिरूपणम् )

## अष्टमस्तरङ्गः

(जात्यादिकाङ्गगायकलक्षणनिरूपणम्)

## नवमस्तरङ्गः

### ( तालप्रस्तारादिवाद्यादिवर्णनम् )

## दशमस्तरङ्गः

(उपवननिर्माण-जलभूमिपरीक्षावर्णनम्)



* विषया इमे नृत्यप्रकरणे सम्बन्धयोग्याः ।

## एकादशस्तरङ्गः

(तरुचिकित्सा-पोषण-विचित्रीकरण-दोहदवर्णनम्)

## द्वादशस्तरङ्गः

### (कामशास्त्रे जातिस्वभावगुणदेशधर्मचेष्टादिनिरूपणम्)

## त्रयोदशस्तरङ्गः

(बाह्यरतकरणभेदयौवनस्थिरीकरणादिवेङ्कटप्पनायकचरित्रवर्णनम्)

इति शम्

एतत्संस्थायां प्रथमोपसंशोधकेन विदुषा

आर्. रामशास्त्रिणा

सङ्कलितेयं विषयानुक्रमणिका.

# शिवतत्त्वरत्नाकरीयकतिपयसमुचितपाठान्तरसूची

| पृष्ठसं. | श्लोकसं. | मुद्रितपाठाः | | पाठान्तराणि |
|---|---|---|---|---|
| 9 | 100 | (गलितः पाठः) | .... | ततः ससोत्तरशततमे मण्डपलक्षणम् । तथा दीक्षाविधानं च लिङ्गस्य च समर्पणम् ॥ १०० ॥ |
| 12 | 6 | रेवणासिद्धराट् | .... | रेवणः सिद्धराट् |
| ,, | ,, | पूजिताचार्यकः | .... | पण्डिताचार्यकः |
| ,, | 7 | वीरश्रीनपरः | .... | वीरश्रेन्नपरः |
| 13 | 12 | योगांश्च योगेप्सवः | .... | भोगांश्च भोगेप्सवः |
| ,, | 15 | दूषणगणानिह | .... | दूषणलवानिह |
| ,, | ,, | सुगणाः | .... | सुगुणाः |
| 14 | 19 | महीश्वर | .... | महेश्वर |
| 16 | 36 | षट्कतः | .... | षट् तथा |
| ,, | 38 | पूर्वोत्तरा चेति विभेदतः | .... | प्रोक्ता पूर्वोत्तरविभेदतः |
| 17 | 50 | पराणि वै | .... | कराणि वै |
| ,, | 60 | विश्वासं | .... | निःश्वासं |
| 29 | 10 | ब्रह्म स्वयं नादिं भजेद्यतः | .... | ब्रह्म तदनादि भवेद्यतः |
| 38 | 32 | सर्वंदेवोत्तमा तथा | .... | सर्वे देवोत्तमास्तथा |
| ,, | 37 | पत्तिकायां | .... | पट्टिकायां |
| 46 | 76 | तरोर्मूलं मकारो | .... | तरोर्मूलमकारो |
| 51 | 23 | पर्यायवाचकौ | .... | पर्यायवाचिका |
| 52 | 28 | ,, | .... | ,, |
| ,, | 32 | ,, | .... | ,, |

| पुटसं. | श्लोकसं. | मुद्रितपाठः | | पाठान्तराणि |
|---|---|---|---|---|
| 53 | 34 | महादैर्घ्य | .... | महादीर्घं |
| ,, | 39 | पर्यायवाचकौ | .... | पर्यायवाचिका |
| 56 | 6 | राजन्यः कृतः | .... | राजन्यकः कृतः |
| 63 | 3 | अधुना भूतसङ्घानां ब्रह्माण्डस्य | | अधुना भूतसम्भूतब्रह्माण्डस्य |
| 64 | 9 | चेत्येवं मानविभेदतः | .... | स्यादेवं मानमुदाहृतम् |
| ,, | 17 | ऐन्द्रियकस्तु सः | .... | ऐन्द्रियकः स्मृतः |
| 65 | 18 | तिर्यग्योनिः स उच्यते | .... | तिर्यग्योनिः स पञ्चमः |
| 66 | 34 | दशकोटिवाः | .... | दशकोटयः |
| 67 | 42 | अमत्यष्टासु भीभत्साः | .... | अमन्त्यष्टासु बीभत्साः |
| ,, | 45 | त्रयस्त्रिंशत्पुटेष्वधः | .... | त्रयस्त्रिंशत्पुरीष्वधः |
| 70 | 10 | यातनात्मनां | .... | यातनात्मिकाः |
| 71 | 1 | ग्रहकुम्भीरनक्रास्याः | .... | ग्राहकुम्भीरनक्रास्याः |
| 72 | 36 | ख्यायन्तः | .... | ध्यायन्तः |
| ,, | 41 | विकृतैनरैः | .... | विकृताननैः |
| 74 | 57 | मोक्षोऽस्ति साम्प्रतम् | .... | मोहोऽस्ति साम्प्रतम् |
| 76 | 88 | ते वधैर्विविधै | .... | त एतैर्विविधै |
| 77 | 90 | हन्यन्ते | .... | चूर्ण्यते |
| ,, | 98 | प्रभिन्ना च | .... | प्रबद्धा च |
| 80 | 18 | भवेल्लोके | .... | भवेत्सोऽपि |
| ,, | 23 | भक्षकस्य | .... | भषकस्य |
| 81 | 28 | वृषसूचकमूलरुक् | .... | बहिर्वलयमूलरुक् |
| 82 | 42 | रुष्टो दृष्ट्वा तु | .... | कोपदृष्ट्या तु |
| 88 | 53 | मप्युक्तरूपया | .... | मव्यक्तरूपया |
| 91 | 29 | वरुणस्येन्दुवत्स्थिता | .... | वरुणस्येन्दुवती तथा |
| 92 | 41 | क्रमादिह ॥ | .... | क्रमादिमे ॥ |

| पृष्ठसं. | श्लोकसं. | मुद्रितपाठः | | पाठान्तराणि |
|---|---|---|---|---|
| 97 | 24 | कपिलादरः ॥ | .... | कपिलोदरः ॥ |
| ,, | 26 | असितोदस्य | .... | सुशीतोदस्य |
| 102 | 66 | महायोगान्महेशं | ... | महायोगा महेशं |
| 111 | 78 | अनिष्पन्दाः | .... | अनिष्यन्दाः |
| 126 | 15 | महाचलाः | .... | महाबलाः |
| 129 | 48 | प्रहाश्ममकूबशैलाग्र | .... | प्रहाश्म शलैकूटाग्र |
| 133 | 20 | भवेच्छिष्ठं | .... | भवेच्छिष्टं |
| 136 | 45 | यथार्द्रा श्रवणं तथा। | .... | आर्द्रा च श्रवणं तथा। |
| 137 | 58 | ज्येष्ठस्य पौर्णिमास्यां | .... | ज्येष्ठस्य पौर्णमास्यां |
| 139 | 78 | प्रावृषि शीतकरे भृगुपुत्रात् | | प्रावृषि शीतकरो भृगुपुत्रात् |
| | | सप्तमराशिगते शुभवृष्टिः। | | सप्तमराशिगतः शुभदृष्टः। |
| | | सूर्यसुतो नवमपञ्चमगो वा | | सूर्यसुतान्नवपञ्चमगो वा |
| | | सप्तमगश्च जलागमनाय ॥ | | सप्तमगश्च जलागमनाय ॥ |
| | | | | (बृ. सं. २८–१९) |
| 146 | 53 | दक्षिणोत्तरभूम्यर्थे | .... | दक्षिणोत्तरभूम्यर्धे |
| 152 | 27 | तत्र ते वासिनः | .... | तत्र ये वशिनः |
| 200 | 43 | म्रियमाणा नरा यत्र | .... | प्रीयमाणा नरा यत्र |
| 223 | 29 | सम्यगन्धाद्यैश्च पूजयेत् ॥ | | सम्यगन्नाद्यैश्च पूजयेत् ॥ |
| ,, | 30 | गृहमभ्यागतेषु वै | .... | गृहमभ्यागतेऽतिथौ। |
| 250 | 80 | भक्ष्यभोज्योपहारे च | .... | भक्ष्यभोज्यापहारे च |
| 259 | 52 | संवृतोऽवदत् ॥ | .... | सुव्रतोऽवदत् ॥ |
| 261 | 69 | शिरसा चाभिवन्दितम्। | .... | शिरसा चाभिवाद्य तम्। |
| 262 | 83 | तया च मालयातीव | .... | तयाहं मालया जातः |
| 263 | 94 | स दिवश्च च्युतं | .... | त्रिदिवाच्च च्युतं |

| पुटसं. | श्लोकसं. | मुद्रितपाठाः | | पाठान्तराणि |
|---|---|---|---|---|
| 263 | 101 | नागानप्याहरिष्यामि | .... | गणानप्याहरिष्यामि |
| 264 | 111 | मर्दलैर्दर्दुलैश्चक्रैस्तलवातैरनेकशः । | | मर्दलैर्वेणुवीणाभिर्विविधैस्तालनिस्वनैः । |
| 266 | 153 | सममानिन्युरन्यग्राः | .... | ते समानिन्युरन्यग्राः |
| 269 | 9 | तदल्पभक्ति | .... | तमल्पभक्तिं |
| 272 | 35 | कुर्यात्ततस्तामपहाय गङ्गे ! | | कुर्यास्ततस्तामपहाय गङ्गे ! |
| 275 | 61 | कूडलिसङ्गमं | .... | कूडलसङ्गमं |
| 289 | 42 | देवतार्चाः प्रणश्यन्ति | .... | देवतार्चाः प्रनृत्यन्ति |
| 295 | 21 | भूयात्सत्वयासे भवतो द्विज । | | भूयात्सत्वयासो भवतो द्विज । |
| 313 | 13 | कुम्भसम्भवभीत्यक्ताः स्वस्थानाः | | कुम्भसम्भवभीत्यक्तस्वस्थानाः |
| 345 | 14 | यथा धावन्ति नद्यस्तु | .... | यथा वहन्ति नद्यस्तु |
| 347 | 36 | तत्र स्थिताः सर्वे | .... | ग्रामस्थिताः सर्वे |
| 376 | 62 | क्षीरे कदल्या मसितेन युक्ते | | क्षारे कदल्या मथितेन युक्ते (बृ. सं. ४९-२६) |
| 382 | 40 | शेषोर्वीधरनामधेयविषयौ | | शेषोर्वीधरनामधेयनिषधौ |
| ,, | 43 | सुयमुना या तुङ्गभद्रा नदी । | | च यमुना तुङ्गा च भद्रा नदी । |
| 383 | 50 | शबलोषितचत्वरस्था | .... | शवरोपितचत्वरस्था |
| ,, | ,, | क्षितिस्था | .... | विदिक्स्था |
| ,, | ,, | रेखान्विता विनिहिता च विवर्णरूपा | | रेखान्वितान्यविनियुक्तविवर्णरूक्षा |
| 388 | 82 | चौर्यं च कर्तुः | .... | चौर्यं च कुर्युः |
| ,, | 83 | स्थाने च तस्मिन् | .... | स्थानस्य नाशं |
| 396 | 143 | पश्चादोमभवाः | .... | पश्चादोंप्रभवाः |
| 417 | 60 | प्राणहा मानभङ्गश्च धनहानिश्च बन्धकः । | | प्राणहानिर्मानभङ्गो धनहानिश्च बन्धनम् । |

| पुटसं. | श्लोकसं. | मुद्रितपाठाः | | पाठान्तराणि |
|---|---|---|---|---|
| 425 | 5 | मूलमार्गा भवन्त्यमी ॥ | .... | मूलमार्गा भवन्त्यमूः ॥ |
| 428 | 41 | दिनमासादिकैः | .... | दिनमासाब्दकैः |
| 443 | 48 | एकेभैकरथं त्र्यश्वं पञ्च पञ्च पदातिका। | | एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। |
| 447 | 97 | अश्वारूढे क्षुरेणाथ | .... | अश्वारूढान् क्षुरेणाथ |
| 450 | 18 | महाश्रियां | .... | महाश्रिया |
| 453 | 46 | विरागाश्च | .... | विरोगाश्च |
| 456 | 76 | विभाजकथनं तेषां | .... | विभाजकानघस्तेषां |
| 458 | 92 | खण्डभेदप्रवेदिनः | .... | खण्डपाकस्य वेदिनः |
| ,, | 98 | अष्टोनाः पञ्च कर्मसु | .... | निष्णाताः पञ्चकर्मसु |
| 465 | 45 | चत्वारि मध्ये हि स्तम्भाः | | चत्वारो मध्यमाः स्तम्भाः |
| 470 | 16 | मृत्तिकां लिम्पेद्यावच्च श्लक्ष्णतां व्रजेत् | | भित्तिकां लिम्पेद्यावत्सा श्लक्ष्णतां व्रजेत् |
| 471 | 19 | भागद्वयसमायुताम् | .... | भागद्वयसमायताम् |
| 472 | 30 | पश्चात्तत्तद्रूपोचितैः | .... | पश्चात्तत्तद्रूपोचिते |
| ,, | 32 | भित्तौ वर्णः प्रयुज्यते ॥ | .... | मिश्रो वर्णः प्रयुज्यते ॥ |
| 473 | 40 | श्यामवर्णं निरूपितम् ॥ | .... | श्यामवर्णं प्रजायते ॥ |
| 474 | 53 | घट्टयेच्छनकं शनैः। | .... | घट्टयेत्कनकं शनैः |
| 475 | 62 | साचिस्थाने समाख्यात ऊर्ध्वसूत्रमिति क्रमः। | | साचिस्थानं समाख्यातमूर्ध्वसूत्रमिति क्रमः। |
| 481 | 139 | चाङ्गुलस्यार्धं | .... | चाङ्गुलं सार्धं |
| 503 | 27 | सव्यापसव्यौ तत्स्यातां | .... | सव्यापसव्यतः स्यातां |
| 509 | 67 | अक्षपाते | .... | अस्त्रपाते |
| 538 | 6 | तथाष्टौ | .... | तत्राष्टौ |
| 547 | 77 | हाने नियुक्ता | .... | गाने नियुक्ता |
| 584 | 11 | तस्मै प्रसीदति वरं | .... | तस्मै प्रसीदति परं |

| पुटसं. | श्लोकसं. | मुद्रितपाठाः | पाठान्तराणि |
|---|---|---|---|
| 484 | 11 | तत्कुले तु महालक्ष्मीर्वसेदा-पुत्रपौत्रकम् ॥ | तत्कुले तु महालक्ष्मीर्वसेदा-चन्द्रतारकम् ॥ |
| 587 | 31 | करमर्शाश्च बीजकाः । .... | करमर्शाश्च बीजजाः । |
| 595 | 85 | पाषाणो भवति तत्र बहुतोयम् ॥ | पाषाणो भवति तोयमधः ॥ (बृ. सं. ५३–७) |
| 597 | 98 | कुरुविन्दकपाषाणः .... | कुरुविन्दः पाषाणः (बृ. सं. ५३–२८) |
| ,, | 99 | तस्माद्धस्ते तोयं .... | तस्याधस्तात्तोयं (बृ. सं. ५३–३१) |
| ,, | 100 | पश्चिमे तु भेकोऽयम् । परिहृत्य पञ्चहस्तात् अर्धाष्टपौरुषे वाच्यम् ॥ | पश्चिमे तरोस्तोयम् । परिहृत्य पञ्चहस्तानर्धाष्टमपौरुषान् प्रथमम् (बृ.सं. ५३-३५) |
| ,, | 101 | माहेन्द्री वहति सिरा भवति सफेनं सदा तोयम् ॥ | माहेन्द्री भवति सिरा वहति सफेनं सदा तोयम् ॥ (बृ. सं. ५३–३६) |
| ,, | 102 | पुरतो हस्तत्रितयात् .... | परतो हस्तत्रितयात् (बृ. सं. ५३–३८) |
| 598 | 106 | जलरहिते यद्देशे चिह्नान्येतानि दृश्यन्ते। वीरणदूर्वारहिते यत्र हि तस्मिन् जलं पुरुषे | जलपरिहीने देशे दृश्यन्तेऽनूपजानि चेन्निमित्तानि वीरणदूर्वामृदवश्च यत्र तस्मिन् जलं पुरुषे (बृ. सं. ५३–४७) |
| ,, | 107 | पिण्डारशिरीषकाञ्जना परुषकारञ्जववञ्जुला नीपाः ॥ | पिण्धारशिरीषाञ्जनपुरुषका वञ्जुलोऽतिबला (बृ. सं. ५३–५०) |
| ,, | 108 | चतुर्भिरर्धेन च नरस्य ॥ | चतुर्भिरर्धेन च नरेण॥ (बृ. सं. ५३–५१) |

| पृष्ठसं. | श्लोकसं. | मुद्रितपाठाः | पाठान्तराणि |
|---|---|---|---|
| 599 | 110 | त्रिधा च युक्तं | त्रिभागयुक्तं (बृ. सं. ५३–५३) |
| 599 | 111 | विज्ञातव्यं शाखाग्रतले नीरं त्रिपूरुषादेव ॥ | विज्ञातव्यं शाखातले जलं त्रिपूरुषं खात्वा ॥ (बृ. सं. ५३–५५) |
| ,, | 114 | निर्देश्यं त्रिपूरुषे वारि॥ .... | निर्देश्यं त्रिपूरुषैर्वारि ॥ (बृ. सं. ५३–५८) |
| ,, | 115 | पुरुषत्रये भवति ॥ .... | पुरुषद्वये भवति ॥ (बृ. सं. ५३–५९) |
| 600 | 120 | विनापि वल्मीकात् । .... | विनापि वल्मीकम् । (बृ. सं. ५३–७२) |
| 601 | 123 | ककुभकरीरावेकत्र संयुतौ ककुभबिल्वौ वा। हस्तत्र-(द्व) येऽम्बु पश्चात् नरैर्भवत्येकविंशत्या ॥ | ककुभकरीरावेकत्र संयुतौ यत्र ककुभबिल्वौ वा। हस्तद्व-येऽम्बु पश्चान्नरैर्भवे-त्पञ्चविंशत्या ॥ (बृह.सं. ५३-७६) |
| ,, | 125 | स्निग्धायताः ................ विच्छिन्नपत्राश्च ........। ........... कुलास्तथेन्द्रे काशः कुशो वा नलिनी-सखो वा ॥ | स्निग्धा यतः ................ निश्छिद्रपत्राश्च ........। ........कुलाः सगुण्ड्राः काशाः कुशा वा नलिका नलो वा (बृह.सं. ५३-१००) |
| ,, | 126 | ............केतकाः....... .... ............................। .................. नीलाः ...........................॥ | .... ....... वेतसाः ........ ...............................। ....... ............ नीपाः .... .. ................... (बृह.सं. ५३-१०१) |
| 602 | 132 | पारावतक्षौद्रसमा मही या। | पारावतक्षौद्रघृतोपमा या (बृ.सं. ५३-१०८) |

| पृष्ठसं. | श्लोकसं. | मुद्रितपाठाः | पाठान्तराणि |
|---|---|---|---|
| 602 | 133 | ..................... ............. | ....................................... |
| | | सा भूरि तोयं............ | साप्याशु तोयं........ ... |
| „ | 134 | भङ्गे तथाम्बष्ठकपुष्पकाभा... | भृङ्गोपमाङ्गुष्ठिकपुष्पिका वा (बृ.सं. ५३-१०६) |
| 603 | 137 | सिताम्बुना मेचकभस्मना वा | तोयं श्रितं मोक्षकभस्मना वा (बृ.सं. ५३-११३) |
| „ | 139 | पुष्यधनिष्ठोत्तराश्विरोहिण्यः | पुष्यधनिष्ठोत्तराणि रोहिण्यः (बृ.सं. ५३-१२३) |
| 604 | 3 | रुचिर्निमग्नभूमौ .... | रुचि हि निमग्नभूमौ |
| 610 | 45 | एवं प्रवातादि .... | त्वग्भ्रंशनाशादि |
| 611 | 59 | संवत्सरं न यावत् .... | संवत्सरं च यावत् |
| 612 | 63 | निहितं बृहती भवेत् .... | निहितं सुबृहद्भवेत् |
| 623 | 55 | चपलहृदयतनुकोमलनिद्राहारप्रिया...........॥ | चपलहृदयकोमलतनुः निद्राहारप्रिया ................॥ |
| 633 | 120 | रागादिश्रान्तदेहा .... | मार्गादिश्रान्तदेहा |
| 640 | 18 | मिथोऽधरं .... | प्रियाधरं |
| „ | 19 | रत्युत्तराख्यं .... | रत्युत्तरौष्ठं |
| 640 | 21 | प्रियामुखं .... | प्रियाधरं |
| 641 | „ | तत्सम्पुटाख्यं हनुवक्त्रसंज्ञं सत्केलिजिह्वानलकण्ठदेशम् ॥ | परस्परं प्रेमरसातिरेकात्स्याच्चुम्बनं सम्पुटकं तथैव ॥ |
| 642 | 29 | भर्तुः .... | ..........स्मर्तुं |
| 655 | 108 | ततः क्षामकुचाः .... | तल्लेपेन कुचाः |
| 656 | 116 | चिराद्बीजं विमुञ्चति .... | चिराद्वीर्यं न मुञ्चति |
| 659 | 149 | ततस्तालवराज्यस्य .... | ततस्तौलवराज्यस्य |

# शिवतत्त्वरत्नाकरस्याशुद्धशोधनसूची

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 13 | 14 | सुगणा ? | सुगुणा ? |
| 14 | 6 | महीश्वर ? | महेश्वर ? |
| ,, | 11 | द्राजाधिराजस्फुर | द्राजाधिराज ! स्फुर |
| 28 | 4 | चतुष्पष्टि | चतुष्षष्टि |
| 42 | 14 | तेजोरुपं | तेजोरूपं |
| ,, | 15 | राऽनवच्छिन्न | रावदच्छिन्न |
| 43 | 8 | स्तयाः | स्तस्याः |
| ,, | 18 | स दैवतं | सदैवतं |
| 44 | 12 | स्याद्कारः | स्याद्यकारः |
| 46 | 5 | ष्ठात्पी | ष्ठापी |
| ,, | 20 | मूलं मकारो | मूलमकारो |
| 48 | 22 | जेष्ठायेति | ज्येष्ठायेति |
| 53 | 14 | तस्मत्क | तस्मात्क |
| ,, | 18 | शिवश्य | शिवस्य |
| 68 | 4 | निजमापा | निजपापा |
| 73 | 9 | पपूर्यते | प्रपूर्यते |
| 74 | 16 | ावन्ति | धावन्ति |
| 75 | 8 | द्र्ता | द्रुता |
| 77 | 3 | हन्यन्ते | हन्यते |
| 80 | 20 | तरः | नरः |
| 81 | 8 | स्वर | खर |
| 83 | 12 | स्यादन्त | स्यादन्ते |
| 87 | 2 | विस्तारात् | विस्तरात् |

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 92 | 8 | वती पुर्यां | वतीपुर्यां |
| ,, | 19 | सिद्धवासाः | सिद्धावासाः |
| ,, | 20 | अरुणोयस्य | अरुणोदस्य |
| 101 | 13 | शक्तयौघैः | शक्तयोघैः |
| 103 | 18 | वक्षाम्यथ | वक्ष्याम्यथ |
| 113 | 2 | (श्लो) ९४-१०८ | (श्लो)९६-११० |
| 117 | 17 | क्रौञ्चस्य | क्रौञ्चः स |
| 121 | 15 | द्वीपात् | द्वीपात् |
| 123 | 10 | कालो जरा | कलजरा |
| 127 | 11 | स्मशान | श्मशान |
| 137 | 8 | —१०० | ५९-१०१ |
| 141 | 18 | स्वर्मार्ग | स्वमार्ग |
| 142 | 24 | णैवेति | णैवैति |
| 144 | 23 | सार्थकोटि | सार्धकोटि |
| 148 | 22 | प्रजाप्रति | प्रजापति |
| 150 | 9 | वृद्धौ | वृद्धौ |
| 151 | 10 | तस्स्योत्तरे | तस्योत्तरे |
| 154 | 2 | आर्यमा | अर्यमा |
| 157 | 18 | क्षणदारकम् | क्षणदाकरम् |
| 171 | 17 | खज्ररः | खचरं: |
| 174 | 1 | यागिभ्यो | योगिभ्यो |
| ,, | 13 | जनलोक | जनोलोक |
| 175 | 21 | माहाभाग | महाभाग |
| 183 | 3 | कलाभिः | कलाभिः |
| 185 | 18 | ता शत रुद्राः | ताः शतरुद्राः |

| पुटम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 185 | 23 | भजन्नेति | भजन्निति |
| 190 | 18 | महाशिलाः | महाशैलाः |
| 193 | 14 | माद्रेयाजाङ्गलाः | माद्रेयजाङ्गलाः |
| 204 | 10 | श्च ष्टविश | श्चाष्टविंश |
| 211 | 15 | गोतमाः | गौतमाः |
| 224 | 10 | मृतेन | भृतेन |
| ,, | ,, | प्रमृतेन | प्रभृतेन |
| ,, | 13 | मृतं | भृतं |
| 234 | 3 | विशिस्वो | विशिखो |
| 238 | 8 | स्तया | स्तथा |
| ,, | 12 | स्त्रकैः | स्त्रकैः |
| 242 | 26 | २३९ | १३९ |
| 244 | 16 | त्वर्थं | त्वर्धं |
| 251 | 6 | श्रुणोति | शृणोति |
| ,, | 10 | सर्वाशास्त्रेषु | सर्वशास्त्रेषु |
| ,, | 12 | पञ्चगम्यं | पञ्चगव्यं |
| 262 | 6 | माहादेवो | महादेवो |
| 273* | 12 | ३९ | ३८ |
| ,, | 3 | यन्ती | यन्तीं |
| 275 | 22 | शिवकथा | शिवकथा- |
| 278 | 8 | पेधेरन् | पधेरन् |
| ,, | 14 | इत्यव | इत्येव |
| 284 | 24 | सकलि | स कलि |

* एतच्छोधनानुरोधेन 273 तमपुटे 100 श्लोकपर्यन्तं सङ्ख्याविशुद्धिर्ग्राह्या ।

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 290 | 3 | वेधमानः | वैधमानः |
| 297 | 3 | सोप | स्वोप |
| 299 | 3 | त्सङ्गे | उत्सङ्गे |
| „ | 10 | दिशो | देशो |
| 302 | 14 | भावनामा | भवनमा |
| 303 | 26 | गन्धवाहसमागतिः | गन्धवाहसमा गतिः |
| 307 | 13 | ग्रासनाय | ग्रसनाय |
| 308 | 11 | मन्त्री | मन्त्रं |
| 310 | 11 | स्फीं स्फैं | स्फ्रों स्फ्रैं |
| 312 | 5 | वनवासाह्वः | वन्नवासाह्वयः |
| 313 | 18 | कासराः | कासाराः |
| 321 | 2 | आंकाशाच्चु | आकाशं तु |
| 332 | 4 | ददति | ददाति |
| 333 | 18 | ततः | 1 ततः |
| 335 | 7 | सहायो यन्त्र | सहाऽयोयन्त्र |
| „ | 8 | कोटि | कोटे |
| „ | 25 | तिम्माभिधानवान् ? | तिम्मं सदाशिवः ? |
| „ | 26 | निगृह्णान्नि | न्यगृह्णान्नि |
| 337 | 23 | दीपशिखया | भूतशिखया |
| 338 | 9 | कुलसुन्तरि | कुलसुंन्दरि |
| 341 | 22 | निवृत्र्य | निवर्त्य |
| 353 | 19 | मेंघाः सदारम्भाः | मैयाः सदारम्भाः |
| 356 | 13 | जम्बूर | जम्बूरु |
| 357 | 5 | पुनरेवं | पुनरेनं |
| 361 | 5 | ते | ब्रूते |

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 367 | 15 | रोगी | रोगे |
| 368 | 12 | पूर्वाह्नि | पूर्वाह्ने |
| 373 | 7 | जयोभवेत् | जयो भवेत् |
| 374 | 19 | धिदैवताः | धिदेवताः |
| 379 | 17 | स्तत्र शुभाः ? | स्तत्राशुभाः ? |
| 380 | 11 | त्कृष्णां ? | त्कृष्टां ? |
| 386 | 12 | साङ्कजङ्गः | स्याङ्कजङ्गः |
| 389 | 23 | शुभदाः रेखाः | शुभदा रेखाः |
| ,, | 25 | न पुंसकानि | नपुंसकानि |
| 391 | 4 | वलभीगृह | वलभी गृह |
| 406 | 15 | सिद्ध | सिद्धि |
| 407 | 19 | क्षीणी | क्षीणे |
| 411 | 7 | मार्गर धासनं | मार्गरोधासनं |
| 416 | 17 | लोभजम् ? | लोभकम् ? |
| 417 | 10 | प्राणहाः | प्राणहा |
| 425 | 14 | मध्यत | मध्यतः |
| ,, | 17 | क्रकरो | कृकरो |
| ,, | 22 | सशक्तिः ? | सा शक्तिः ? |
| 427 | 24 | गर्भप्रश्न | गर्भप्रश्ने |
| 428 | 10 | जल्पितम् | जल्पितुम् |
| ,, | 21 | वेलास्तु ? | रेखास्तु ? |
| 435 | 10 | द्विमुदूर्तकम् | द्विमुहूर्तकम् |
| 449 | 6 | व्युरुचत् | व्यरुचत् |
| 456 | 9 | माङ्गस्य | माङ्क्स्य |
| 458 | 3 | सुधाध्यक्षो | सूदाध्यक्षो |

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 463 | 11 | दशमीपूर्णिमास्यः | दशमीपौर्णमास्यः |
| 471 | 2 | समायुताम् ।? | समायताम् ।? |
| 473 | 19 | मथ्यर्थे | मत्यर्थे |
| 480 | 11 | चतुभिर्मध्ये | चतुर्भिर्मध्ये |
| 489 | 14 | उपभोग | उपयोग |
| 491 | 9 | भीभत्सा | बीभत्सा |
| 496 | 22 | चलनं ? | वलनं ? |
| 513 | 14 | सौष्ठुव | सौष्ठव |
| 527 | 23 | दैवतं | धैवतं |
| 530 | 20 | रशीति | रशीतिः |
| 531 | 2 | मूर्च्छना स्युः | मूर्च्छनाः स्युः |
| ,, | 6 | मूर्वं | मूर्ध्वं |
| 533 | 20 | नाप्लुतः | नात्प्लुतः, नात्परः |
| 540 | 15 | सूरभिः | सूरिभिः |
| 544 | 18 | सनि सग | धनि सग |
| 562 | 3 | क्रियापरः | क्रियापरः |
| 563 | 3 | लीला वि | लीलावि |
| ,, | 3 | चन्यो | चान्यौ |
| 587 | 4 | बीजकाः | बीजजाः |
| 600 | 4 | वारिप्रवाहेन | वारिप्रवाहेण |
| 620 | 14 | गुल्प | गुल्फ |
| 631 | 23 | त्याज्याः | त्याज्या |
| 645 | 3 | तोरुयग्मा | तोरुयुग्मा |
| ,, | 24 | त्रैविकमाख्यं | त्रैविक्रमाख्यं |

ॐ

केलदि श्री बसवभूपालविरचिता

# शिवतत्त्वरत्नाकरान्तर्गतविषयसूचिका

विचित्रनानाविषयाभिरामे
मनोज्ञबन्धेऽत्र महाप्रबन्धे ।
वेद्यावबोधार्थमहं प्रमेय-
संक्षेपमुद्देशमुखेन कुर्वे ॥

ग्रन्थेऽस्मिन् नव कल्लोलाश्चित्रार्थरचनाश्रयाः ।
कल्लोलेषु तरङ्गास्तु नवस्वष्टोत्तरं शतम् ॥ १ ॥

कल्लोले प्रथमे तत्र तरङ्गाः सप्तसम्मिताः ।
द्वितीयेऽष्टतरङ्गास्तु तृतीये सप्तसम्मिताः ॥ २ ॥

चतुर्थे द्वादशमितास्ते पञ्चदश पञ्चमे ।
कल्लोले त्वत्र षष्ठे तु तरङ्गाः सप्तविंशतिः ॥ ३ ॥

सप्तमे पञ्चदश ते त्वष्टसङ्ख्याः स्युरष्टमे ।
कल्लोले नवसङ्ख्याकास्तरङ्गा नवमे स्फुटाः ।
इत्थमष्टोत्तरशतं तरङ्गा इह कीर्तिताः ॥ ४ ॥

वेदागमान्तर्गतसर्वविद्याः
प्रोक्तास्तु नाम्ना प्रथमे तरङ्गे ।
उक्ता द्वितीयेऽत्र समासतोऽर्थाः
पूर्वोक्तविद्यासमुपाश्रयास्तु ॥ ५ ॥

अनादिभक्ताख्यनिरञ्जनजङ्गमयोरपि ।
स्वरूपमेतत्सृष्टिश्च तृतीये कथितं द्वयम् ॥ ६ ॥

शून्याख्यनिष्कलमहापदपूर्वलिङ्ग-
रूपं च सृष्टिरपि तज्जनता चतुर्थे ।
स्यात्पञ्चमे प्रणवनामकलिङ्गरूपं
प्रोक्तं तथा रचितवर्णकलाभिदाश्च ॥ ७ ॥

नादश्च तत्त्वत्रितयं द्विपञ्चा-
शन्मूर्तिभेदा अपि षष्ठ उक्ताः ।
ततो विराडादिकमूर्तितत्त्व-
पञ्चीक्रियाः सप्तमसंस्थितास्तु ॥ ८ ॥

कालाग्निरुद्रलोकश्च द्वात्रिंशन्नरका अपि ।
कूश्माण्डभुवनं चापि कीर्तितं ज्ञेयमष्टमे ॥ ९ ॥

तरङ्गे नवमे नानायातनाश्चात्र कीर्तिताः ।
पाशानां दशमे तत्तद्रोगहेतुत्वमीरितम् ॥ १० ॥

एकादशे तु पातालसप्तकं हाटकेशितुः ।
भुवनं चावनितलादधस्थं सम्प्रकीर्तितम् ॥ ११ ॥

द्वादशे तु सुमेरुस्तद्वलयत्रितयं तथा ।
शिखरत्रितयं चान्यत्प्रोक्तं दिविषदाश्रयम् ॥ १२ ॥

त्रयोदशे तु तत्कीलकेसराचलविस्तृतिः ।
जम्बूद्वीपाश्रया उक्ता नवखण्डाश्चतुर्दशे ॥ १३ ॥

ततः पञ्चदशे प्रोक्ताः सप्तद्वीपाः ससागराः ।
सहिरण्यतमोभूमिगर्भोदकजलाशयाः ॥ १४ ॥

षोडशे कथिता लोका ग्रहमेघसमाश्रयाः ।
भेदा ग्रहाणां तत्रापि प्रोक्ता मेघभिदोद्भवाः ॥ १५ ॥

उक्तं सप्तदशे गर्भोत्पत्तिस्तत्प्रसवादिकम् ।
अष्टादशे गुह्यकानां गन्धर्वाप्सरसां तथा ॥ १६ ॥

विद्याधराणां लोकाश्च रवेरथ गतिस्तथा ।
एकोनविंशे कालस्य भेदो ग्रहगतिस्तथा ॥ १७ ॥

ध्रुवलोको राशिचक्रभ्रमणं च समीरितम् ।
विंशे तरङ्गे स्वर्लोकमहर्लोकावुदीरितौ ॥ १८ ॥

एकविंशे ततो ब्रह्मविष्णुलोकौ प्रकीर्तितौ ।
द्वाविंशे स्कन्दलोकोमाशिवलोकाः प्रकीर्तिताः ॥ १९ ॥

ततो भरतखण्डान्तः कन्याद्वीपव्यवस्थिताः ।
उक्ता देशास्त्रयोविंशे सर्वतः समवस्थिताः ॥ २० ॥

चतुर्विंशे प्रधानादिपुण्यनद्यस्तरङ्गके ।
षडुत्तराश्च पञ्चाशद्देशाः पुण्यस्थलानि च ॥ २१ ॥

पञ्चविंशे तु सौरादिमानानि युगसंहतिः ।
चन्द्रसूर्यान्वयोत्पन्नक्षत्रियाणां च सन्ततिः ॥ २२ ॥

षड्विंशे तु चतुर्वर्णवर्णिधर्मप्रपञ्चनम् ।
सप्तविंशे तरङ्गे तु गृहस्थाश्रमवर्तिनाम् ॥ २३ ॥

वनस्थानां यतीनां च सदाचाराः प्रकीर्तिताः ।
अष्टाविंशे तु सामान्यधर्मा अत्याश्रमस्तथा ॥ २४ ॥

एकोनत्रिंशके स्थूलसूक्ष्माणां चैव पापिनाम् ।
प्रायश्चित्तं च कृच्छ्राणां लक्ष्म चान्द्रायणस्य च ॥ २५ ॥

त्रिंशे नन्दीश्वरस्योक्तं स्वेच्छाविर्भावखेलनम् ।
पट्टाभिषेचनं चैव तदुद्वाहोत्सवस्तथा ॥ २६ ॥

एकत्रिंशे तु बसवेश्वरवृत्तान्त ईरितः ।
द्वात्रिंशे कलिधर्माणां कृतमत्र प्रपञ्चनम् ॥ २७ ॥

त्रयस्त्रिंशे तथोत्पातभेदास्तच्छान्तयस्तथा ।
चतुस्त्रिंशे नरपतिसिंहासनसमुद्भवः ॥ २८ ॥

पञ्चत्रिंशे वयस्तम्भः कालवञ्चनमेव च ।
मृतसञ्जीवनं चैव परकायप्रवेशनम् ॥ २९ ॥

कुटजाद्रावतिख्याता मणिमन्त्रादिसिद्धयः ।
षट्त्रिंशे मल्लनाम्नस्तु सम्पद्देशेषु वर्णिताः ॥ ३० ॥

*

चौडप्पनायके तद्वद्रामेशानुग्रहस्तथा ।
सप्तत्रिंशे तथा स्वप्नशुभाशुभफलानि च ॥ ३१ ॥

अष्टत्रिंशे निधेश्चिह्नमञ्जनं च तदर्थकम् ।
नीतिः साधारणी चैव तरङ्गे प्रतिपादिता ॥ ३२ ॥

एकोनचत्वारिंशे तु सदाशिवमहीपतेः ।
विजयः केरलीयानां मायोपायविधिस्तथा ॥ ३३ ॥

चत्वारिंशे राजगुणाः करादानविधिस्तथा ।
दुर्गाणां लक्षणं चैव षड्बलानां विवेचनम् ॥ ३४ ॥

अथैकचत्वारिंशे च शक्तीनां त्रितयं तथा ।
सङ्कण्णनायकस्यापि चरितं चोपवर्णितम् ॥ ३५ ॥

द्विचत्वारिंशके प्रोक्तं फलं तु शकुनाश्रयम् ।
त्रिचत्वारिंशके प्रोक्ता यात्रा सङ्कण्णभूपतेः ॥ ३६ ॥

खड्गानां जातिनामानि देवतास्तत्फलानि च ।
चतुश्चत्वारिंशके तु प्रतिष्ठा देवताश्रया ॥ ३७ ॥

भूपरीक्षा शिलायाश्च गर्भः प्रासादलक्षणम् ।
लक्षणं देवगेहस्य लिङ्गमानं च कीर्तितम् ॥ ३८ ॥

पञ्चचत्वारिंशके तु विधिः पट्टाभिषेचने ।
सन्धिविग्रहयानानि सभेदान्युदितानि तु ॥ ३९ ॥

षट्चत्वारिंशके प्रोक्तमासनं द्वैधमाश्रयः ।
सामदाने भेददण्डावित्युपायास्तु कीर्तिताः ॥ ४० ॥

सप्तचत्वारिंशके तु स्वरशास्त्रं मुहूर्तगम् ।
शिवालिखितशास्त्रं च योगिन्यादिबलं तथा ॥ ४१ ॥

अष्टचत्वारिंशकेऽत्र रचना व्यूहगोचरा ।
बलानां योधने चापि क्रमः प्रोक्तः परस्परम् ॥ ४२ ॥

प्रोक्तमेकोनपञ्चाशे नीतिः सप्ताङ्गलक्ष्म च ।
पञ्चाशे पुरनिर्माणवास्तुगेहादिलक्ष्म च ॥ ४३ ॥

तरङ्गे त्वेकपञ्चाशे नाट्यशालापरिक्रिया ।
भित्तेरालेपनं चैव चित्रवर्तिविधिस्तथा ॥ ४४ ॥

दशतालादिभेदश्च मूर्तिसूत्रभिदा अपि ।
द्विपञ्चाशे तु भरतनाट्यसाधनविस्तरः ॥ ४५ ॥

त्रिपञ्चाशे तु शीर्षभ्रूदृष्टितारापुटक्रियाः ।
नासाहनुक्रियाश्चोष्ठकन्धरासंश्रयाः क्रियाः ॥ ४६ ॥

चतुःपञ्चाशके हस्तकर्म हस्तक्रिया तथा ।
प्रचारो हस्तयोश्चापि संयुतायुतभेदयोः ॥ ४७ ॥

उक्ताश्च पञ्चपञ्चाशे वक्षःपार्श्वोदरक्रियाः ।
ऊरुपादक्रियाश्चैव चारीस्थानकमण्डलम् ॥ ४८ ॥

षट्पञ्चाशे तु नादादिनवकं गमकावधि ।
सप्तपञ्चाशके जातिमुख्याङ्गनवकं तथा ॥ ४९ ॥

ततः षष्टितमे तेषां चिकित्सावर्धनं तथा ।
विचित्रकरणं चैव ततः पवनखेलनम् ॥ ५० ॥

निष्पत्तिश्च ततोऽन्येषां दशधा दोहनं तथा ।
एकषष्टितमे कामशास्त्रे वामदृशां तथा ॥ ५१ ॥

जातिः स्वभावश्च गुणा देशधर्माश्च कीर्तिताः ।
यद्द्विषष्टितमे बाह्यरतं करणभेदनम् ॥ ५२ ॥

वशीक्रिया च वक्षोजयोनिसंस्कार एव च ।
यौवनस्थैर्ययोगश्च वेङ्कटक्ष्मापवर्तनम् ॥ ५३ ॥

यत्त्रिषष्टितमे त्वत्र भवनस्नानयोस्तथा ।
पादुकालेपयोश्चैवमुपभोगाश्चतुर्विधाः ॥ ५४ ॥

चतुःषष्टितमे गन्धद्रव्याणां प्रतियोजनम् ।
पञ्चषष्टितमे वस्त्रभूषामाल्योपभुक्तयः ॥ ५५ ॥

तथैव षट्षष्टितमे रत्नानामुद्भवाकराः ।
आकारे तारतम्यं च तथा रत्नाश्रया गुणाः ॥ ५६ ॥

दोषाश्च तद्गतास्तेषां फलान्येषां परीक्षणम् ।
सप्तषष्टितमे सूपशास्त्रे पाकोऽन्नगोचरः ॥ ५७ ॥

तथा सूपस्य शाकस्य पाकस्तेमनयूषयोः ।
अष्टषष्टितमे प्रोक्तं भक्ष्यलेह्योपदंशकम् ॥ ५८ ॥

एकोनसप्ततितमे भोज्ये विषपरीक्षणम् ।
पादाभ्यङ्गश्च ताम्बूलशय्याधूपोपभुक्तयः ॥ ५९ ॥

शयनं च प्रबोधश्च प्रातर्मङ्गलवीक्षणम् ।
तरङ्गे सप्ततितमे आयुर्वेदप्रपञ्चनम् ॥ ६० ॥

सूत्रं शारीरमादानं निदानं च चिकित्सनम् ।
अथैकसप्ततितमे तत्तद्द्रव्याश्रया गुणाः ॥ ६१ ॥

रसमात्राः पूर्णचन्द्रोदयप्रभृतयस्तथा ।
द्विसप्ततितमे प्रोक्तं रसस्योत्पत्तिवैभवम् ॥ ६२ ॥

तत्सङ्ग्रहप्रकारश्च तत्तद्द्रव्यगुणागुणाः ।
महारसोपरसयोः शक्तिः साधारणाख्ययोः ॥ ६३ ॥

उत्पत्तिश्च स्वरूपं च तेषां सामर्थ्यमेव च ।
त्रिसप्ततितमे प्रोक्ताः सूतेऽष्टादश संस्क्रियाः ॥ ६४ ॥

तच्चतुःसप्ततितमे शाला सूतक्रियोचिता ।
पुटयन्त्रविभेदाश्च मूषाद्यं करणं तथा ॥ ६५ ॥

यत्पञ्चसप्ततितमे गारुडे सर्पसम्भवः ।
सर्पाणां जातिभेदाश्च तेषां दंशभिदा अपि ॥ ६६ ॥

कारणान्यपि तद्दंशे विषव्याप्तिश्च धातुषु ।
दूतचेष्टाविशेषैश्च जीवनाजीवनिर्णयः ॥ ६७ ॥

षट्सप्ततितमे मन्त्रागदं द्रव्यागदं तथा ।
वीरभद्रमहीपालचरितं चात्र वर्णितम् ॥ ६८ ॥

यत्सप्तसप्ततितमे लक्ष्म सिंहासनाश्रयम् ।
आस्थाने चामरादीनामुपभोगश्च वर्णितः ॥ ६९ ॥

ततोऽष्टसप्ततितम इन्द्रजालक्रियाविधिः ।
स्तम्भः खड्गस्य चाग्नेश्च जलस्य च समीरितः ॥ ७० ॥

एकोनाशीतितमे विभेदाः काव्यगोचराः ।
ततो वर्णगणच्छन्दःषट्प्रत्ययविचारणा ॥ ७१ ॥

ततः कवीनां भेदाश्च भेदाः शब्दार्थगा अपि ।
शृङ्गाराद्या नवरसा रत्याद्याः स्थायिनस्तथा ॥ ७२ ॥

विभावा अनुभावाश्च सात्त्विकाश्चारिणस्तथा ।
अथाशीतितमे प्रोक्ता नेतृनायकयोर्गुणाः ॥ ७३ ॥

रीतिर्वृत्तिश्च शय्या च गुणा दोषाश्च काव्यगाः ।
एकाशीतितमे प्रोक्तं लक्ष्मालङ्कारगोचरम् ॥ ७४ ॥

यद्द्व्यशीतितमे प्रोक्तं लक्ष्म रूपकसंश्रयम् ।
यत्त्र्यशीतितमे पुत्रभोगे वर्णार्थसङ्ग्रहः ॥ ७५ ॥

गर्भाधानं पुंसवनं सीमन्तोन्नयनादि च ।
जातक्रिया नामकर्म तथान्नप्राशनं परम् ॥ ७६ ॥

चूडाकर्मकलारम्भोपनयोपयमास्तथा ।
चतुरभ्यधिकाशीतितमे होराख्यशास्त्रकम् ॥ ७७ ॥

पञ्चाशीतितमे पुंसां लक्ष्माष्टाङ्गसमाश्रयः ।
षडशीतितमे त्वत्र गजाश्वारोहणक्रमः ॥ ७८ ॥

सप्ताशीतितमे त्वत्र गजोत्पत्तिभुवस्तथा ।
तेषां मानानि जातीनां भेदाः प्रकृतयस्तथा ॥ ७९ ॥

अंशसम्भूतिरेषां च दण्डस्यापि च कल्पना ।
अष्टाशीतितमेऽश्वानां जन्म लक्ष्माङ्गसंश्रयम् ॥ ८० ॥

आवर्ता गन्धवर्णाश्च स्वरप्रकृतयस्तथा ।
तेषामायुःपरिज्ञानं तच्चेष्टाश्च शुभाशुभाः ॥ ८१ ॥

ततस्त्वेकोननवतितमेऽश्वानां पृथक् पृथक् ।
चतुरुत्तरपञ्चाशद्देशसम्भूतिलक्षणम् ॥ ८२ ॥

अश्वानां शिक्षणं चैव तेषां गतिभिदा अपि ।
रथगोरक्षतच्चेष्टा तत्फलं गोचिकित्सनम् ॥ ८३ ॥

शिवभूपस्य नवतितमे वृत्तं जयाश्रयम् ।
कोटाचक्रविधिश्चैव दुर्गसाधनकर्म च ॥ ८४ ॥

तथा षोडशदानानि कोटिदीपस्य वैभवम् ।
तरङ्गे त्वेकनवतितमे योगो यमस्तथा ॥ ८५ ॥

नियमश्चासनं प्राणायामप्रत्याहृती तथा ।
ध्यानं धृतिः समाधिश्चेत्यष्टाङ्गान्युदितानि हि ॥ ८६ ॥

तरङ्गे तु द्विनवतितमे लेखादिरूपकम् ।
पदं च व्यवहाराणां धर्मनिर्णयसाधनम् ॥ ८७ ॥

अनन्तरं त्रिनवतितमे भद्रमहीपतेः ।
चरितं चापचक्रादिलक्ष्म तद्विश्रमक्रमः ॥ ८८ ॥

चतुष्टयाधिनवतितमे मल्लविनोदनम् ।
तद्भेदास्तच्छमस्तेषां पोषणं तज्जयस्तथा ॥ ८९ ॥

तरङ्गे पञ्चनवतितमे कुक्कुटलावयोः ।
जातिभेदाः पोषणं च योधनं च तयोर्मिथः ॥ ९० ॥

शुकच्छागाश्रयं लक्ष्म लक्ष्म चापि शुनां तथा ।
ततः परं षण्णवतितमे प्रोक्तं तरङ्गके ॥ ९१ ॥

सोमशेखरभूपस्य चरित्रमतिचित्रकृत् ।
विभूतिसङ्ग्रहे चैव विधानमुपवर्णितम् ॥ ९२ ॥

ततश्च सप्तनवतितमे रुद्राक्षवैभवम् ।
तद्धारणक्रमस्तस्मिन् तत्फलं दैवतान्यपि ॥ ९३ ॥

तथैव जपमालाया मणिसङ्ख्या जपक्रमः ।
ततः परेऽष्टनवतितमे लिङ्गार्चनक्रमः ॥ ९४ ॥

तथैव चैकोनशततमे चेन्नाम्बिकाश्रयम् ।
चरितं चैव महिमा तद्दानोत्कर्ष एव च ॥ ९५ ॥

ततः शततमे चैव तरङ्गे वर्ण्यसङ्ग्रहः।
पाकः शुक्लतयान्नस्य रतेर्भावाश्रयं फलम् ॥ ९६ ॥

गन्धवर्णफलं शुक्ले बिन्दुसङ्ख्याफलं तथा।
योगकालागृहीते तु गर्भे तत्काललक्षणम् ॥ ९७ ॥

स्त्रीपुंगर्भावबोधश्च गर्भिण्या त्याज्यकर्म च।
अस्थिरोममितिः पिण्डे धातूनामपि सम्मितिः ॥ ९८ ॥

षड्भावसम्भवश्चैव देहे चक्रस्थितिस्तथा।
ततस्त्वेकोत्तरशततमे संसारहेयता ॥ ९९ ॥

तरङ्गे द्व्युत्तरशततमे तन्त्रव्यवस्थितिः।
प्रमेयं त्र्युत्तरशततमे मीमांसकाश्रयम् ॥ १०० ॥

काणादन्यायशास्त्रीयप्रमेयं च प्रकीर्तितम्।
चतुःशततमे साङ्ख्ययोगवेदान्तसंश्रयः ॥ १०१ ॥

ततः पञ्चोत्तरशततमे चार्वाकबुद्धयोः।
जैनस्य च मतं तेषां प्राप्यस्थानानि च क्रमात् ॥ १०२ ॥

तथा षडुत्तरशततमे दीक्षाश्रया भिदाः।
गुरुशिष्यर्त्विजां लक्ष्म देशकालौ च तत्कृते ॥ १०३ ॥

ततः सप्तोत्तरशततमे लिङ्गार्चनक्रमः।
विहितो वीरशैवानां षट्स्थलोद्बोध एव च ॥ १०४ ॥

एवमष्टोत्तरशततरङ्गेष्वर्थसङ्ग्रहः।
ग्रन्थेऽस्मिन् पद्यसङ्ख्या तु सहस्राणि त्रयोदश ॥ १०५ ॥

इति विषयसूचिका

———

ॐ

केलदि श्री बसवभूपालविरचितः

# श्री शिवतत्त्वरत्नाकरः



श्रियै नः शिवलिङ्गं स्यात्सर्वादि गुरु निर्मलम् ।
अन्तर्याम्यखिलाधारं सच्चिदानन्दविग्रहम् ॥ १ ॥

भुजङ्गकलितस्रजं वरमतङ्गजत्वग्युजं
कपर्दधृतचन्द्रकं पदकमार्गकोपेन्द्रकम् ।
स्फुरद्द्विधिकपालकं ज्वलननेत्रयुक्फालकं
गलप्रकटमेचकं शिवमुपास्महे मोचकम् ॥ २ ॥

त्रिलोकपरिरक्षिणी खल[1]समूहसंशिक्षिणी
श्रिताभिमतपूरणी श्रुतिशिरोऽन्तसञ्चारिणी ।
जगत्प्रलयसाक्षिणी करुणगर्भितावेक्षिणी
शिवस्य चरणाम्बुजे प्रियतमावतान्नोऽस्य हि ॥ ३ ॥

यद्रूपमास्थाय शिलादनाम्ने
तपोधनाय प्रससाद शम्भुः ।
यस्यानुगाश्च प्रमथाः समस्ता
वन्दामहे नन्दिनमिन्दुगौरम् ॥ ४ ॥

दक्षाध्वरध्वंसनदक्षशक्तिः
श्रितेष्टविश्राणनसानुरक्तिः ।
करान्तरान्दोलितचन्द्रहासः
स वीरभद्रोऽस्तु मुदे सहासः ॥ ५ ॥

---

[1] समूल—मु. पा.

जातस्तत्पुरुषाह्वयाद्वदनतो यो रेवणासिद्धराट्
किंचाघोरमुखाच्च यो मरुलुसिद्धेशः प्रसिद्धोऽभवत् ।
जज्ञे कामदवामदेववदनाद्यः[1] पूजिताचार्यकः
सद्योजातमुखोदितोऽप्यवतु मां यश्चैकरामो गुरुः ॥ ६ ॥

आसीदुज्जयिनीपतिर्मरुलुसिद्धेशो गुरुः प्रस्फुर-
त्पादेशोऽथ वसन्तदेवमहितश्रीमल्लिकाद्यार्जुनौ ।
[2]वीरश्रीनपरस्ततो गुरुपदस्वामीवसन्तस्ततः
तस्मादुन्नतचन्नवीरविभुरित्याचार्यपारम्परी ॥ ७ ॥

यत्कर्णतालप्रसरत्समीर-
वराङ्कुराप्ताभ्यवहारतृप्ताः ।
भूषाभुजङ्गा विलसन्ति यस्य
सोऽयं दिशेद्विघ्नशमं गजास्यः ॥ ८ ॥

शुभगुणनिकुरुम्बामिन्दुजिद्वक्त्रबिम्बां
पुलिनजयिनितम्बां पल्लवाभौष्ठबिम्बाम् ।
कृतनमदवलम्बां दत्तसारोक्तिगुम्भां
करसदमृतकुम्भां नौम्यहं शारदाम्बाम् ॥ ९ ॥

गुणैरशेषैरवधूतदोषै-
रवाप्तपोषैर्जनदत्ततोषैः ।
या वासभूमिः परिचीयते स्म
तां चन्नमाम्बां जननीं नतोऽस्मि ॥ १० ॥

सोमशेखरपदं स्फुटमुद्य-
त्सर्वमङ्गलतयाऽजनि यस्मिन् ।
काममाश्रितजनाय दिशन्तं
कल्पसालमिव तं प्रणतोऽस्मि ॥ ११ ॥

---

[1] पण्डिताचार्यकः—मु. [2] वीरश्रेन्नपरः—क. ब.

नीतिं नीतिपरा विलोक्य सुकलाभेदान्विनोदार्थिन-
स्तन्त्राण्यत्र च तान्त्रिकाः सुमहितान् [1]योगांश्च योगेप्सवः।
मोक्षं चापि मुमुक्षवो बत जना जानन्त्विति प्रेक्षया
ग्रन्थः सोऽयमुदाररीतिरधुना निर्मातुमारभ्यते ॥ १२ ॥

[2] व्यत्यासयोजितपदाप्यपरिस्फुटापि
संभिन्नवर्णरचनाप्यधिकार्थिकापि।
एषा कृतिर्मधुरबालकगीरिवार्यै-
नैंया विमृश्य विबुधैरनवद्यभावम् ॥ १३ ॥

निजफणितिविशेषैस्तोषयन्तोऽपि लोकान्
न वचनरचनायां सादराः किं परेषाम्।
स्वफलसलिलपूरैः प्रीणयन् सव्यपेक्षो
न भवति जलसेके किन्न्वसौ केरवृक्षः ॥ १४ ॥

आख्यान्तु दूषणगणानिह केऽपि लोकाः
किं तावताऽस्य विदिताः सुगणा गलन्ति।
चन्द्रः कलङ्कित इतीह गिरा तदीया
निश्शेषलोकपरितोषकता व्यपैति ॥ १५ ॥

कामं वसन्त्विह परश्शतदूषणानि
सन्तस्तथापि सुगुणान्परमाद्रियन्ते।
ग्राहादिघातुकदुरासदसत्त्वपूर्णं
रत्नाकरं जगति वार्धिमुदाहरन्ति ॥ १६ ॥

दोषालोकमुहुस्समाहितदृशः प्रायः परेषां कृतौ
दृष्ट्वा तद्गुणजातमन्तरधिकं संतापमाबिभ्रतः।
निन्दान्यद्य किमु स्तवानि किमिति प्रव्यक्तचिन्ताद्वयी-
सन्धिप्रस्फुटदौस्थ्यदूनहृदया ये सन्ति तेभ्यो नमः ॥ १७ ॥

---

[1] भोगांश्च भोगेप्सवः—मु. [2] वृत्यासुयोजित—मु.

लोकानां तु हिताय सारकेलदीसिंहासनाधीश्वरो
गौरीनाथकृपार्जिताखिलकलापाण्डित्यविभ्राजितः ।
कुर्वेऽहं बसवेन्द्रभूमिरमणो रत्नाकराख्यां कृतिं
सर्वं प्रेक्ष्य च वाक्प्रपञ्चमसकृत्पुत्र त्वमाकर्णय ॥ १८ ॥

सर्वज्ञसर्वविनियामकविश्वभर्तृ-
भास्वन्महीश्वरसमन्वितशक्तिजातम् ।
जानीहि वर्णपदमन्त्रमयं च नाम
रूपं जगद्भुवनतत्त्वकलास्वरूपम् ॥ १९ ॥

नानाभूपाललीलाजयसमुपनतानेकलोकप्रतीत-
प्रौढस्तोत्रैकपात्रं बिरुदचयमतीवोन्नतं त्वं बिभर्षि ।
श्रीमद्राजाधिराजस्फुरदखिलकलासारवेदिन्निदानीं
स्वामिन् प्रख्यातकीर्ते नृपकुलतिलक श्रोतुमिच्छामि शंस ॥

बसवभूपालं प्रति सोमशेखरस्य दृश्यप्रपञ्चविषयकः प्रश्नः

वस्तुजातं चक्षुरादिबहिरिन्द्रियगोचरम् ।
यदस्ति तत्समस्तं च कस्माज्जातं कियद्विधम् ॥ २१ ॥

किं प्रमाणं च किं रूपमेतन्मह्यं निरूपय ।
श्रीसोमशेखर कुमार कुमारभावं
सौन्दर्यसन्मतिमुखैः सुगुणैर्बिभर्षि ।
कोऽप्येष शङ्करकृपाकलितात्प्रभावा-
दास्ते विवेकविभवस्तव मञ्जुलोऽयम् ॥ २२ ॥

सम्यक्पृष्टं त्वया पुत्र बुद्धिस्ते सूक्ष्मदर्शिनी ।
या पुनर्दुर्विबोधेऽस्मिन् विषये संप्रवर्तते ।
आकर्णयोत्तरं तस्य यज्ज्ञातुमभिकाङ्क्षसि ॥ २३ ॥

विद्याः समस्ताः समवेक्ष्य भूयः
[1] संगृह्य चार्थानिह पद्यरूपैः ।
वचोनिगुम्भैः शिवतत्त्वरत्ना-
कराभिधानां कृतिमातनोमि ॥ २४ ॥

स्वामिन् दृष्ट्वाऽखिला विद्याः कृतिरेषा वितन्यते ।
इत्युदीरितमेतर्हि ता विद्याः का वदस्व मे ॥ २५ ॥

समाकर्णय यत्पृष्टं तद्ब्रवीमि कुमार ते ।
अष्टादश महाविद्याः प्रथमं परिकीर्तिताः ॥ २६ ॥

अष्टादशमहाविद्याः

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ २७ ॥

आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् ।
उपवेदा इमे प्रोक्ताश्चत्वारस्तदनन्तरम् ॥ २८ ॥

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः ॥ २९ ॥

वेदाः

ऋग्यजुस्साम चा[2]थर्वेत्यपि वेदचतुष्टयम् ।
अथोपनिषदो वेदशिरस्त्वेनाभिसम्मताः ॥ ३० ॥

उपनिषदः

श्रीरुद्रबृहदारण्यश्वेताश्वतरमुण्डकाः ।
कैवल्यकालाग्निरुद्रौ कठवल्ली च बाष्कलः ॥ ३१ ॥

हंसः परमहंसश्च ब्रह्मनारायणावपि ।
कात्यायनो ब्रह्मबिन्दुरारुण्यमृतबिन्दुकाः ॥ ३२ ॥

---

[1] संमृश्य. [2] थर्वेत्येतद्वेद–मु.

पञ्चब्रह्म च जाबालस्तैजोबिन्दुश्च मुद्गलः ।
बोधायनीय[1]चर्चीचश्रवणं च पराक्रमः ॥ ३३ ॥

[2]प्राच्यश्च शौनकीयं च शिवसंकल्पमेव च ।
आसुरायणमैत्रायणीयवाजसनेयकम् ॥
साङ्ख्यायनीयमित्याद्यास्तथोपनिषदः स्मृताः ॥ ३४ ॥

वेदाङ्गानि

वेदाङ्गानि षडेतानि शिक्षा व्याकरणं तथा ।
निरुक्तं ज्योतिषं कल्पः छन्दोविचितिरित्यपि ॥ ३५ ॥

उपाङ्गानि

मीमांसा न्यायशास्त्रं च पुराणं स्मृतिरेव च ।
चत्वार्येतान्युपाङ्गानि बहिरङ्गानि [3]षट्कतः ॥ ३६ ॥

उपवेदाः

आयुर्वेदोऽर्थवेदश्च धनुर्वेदस्तथैव च ।
गान्धर्ववेद इत्येवमुपवेदाश्चतुर्विधाः ॥ ३७ ॥

मीमांसान्याययोर्द्वैविध्यम्

मीमांसा द्विविधा [4]पूर्वोत्तरा चेति विभेदतः ।
तर्कोऽपि द्विविधो न्यायः काणादश्चेति सम्मतः ॥ ३८ ॥

स्मृतयस्तत्प्रणेतारश्च

प्रधानस्मृतयस्त्वष्टादशोपस्मृतयस्तथा ।
एतासां च प्रणेतारो वेदमार्गानुसारतः ॥ ३९ ॥

---

[1] चर्चेच–क. [2] प्राचाश्च–क. [3] षट्तथा–मु. [4] प्रोक्ता पूर्वोत्तर-विभेदतः–मु.

मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥ ४० ॥

संवर्तौशनसौ शङ्खलिखितावत्रिरेव च ।
विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥ ४१ ॥

एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ।
अष्टादशापि स्मृतयस्तन्नाम परिचिह्निताः ॥ ४२ ॥

उपस्मृतिकर्तारः

जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकश्यपौ ।
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ॥ ४३ ॥

क्रतुः कात्यायनश्चैव जातूकर्णिः कपिञ्जलः ।
बोधायनश्च काणादो विश्वामित्रस्तथैव च ॥ ४४ ॥

पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ।
अष्टादशोपस्मृतयः कर्तृनामभिरङ्किताः ॥ ४५ ॥

अष्टादश पुराणानि तेषां नामानि च शृणु ।

अष्टादशपुराणानि

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ ४६ ॥

षष्ठं तु नारदीयं च मार्कण्डेयं तु सप्तमम् ।
आग्नेयमष्टमं चैव भविष्यन्नवमं स्मृतम् ॥ ४७ ॥

दशमं ब्रह्मकैवर्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम् ॥ ४८ ॥

चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥ ४९ ॥

अष्टादश पुराणा[1]न्युपपुराणान्यनन्तरम् ।

---

[1] नि ह्युपपूर्वाण्यनन्तरम्–मु.

उपपुराणानि

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ॥ ५० ॥

स्कान्दसंज्ञं कुमारेण कथितं तदनन्तरम् ।
चतुर्थं शिवधर्माख्यं पुराणं नन्दिनेरितम् ॥ ५१ ॥

तथा दूर्वाससा प्रोक्तं नारदीयं ततः परम् ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥ ५२ ॥

ब्रह्माण्डं च ततः पुण्यं वारुणाख्यं ततः परम् ।
ततः कालीपुराणाख्यं कालकण्ठं च नामतः ॥ ५३ ॥

ततो वासिष्ठलैङ्गाख्यं नाम्ना माहेश्वरं च तत् ।
ततः साम्बपुराणाख्यं सुसूक्ष्ममिति चेरितम् ॥ ५४ ॥

पाराशरं च मारीचं भार्गवाख्यं ततः परम् ।
सर्वाण्युपपुराणानि ब्रह्मज्ञान[1]पराणि वै ॥ ५५ ॥

वेदार्थानुगता एवं विद्या ह्यष्टादशेरिताः ।

आगमाः

अथागमानामुद्देशः शिवोक्तानां वितन्यते ॥ ५६ ॥

त्रिपदार्थं चतुष्पादं प्राह तन्त्रं जगत्पतिः ।
सूत्रेणैकेन संगृह्य प्राह विस्तरतः प्रभुः ॥ ५७ ॥

कामिकादिप्रभेदेन तद्भिन्नं बहुधैव हि ।
कामिकाद्या वातुलान्ताः शिवेनोक्ताः शिवागमाः ॥ ५८ ॥

सिद्धान्ता इति विज्ञेया उपभेदसमन्विताः ।
कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा ॥ ५९ ॥

दीप्तं सूक्ष्मं सहस्रं च अंशुमत्सुप्रभेदकम् ।
विजयं चैव [2]विश्वासं स्वायंभुवमथानलम् ॥ ६० ॥

---

[1] कराणि वै–मु. [2] निःश्वासं.

वीरं च रौरवं चैव माकुटं विमलं तथा ।
चन्द्रज्ञानं च विम्बं च प्रोद्गीतं ललितं तथा ॥ ६१ ॥

सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च ।
किरणं वातुलं त्वेता अष्टाविंशतिसंहिताः ॥ ६२ ॥

तन्त्राणि

एवमन्यानि तन्त्राणि शिवप्रोक्तान्यनेकशः ।
महामायाशम्बरं च योगिनीजालशम्बरम् ॥ ६३ ॥

तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ।
बहुरूपाष्टकं चैव यामलाष्टकमेव च ॥ ६४ ॥

चन्द्रज्ञानं वासुकिश्च महासम्मोहनं तथा ।
[1] महोच्छुष्मं महादेवं वातुलं वातुलोत्तरम् ॥ ६५ ॥

हृद्भेदं मातृभेदं च गुह्यतन्त्रं च कामिकम् ।
कलापादं कलासारं तथान्यत्कुब्जिकामतम् ॥ ६६ ॥

मायोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ॥ ६७ ॥

कुलासारं कुलोड्डीशं कुलचूडामणिस्तथा ।
सर्वज्ञानोत्तमं चैव महाशिवमतं तथा ॥ ६८ ॥

महालक्ष्मीमतं चैव सिद्धयोगीश्वरीमतम् ।
कुरूपिकामतं चैव रूपिकामतमेव च ॥ ६९ ॥

सर्ववीरमतं चैव विमलामतमुत्तमम् ।
पूर्वपश्चिमदाक्षिण्यमुत्तरं च निरुत्तरम् ॥ ७० ॥

तन्त्रं वैशेषिकं ज्ञानं वीरयोगं तथा परम् ।
अरुणेशं मोहनेशं विशुद्धेश्वरमेव च ॥ ७१ ॥

---

[1] महोच्छिष्टं–म.

एवमेतानि तन्त्राणि तथान्यान्यपि कोटिशः ।
भवतोक्तानि देवेश सर्वज्ञानकराणि वै ॥ ७२ ॥

वैखानसं पाञ्चरात्रं तथा भागवताभिधम् ।
वैष्णवं दर्शनं त्रेधा तत्तन्त्रज्ञैरुदीरितम् ॥ ७३ ॥

खिलं खिलाधिकारं च पूर्वतन्त्रं तथोत्तरम् ।
वासाधिकरणं ज्ञेयं तथा चित्राधिकारणम् ॥ ७४ ॥

प्रतिग्रहाधिकारे च मुन्युक्तास्त्वष्ट संहिताः ।
प्रथमं चोत्तरं तन्त्रं विष्णुतन्त्रमतः परम् ॥ ७५ ॥

आत्रेयं तु ततः प्रोक्तमिति तन्त्रचतुष्टयम् ।
सन्तानं काश्यपीयं च तर्कौ ज्ञानं जयस्तथा ॥ ७६ ॥

वीरसज्ञानसानन्दा विजया विजिता तथा ।
सत्यमाङ्गीरसं चैव पञ्चकाण्डं तथाऽपरम् ॥ ७७ ॥

एवमाद्यास्तु बहुधा सन्ति वैष्णवसंहिताः ।
तन्त्राण्यथ चतुष्षष्टिसङ्ख्याकान्यधुना ब्रुवे ॥ ७८ ॥

नानाप्रयोगकारीणि महाश्चर्यकराणि च ।
चतुष्षष्टिकलाविद्यामूलभूतान्यमूनि हि ॥ ७९ ॥

चतुःषष्टिकलामूलभूतानि तन्त्राणि

अव्याजपालिनीतन्त्रं राज्यलक्ष्मीप्रसादकम् ।
सर्वसाम्राज्यतन्त्रं च द्वितीयं परिकीर्तितम् ॥ ८० ॥

अङ्गारगमनातन्त्रं राज्योपाङ्गेशितन्त्रकम् ।
श्रीवालराजतन्त्रं च चामरद्वन्द्वतन्त्रकम् ॥ ८१ ॥

प्रहर्षराजतन्त्रं च धीरतन्त्रं तथैव च ।
ग्रामपालनतन्त्रं च जीविनीतन्त्रमेव च ॥ ८२ ॥

मित्रलक्ष्मीप्रयोगं च दुर्गपालनतन्त्रकम् ।
प्राणलक्ष्मीप्रयोगं च [1]प्रभालक्ष्मीप्रयोगकम् ॥ ८३ ॥

---

[1] प्रथालक्ष्मी–मु.

तोयलक्ष्मीप्रयोगं च गन्धलक्ष्मीप्रयोगकम् ।
पुष्पलक्ष्मीप्रयोगं च कामरूपाख्यतन्त्रकम् ॥ ८४ ॥

[1]कला[2]जवनिकातन्त्रं कुञ्जकम्बलतन्त्रकम् ।
कनकाख्यप्रयोगं च बोधिनीतन्त्रमेव च ॥ ८५ ॥

सत्यलक्ष्म्याः प्रयोगं च पादुकातन्त्रमेव च ।
प्राज्ञलक्ष्मीप्रयोगं च खेटकं तु तथैव च ॥ ८६ ॥

चापतन्त्रं लेपतन्त्रं शल्यतन्त्रं तथैव च ।
भीमलक्ष्मीप्रयोगं च मणिस्थानप्रयोगकम् ॥ ८७ ॥

पातालगमनं तन्त्रं मर्दिनीतन्त्रमेव च ।
स्फुलिङ्गलक्ष्मीतन्त्रं च शङ्खमर्दलतन्त्रकम् ॥ ८८ ॥

चक्रायुधप्रयोगं च भैरवादिप्रयोगकम् ।
गजवाजिमहातन्त्रं तथा गोरक्षतन्त्रकम् ॥ ८९ ॥

सूपतन्त्रं लेखतन्त्रं पृथिवीतन्त्रमेव च ।
ऐश्वर्यलक्ष्मीतन्त्रं च शुल्कतन्त्रं तथैव च ॥ ९० ॥

मिश्रलक्ष्मीप्रयोगं च जीविनीतन्त्रमेव च ।
गिरितन्त्रं वन्यतन्त्रं स्थानापत्यप्रयोगकम् ॥ ९१ ॥

श्रीसर्वदण्डिनीतन्त्रं विघ्नविच्छेदतन्त्रकम् ।
लसद्धारततन्त्रं च शृङ्गिवाद्यप्रयोगकम् ॥ ९२ ॥

नरवाहनतन्त्रं च स्तम्भिनीतन्त्रमेव च ।
दाहिनीमारिणीतन्त्रं द्वेषिणीतन्त्रमेव च ॥ ९३ ॥

आकर्षणोच्चाटनं च [3]तोषिणीतन्त्रमेव च ।
श्रीसर्वदण्डिनीतन्त्रं मन्त्रयन्त्राखि[4]लान्वितम् ॥ ९४ ॥

---

[1] इदमर्धं क पुस्तके नास्ति. [2] जीवन–मु. [3] शोषिणी–मु.
[4] लात्मकम्–मु.

स्मृतिमात्रेण सिद्ध्यन्ति राज्यलक्ष्मीप्रसादतः ।
आख्यातानि चतुष्षष्टितन्त्राण्येवं तु नामतः ॥ ९५ ॥

एवं नामानि विद्यानामाख्यातानि यथाक्रमम् ।
वेदागमानुसारेण प्रवृत्तानामनेकधा ॥ ९६ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-
परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्र-
विरचिते वेदागमान्तर्गतविविधविद्यातन्त्रसारभूते
शिवतत्त्वरत्नाकरे प्रथमकल्लोले
सकलविद्योद्देशो नाम
प्रथमस्तरङ्गः

---

## द्वितीयस्तरङ्गः

नानाविधानां विद्यानां नामसंश्रवणे गुरो ।
तत्स्वरूपावगमने वर्तते मेऽधिका स्पृहा ॥ १ ॥

तासां स्वरूपमाख्याहि विद्यानां बहुवर्त्मनाम् ।
शृणु पुत्र ब्रवीम्येतत्तव प्रश्नो यदर्थकः ॥ २ ॥

विद्यास्वरूपम्

ऋग्वेदो रुरुवर्णश्च कुञ्चितश्मश्रुकेशवान् ।
विभक्तकण्ठः पद्माक्षः द्व्यरत्निमितविग्रहः ॥ ३ ॥

ऋग्वेदस्यास्य भेदास्तु सप्तधा परिकीर्तिताः ।
यजुर्वेदः कृशः स्थूलः ताम्रवर्णः कपालधृक् ॥ ४ ॥

श्वेतवर्णः काञ्चनाक्षः पञ्चारत्निप्रमाणकः ।
भेदाः षडुत्तराशीतिसङ्ख्यास्तस्य प्रकीर्तिताः ॥ ५ ॥

सामवेदः शुचिः क्षौमी शुचिवासाश्च दण्डधृत्।
नित्यस्रग्वी चर्मवांश्च षडरत्निप्रमाणकः ॥ ६ ॥

आदित्यवर्णो भेदास्तु सहस्रं तस्य कीर्तिताः।
अथर्वणाख्यो वेदस्तु कृष्णवर्णसमन्वितः ॥ ७ ॥

कामरूपः क्षुद्रकर्मा स्वदारपरितोषितः।
परदाररतस्तस्य नव भेदाः प्रकीर्तिताः ॥ ८ ॥

विध्यादिभेदेन वेदस्य चत्वारो भागाः

विध्यर्थवादसन्मन्त्रनामधेयविभेदतः।
सर्वेषा[1]मपि धर्माणां वेदा एव तु बोधकाः ॥ ९ ॥

विधिः

स्वतः प्रवर्तयन् धर्मं राजाज्ञेव विधिः स्मृतः।

अर्थवादः

विहितार्थस्तावकः स्यादर्थवादोऽभिधानवान् ॥ १० ॥

मन्त्रः

तत्र मन्त्रास्त्वनुष्ठेयस्यार्थस्य [2]प्रतिपादकाः।

नामधेयम्

नामांशोऽयं तु यागादिकर्मणामभिधायकः ॥ ११ ॥

पूर्वोत्तरभेदेन द्वेधा वेदविभागः

वेदः पुनर्द्विधा पूर्वोत्तरभागविभेदतः।
तत्र पूर्वतरो भागः कर्मणां प्रतिपादकः ॥ १२ ॥

भवेदुत्तरभागस्तु तत्रोपनिषदाह्वयः।
ब्रह्मणो बोधकत्वेन ब्रह्मकाण्ड इतीरितः ॥ १३ ॥

भस्मरुद्राक्षमुख्यानां धारणं ज्ञानदायकम्।
ब्रह्मस्वरूपमपि च बोधयन्मोक्षसाधनम् ॥ १४ ॥

---

[1] मेव वर्णानां–मु. [2] प्रतिबोधकाः–मु.

उपवेदाः

एवं चतुर्णां वेदानामुपवेदचतुष्टयम् ।
ऋग्वेदस्यायुषो वेदो यजुषो धनुराह्वयः ॥ १५ ॥

साम्नो गान्धर्ववेदः स्यादर्थशास्त्रमथर्वणः ।

आयुर्वेदस्वरूपम्

हेतुलिङ्गौषधस्कन्धैरायुरारोग्यसाधनम् ॥ १६ ॥

आयुर्वेदः परिज्ञेयः धर्माद्यर्थैस्त्रिभिर्नरैः ।

धनुर्वेदस्वरूपम्

धनुर्वेदो भवत्यत्र परिपन्थिनिरासकः ॥ १७ ॥

गान्धर्ववेदस्वरूपम्

सप्तस्वरप्रभेदो हि सामगान्धर्ववेदयोः ।

अथर्ववेदस्वरूपम्

अर्थवेदोऽन्नपानादिप्रधानमखतत्परः ॥ १८ ॥

दक्षिणाज्यपुरोडाशचरुसम्पादनादिभिः ।
तत्फलं हि चतुर्वर्गपुरुषार्था इति [1] स्मृताः ॥ १९ ॥

षडङ्गलक्षणानि

शिक्षादीनां षडङ्गानां स्मृता वेदोपयोगिता ।
शिक्षा शिक्षयति व्यक्तं वेदोच्चारणलक्षणम् ॥ २० ॥

वक्ति व्याकरणं तस्य संहितापदलक्षणम् ।
वक्ति तस्य निरुक्तं तु पदनिर्वचनं स्फुटम् ॥ २१ ॥

ज्योतिश्शास्त्रं वदत्यत्र कालं वैदिककर्मणाम् ।
क्रमः कर्मप्रयोगाणां कल्पसूत्रेण कथ्यते ॥ २२ ॥

---

[1] स्मृतम्–मु.

मन्त्राक्षराणां सङ्ख्योक्ता छन्दोविचितिषु स्फुटम् ।
छन्दः पादौ करौ कल्पं [2] तेषां व्याकरणं मुखम् ॥ २३ ॥

शिक्षा घ्राणं ज्यौतिषं दृङ्निरुक्तं श्रोत्रमिष्यते ।
चतुर्णामप्युपाङ्गानामुपयोगोऽङ्गवत्स्मृतः ॥ २४ ॥

मीमांसालक्षणम्

मीमांसा तत्र वेदार्थप्रविचारपरायणा ।
सा पुनर्द्विविधा पूर्वोत्तरा चेति विभेदतः ॥ २५ ॥

पूर्वमीमांसा

पूर्वा तु कर्ममीमांसा कर्मणां प्रतिपादनात् ।

उत्तरमीमांसा

अपरा ब्रह्ममीमांसा ब्रह्मणस्तु विचारणात् ॥ २६ ॥

न्यायशास्त्रलक्षणं तद्विभागश्च

न्यायो युक्त्या पदार्थानां तत्त्वनिर्धारणार्थकः ।

स पुनर्द्विविधो न्यायः काणादश्चेति विश्रुतः ॥ २७ ॥

गौतमेन प्रणीतस्तु न्यायशब्देन कीर्तितः ।
काणादस्तु कणादेन मुनिना संप्रकीर्तितः ॥ २८ ॥

पुराणस्वरूपं तल्लक्षणं च

शिवप्रसादाद्व्यासेन प्रणीतानि सविस्तरम् ।
वेदेषु नष्टशाखार्थभासकानि विशेषतः ॥ २९ ॥

अष्टादश पुराणानि प्रधानानि समाख्यया ।
कथारूपेण महता पुरुषार्थैकसाधनम् ॥ ३० ॥

भवन्त्युपपुराणानि तथाऽष्टादश सङ्ख्यया ।
तथैव मुनिभिश्चान्यैः प्रणीतानि महात्मभिः ॥ ३१ ॥

---

[2] मुखं व्याकरणं स्मृतम्—मु.

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति लक्षणैः संयुतानि हि ॥ ३२ ॥

धर्मशास्त्रलक्षणम्

वर्णाश्रमानुरूप्येण धर्माधर्मविभाजकम् ।
धर्मशास्त्रमनुष्ठेयधर्माणां च नियामकम् ॥ ३३ ॥

वेदानुगानां विद्यानां स्वरूपमिति कीर्तितम् ।

आगमस्वरूपम्

अथागमस्वरूपं तु समासेन निगद्यते ॥ ३४ ॥

आगताः शिववक्त्रेभ्यो गताश्च गिरिजामुखम् ।
मताश्च वासुदेवेन यत्तदागमनामकाः ॥ ३५ ॥

आगमेषु चत्वारः पादाः

क्रियापादो योगपादश्चर्याज्ञानाख्यपादकौ ।
नानाविधेष्वागमेषु पादाश्चत्वार ईरिताः ॥ ३६ ॥

क्रियापादः

क्रियापादे नित्यकर्माण्यात्मनां पशुताक्षयः ।
शिवताया अभिव्यक्तिरित्यादि प्रतिपाद्यते ॥ ३७ ॥

श्रीकण्ठेनोपदिष्टार्थाः श्वेताद्या अष्टविंशतिः ।

योगपादः

योगाचार्याः सशिष्याश्च योगश्चापि चतुर्विधः ॥ ३८ ॥

योगपादे मन्त्रलयहठराजाभिधानवान् ।
ईश्वरे चित्तसन्धानरूपश्च प्रतिपाद्यते ॥ ३९ ॥

चर्यापादः

लक्षणं जपमालायाः स्कन्दनन्द्यादिकस्य च ।
चर्यापादे तु कथितं प्रायश्चित्तादिकर्म च ॥ ४० ॥

ज्ञानपादः

ज्ञानपादे पतिपशुपाशास्तु त्रय ईरिताः ।
पतिः कुण्डलिनी माया पशुः पाशस्ततः परम् ॥ ४१ ॥

दीक्षेति च पदार्थाः षडागमेषु प्रकीर्तिताः ।
प्रधानागमसंभूताः सन्त्यसङ्ख्या उपागमाः ॥ ४२ ॥

तेषु केचिन्मतानां तु बहूनां स्युः प्रवर्तकाः ।
अन्ये तु मूलतां यान्ति चतुष्षष्टिकलास्वपि ॥ ४३ ॥

चतुष्षष्टिकलाः

कलास्ताः कथयाम्यद्य समाहितमनाः शृणु ।
अथेतिहासागमौ च काव्यालङ्कारनाटकम् ॥ ४४ ॥

गायकत्वं कवित्वं च कामशास्त्रं दुरोदरम् ।
देशभाषालिपिज्ञानं लिपिकर्म च वाचनम् ॥ ४५ ॥

गणकव्यवहारौ च स्वरशास्त्रं च शाकुनम् ।
सामुद्रिकं रत्नशास्त्रं गजाश्वरथकौशलम् ॥ ४६ ॥

मल्लशास्त्रं सूपकर्म भूरुहाणां च दोहदम् ।
गन्धवादो धातुवादः खनिवादो रसस्य च ॥ ४७ ॥

बिलवादोऽग्निसंस्तम्भः खड्गस्तम्भो जलस्य च ।
वाचः स्तम्भो वयस्तम्भो वश्याकर्षणमोहनम् ॥ ४८ ॥

विद्वेषणोच्चाटने च मारणं कालवञ्चनम् ।
परकायप्रवेशश्च पादुकासिद्धिरेव च ॥ ४९ ॥

वाक्सिद्धिर्गुटिकासिद्धिरैन्द्रजालिकमेव च ।
अञ्जनं परदृष्टेश्च वञ्चनं स्वरवञ्चनम् ॥ ५० ॥

मणिमन्त्रौषधादीनां सिद्धयश्चोरकर्म च ।
चित्रलोहाश्ममृद्दारुवेणुचर्माम्बरक्रिया: ॥ ५१ ॥

अदृश्यकारणं दन्तिकारणं मृगयाविधिः ।
वाणिज्यं पाशुपाल्यं च कृषिरासवकर्म च ॥ ५२ ॥

लावकुक्कुटमेषादियुद्धकारककौशलम् ।
चतुष्पष्टिकलास्त्वेता विद्वद्भिः परिकीर्तिताः ॥ ५३ ॥

प्राधान्येन कलास्त्वेता गण्यन्ते पण्डितोत्तमैः ।

इति श्रीशिवतत्त्वरत्नाकरे प्रथमकल्लोले विद्यास्वरूपनिरूपणं नाम
द्वितीयस्तरङ्गः

---

## तृतीयस्तरङ्गः

स्वामिन्नामप्रपञ्चस्य वेदादेः कारणं परम् ।
शिव एवेति कथितं भगवन् पूर्वमेव हि ॥ १ ॥

दृश्यस्यार्थप्रपञ्चस्य किं पुनः कारणं मतम् ।
तन्मे कथय सर्वज्ञ सर्वशास्त्रविनिश्चितम् ॥ २ ॥

आकर्णय कुमार त्वं यत्पृच्छसि च संप्रति ।
वीरशैवानुसारेण सर्वमावेदयामि तत् ॥ ३ ॥

निरञ्जनादिप्रपञ्चान्तसृष्टिक्रमः

श्रीमान्महानादिभक्तः स्वप्रकाशोऽद्वितीयकः ।
योऽसौ ब्रह्मेति संप्रोक्तः शिवतत्त्वार्थवेदिभिः ॥ ४ ॥

तस्मात्स्वयं [1] प्रादुरासीत्स निरञ्जनजङ्गमः ।
तच्छिखायां शून्यलिङ्गं संजातं [2] विश्वकारणम् ॥ ५ ॥

तस्मान्निष्कललिङ्गं तु संजातं स्वेच्छया पुनः ।
तस्मान्निष्कललिङ्गाच्च महालिङ्गमभूत्स्वयम् ॥ ६ ॥

---

[1] प्रादुरभूत्-म.   [2] शिवकारणम्-क.

तस्मात्प्रणवलिङ्गं तु सृष्ट्युन्मुखमजायत ।
एतस्माच्छिवतत्त्वं तु सादाख्यं च ततोऽभवत् ॥ ७ ॥

तस्मान्महेश्वरो जातस्तस्माद्रुद्रसमुद्भवः ।
तस्माज्जनार्दनो जातस्तस्माज्जातः पितामहः ॥ ८ ॥

पितामहात्समुद्भूतं जगदेतच्चराचरम् ।
आदावनादिभक्तस्य लक्षणं वच्मि ते क्रमात् ॥ ९ ॥

अनादिभक्तलक्षणम्

यदस्ति तत्परं [1] ब्रह्म स्वयं नादिं भजेद्यतः ।
तस्मादनादिभक्तोऽयमित्युक्तस्तत्त्ववेदिभिः ॥ १० ॥

लिङ्गं जङ्गम आदिः स्याद्भक्तश्चानादिरूपकः ।
अङ्गं लिङ्गमिति प्रोक्तं प्राणो जङ्गम उच्यते ॥ ११ ॥

लिङ्गजङ्गमयोरैक्यस्वरूपो भक्त उच्यते ।
जङ्गमो लिङ्गरूपः स्याल्लिङ्गं जङ्गमरूपकम् ॥ १२ ॥

लिङ्गजङ्गमसंयोगोऽनादिभक्तस्य लक्षणम् ।
लिङ्गजङ्गमभक्ताश्च त्रयस्त्वेकस्वरूपकाः ॥ १३ ॥

देहः प्राणस्तथाऽऽत्मा चेत्याग[2]मान्वयनिर्णयः ।
नित्यं पूर्णं चिदानन्दं सद्रूपं ब्रह्म कीर्तितम् ॥ १४ ॥

यदेवाखण्डरूपं स्यादेतद्भक्तस्य लक्षणम् ।
गुरुर्लिङ्गं चरः शेषः पादाम्भश्चैकरूपकम् ॥ १५ ॥

अलघुर्यद्दृढद्रव्यस्तु परिपूर्णं गुरुः स्मृतः ।
दृश्यं लीनं जगद्यस्मिंस्तन्नित्यं लिङ्गमुच्यते ॥ १६ ॥

स्वयंप्रकाशरूपश्च सच्चिज्जङ्गम इष्यते ।
सौख्यं शतगुणाधिक्यं प्रसादोऽयं विशिष्यते ॥ १७ ॥

---

[1] ब्रह्म तदनादि—म. [2] मार्थविनिर्णय इति स्यात्.

एतेषां स्वरसापूरैः सरसीकृत[1]चिद्विधम् ।
एतत्पादोदकं विद्यात्तद्रूपो भक्त उच्यते ॥ १८ ॥

आचारो गुरुसम्बन्धो निष्ठा तल्लिङ्गसंयुता ।
सुज्ञानं जङ्गमश्चैव प्रत्यक्षं च प्रसादकः ॥ १९ ॥

तत्तदेकरसं चैव पादोदकमिदं शृणु ।
इदं चानादिभक्तस्य पञ्चाचारस्वरूपकम् ॥ २० ॥

तस्य रूपान्तरेणैवं षड्विधाचारलक्षणम् ।

भक्तलक्षणम्

[2]अखण्डपूर्णं नित्यं च चित्प्रकाशं प्रकीर्तितम् ॥ २१ ॥
परानन्दं चिद्रसं च षड्विधं भक्तलक्षणम् ।

गुरुलक्षणम्

पूर्णं नित्यं चित्प्रकाशं परानन्दं च चिद्रसम् ॥ २२ ॥
अखण्डत्वमुमादेवि षड्विधं गुरुलक्षणम् ।

लिङ्गलक्षणम्

नित्यं पूर्णं चित्प्रकाशं परानन्दं च चिद्रसम् ॥ २३ ॥
शृणु देवि ह्यखण्डत्वं षड्विधं लिङ्गलक्षणम् ।

चरलक्षणम्

चित्प्रकाशं [3]पूर्णनित्यं परमानन्दचिद्रसौ ॥ २४ ॥
अखण्डत्वं महादेवि षड्विधं चरलक्षणम् ।

शेषलक्षणम्

परमानन्दपूर्णे च नित्यत्वं चित्प्रकाशकम् ॥ २५ ॥
चिद्रसं स्यादखण्डत्वं षड्विधं शेषलक्षणम् ।

---

[1] चिद्विदम्–मु. [2] अखण्डं पूर्णनित्यं च-क. अखण्डं पूर्णनित्ये च इति भवितुमुचितम् । [3] पूर्णनित्यपरमानन्दचिद्रसाः–क. ग.

तीर्थलक्षणम्

चिद्रसं पूर्णनित्ये च चित्प्रकाशं मम प्रिये ॥ २६ ॥

परानन्दमखण्डत्वं षड्विधं तीर्थलक्षणम् ।
इदं तस्य पृथङ्नारि षड्विधाचारलक्षणम् ॥ २७ ॥

भक्ताङ्गानि

गुरुर्लिङ्गं चरश्चैव प्रसादः पादवारि च ।
भूतिरुद्राक्षमन्त्राश्च भक्ताङ्गमिति कथ्यते ॥ २८ ॥

भूतिः परानुभूतिर्हि स्नानं तत्रावगाहनम् ।
त्रिपुण्ड्रं त्रिगुणाभावो ह्यलिङ्गं लिङ्गमेव तत् ॥ २९ ॥

मनोमुखानि चाक्षाणि रुद्राक्षाणि विधाय वै ।
चतुर्दशक्रमाद्धार्याण्येतद्रुद्राक्षधारणम् ॥ ३० ॥

पञ्चषड्विधतत्त्वानि न क्षरन्ते समासतः ।
यस्यां पञ्चाक्षरी सा च स्वयमेव षडक्षरी ॥ ३१ ॥

इत्यष्टावरणं तस्य तन्वष्टकमितीरितम् ।
आचारपञ्चकं रूपषट्कमावरणाष्टकम् ॥ ३२ ॥

तन्वष्टकं स्वस्वरूपादभिन्नं तस्य बिभ्रतः ।
भवेदनादिभक्तस्य स्वरूपमिदमेव हि ॥ ३३ ॥

सर्वकारणरूपं च सर्वतत्त्वपरं तथा ।
अनादिभक्तरूपं तु सदोदितमिदं शृणु ॥ ३४ ॥

भक्तो निरूढे निजभावरूपिणि
निराश्रयानन्दनिवासदायिनि ।
निर्देहके निर्विषये निरिन्द्रिये
निष्केवले नित्यपदे विराजते ॥ ३५ ॥

इदं चानादिभक्तस्य स्वरूपं परिकीर्तितम् ।
तस्य कारणमूर्तीनामाश्रयत्वमथोच्यते ॥ ३६ ॥

अनादिभक्तस्य कारणमूर्त्याश्रयत्वम्

पश्चिमेऽनादिभक्तस्य हृदि भाति निरञ्जनः ।
शिखायां शून्यलिङ्गं तु ब्रह्मरन्ध्रे चिदम्बरम् ॥ ३७ ॥

भ्रूमध्ये शिवशक्ती च कण्ठे पञ्चैव शक्तयः ।
कलापञ्चकमेवं स्यान्मुखपञ्चकमेव च ॥ ३८ ॥

सादाख्यपञ्चकं नादपञ्चकं मूर्तिपञ्चकम् ।
अनाहते तस्य भाति ईश्वराष्टकमेव च ॥ ३९ ॥

मणिपूरकचक्रस्य पञ्चविंशतिमूर्तयः ।
स्वाधिष्ठाने तस्य चैकादशरुद्राः प्रकीर्तिताः ॥ ४० ॥

तस्याधारे विराडन्तर्यामिहैरण्यगर्भकाः ।
ब्रह्माणो नव वेदाश्च विष्णोश्च दशमूर्तयः ॥ ४१ ॥

एवं ह्यनादिभक्तस्य चिद्गर्भाण्डनिवासिनः ।
त्र्यशीतिमूर्तयः प्रोक्ता नियम्या विश्वयोनयः ॥ ४२ ॥

एवं ह्यनादिभक्तस्य लक्षणं परिकीर्तितम् ।

अनादिजङ्गमस्वरूपम्

भक्तस्य पश्चिमहृदि स्थितो योऽनादिजङ्गमः ॥ ४३ ॥

तस्य स्वरूपमधुना समासेन प्रकाश्यते ।
पश्चादनादिभक्तस्य हृच्चित्पद्मान्तरे सदा ॥ ४४ ॥

चिन्मण्डलत्रयोपेतप्रणवासनमध्यगः ।
निरञ्जनस्तत्प्रणवस्वरूपोऽत्र निगद्यते ॥ ४५ ॥

निरञ्जनस्वरूपम्

निराकृतं रञ्जनं यन्मायामोहविजृम्भितम् ।
येन स्वरूपसिद्धेन स भवेद्धि निरञ्जनः ॥ ४६ ॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।

निर्नामं निरवग्रहं निरशनं निष्कारणं निष्कलं
निस्सङ्गं निरुपाधिकं निरुपमं निष्प्रक्रियं निश्चलम् ।
निष्पुण्यं निरनुग्रहं निरधिकं निर्वासनं निर्वहं
निर्भेद्यं निरघं निरञ्जनपदं चैतं भजे जङ्गमम् ॥ ४७ ॥

आद्यन्तरहितं ज्योतिरनादि प्रभुरव्ययः ॥ ४८ ॥

अनादेशो ह्ययातश्च जङ्गमः स्यान्निरञ्जनः ।
इदं तस्य निरालम्बस्वरूपं समुदीरितम् ॥ ४९ ॥

निरञ्जनजङ्गमस्य तत्तदङ्गेषु वेदादीनामवस्थानम्

चतुर्वेदाश्च तद्गर्भं पुराणं तस्य मध्यमम् ।
योगिनो मुनयः सर्वे जङ्गमाङ्घ्रिं समाश्रिताः ॥ ५० ॥

तस्य देहे समस्तानि भुवनानि चतुर्दश ।
पादयोरतलं विन्द्यात्पादोर्ध्वे वितलं तथा ॥ ५१ ॥

जङ्घयोः सुतलं ज्ञेयं जानुदेशे महातलम् ।
तलातलं [2]तदूरौ च गुह्यस्थाने रसातलम् ॥ ५२ ॥

कटिबन्धे तु पातालं सप्त लोका इतीरिताः ।
भूलोको नाभिमध्ये तु भुवर्लोकोऽस्य चोदरे ॥ ५३ ॥

हृदये चापि स्वर्लोको जनोलोकस्तु कन्धरे ।
ताल्वोश्चापि तपोलोकः सत्यलोको ललाटके ॥ ५४ ॥

महर्लोकस्तस्य मूर्ध्नि चतुर्दश समीरिताः ।
ब्रह्माण्डं मकुटं तस्य वदनं गगनं स्मृतम् ॥ ५५ ॥

तद्बाहवो दिशः सर्वा नेत्रे चन्द्रदिवाकरौ ।
शरीरं व्योमरूपं च पातालं पादपङ्कजम् ॥ ५६ ॥

करस्थले शून्यलिङ्गं मेघाः सर्वे जटाः शुभाः ।
[3](चन्द्रज्योत्स्ना विभूतिश्च वेदाः सर्वे क्रियामयाः) ॥ ५७ ॥

---

[1] निःसंशं-म. [2] तदूर्वोरिति स्यात्. [3] इदं क पुस्तके नास्ति.

नक्षत्राणि च पुष्पाणि रुद्राक्षाः कुलपर्वताः ।
सागरो जलपात्रं च कन्था सृष्टिमयं जगत् ॥ ५८ ॥

आसनं पृथिवी तस्याप्यहोरात्रं गुहामठः ।
त्रिकालज्ञानसौभाग्यमृतवः षट्स्थलं प्रिये ॥ ५९ ॥

शेषस्तस्य कटीसूत्रं ज्ञानमुद्रा च वाङ्मयी ।
मेरुर्दण्डो गुणः सूत्रं गोत्रं शिवकुलं भवेत् ॥ ६० ॥

वनस्पतिश्च लोमानि एवमेतानि पार्वति ।
इदं तस्य तु साकारं स्वरूपं परिकीर्तितम् ॥ ६१ ॥

शून्यलिङ्गस्वरूपम्

एतस्माज्जङ्गमादेव शून्यलिङ्गमभूत्स्वयम् ।
तल्लिङ्गेन समुद्भूतं सर्वमेतदतः शृणु ॥ ६२ ॥

सञ्जातं मकुटे शून्यं शून्याज्जातं चिदम्बरम् ।
चिदम्बराच्च चिच्छक्तिः पराशक्तिरभूत्ततः ॥ ६३ ॥

[1] आदिशक्तिरभूत्तस्या इच्छाशक्तिरभूत्ततः ।
क्रियाशक्तिस्ततस्तस्याः क्रमादुद्भवते यतः ।
तस्याः सहस्रांशके च ज्ञानशक्तिसमुद्भवः ॥ ६४ ॥

तस्याः सहस्रांशके च नादकोटिसमुद्भवः ।
तस्य तस्य सहस्रांशे पञ्चसादाख्यसम्भवः ॥ ६५ ॥

तेषां सहस्रकैरंशैर्जातो माहेश्वरः स्वयम् ।
तस्य कोटिसहस्रांशे विग्रहाः पञ्चविंशतिः ॥ ६६ ॥

तदंशसम्भवो रुद्रः तस्माज्जातो जनार्दनः ।
जनार्दनसहस्रांशे ब्रह्मा लोकपितामहः ॥ ६७ ॥

---

[1] इदं क ग पुस्तकयोर्नास्ति.

पितामहाच्च सञ्जातं जगत्स्थावरजङ्गमम् ।
अनादिजङ्गमोत्पन्नसृष्टिक्रम इतीरितः ॥ ६८ ॥

इति श्री शिवतत्त्वरत्नाकरे प्रथमकल्लोले अनादिभक्त-
निरञ्जनजङ्गमसृष्टिक्रमवर्णनं नाम
तृतीयस्तरङ्गः

---

## चतुर्थस्तरङ्गः

अनादिभक्ताद्या सृष्टिर्या निरञ्जनजङ्गमात् ।
प्राक्पितामहपर्यन्तं ते द्वे पूर्वं प्रदर्शिते ॥ १ ॥

शून्यलिङ्गादिसृष्टीनां क्रमः स्वामिन्निरूप्यताम् ।
यत्पृष्टवान् कुमार त्वं तस्योत्तरमहं ब्रुवे ॥ २ ॥

शून्यलिङ्गादिसृष्टिक्रमः

ज्वलत्कालानलाभासा तटित्कोटिसमप्रभा ।
तस्य चोर्ध्वशिखा सूक्ष्मा चिद्रूपा परमाकरा ॥ ३ ॥

तस्यां शिखायामचलं शून्यलिङ्गमजायत ।
तस्माच्छिरस उत्पन्नमादिजङ्गमरूपिणः ॥ ४ ॥

शून्यलिङ्गमिति ख्यातं सर्वकारणकारणम् ।
आदिमध्यान्तशून्यत्वं चिह्नं लिङ्गस्य यस्य तत् ॥ ५ ॥

शून्यलिङ्गमिति प्रोक्तमागमज्ञैरनामयम् ।
तनुशून्यं मनश्शून्यं भावनाभोगवर्जितम् ॥ ६ ॥

कामक्रोधादिशून्यं च शून्यनामेति कीर्तितम् ।

निष्कललिङ्गस्वरूपम्

अथ निष्कललिङ्गस्य स्वरूपमुपवर्ण्यते ॥ ७ ॥

शून्यलिङ्गस्य मध्ये तु निष्कलस्य समुद्भवः ।
न विद्यन्ते कला यत्र तन्निष्कलमुदाहृतम् ॥ ८ ॥

लिङ्गं चिह्नं निष्कलत्वं यस्य तत्तादृशं भवेत् ।
अलक्ष्यमद्वयं शून्यममूर्तं परमव्ययम् ॥ ९ ॥

अनामाव्याकुलं सिद्धमनाद्यं शिवमुच्यते ।
तत्त्वातीतं [1] पदातीतं परतत्त्वं परात्परम् ॥ १० ॥

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।

सर्वमूर्तिसृष्टिक्रमः

तल्लिङ्गेन समुद्भूतं सर्वतत्त्वमतः शृणु ॥ ११ ॥

निष्कलस्यान्तरे त्वासीदादिमूर्तिसमुद्भवः ।
आदिमूर्तिसमाख्यात्तु पराशक्तिसमुद्भवः ॥ १२ ॥

पराशक्तिसमाख्याच्च नादबिन्दुसमुद्भवः ।
नादबिन्दुसमाख्याच्च सादाख्यानसमुद्भवः ।
सादाख्यानसमाख्याच्च इच्छाशिवसमुद्भवः ॥ १३ ॥

इच्छाशिवसमाख्याच्च ईश्वरात्मसमुद्भवः ।
ईश्वरात्मसमाख्याच्च क्रियारुद्रसमुद्भवः ॥ १४ ॥

क्रियारुद्रसमाख्याच्च विष्णुलक्ष्मीसमुद्भवः ।
विष्णुलक्ष्मीसमाख्याच्च ब्रह्मवाणीसमुद्भवः ॥ १५ ॥

ब्रह्मवाणीसमाख्याच्च सर्वजीवसमुद्भवः ।
उदितं निष्कलं लिङ्गं संग्रहेण ततः परम् ॥ १६ ॥

महालिङ्गस्वरूपम्

प्रोच्यतेऽथ महालिङ्गस्वरूपं श्रुतिचोदितम् ।
महनीयं पूज्यतरं लिङ्गं लक्ष्म च यस्य तत् ॥ १७ ॥

---

[1] परातीतं—मु.

तन्महालिङ्गमित्युक्तं वीरशैवविशारदैः।
नादः स्यान्निष्कलगुरुर्बिन्दुः स्याच्छून्यलिङ्गकम् ॥ १८॥

निरञ्जनो जङ्गमोऽयं कलारूप इतीरितः।
त्रिभिरेतैः समायुक्तं महालिङ्गमभूत्स्वयम् ॥ १९॥

महालिङ्गमिदं देवि मनोऽतीतमगोचरम्।
निर्नाम निर्गुणं नित्यं निरञ्जननिरामयम् ॥ २०॥

निर्मलं निष्कलं ज्ञेयं [1]निर्भेद्यं निरुपाधिकम्।
अद्वैतानन्दमक्षीणमसादृश्यमिदं शृणु ॥ २१॥

परानन्दात्मकं लिङ्गं केवलं सन्निरञ्जनम्।
ज्ञानात्मकं सर्वगतं योगिनां हृदये स्थितम् ॥ २२॥

गोलकं परतत्त्वं च चिन्मयं सद्विलासकम्।
शरण्यं सर्वतत्त्वानां लिङ्गाकारेण वर्तते ॥ २३॥

नादो लिङ्गमिति ज्ञेयं बिन्दुः पीठमुदाहृतम्।
नादबिन्दुयुतं रूपं लिङ्गाकारमिहोच्यते ॥ २४॥

बिन्दुः शक्तिः शिवो नादः कला संयोग एव च।
शिवशक्त्योर्भवेद्योगो जगत्सृष्ट्यर्थकारणम् ॥ २५॥

तत्पराशक्तिरित्युक्ता पीठिका सैव नान्यथा।
सर्वस्योत्पत्तिहेतुत्वात्प्रथमं लिङ्गमुच्यते ॥ २६॥

प्रसवित्री तु शक्तीनां पराशक्तिस्तु पीठिका।
शिवतत्त्वं परानन्दं परलिङ्गमुदीरितम् ॥ २७॥

आद्यन्तशून्यममलं परिपूर्णमेकं
सूक्ष्मं परात्परमनामयमप्रमेयम्।
भावैकगम्यमजडं शिवतत्त्वमाहुः।
चिच्छक्तिसंस्फुरणरूपमहात्मलिङ्गम् ॥ २८॥

---

[1] निर्भयं—क.

चराचरात्मकमिदं गम्यते यत्र लीयते ।
उत्पद्यते यतो भूयस्तल्लिङ्गं परमिष्यते ॥ २९ ॥

ब्रह्माण्डकोटयस्तस्य निर्मातुर्लिङ्गरूपिणः ।
शिवस्य कुक्षिजलधौ जायन्ते बुद्बुदोपमाः ॥ ३० ॥

ब्रह्मविष्ण्वादयस्सर्वे देवा वेदादयस्तथा ।
लीयमानास्तु गम्यन्ते तल्लिङ्गं ब्रह्म केवलम् ॥ ३१ ॥

दक्षिणे लीयते ब्रह्मा वामतश्च जनार्दनः ।
हृदये चैव गायत्री [1] सर्ववेदोत्तमा तथा ॥ ३२ ॥

परं गूढं शरीरस्थं लिङ्गं क्षेत्रमनादिमत् ।
यदाद्यमैश्वरं तेजस्तल्लिङ्गं पञ्चसंज्ञकम् ॥ ३३ ॥

अवर्णो वर्णसंयुक्तो विरूपो विश्वरूपधृत् ।
परमात्मा परं ब्रह्म कश्चिद्देवोऽस्ति चिच्छिवः ॥ ३४ ॥

मन्त्राध्वा च पदाध्वा च वर्णाध्वेति च शब्दतः ।
भुवनाध्वा च तत्त्वाध्वा कलाध्वेति च विश्रुतः ॥ ३५ ॥

जगत्यां भुवनाध्वानं पदाध्वानं च पङ्कजे ।
वर्णाध्वानं च वृत्ते तु कलाध्वानं च पङ्कजे ॥ ३६ ॥

तत्त्वाध्वानं [2] पत्तिकायां मन्त्राध्वानं प्रधारिके ।
एवं षडध्वकं न्यस्य सर्वमन्त्रात्मकं शिवम् ॥ ३७ ॥

आदिः प्रणवपीठं स्यादकारो मध्यमेव च ।
उकारो गोमुखं चैव मकारो वर्तुलं तथा ॥ ३८ ॥

नालो बिन्दुर्महातेजा नादश्चाखण्डलिङ्गकम् ।
नकारश्चादिपीठं च मकारो मध्यमेव च ॥ ३९ ॥

शिकारो वर्तुलं चैव वाकारो गोमुखं तथा ।
यकारो बिन्दुरेव स्यात्प्रणवो लिङ्गमुच्यते ॥ ४० ॥

---

1 सर्वे देवोत्तमास्तथा–मु.   2 पट्टिकायां–मु.

नमश्च पीठसंयुक्तं शिकारो मध्यमेव च ।
वाकारो गोमुखं चैव यकारो वर्तुलं तथा ॥ ४१ ॥

ओँकारो गोलकस्थानं लिङ्गं षड्वर्णरूपकम् ।
वृत्तं च गोलकं भावे प्राणः स्यान्मध्यगोमुखे ॥ ४२ ॥

इष्टं पीठं त्रिधा चैकं तत्त्वत्रयमुदाहृतम् ।
आचारं गौरवं वृत्ते मध्ये लिङ्गं व्यवस्थितम् ॥ ४३ ॥

गोमुखे चरलिङ्गं च प्रसादो वर्तुले तथा ।
गोलकं च महद्रूपमिष्टं षड्विधमीरितम् ॥ ४४ ॥

यद्भक्तनिष्ठा निजलिङ्गपीठे
मध्ये प्रसादी स च गोमुखे च ।
यत्प्राणलिङ्गी शरणश्च वृत्ते
चित्ते निजैक्यं त्विति षट् स्थलानि ॥ ४५ ॥

बिन्दुमध्यगतो नादो नादमध्ये तु मूर्तयः ।
मूर्तिमध्यगतं तत्त्वं तत्त्वमध्यगतः शिवः ॥ ४६ ॥

मूलमन्त्रस्वरूपाय मूलमन्त्रात्मरूपिणे ।
मूलप्रकृतिरूपाय मूलस्तम्भाय शंभवे ॥ ४७ ॥

लीलया संगतः साक्षादुमापतिरितीरितः ।
लीलया रहितः साक्षात्स्वयंभूरिति कथ्यते ॥ ४८ ॥

शिवस्तु ब्रह्म चैवोक्तः शक्तिरेवाङ्गमुच्यते ।
शिवशक्तिसमायोगो जगत्सृष्ट्यर्थकारणम् ॥ ४९ ॥

पराशक्तिस्तस्य चिन्ता सहस्रांशेन जायते ।
तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः ॥ ५० ॥

तच्छक्तेस्तु सहस्रांशादिच्छाशक्तिसमुद्भवः ।
तच्छक्तेस्तु सहस्रांशात् ज्ञानशक्तिसमुद्भवः ॥ ५१ ॥

तच्छक्तेस्तु सहस्रांशात्क्रियाशक्तिसमुद्भवः ।
एषा वै पञ्चधा शक्तिर्निष्कला चेति कीर्तिता ॥ ५२ ॥

क्रिया कर्मेति यज्ज्ञेयं तस्मात्कर्मेति नामतः ।
लिङ्गपीठप्रकारेण कर्मसादाख्यलक्षणम् ॥ ५३ ॥

चत्वारि कर्तृरूपादि केवलं नाद उच्यते ।
लिङ्गं शिव इति ज्ञेयं शक्तिः पीठमुदाहृतम् ॥ ५४ ॥

योनिलिङ्गप्रकारेण जगत्सृष्ट्यर्थकारणम् ।
तथा संयोगभावश्च कर्मतत्त्वमुदाहृतम् ॥ ५५ ॥

तस्मान्नादात्मतत्त्वं च सर्वकारणकारणम् ।
सदाशिव इति प्रोक्तं सर्वशास्त्रेषु निश्चितम् ॥ ५६ ॥

अस्मिन् प्रकरणे सम्यक् शून्यनिष्कललिङ्गयोः ।
महालिङ्गस्य चोक्तोऽभूत्क्रमः सृष्टिस्वरूपयोः ॥ ५७ ॥

इति श्री शिवतत्त्वरत्नाकरे प्रथमकल्लोले शून्यनिष्कलमहालिङ्गादि-
सृष्टिक्रमनिरूपणं नाम चतुर्थस्तरङ्गः

---

## पञ्चमस्तरङ्गः

निष्कलाभ्युदिता सृष्टिरवादि बहुधा गुरो ।
विदिताशेषतन्त्रस्य ज्ञातं किल तवाखिलम् ॥ १ ॥

महालिङ्गसमुद्भूताज्जाता प्रणवलिङ्गतः ।
या सृष्टिः साधुना स्वामिन् कथनीया [1]दयावशात् ॥ २ ॥

वक्ष्येऽहं ते समासेन शिवमन्त्र[2]परायण ।
अखण्डगोलकाकारमहातेजःस्वरूपिणः ॥ ३ ॥

महालिङ्गस्य चिन्तायां जगतां सृष्टिहेतवे ।
पराशक्तिप्रकाशोऽभूत्तस्याः संयोगतः स्वयम् ॥ ४ ॥

---

[1] कृपावशात्.   [2] परायणः—क.

नादबिन्दुकलारूपत्रिविधप्रणवेन तु ।
लिङ्गमाविरभूदेकमखण्डप्रणवात्मकम् ॥ ५ ॥

[1]ऊर्ध्वमुन्नमयत्येष ओंकारो विश्वमात्मनि ।
लीयते गम्यते यत्र लिङ्गे विश्वं चराचरम् ॥ ६ ॥

ओंकार एव लिङ्गं स्यात् सर्वकारणकारणम् ।
ओमिति ब्रह्म परमं लिङ्गाकारं महेश्वरम् ॥ ७ ॥

सृष्ट्यर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणम् ।
शक्तिसंयोगसद्भावं स्वेच्छयाऽचिन्तयच्छिवः ॥ ८ ॥

वेदादिमूलं प्रथमं स्वराणां
त्रयोदशस्थं शशिसूर्यबिम्बम् ।
नादात्मकं सुप्तभुजङ्गरूपं
त्रितत्त्वमूलं प्रणवं नमामि ॥ ९ ॥

परापरविभागेन प्रणवस्तु द्विधा मतः ।
परः परतरं ब्रह्म प्रज्ञाऽऽनन्दादिलक्षणम् ॥ १० ॥

प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ।
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ॥ ११ ॥

प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ।
परमप्रणवप्राप्तिहेतुत्वात्प्रणवोऽऽथवा ॥ १२ ॥

अवाग्जप्रणवे विन्द्यादोंकारं नादरूपकम् ।
ओंकारप्रभवं विन्द्यादकारप्रणवं परम् ॥ १३ ॥

अकारप्रणवे विन्द्यादुकारप्रणवं तथा ।
अकारोकारसंयोगे मकारप्रणवं तथा ॥ १४ ॥

एवं प्रवृत्तिमार्गेण प्रोक्तं प्रणवपञ्चकम् ।
निवृत्तिर्वक्ष्यते तेषां स्वरूपमपि गोपितम् ॥ १५ ॥

---

[1] कपुस्तके नास्ति.

अकारं प्रथमं विन्द्यादुकारं तु द्वितीयकम् ।
तृतीयं तु मकारं च ओंकारं च चतुर्थकम् ॥ १६ ॥

अवाग्जं पञ्चमं विन्द्यात्पञ्चप्रणवभेदकम् ।
अकारं नादरूपेण जाग्रत्स्थाने निवेशयेत् ॥ १७ ॥

बिन्दुरूपमुकारं च स्वप्नस्थाने निवेशयेत् ।
कलारूपं मकारं च सुप्तिस्थाने निवेशयेत् ॥ १८ ॥

ओंकारं शक्तिरूपं च तुर्यस्थाने निवेशयेत् ।
तुर्यातीते ह्यवाग्जं च शिवरूपं विनिक्षिपेत् ॥ १९ ॥

नकारस्तारकस्थानं मकारो दण्ड उच्यते ।
शिकारः कुण्डलाकारो वाकारश्चार्धचन्द्रकः ॥ २० ॥

यकारो बिन्दुरूपोऽयमोंकारः पञ्चवर्णकः ।
तारकेऽस्मिन् स्थितो ब्रह्मा विष्णुस्तद्दण्डके स्थितः ॥ २१ ॥

रुद्रश्च कुण्डलाकारेऽर्धचन्द्रे तथेश्वरः ।
बिन्दौ सदाशिवस्तस्थौ तेजोरूपं कलापदे ॥ २२ ॥

तैलधाराऽनवच्छिन्नदीर्घघण्टानिनादवत् ।
अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ २३ ॥

तस्मादुच्चारणात्सम्यक् प्रणवस्य शिवात्मनः ।
पातकानि विनश्यन्ति हृदि ध्याते परे शिवे ॥ २४ ॥

मन्त्राणामादिरोंकारश्छन्दसामिव शोभने ।
येनेदं जगदुत्पन्नमेतद्रूपानुसारिणा ॥ २५ ॥

ओंकारः प्रणवश्चैव ब्रह्म ज्ञानं शिवात्मकम् ।
तेजोबीजं निष्कलं स्यात्तारकं निष्कलात्मकम् ॥ २६ ॥

नादो नादादिहन्नादो वेदादिर्वेदभूरपि ।
मुक्तिबीजं मन्त्रबीजं वर्णबीजं महेश्वरि ॥ २७ ॥

इत्यष्टादशभेदानि नामानि प्रणवस्य वै ।
अव्यञ्जनमघोषं च विस्तरं रेफवर्जितम् ॥ २८ ॥

वितालुकण्ठहृन्नासिकोष्ठजं चाक्षरं तथा ।
ओंकारप्रभवा वेदा ओंकारप्रभवाः स्वराः ॥ २९ ॥

ओंकारप्रभवं सर्वं त्रैलोक्यं सचराचरम् ।
प्रणवो हि परं ब्रह्म प्रणवः परमं पदम् ॥ ३० ॥

साक्षात्परशिवो योऽसावोमित्येकोऽद्वितीयकः ।
स ख्यातः परमात्मेति तस्मान्नादः समुत्थितः ॥ ३१ ॥

नादादुद्भवते बिन्दुः बिन्दोस्संजायते कला ।
कलाया जायते शक्तिस्तयाः संवित्प्रजायते ॥ ३२ ॥

संविदो जायते चित्तं तस्मात्तेजः प्रजायते ।
तद्वै सदाशिवः प्रोक्तस्तस्माज्जातः स ईश्वरः ॥ ३३ ॥

ईश्वराज्जायते रुद्रः सृष्टिव्यापारको हरः ।
रुद्रात्प्रजायते विष्णुर्विष्णोर्ब्रह्मा प्रजायते ॥ ३४ ॥

ब्रह्मणो जायते देवि जगत्सर्वं चराचरम् ।
ओमित्यङ्गं महेशस्य महतः परमात्मनः ॥ ३५ ॥

वर्णान्यस्य तु सद्यादिमुखानीत्यभिवर्णितम् ।
पञ्चब्रह्ममयान्येतान्युच्यन्ते स्वयमेव च ॥ ३६ ॥

अत ओङ्कार एवोक्तं षडङ्गब्रह्मलक्षणम् ।
स दैवतं स्यात् षड्वर्णं सबीजं तत्त्वषट्कम् ॥ ३७ ॥

यकारः परिपूर्णत्वं वाकारो नित्यमेव च ।
आनन्दश्च शिकारः स्यान्मकारश्चित्स्वरूपकः ॥ ३८ ॥

नकारः सत्स्वरूपं च प्रणवो मिश्ररूपकः ।
यकारः परसंज्ञः स्याद्वाकारो गूढमेव च ॥ ३९ ॥

शरीरस्थं शिकारः स्याल्लिङ्गक्षेत्रं मकारकः ।
नकारोऽनादिमद्रूपमोङ्कारश्च महत्स्वतः ॥ ४० ॥

यकारश्च पराशक्तिर्वाकारश्चादिसंज्ञिका ।
इच्छाशक्तिः शिकारश्च ज्ञानशक्तिर्मकारकः ॥ ४१ ॥

क्रियाशक्तिर्नकारश्च प्रणवश्चित्स्वरूपकः ।
यकारः शिवसादाख्यं वाकारः स्यादमूर्त्तकम् ॥ ४२ ॥

शिकारो मूर्त्तिसादाख्यं मकारः कर्तृनामकम् ।
नकारः कर्मसादाख्यं प्रणवो महदुच्यते ॥ ४३ ॥

प्रणवो गोप्यवदनमैशान्यं यार्णमेव च ।
तत्पूरुषं च वाकारः शिकारः स्यादघोरकम् ॥ ४४ ॥

मकारो वामदेवं च सद्योजातं नकारकः ।
ज्ञानं प्रणवबीजं स्यादाचारं च नकारकः ॥ ४५ ॥

मकारश्च गुरोर्बीजं शिकारः शिवलिङ्गकम् ।
वाकारश्चरबीजं च यकारश्च प्रसादकम् ॥ ४६ ॥

एवं बीजाक्षरज्ञानं दुर्लभं हि वरानने ।
ओङ्कार ऐक्यरूपः स्याद्कारः शरणस्तथा ॥ ४७ ॥

वाकारः प्राणलिङ्गी च प्रसादी च शिकारकः ।
मकारश्च महेशः स्यान्नकारो भक्त एव च ॥ ४८ ॥

षट्स्थलं चैव षड्वर्णमिति गोप्यं वरानने ।
प्रणवो भावहस्तश्च ज्ञानहस्तो यकारकः ॥ ४९ ॥

वाकारः सुमनोहस्तः शिकारो निरहंकृतिः ।
मकारो बुद्धिहस्तश्च चित्तहस्तो नकारकः ॥ ५० ॥

भावादिहस्तषट्कं च षडक्षरमयं भवेत् ।
ओङ्कारः स्यात्परशिवो यकारस्तु सदाशिवः ॥ ५१ ॥

ईश्वरोऽयं च वाकारः शिकारो रुद्र उच्यते ।
मकारो विष्णुरेव स्याद्ब्रह्मा नार्णमिति क्रमात् ॥ ५२ ॥

सृष्टिमार्गेण जानीयाज्जप्यामेनां विलोमतः ।
वर्णातीतस्तदोङ्कारो यकारः स्फटिकोपमः ॥ ५३ ॥

वाकारः श्वेतवर्णाढ्यः शिकारो नीलवर्णभाक् ।
मकारो रक्तसंकाशो नकारः पीतवर्णवान् ॥ ५४ ॥

समस्तवर्णबीजाढ्यः प्रणवः सर्वकारणम् ।
व्योमबीजं यकारः स्याद्वाकारो वायुबीजकम् ॥ ५५ ॥

शिकारो वह्निबीजं स्यान्मकारो जलबीजकम् ।
नकारः पृथिवीबीजं तस्मादेतज्जगत्प्रसूः ॥ ५६ ॥

प्रणवः सर्वतत्त्वात्मा स वै परशिवात्मकः ।
यकार ऐश्वरं तत्त्वं वार्णं माहेश्वरं तथा ॥ ५७ ॥

शिकारः शिवतत्त्वं स्यात् विद्यातत्त्वं तु मः स्मृतः ।
नकारश्चात्मतत्त्वं स्यादोङ्कारः सर्वतत्त्वकः ॥ ५८ ॥

ओङ्कारः केवलं ज्ञानं यार्णं वेदसहस्रकम् ।
अथर्वणो वकारः स्याच्छिकारः सामसंज्ञिकः ॥ ५९ ॥

मकारो यजुरेवोक्तो नार्णमृग्वेदसंज्ञिकम् ।
तस्मादाम्नायजनकः षडक्षरमहामनुः ॥ ६० ॥

वेदाः स्वराश्च मन्त्राश्च सर्वेऽप्यत्र समुत्थिताः ।
पञ्चभूतानि सर्वाणि पञ्च तन्मात्रकाणि च ॥ ६१ ॥

ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च ।
पञ्च ब्रह्माणि पञ्चैव कृत्यानि सह कारणैः ॥ ६२ ॥

बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः ।
पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः ॥ ६३ ॥

तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि ।
इति पञ्चाक्षरीमन्त्रहेतुता प्रणवस्य तु ॥ ६४ ॥

प्रणवाङ्के द्विपञ्चाशद्वर्णोत्पत्तिक्रमं ततः ।
अष्टत्रिंशत्कलोत्पत्तिमेदं वद महेश्वर ॥ ६५ ॥

कलोत्पत्तिः

यथा तां सकलो देवो निष्कलेन समन्वितः ।
कलामुत्पादयामास सर्वमन्त्रप्रवर्तिकाम् ॥ ६६ ॥

ओंकारो मूर्धमध्यस्थ ओंकारो व्यापकस्तथा।
ओंकारे प्रथमां रेखामकारं सृजति प्रभुः ॥ ६७ ॥

नाम्ना नाम कला विद्या सर्ववर्णे व्यवस्थिता।
रेखां द्वितीयामोंकार उकारं च तथाऽसृजत् ॥ ६८ ॥

प्रतिष्ठात्पीत्यनुज्ञेया उकाराक्षरसम्भवा।
मूर्ध्नि तस्य भवेद्रेषा सूक्ष्मरेखा निरञ्जना ॥ ६९ ॥

मकारः सा भवेत्तत्र निवृत्तिर्नामतः कला।
त्रिवर्णमक्षरं चैतदोंकारे च प्रजायते ॥ ७० ॥

हलक्षं तु त्रिवर्णं च चिदात्मनि तु जायते।
अ आ इ ई उकारश्च ऊ ऋ ॠ च ऌ ॡ तथा ॥ ७१ ॥

ए ऐ ओ औ अं तु अश्च यकारे च प्रजायते ।
कखौ गघौ ङकारश्च चछौ जझौ ञकारकः ॥ ७२ ॥

टठवर्णौ तथा ह्यस्मिन् वाकारे च प्रजायते।
डढौ णश्च तथौ वर्णौ दधनाः पफवर्णकौ ॥ ७३ ॥

एतानि दशवर्णानि जायन्तेऽत्र शिकारके।
बभौ मयरवर्णानि लकारमपि वर्णकम् ॥ ७४ ॥

वर्णषट्कं तथा ह्यस्मिन् मकारे च प्रजायते।
वशौ षसौ हवर्णश्च नकारे च प्रजायते ॥ ७५ ॥

इति वर्णाक्षरन्यासः सुसूक्ष्मः कमलासने।
प्रणवस्य तरोर्मूलं मकारो नादरूपकः ॥ ७६ ॥

स्कन्धो बिन्दुरुकारः स्यात् कलाश्शाखा मकारकः।
स्त्रीरूपा इव पुंरूपास्तथा चोभयरूपकाः ॥ ७७ ॥

सर्वे वै देवतारूपाः प्रत्येकं वर्णरूपकाः।
प्रकृतिः सप्तवर्णानि विकृतिस्तु नवार्णकम् ॥ ७८ ॥

अकारश्च इकारश्च उकारश्च ऋकारकः।
ऌकारश्चैव एकारस्तथा ओकार एव च ॥ ७९ ॥

एते सप्त स्वराः प्रोक्ताः स्वरेषु प्रकृतिस्वराः।
शेषास्तु विकृतिः प्रोक्तास्तेषामुद्भव उच्यते ॥ ८० ॥

अकारे चैव आकार इकारे ईसमुद्भवः।
उकारे चैव ऊकारः ऋकारे ॠसमुद्भवः ॥ ८१ ॥

ऌकारे चैव ॡकारः एकारे ऐसमुद्भवः।
ओकारे औ तथा ज्ञेयः क्रमेणैवं समुद्भवः ॥ ८२ ॥

एता वै विकृतिः प्रोक्ता आकारादिनवार्णकाः।
अकारादिविसर्गान्ता एते वै षोडश स्वराः ॥ ८३ ॥

कलाभेदो ह्ययं प्रोक्तो विकलाभेदकं शृणु।

विकलोत्पत्तिः

ककारादिक्षकारान्ता वर्णाश्च विकलाः स्मृताः ॥ ८४ ॥

ककारश्च गकारश्च चकारश्च जकारकः।
टकारश्च डकारश्च तकारश्च दकारकः ॥ ८५ ॥

पकारश्च बकारश्च शकारश्च क्षकारकः।
एते द्वादशवर्णाश्च पुल्लिङ्गा इति कीर्तिताः ॥ ८६ ॥

खकारश्च घकारश्च छकारश्च झकारकः।
ठकारश्च ढकारश्च थकारश्च धकारकः ॥ ८७ ॥

फकारश्च भकारश्च षकारश्च सकारकः।
एते वै भानुबीजाश्च जायाश्चेति प्रकीर्तिताः ॥ ८८ ॥

शेषान् नपुंसकान् विन्द्यात्त्रयो भेदा इति स्मृताः।
एवमेव च वर्णानामुत्पत्तिः समुदीरिता ॥ ८९ ॥

ओंकारं नादरूपं च ओंकारं बिन्दुरूपकम्।
ओंकारं व्यापिनं विन्द्यादोंकारो गोप्यमाननम् ॥ ९० ॥

सद्योजातो नकारश्च वामदेवो मकारकः।
शिकारोऽघोरसंयुक्तो वाकारः पुरुषस्तथा ॥ ९१ ॥

सदाशिवो यकारश्च पञ्चवक्त्रं प्रकीर्तितम् ।
ईशानः पुरुषश्चैव अघोरो वामदेवकः ॥ ९२ ॥

सद्योजातश्च पञ्चैवं कलाब्रह्म प्रकीर्तिताः ।
ईशानस्य कलाः पञ्च पुरुषस्य चतुःकलाः ॥ ९३ ॥

अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश ।
सद्योजातस्याष्टकला अष्टत्रिंशत्कलाः स्मृताः ॥ ९४ ॥

'ईशानस्सर्वविद्यानां' प्रथमं परिकीर्तितम् ।
'ईश्वरस्सर्वभूतानां' द्वितीयं परिकीर्तितम् ॥ ९५ ॥

'ब्रह्माधिपति'रित्येवं 'ब्रह्मणोऽधिपति' स्तथा ।
'ब्रह्मे' तीदं तृतीयं स्यात् 'शिवो मेऽस्तु' चतुर्थकम् ॥ ९६ ॥

'सदाशिवोमि'ति ज्ञेयं पञ्चमं परिकीर्तितम् ।
एते चेशानरूपाश्च पञ्चसङ्ख्याः प्रकीर्तिताः ॥ ९७ ॥

'तत्पुरुषाय विद्महे' प्रथमं परिकीर्तितम् ।
'महादेवाय धीमहि तन्नो' चेति द्वितीयकम् ॥ ९८ ॥

'रुद्र' स्तृतीयमित्युक्तं चतुर्थं तु 'प्रचोदयात्' ।
एवं तत्पूरुषकलाश्चतस्र इति कीर्तिताः ॥ ९९ ॥

'अघोरेभ्य' स्तथापूर्वं 'घोरेभ्य'श्च द्वितीयकम् ।
'घोरघोर' स्तृतीयं स्यात् 'तरेभ्य'श्च चतुर्थकम् ॥ १०० ॥

'सर्वेभ्यः' पञ्चमं विन्द्यात् षष्ठं 'सर्व' उदाहृतम् ।
'सर्वेभ्यश्च 'नमस्तेऽस्तु' सप्तमं चेति कीर्तितम् ॥ १०१ ॥

अष्टमं 'रुद्ररूपेभ्य' अघोरस्याष्टकं स्मृतम् ।
प्रथमं 'वामदेवाय जेष्ठाये'ति द्वितीयकम् ॥ १०२ ॥

तृतीयं 'रुद्राय नमः कालाये'ति चतुर्थकम् ।
पञ्चमं 'कल' इत्युक्तं ततो 'विकरणाय' षट् ॥ १०३ ॥

सप्तमं 'बलमि'त्युक्तमष्टमं 'विकरणाय' च ।
नवमं 'बलमित्युक्तं दशमं 'प्रमथनाय' च ॥ १०४ ॥

'सर्वभूतदमनाय नम' श्चैकादशं स्मृतम् ।
द्वादशं च 'मन' श्चेति 'उन्मनाय' त्रयोदशम् ॥ १०५ ॥

एतास्त्रयोदश कला वामदेवे प्रकीर्तिताः ।
'सद्योजातं प्रपद्यामि' प्रथमं परिकीर्तितम् ॥ १०६ ॥

द्वितीयं 'सद्योजाताय वै नम 'श्चेति कीर्तितम् ।
तृतीयं तु 'भवे' चैव 'भवे' चेति चतुर्थकम् ॥ १०७ ॥

पञ्चमं 'चानादिभवे' षष्ठं चेति 'भवस्व माम्' ।
सप्तमं च 'भवो' विद्या 'दुद्भवाया' ष्टमं भवेत् ॥ १०८ ॥

एवमष्ट कलाः प्रोक्ताः सद्योजात उदाहृताः ।
ईशानादीनि सद्यान्तान्यष्टत्रिंशत्कलाः स्मृताः ॥ १०९ ॥

एवं तत्स्मृतिमात्रेण मूर्तं सकलरूपधृत् ।
निष्कलं तदभावे तु तस्मात्सकलनिष्कलम् ॥ ११० ॥

इति श्री शिवतत्त्वरत्नाकरे प्रथमकल्लोले प्रणवलिङ्गस्वरूपतदुत्पन्न-वर्णकलास्वरूपनिरूपणं नाम पञ्चमस्तरङ्गः

---

## षष्ठस्तरङ्गः

विश्वात्मन् [1]प्रणवात्सृष्टिं श्रुत्वा तुष्टोऽस्म्यहं प्रभो ।
वेदनीयं च यत्तत्त्वं तत्स्वरूपं वदस्व मे ॥ १ ॥

नादादिसृष्टिं ते वच्मि श्रृणु त्वं प्रियनन्दन ।

नादस्वरूपम्

पिण्डमध्यगतः प्राणः प्राणमध्यगतो ध्वनिः ॥ २ ॥

---

[1] प्रणवसृष्टिं-ग.

ध्वनिमध्यगतो नादो नादमध्यगतः शिवः ।
नादो लिङ्गमयः प्रोक्तो नादो गुरुमयस्तथा ॥ ३ ॥

नादः प्रणवरूपः स्यान्नादः सादाख्यरूपकः ।
नादश्च शिवचैतन्यं नादो निर्मलतत्त्वकम् ॥ ४ ॥

नादश्च ब्रह्मरूपं स्यान्नादः सर्वत्र तिष्ठति ।
[1]तृणकाष्ठाणुरेण्वादि[2]सर्वचेतनचेतनः ॥ ५ ॥

अक्षरानक्षरात्मा च वेदशास्त्रागमस्मृतिः ।
पुराणादिमहातन्त्रं नादः सर्वात्मकः स्मृतः ॥ ६ ॥

सप्तस्वरादिविद्याश्च वाद्यं वीणादिभेदकम् ।
सर्वं नादमयं प्रोक्तं सुसूक्ष्मं गोपयेत्पुनः ॥ ७ ॥

ततं तन्त्र्यादिवाद्यं च विततं चर्मयोजितम् ।
घनं कांस्यादितालं च सुषिरं वेणुभाषितम् ॥ ८ ॥

इतः परं वदाम्यद्य तत्त्वत्रयमनिन्दितम् ।

### तत्त्वत्रयम्

तत्त्वं तु त्रिविधं ज्ञेयं [3]तस्य भेदं शृणुष्व च ॥ ९ ॥

शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।
शिवतत्त्वं महासेन निष्कलं चेति कीर्तितम् ॥ १० ॥

सकलं निष्कलं चैव सदाशिवमिहोच्यते ।
महेशं सकलं विद्यात्त्रिविधास्ते भवन्ति वै ॥ ११ ॥

शिवमेकं विजानीयात्सादाख्यं पञ्चधा भवेत् ।
महेशं तु महासेन पञ्चविंशतिभेदकम् ॥ १२ ॥

शिवं परात्परं सूक्ष्मं नित्यं सर्वगताव्ययम् ।
अनिन्दितमनौपम्यमप्रमाणमगोचरम् ॥ १३ ॥

---

[1] तृणकाष्ठादिरेण्वादि—क. [2] सर्वांचेतन—मुद्रितपाठः. [3] तत्त्वभेदं—क.

शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम् ।
व्योमातीतं हि सूक्ष्मं च नित्यं कारणकारणम् ॥ १४ ॥

व्याप्तं सर्वगतं प्रोक्तमक्षीणं चाव्ययं भवेत् ।
अमलं चानिन्दितं स्यादनौपम्यमसाम्यकम् ॥ १५ ॥

प्रमाणाद्यतिरिक्तत्वादप्रमाणमिति स्मृतम् ।
निर्गुणत्वाद्विशेषेण ह्यगोचरमिति स्मृतम् ॥ १६ ॥

सकलं निष्कलं चैव सदाशिवमिहोच्यते ।

सदाशिवादिपञ्चतत्त्वानि

सदाशिवस्तथेशश्च ब्रह्मेशश्चेश्वरः स्मृतः ॥ १७ ॥
ईशानश्चेति पञ्चैव तत्त्वभेदाः प्रकीर्तिताः ।

पञ्चसादाख्यानि

शिवं सदाशिवं ज्ञेयममूर्तं चेश उच्यते ॥ १८ ॥

मूर्तं ब्रह्मेति विज्ञेयं कर्तृ चैवेश्वरः स्मृतः ।
ईशानः कर्मसादाख्यं पञ्चसादाख्यमुच्यते ॥ १९ ॥

शिवसादाख्यस्वरूपम्

शान्त्यतीता परा शक्तिस्तस्याः पर्यायवाचिका ।
पराशक्तिदशांशेन शिवसादाख्यसंभवः ॥ २० ॥

पराशक्त्युद्भवत्वाच्च शुद्धत्वाच्छिव उच्यते ।
प्रसादं सूक्ष्मरूपं च ज्योतीरूपमिति स्मृतम् ॥ २१ ॥

विद्युद्रूपमिवाकाशे प्रत्यक्षं सर्वतोमुखम् ।
शिवतत्त्वमिदं प्रोक्तं तत्त्वानामखिलालयम् ॥ २२ ॥

शिवसादाख्यमित्युक्तममूर्तं च ततः शृणु ।

अमूर्तसादाख्यस्वरूपम्

शान्तिश्चैवादिशक्तिश्च तस्याः पर्याय[1]वाचकौ ॥ २३ ॥

---

[1] वाचिका—क. ग.

आदिशक्तिदशांशेन ह्यमूर्तस्य समुद्भवः ।
आदिशक्तेरमूर्तत्वादमूर्तं चेति कीर्तितम् ॥ २४ ॥

अमूर्तत्वात्कलाहीनं तद्रूपं लिङ्गमुद्भवम् ।
सूर्यकोटिप्रतीकाशं ज्योतिस्तम्भाकृति स्थितम् ॥ २५ ॥

तस्याभ्यन्तर्गता मूर्तिरमूर्तत्वादगोचरा ।
एतद्वै दिव्यलिंङ्गं तु मूलस्तम्भमिहोच्यते ॥ २६ ॥

लिङ्गात्सर्वं समुत्पन्नं लयस्तस्मिन् प्रकीर्तितः ।
अमूर्तमेवमाख्यातं मूर्तं चापि ततः शृणु ॥ २७ ॥

मूर्तसादाख्यस्वरूपम्

इच्छाशक्तिश्च विद्या च तस्याः पर्याय[1]वाचकौ ।
तच्छक्तेस्तु दशांशेन मूर्तसादाख्यमुद्भवम् ॥ २८ ॥

इच्छाशक्तेर्गुणत्वाच्च तस्मान्मूर्तमुदाहृतम् ।
मूर्तत्वाच्च कलायुक्तं रूपं चेति प्रकीर्तितम् ॥ २९ ॥

ज्वालाग्निसदृशप्रख्या दिव्यलिङ्गाकृतिर्भवेत् ।
तस्यार्द्धार्धैकभागे तु चैकवक्त्रसमन्वितम् ॥ ३० ॥

त्रिणेत्रं चारुवदनं सर्वावयवसंयुतम् ।
एव(क)मेकाननोपेतं दिव्यलिङ्गाकृतिर्भवेत् ॥ ३१ ॥

मूर्तसादाख्यमित्युक्तं कर्तृसादाख्यमुच्यते ।

कर्तृसादाख्यस्वरूपम्

ज्ञानं चैव प्रतिष्ठा च तस्याः पर्याय[2]वाचकौ ।
ज्ञानशक्तिदशांशेन कर्तृसादाख्यमुद्भवम् ॥ ३२॥

ज्ञानकर्तृस्वभावत्वात्कर्तृनामेति कीर्तितम् ।
ज्ञानं हि शुद्धभावत्वात् स्फटिकाभासमुच्यते ॥ ३३ ॥

---

[1] वाचिका—क.  [2] वाचिका-क.

दिव्यलिङ्गं [1]महादैर्घ्यं महास्थूलतयान्वितम् ।
तस्य मध्ये स्थिता मूर्तिरीश्वरः सर्वकारणम् ॥ ३४ ॥

पञ्चमूर्धं चतुर्वक्त्रं नेत्रैर्द्वादशभिर्युतम् ।
चतुरास्यं चतुर्वर्णं वसुश्रोत्रसमन्वितम् ॥ ३५ ॥

अष्टहस्तं द्विपादं च सर्वलक्षणसंयुतम् ।
शूलं परशुखड्गं च अभयं दक्षिणे करे ॥ ३६ ॥

पाशं नागं च घण्टां च वरं वै वामहस्तके ।
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ॥ ३७ ॥

एवं तदैश्वरं प्रोक्तं कर्तृलिङ्गमिहोच्यते ।
कर्तृसादाख्यमित्युक्तं कर्मसादाख्यमुच्यते ॥ ३८ ॥

कर्मसादाख्यस्वरूपम्

निवृत्तिः स्यात्क्रियाशक्तिः तस्याः पर्याय[2]वाचकौ ।
क्रियाशक्तिदशांशेन कर्मसादाख्यमुद्भवम् ॥ ३९ ॥

क्रिया कर्मेति विज्ञेया तस्मत्कर्मेति नामतः ।
लिङ्गपीठप्रकारेण कर्मसादाख्यमुद्भवम् ॥ ४० ॥

नादो लिङ्गमिति ज्ञेयं बिन्दुः पीठमुदाहृतम् ।
बिन्दुनादयुतं रूपं लिङ्गाकारमिहोच्यते ॥ ४१ ॥

लयादिभेदः प्रागुक्तो यदुपाधौ शिवस्य तु ।
स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता ॥ ४२ ॥

चत्वारि कर्तृरूपादि केवलं नाद उच्यते ।
लिङ्गं शिव इति ज्ञेयं पीठं शक्तिरुदाहृता ॥ ४३ ॥

योनिलिङ्गप्रकारेण जगत्सृष्ट्यर्थकारणम् ।
तथा संयोगभावस्य तत्त्वं कर्मेत्युदाहृतम् ॥ ४४ ॥

---

[1] महादीर्घं-मु.  [2] वाचिका-क.

बिन्दुमध्यगतो नादो नादमध्ये तु मूर्तयः ।
मूर्तिमध्यगतं तत्त्वं तत्त्वमध्यगतः शिवः ॥ ४५ ॥

एतत्तत्त्वमयं लिङ्गं सर्वतत्त्वालयं विदुः ।
लिङ्गे तु जायते सर्वं जगत् स्थावरजङ्गमम् ॥ ४६ ॥

तस्माल्लिङ्गं विशेषेण कर्मरूपमुदाहृतम् ।
कर्मोदये च सृष्टिः स्यात्कर्मान्ते संहृतिर्भवेत् ॥ ४७ ॥

एतत्तत्त्वस्वरूपं तु सृष्टिस्थितिलयावहम् ।
पञ्चसादाख्यमेवोक्तं कर्मसादाख्यमुच्यते ॥ ४८ ॥

इत्येवं पञ्चसादाख्यलक्षणं समुदीरितम् ।

### सादाख्यसमुद्भवाः द्विपञ्चाशन्मूर्तयः

सादाख्यं पञ्चधैवोक्तमीश्वराष्टकमेव च ॥ ४९ ॥

पञ्चविंशति माहेशा रुद्रा एकादश स्मृताः ।
त्रिमूर्ति[1]रङ्गत्रितयं द्विपञ्चाशच्च मूर्तयः ॥ ५० ॥

### भवादिमूर्तीनां स्थानानि

भूम्यां भवो जले शर्वश्चाग्नौ रुद्रस्तथैव च ।
वायौ भीमो महादेवस्त्वाकाशे च दिवाकरे ॥ ५१ ॥

उग्रः सोमः शशाङ्के च जीवात्मनि महान् स्मृतः ।
एताः पशुपतेश्चाष्टमूर्तयः स्युरिति श्रुतिः ॥ ५२ ॥

### पञ्चविंशतिलीलामूर्तिस्वरूपम्

प्रथमं सोमधारी च द्वितीयमुमया सह ।
तृतीयं वृषभारूढं चतुर्थं नर्तकोपमम् ॥ ५३ ॥

---

[1] लिङ्गत्रयं–क.

वैवाहं पञ्चमं विद्यात् षष्ठं भिक्षाटनं भवेत्।
कामारिं सप्तमं विद्यात्कालारिश्चा[1]ष्टमः स्मृतः ॥ ५४ ॥

नवमस्त्रिपुरारिः स्याज्जलन्धरवधो दश।
एकादशमजारिः स्याद्द्वादशं वीरभद्रकः ॥ ५५ ॥

त्रयोदशं हरिध्वंस अर्धनारी चतुर्दशम्।
किरातः स्यात्पञ्चदशं कङ्काली षोडशं भवेत् ॥ ५६ ॥

चण्डेशानुग्रहश्चैव तथा सप्तदशं भवेत्।
विषापहरणं चैव अष्टादशमिति स्मृतम् ॥ ५७ ॥

चक्रदानस्वरूपं च स्मृतमेकोनविंशकम्।
विघ्नप्रसादो विंशः स्यादुमास्कन्दैकविंशकम् ॥ ५८ ॥

द्वाविंशमेकपादं स्यात्त्रयोविंशं सुखावहम्।
दक्षिणामूर्तिरूपं च चतुर्विंशमिति स्मृतम् ॥ ५९ ॥

लिङ्गोद्भवस्वरूपं तु पञ्चविंशं प्रकीर्तितम्।
एतेषां तत्त्वसंयुक्तमेकात्रिंशमिति स्मृतम् ॥ ६० ॥

इति माहेशलीलास्तु पञ्चविंशतिरीरिताः।

एकादश रुद्राः

शिवो महेश्वरः शम्भुः श्रीकण्ठो भव ईश्वरः ॥ ६१ ॥

महादेवः पशुपतिर्नीलकण्ठो वृषध्वजः।
परमेश इमे रुद्रा एकादश समीरिताः ॥ ६२ ॥

इत्येकादश रुद्राणां विभेदा उपवर्णिताः।

त्रिमूर्तयः

सृष्टिकारणरूपोऽयं भवाख्य इति संस्मृतः ॥ ६३ ॥

रक्षणार्थं मृडाख्यश्च हरः संहारकारणम्।
इति त्रयो मूर्तयश्च समाख्याताः क्रमादिह ॥ ६४ ॥

---

[1] ष्टमं भवेत्—क.

द्विपञ्चाशन्मूर्तयो हि सादाख्येन समुद्भवाः ।
इति सादाख्यसम्भूता सृष्टिः समुपवर्णिता ॥ ६५ ॥

इति श्रीशिवतत्त्वरत्नाकरे प्रथमकल्लोले नादतत्त्वत्रयद्विपञ्चाशन्मूर्तिभेदप्रदर्शनं नाम षष्ठस्तरङ्गः

———

## सप्तमस्तरङ्गः

गुरो सादाख्यसम्भूता मूर्तिसृष्टिरितीरिता ।
महेश्वराख्यमूर्त्यंशविलासप्राप्तिसम्भवः ॥ १ ॥

विराट्पुरुष इत्युक्तः कीदृग्लक्षणसंयुतः ।
तत्त्वानि च द्विपञ्चाशत्कीदृशानीत्युदीर्यताम् ॥ २ ॥

तत्कुमार ब्रुवे तुभ्यं यज्ज्ञातुमभिकाङ्क्षसे ।

### विराट्पुरुषस्वरूपम्

माहेश्वरांशात्संजज्ञे विराट्पुरुषनामतः ॥ ३ ॥

सहस्रशीर्षा पुरुषः सहस्राकृतिरीश्वरः ।
सहस्रनयनो देवः सहस्रचरणः शिवः ॥ ४ ॥

सहस्रबाहुर्विश्वात्मा त्रिशूली दीप्तलोचनः ।
दंष्ट्राकरालवदनः परब्रह्मात्मकः शिवः ॥ ५ ॥

ब्राह्मणोऽस्य मुखमासीत् बाहू [1] राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ६ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ ७ ॥

---

[1] राजन्यकः—मु. पा.

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयत् ॥ ८ ॥

जठरे लीयते सर्वं जगत्स्थावरजङ्गमम्।
पुनरुत्पद्यते तस्माद्ब्राह्मणाद्यं चराचरम् ॥ ९ ॥

अनादिरुद्रमूर्तिस्तु सृष्टिस्थितिलयाधिपः।
तत्त्वान्यनेन रुद्रेण जातानीत्युच्यते शृणु ॥ १० ॥

कलाद्येकादशतत्त्वभेदाः

कलाऽविद्या च रागश्च कालो नियतिरेव च।
भावको बोधकश्चैव ईश्वरश्च सदाशिवः ॥ ११ ॥

शक्तिश्च शिव इत्युक्तं तत्त्वमेकादशं स्मृतम्।

अवान्तरतत्त्वभेदाः द्विपञ्चाशत्

पृथग्भिन्नानि तत्त्वानि द्विपञ्चाशत्प्रभेदतः ॥ १२ ॥

कला पञ्चविधा जाता अविद्या पञ्चधा पुनः।
रागश्च त्रिविधः प्रोक्तः कालस्त्रिविध एव च ॥ १३ ॥

नियतिः षट्प्रकारा च भावको दशधा स्मृतः।
बोधकं द्विविधं चैव ईश्वरस्त्रिविधः स्मृतः ॥ १४ ॥

सदाशिवः पञ्चविधः सा शक्तिः पञ्चधा भवेत्।
शिवतत्त्वं पञ्चविधं द्विपञ्चाशच्च तत्त्वकम् ॥ १५ ॥

पञ्चकलातत्त्वानि

शान्त्यतीता च शान्तिश्च विद्या चैव प्रतिष्ठिका।
निवृत्तिश्चेति पञ्चैव कला इत्युपवर्णिताः ॥ १६ ॥

पञ्चाविद्यातत्त्वानि

तनुरज्ञानमोहौ च माया चानृतमेव च।
एवं पञ्चविधाऽविद्या सर्वजीवाश्रिता भवेत् ॥ १७ ॥

त्रिधा रागतत्त्वम्

रागश्चैव विरागश्च समरागस्त्रिधा तथा ।
रागतत्त्वमिति प्रोक्तं

कालतत्त्वं त्रिविधम्

कालतत्त्वं ब्रवीम्यहम् ॥ १८ ॥

भूतो भावी वर्तमान इति कालस्त्रिधा मतः ।

षोढा नियतितत्त्वानि

आयुः कर्म च चित्तं च विद्या निधनमेव च ॥ १९ ॥

कालतत्त्वात्सुखं चेति षड्विधा नियतिः स्मृता ।

दश भावकानि तत्त्वानि

रतिर्हासश्च शोकश्च क्रोध उत्साह एव च ॥ २० ॥

भयं जुगुप्सितं चैव विस्मयो वीर एव च ।
कारुण्यं चेति कथ्यन्ते भावका दश भेदतः ॥ २१ ॥

बोधकद्वैविध्यम्

माया निर्मायेति चोक्तं द्विविधं बोधकं तथा ।

ईश्वरतत्त्वत्रैविध्यम्

सत्वं रजस्तमश्चेति त्रिविधश्चेश्वरः स्मृतः ॥ २२ ॥

सदाशिवतत्त्वानि पञ्च

शिवं त्वमूर्तिमूर्तिश्च कर्तृ कर्मेति पञ्चधा ।
सदाशिव इति प्रोक्तः शक्तिभेदमतः शृणु ॥ २३ ॥

पञ्च शक्तिभेदाः

पराशक्तिस्तथादिश्च इच्छा ज्ञानं क्रिया तथा ।
शक्तितत्वं पञ्चविधमिति गोप्यं मम प्रिये ॥ २४ ॥

### पञ्चधा शिवतत्त्वानि

सच्च चिच्च तथाऽनन्दो नित्यं पूर्णमिति क्रमात् ।
शिवतत्त्वं पञ्चविधं तद्भेदं शृणु पार्वति ॥ २५ ॥

इति रुद्रा द्विपञ्चाशत्तत्त्वानि क्रमशोऽभवन् ।
संस्तूयमानो दीप्तांगैर्देवैर्मुनिगणैस्तथा ॥ २६ ॥

### विष्णोर्विष्णुत्वप्राप्तिकारणम्

धृतत्रिपुण्ड्रको दिव्यरुद्राक्षैश्चापि भूषितः ।
सततं शुशुभे विष्णुर्भस्मदिग्धतनूलतः ॥ २७ ॥

इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन साङ्गतैकं सनातनम् ॥ २८ ॥

यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ २९ ॥

विष्णुमायात्मकमिदं जगत्स्थावरजङ्गमम् ।
जनार्दनस्य मूर्ध्नोऽपि पञ्च[1]तत्त्वसमुद्भवः ॥ ३० ॥

तस्य वक्त्राच्च संभूता देवा दैत्या दिशो दश ।
तद्विष्णोर्जठराच्चैव सर्वलोकसमुद्भवः ॥ ३१ ॥

आदित्या द्वादशविधा इन्द्रश्चन्द्रो मनुस्तथा ।
चराचराणि सर्वाणि बभूवुर्गरुडध्वजात् ॥ ३२ ॥

जनार्दनसहस्रांशात् ब्रह्मा लोकपितामहः ।
पितामहाच्च सकलं जगत्स्थावरजङ्गमम् ॥ ३३ ॥

कालः कला च नियतिः साक्षान्मायोद्भवानि च ।
कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः ॥ ३४ ॥

---

[1] भूत–क. ग.

पञ्चकञ्चुकसंयुक्तः प्रकृतिं भोक्तुमुद्यतः ।
अविद्यादिसमायुक्तः पूरुषः परिकीर्तितः ॥ ३५ ॥

अथ प्रकृतितत्त्वं तु क्रमप्राप्तं निरूप्यते ।
तच्च मायोद्भवं यस्मात् कलातः स्थूलतां [1] गतम् ॥ ३६ ॥

अथ प्रकृतितत्त्वात्तु गुणतत्त्वमजायत ।
सत्त्वादीनां समावस्थां प्राप्तः सत्त्वगुणात्मकः ॥ ३७ ॥

क्षोभकोऽत्र महातेजाः श्रीकण्ठोऽनन्तविक्रमः ।
प्रबुद्धः परमेशानः शक्तिसंपर्कमात्रतः ॥ ३८ ॥

गुणतत्त्वात्मिका बुद्धिरभवन्मुनिपुंगव ।
स च त्रिविध उद्दिष्टः प्रथमस्तत्र तैजसः ॥ ३९ ॥

वैकारिको द्वितीयः स्यात् तथा भूतादिकोऽपरः ।
सत्त्वेनोत्कृष्टभावो यः स तैजस इहोच्यते ॥ ४० ॥

वैकृतो रजसोत्कृष्टो भूतादिस्तमसाधिकः ।
तैजसादप्यहंकारान्मनो बुद्धीन्द्रियाणि च ॥ ४१ ॥

पञ्च कर्मेन्द्रियाणि स्युरहंकाराच्च वैकृतात् ।
अहंकाराच्च भूतादेर्जाता तन्मात्रसंहतिः ॥ ४२ ॥

महाभूतानि जायन्ते क्रमात्तन्मात्रपञ्चकात् ।
आकाशं पवनस्तेजः तोयं भूरिति संज्ञया ॥ ४३ ॥

एतेषां गगनादीनां भूतानां पृथगंशकैः ।
अन्योन्यमेलनात्तत्त्वान्यभूवन् पञ्चविंशतिः ॥ ४४ ॥

क्रमः स कथ्यते भूतविभागान्योन्ययोगयोः ।

पञ्चीकरणम्

एकैकं द्विविधं कृत्वा तत्रैकैकं पृथग्दिशेत् ॥ ४५ ॥

---

[1] जगत्–मु. पा.

शिष्टैकैकं समादाय पुनश्च विभजेत् द्विधा ।
द्विधा विभक्ते तत्रैकं संस्थाप्यान्यं चतुर्विधम् ॥ ४६ ॥

कुर्यादेवं विभागो स्यात् भूतमेकं तु षड्विधम् ।
स्थूलांशान् पञ्चभूतानां पृथगेव विनिक्षिपेत् ॥ ४७ ॥

पञ्चविंशतितत्त्वानि भूतांशैः पञ्चपञ्चभिः ।

व्योमगतव्योमाद्यंशपञ्चकेभ्यो ज्ञानाद्युत्पत्तिः

व्योम्नि व्योमांशतो ज्ञानं व्योम्नि वाय्वंशतो मनः ॥ ४८ ॥

व्योम्नि तेजोंऽशतो बुद्धिर्व्योम्नि चित्तं जलांशतः ।
व्योम्नि क्ष्मांशादहंकार इत्याकाशजपञ्चकम् ॥ ४९ ॥

वायुजपञ्चकम्

वायौ वाय्वंशतो व्यानो वायौ व्योम्नः समानकः ।
वायावुदानस्तेजोंऽशादपानो वाय्वबंशतः ॥ ५० ॥

वायौ भूम्यंशतः प्राण इति वायुजपञ्चकम् ।

तैजसपञ्चकम्

तेजस्तेजोंऽशतश्चक्षुस्तेजोव्योमांशतः श्रुतिः ॥ ५१ ॥

तेजोवाय्वंशतस्त्वक्स्याज्जिह्वा तेजोजलांशतः ।
तेजोभूम्यंशतो घ्राणमिति तैजसपञ्चकम् ॥ ५२ ॥

आप्यपञ्चकम्

अप्सु स्वांशाद्रसोत्पत्तिः शब्दोऽप्सु गगनांशतः ।
अप्सु वाय्वंशतस्स्पर्शो रूपमप्सु तु तेजसः ॥ ५३ ॥

अप्सु भूम्यंशतो गन्ध इत्यप्संभूतपञ्चकम् ।

भूमिजपञ्चकम्

भूमौ भूम्यंशतः पायुर्भुवो व्योमांशतस्तु वाक् ॥ ५४ ॥

भूमौ वाय्वंशतः पाणी पादौ भूमौ तु तेजसः ।
भूमौ जलांशेनोपस्थमिति भूमिजपञ्चकम् ॥ ५५ ॥

व्योम्नो ज्ञानं तथा व्यानश्चक्षुश्च रसपायुकौ ।
वायोर्मनस्समानौ च श्रोत्रं शब्दश्च वागपि ॥ ५६ ॥

तेजसो बुद्ध्युदानौ च त्वक्स्पर्शः पाणिरित्यपि ।
अद्भ्यश्चित्तमपानश्च जिह्वारूपं च पादकः ॥ ५७ ॥

भूमेरहंकृतिः प्राणो घ्राणो गन्ध उपस्थकम् ।
पञ्चविंशतितत्त्वानि भूतैरेवं तु जज्ञिरे ॥ ५८ ॥

स्थूलांशः पञ्चभूतानां ब्रह्माण्डं परिकीर्तितम् ।
सूक्ष्मांश एव पिण्डाण्डमिति शास्त्रेषु निश्चयः ॥ ५९ ॥

उदीरितो य एवार्थः पार्वत्यै शम्भुना पुरा ।
स एवार्थो मया प्रोक्तस्तत्संवादात्मना स्थितः ॥ ६० ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-
परमेश्वरप्रसादासादिताशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचिते
वेदागमान्तर्गतविविधविद्यातत्त्वसारभूते शिवतत्त्वरत्नाकरे प्रथमकल्लोले
विराट्पुरुषादिमूर्तित्रयस्वरूपतत्त्वप्रभेदपञ्चीकरणविभाग-
प्रदर्शनं नाम सप्तमस्तरङ्गः

———

एवं सप्ततरङ्गेषु भुवनोदयधामसु ।
नवोत्तरा पञ्चशती पद्यानामिह सङ्ख्यया ॥

वेदागमपुराणानां सारसङ्ग्रहरूपकम् ।
वीरशैवशिखारत्नं शैवामृतपुराणकम् ॥

दशाङ्गसृष्ट्युद्धरणवाक्यग्रन्थं विलोक्य च ।
तथैव चानादिवीरशैवाचारस्य सङ्ग्रहम् ॥

निर्मितोऽयमभूदाद्यः कल्लोलः सुधियां मुदे ।
श्रीमत्सद्गुणसोमशेखरलसच्चेन्नाम्बिकासूनुना

श्रीदीक्षागुरुचेन्नवीरकरसंजातेन गौरीपतेः ।
भूयः पूर्णकृपाजुषा बसवराजेन्द्रेण क्लृप्ते पुनः
कल्लोलः परिपूरितः कृतिवरे त्वस्मिन्नभूदादिमः ॥

इति श्रीबसवराजीये प्रथमकल्लोलः समाप्तः

———

# द्वितीयकल्लोले

## प्रथमस्तरङ्गः

हारीभूतफणीन्द्रमौलिमणिषु च्छायां विलोक्यात्मनो
रुष्टामन्यवधूभ्रमेण दधतीं हन्तुं करस्योद्यमम् ।
छायास्वीदृशचेष्टितासु च तवावष्टम्भ इत्यूचिषीं
बुध्वा तद्विनतां ह्रियाथ गिरिजां श्लिष्यन् शिवः पातु [1] वः ॥

योगिनामप्यगम्योऽर्थः स्वामिन् साधु निरूपितः ।
तवान्तःकरणादर्शे स्वत एव हि बिम्बिताः ॥ १ ॥

दुर्ज्ञेया अपि सिद्धान्ताः प्रतिभान्ति सहस्रशः ।
पूर्वं बहुविधा सृष्टिः कर्तृभेदेन वर्णिता ॥ २ ॥

[2] अधुना भूतसङ्घानां ब्रह्माण्डस्य प्रपञ्चना ।
तदन्तर्वर्तिनां चैव लोकानां च [3]स्थितिं क्रमात् ॥ ३ ॥

तेषां भेदान्प्रमाणं च दयया मयि कीर्तय ।
त्वया यदनुयुक्तं तदधुना कीर्त्यते श्रृणु ॥ ४ ॥

पञ्चविंशतितत्त्वैस्तु परस्परविमिश्रितैः ।
अचिन्त्यशक्तितः शम्भुर्ब्रह्माण्डं समजीजनत् ॥ ५ ॥

शतकोटिप्रमाणं च ब्रह्माण्डमिदमुच्यते ।

### त्रसरेण्वादिपरिमाणनिरूपणम्

जालसूर्यमरीचिस्थः सूक्ष्मो यः परिदृश्यते ॥ ६ ॥

त्रसरेणुरिति ख्यातः सर्वशास्त्रेषु सम्मतः ।
रजोवालाग्रलिक्षाश्च यूकश्चैव यवोदरम् ॥ ७ ॥

---

[1] नः–क. ग. [2] अधुना भूतसंभूतब्रह्माण्डस्य प्रपञ्चनम्–क. ग.
[3] स्थितिक्रमान्–क. ग.

अङ्गुलं तद्विजानीयादष्टधा वृद्धिभाग्भवेत् ।
चतुर्विंशत्यङ्गुलानि हस्तस्तु परिकीर्तितः ॥ ८ ॥

चतुर्हस्तं तु चापः स्यात् क्रोशस्तद्विसहस्रकम् ।
योजनं तच्चतुष्कं [1] चेत्येवं मानविभेदतः ॥ ९ ॥

एतस्य शतकोटिस्तु ब्रह्माण्डे मानमुच्यते ।

परिमाणे मतान्तरम्

केचिच्चापद्वयं दण्डः क्रोशस्तद्विसहस्रकम् ॥ १० ॥

योजनं तच्चतुष्कं चेत्येवं मानविभेदतः ।
पञ्चाशत्कोटिविस्तारं ब्रह्माण्डमिदमूचिरे ॥ ११ ॥

घनवृत्तसमाकारगोलकाकृति हैमकम् ।
अथास्य मध्ये कालाग्निर्द्वात्रिंशन्नरकास्तथा ॥ १२ ॥

कूश्माण्डः सप्तपातालं हाटकाख्यस्ततः परम् ।
भूर्भुवः स्वर्महस्तस्माज्जनोलोकस्तपस्ततः ॥ १३ ॥

सत्यवैकुण्ठशैवाख्या लोकानेतान् विदुर्बुधाः ।
लोकत्रयं वदन्त्यन्ये पातालं पृथिवीं तथा ॥ १४ ॥

स्वर्गश्चेति प्रभेदेन लोकांस्तानेव च त्रिधा ।
एतेषु नित्यं तिष्ठन्ति सर्गा लोकेषु वेधसः ॥ १५ ॥

प्रथमो महतः सर्गो [2] विज्ञेयो ब्रह्मणस्तु यः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ १६ ॥

वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकस्तु [3] सः ।
इत्येष [4] प्राकृतः सर्गः सम्भूतोऽबुद्धिपूर्वकः ॥ १७ ॥

---

[1] स्यादेवं मानमुदाहृतम्—क. ग. [2] ब्रह्मणः परमेष्ठिनः—वाय. [3] कस्मृतः—वाय. [4] प्रकृतेः सर्गः—वाय.

मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्यक्स्रोतस्तु यः प्रोक्तः तिर्यग्योनिः [1]स उच्यते ॥ १८ ॥

तथोर्ध्वस्रोतसः षष्ठो देवसर्गस्तु स स्मृतः ।
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ १९ ॥

अष्टमोऽनुग्रहः सर्गः [2]सात्त्विकस्तामसस्तु सः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ २० ॥

प्राकृता वैकृताश्चैवं कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥ २१ ॥

प्राकृता वैकृताश्चैव जगतो मूलहेतवः ।
त्रिकालं च त्रिसन्ध्या च दिवारात्रिचतुष्टयम् ॥ २२ ॥

वेदा मन्त्राश्च यज्ञाश्च सिद्धयो ज्ञानषट्क्रियाः ।
समयाः षड्गुणाश्चैव स्त्रीपुंसक्लीवकं तथा ॥ २३ ॥

उत्पत्तिस्थितिसंहाराः सस्यानि च फलानि च ।
विद्युदप्सरसो मेघाः क्रिमिकीटसरीसृपाः ॥ २४ ॥

चतुष्पादा द्विपादाश्च षट्पादाश्च मृगास्तथा ।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाता जरायुजाः ॥ २५ ॥

जलजा नव लक्षाणि स्थावराणां तु विंशतिः ।
क्रिमयो रूद्रसंख्याकाः पक्षिणां दशलक्षकम् ॥ २६ ॥

त्रिंशल्लक्षाणि पशवश्चतुर्लक्षं तु मानवाः ।
चतुरभ्यधिकाशीतिलक्षाणि प्राणिजातयः ॥ २७ ॥

एवं नानाविधा जीवा ब्रह्माण्डान्तर्निवासिनः ।
ब्रह्मणोऽण्डस्य विस्तारं शतकोटिसमुच्छ्रयम् ॥ २८ ॥

विस्तरेण प्रवक्ष्यामि समाहितमनाः शृणु ।
अधः कटाहस्योच्छ्राय [3]एककोटिक उच्यते ॥ २९ ॥

---

[1] स पञ्चमः–वाय. [2] कौमारो नवमः स्मृतः–वाय. [3] एककोटिः स उच्यते–क. ग.

तस्योपरि महान् लोकः कालाग्निरिति नामतः ।
कोटिषोडशकश्चैव तदुच्छ्रायः प्रकीर्तितः ॥ ३० ॥

तदन्तः काञ्चनं धाम कालाग्नेः कोटिरेव तु ।
यत्रान्तकालतीक्ष्णांशुकोटितेजास्तथाविधः ॥ ३१ ॥

रुद्रैरास्ते वृतो देवः कालाग्निरिति विश्रुतः ।
ईश्वरः पिङ्गलः कालः [1]क्रोधनो ज्वलनश्चलः ॥ ३२ ॥

धनदः शङ्करोऽनन्तः पद्मो दिक्ष्वध ऊर्ध्वतः ।
सर्वोर्ध्ववर्तिभूतानां यस्मिन्नुद्वृत्त[2]तेजसि ॥ ३३ ॥

भयमुत्पद्यते शक्त्या [3]संहर्त्र्या बोधिते प्रभौ ।
तस्य स्वभावतो ज्वालाः प्रवृत्ता [4]दशकोटिशः ॥ ३४ ॥

योजनानां तदर्धेन धूमः सान्द्रोऽतिदारुणः ।
कालाग्निभुवनादूर्ध्वं तस्यान्तर्व्यास उच्यते ॥ ३५ ॥

द्वात्रिंशत्कोटयश्चैव योजनानां ततः परम् ।
लक्षाण्यपि चतुश्चत्वारिंशत्परिमितानि तु ॥ ३६ ॥

त्रिंशत्सहस्रकं चैव दशोत्तरशताष्टकम् ।
ततः पुटास्त्रयस्त्रिंशत् प्रत्येकं च तदुच्छ्रयः ॥ ३७ ॥

लक्षाणि नवतिश्चैव द्वात्रिंशच्च सहस्रकम् ।
शतं विंशतिरेकं च योजनानामुदीरतः ॥ ३८ ॥

अन्तरालं पुनस्तेषां प्रत्येकं लक्षमेककम् ।

द्वात्रिंशन्नरकाः

द्वात्रिंशन्नरकास्ते तु कीर्त्यन्ते नामतोऽधुना ॥ ३९ ॥
रौरवध्वान्तशीतोष्णतापाम्बुजमहाम्बुजाः ।
कालसूत्रोऽष्टमो ह्येते नरका इति विश्रुताः ॥ ४० ॥

---

[1] क्रोधीशो जलदश्चलः—क. ग. [2] तेजसा—मु. प. [3] संहर्त्र्यां चोदिते प्रभो—क. ग. [4] दशकोटयः—क. ग.

सूच्यग्रकालखड्गाश्च क्षुरधाराम्बरीषकौ ।
तप्ताङ्गारमहादाहौ सन्तापश्चेति ये मुने ॥ ४१ ॥

[1]भ्रमत्यष्टासु भीभत्सा महाशब्दभयानुगाः ।
लाक्षाप्रलेपमांसादनिरुछ्वसनसोच्छ्वसाः ॥ ४२ ॥

युग्माद्रिशाल्मलीलोहप्रदीपक्षुत्पिपासिकाः ।
क्रिमीणां निचयश्चैव राजानः परिकीर्तिताः ॥ ४३ ॥

लोहस्तम्भोऽथ विण्मूत्रे तथा वैतरणी नदी ।
तामिस्रश्चान्धतामिस्रः कुम्भीपाकश्च रौरवः ॥ ४४ ॥

महापदानु[2]गामी च [3]राजराजेश्वराह्वयः ।
त्रयस्त्रिंशत्पु[4]टेष्वर्धं पार्थिवं चार्धमायसम् ॥ ४५ ॥

तन्मध्ये नरका घोरा बहुशस्तमसि स्थिताः ।
तेषां नरकभेदानामष्टाविंशतिकोटयः ॥ ४६ ॥

एतेषां दारुणानां तु नरकाणां पतिः स्थितः ।
कूश्माण्ड इति विख्यातः प्रलयार्कानलद्युतिः ॥ ४७ ॥

करालवदनः क्रुद्धो वृत्तकोटरलोचनः ।
टङ्कपाणिस्तथाभूतैर्भूतैर्भूयोभिरावृतः ॥ ४८ ॥

पापास्त्वेतेषु पच्यन्ते नराः कर्मानुरूपतः ।
यातनाभिर्विचित्राभिरापापप्रक्षयान्तकम् ॥ ४९ ॥

प्रायश्चित्तोज्झिता दृप्ता निजधर्मपराङ्मुखाः ।
परधर्मरताश्चोराः पतन्ति नरकाग्निषु ॥ ५० ॥

महापातकिनः कल्पं तिष्ठन्ति नरकाग्निषु ।
मन्वन्तरं पातकिनो देवब्रह्मस्वहारिणः ॥ ५१ ॥

---

[1] भवंत्यष्टासु बीभत्सा महाशब्दपदानुगाः—क. ग. [2] गाबीची—ख. [3] राजेत्यारभ्य—करालवदनः क्रुद्ध इत्यन्तो भागः क. पुस्तके न दृश्यते. [4] रीष्वर्धे—ग.

उपपातकिनो मर्त्या देववेदाग्नियज्वनाम् ।
द्विजगोगुरुधर्माणां निन्दका ब्रह्मणो दिनम् ॥ ५२ ॥

अन्ये चतुर्युगं मर्त्यास्तदर्धं च नराधमाः ।
तिष्ठन्ति नरके घोरे निजमापानुरूप्यतः ॥ ५३ ॥

द्यूतस्त्रीविषयासक्ता ये धर्मे[1] विकलाः खलाः ।
पतन्ति तेषु घोरेषु नरकेषु नराधमाः ॥ ५४ ॥

न शृण्वन्ति च ये मूढाः साधूक्तं धर्मगौरवम् ।
प्रत्यक्षं केन तद्दृष्टं प्रत्युतेति वदन्ति च ॥ ५५ ॥

कामलोभाभिभूताश्च बिडालव्रतिनस्तथा ।
पापिष्ठाः कर्महीनाश्च जिह्वोपस्थपरायणाः ॥ ५६ ॥

यतिनिन्दापरा ये च क्षेत्रतीर्थादिदूषकाः ।
पतन्ति तेषु ते मर्त्या विवशाः पापबन्धनाः ॥ ५७ ॥

इहानुभूय निर्दिष्टमायुर्मर्त्याः स्वयम्भुवा ।
निमित्तं किञ्चिदासाद्य विमुच्यन्ते कलेवरैः ॥ ५८ ॥

लभन्ते ते पुनर्देहं [2]यातनीयं स्वकर्मजम् ।
तन्मात्रगुणसम्पन्नं सुखदुःखोपभोगदम् ॥ ५९ ॥

पापाः पापक्षयो यावत् पच्यन्ते नरकाग्निषु ।
आमलप्रक्षयाद्वह्नौ ध्मायन्ते धातवो यथा ॥ ६० ॥

यावन्तो जन्तवः स्वर्गभूपातालेषु सर्वतः ।
तावन्त एव घोरेषु सन्त्यधो नरकाग्निषु ॥ ६१ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले ब्रह्माण्डान्तर्गतलोकानुवर्णने
कालाग्निरुद्रनरककूश्माण्डरुद्रलोकानुवर्णनं नाम
प्रथमस्तरङ्गः

---

[1] विमुखाः–क. ग. [2] यातनार्हं

# द्वितीयस्तरङ्गः

## विस्तरशो नरकभेदादिनिरूपणम्

नरकाणां प्रभेदाः प्राक्सङ्ग्रहेण समीरिताः ।
स्वामिन्नेतर्हि तानेव विस्तरेणोपवर्णय ॥ १ ॥

नरकास्तु कियन्तस्ते तेषु वा यातनाश्च काः ।
कीदृशास्तेषु बहुधा दुःखानुभवभागिनः ॥ २ ॥

एतत्सर्वं ममाचक्ष्व श्रोतुमिच्छामि विस्तरात् ।
पुत्र ते [1]वर्ण्यते सर्वं यच्छ्रोतुमभिकांक्षसे ॥ ३ ॥

[2] अष्टाविंशतिरेवोक्ताः क्षितेर्नरककोटयः ।
[3]सप्तमस्य तलस्याधो घोरे तमसि संस्थिताः ॥ ४ ॥

घोराख्या प्रथमा कोटिः [4]सुघोरातलसंस्थिता ।
अतिघोरा महाघोरा [5]घोरघोरा च पञ्चमी ॥ ५ ॥

षष्ठी [6]तरलताराख्या सप्तमी च भयानका ।
अष्टमी कालरात्रिश्च नवमी च भयोत्कटा ॥ ६ ॥

दशमी तदधश्चण्डा महाचण्डा ततोऽप्यधः ।
चण्डकोलाहला चान्या प्रचण्डा [7]नरकाधिका ॥ ७ ॥

पद्मा पद्मवती [8]भीमा भीमभीषणनायिका ।
कराला विकराला च वज्रा विंशतिका स्मृता ॥ ८ ॥

त्रिकोणा पञ्चकोणा च सुदीर्घा [9]परिवर्तुला ।
[10]सप्तभौमाष्टभौमा च दीप्ता [11]यामेति चाष्टमी ॥ ९ ॥

---

[1] वर्ण्ये–क. ग. [2] अष्टाविंशतिसंख्याभिः क्षित्यधः सप्तकोटयः–पु. पा. [3] सप्तमस्य तलस्यान्ते–पु. पा. [4] सुघोरा तदधःस्थिता–पु. पा. [5] घोररूपा च पञ्चमी–पु. पा. [6] तरतलाख्या च–पु. पा. [7] चण्डनायिका–पु. पा. [8] भीता भीषणनायिका–पु. पा. [9] चाखिलार्तिदा. [10] समा भीमबलाभोग्रा दीप्तप्रायेति चाष्टमी–पु. पा. [11] मायेति–क. ग.

इत्येता नामतः प्रोक्ता घोरा नरककोटयः ।
अष्टाविंशतिरेवैताः पापानां [1]यातनात्मनाम् ॥ १० ॥

तासां क्रमेण विज्ञेयाः पञ्च पञ्चैव नायकाः ।
प्रत्येकं सर्वकोटीनां नामतः सन्निबोधत ॥ ११ ॥

रौरवः प्रथमस्तेषां रुवन्ते यत्र देहिनः ।
[2]महारौरवको यत्र महान्तोऽपि रुदन्ति च ॥ १२ ॥

तमः शीतं तथा चोष्णं पञ्चाद्या नायकाः स्मृताः ।
[3]सुघोरः सुतपस्तीक्ष्णः पद्मः संजीवनः शठः ॥ १३ ॥

महातमो विलोमश्च [4]सुभीमश्च कटंकटः ।
[5]तीव्रवेषी करालश्च विकरालः प्रकम्पनः ॥ १४ ॥

[6]महापद्मः सुपद्मश्च कालवक्रश्च गर्जनः ।
सूचीमुखः सुनेमिश्च खादकः सुप्रपीडनः ॥ १५ ॥

कुम्भीपाकः सुपाकश्च क्रकचश्चातिदारुणः ।
अङ्गारराशिभवनमसृक्पूयह्रदस्तथा ॥ १६ ॥

तीक्ष्णायस्तुण्डशकुनिर्महासंवर्तकस्तथा ।
[7]सुतप्ताब्जः सुलेपश्च पूतिमांसो द्रवत्त्रपुः ॥ १७ ॥

उच्छ्वासश्च निरुच्छ्वासः सुदीर्घः कूटशाल्मलः ।
दुरिष्टः सुमहा[8]नादः प्रभावः सुप्रभावनः ॥ १८ ॥

ऋक्षमेष[9]वृकाः शल्यसिंहव्याघ्रगजाननाः ।
श्वसूकराजमहिष[10]खरमेषहयाननाः ॥ १९ ॥

---

[1] यातनात्मिकाः–पु. पा. [2] महारौरवपीडाभिः–पु. पा. [3] सुघोरः सुमहातीक्ष्णस्तथा संजीवनः स्मृतः–पु. पा. [4] विलोपश्चापि कण्टकः–पु. पा. [5] तीव्रवेगः–पु. पा. [6] महावक्रश्च कालश्च कालसूत्रः प्रकर्जनः–प. पा. [7] तप्तजन्तुः पङ्कलेपः प्रतिमांसस्त्रपुद्रवः–पु. पा. [8] वादः प्रवाहः सुप्रतापनः–पु. पा. [9] वृषः शाल्मः सिंह–पु. पा. [10] घूककोकवृकाननाः–पु. पा.

[1]ग्रहकुम्भीरनक्रास्याः सर्पकूर्मास्यवायसाः ।
गृध्रोलूकजलूकाश्च शार्दूलकपिकर्कटाः ॥ २० ॥

[2]गन्धकः पूतिवक्त्रश्च रक्ताक्षः पूतिमृत्तिकः ।
कणधूमस्तुषाग्निश्च क्रिमीणां निचयस्तथा ॥ २१ ॥

[3]अमेध्यश्चाप्रतीकारो रुधिरान्नस्य भोजनम् ।
लाला[4]भक्षमभक्षश्च सर्वभक्षः सुदारुणः ॥ २२ ॥

[5]संकटः सुविलासश्च विकटः कटपूतनः ।
अम्बरीषः कटाहश्च कष्टा वैतरणी नदी ॥ २३ ॥

सुतप्तलोहशयनमेकपादप्रतप्तकम् ।
असितालवनं घोरमस्थिभङ्गप्रपीडनम् ॥ २४ ॥

तिलातसीक्षुयन्त्राणि कूटपाशप्रमर्दनम् ।
महाचुल्ली सुचुल्ली च तप्तलोहमयी शिला ॥ २५ ॥

पर्वतक्षुरधाराख्यं तथा च मलपर्वतः ।
मूत्रविष्ठान्धकूपेषु क्षारकूपेषु पातनम् ॥ २६ ॥

मुसलोलूखलं यन्त्रं शिलाशकललाङ्गलम् ।
तालपत्रासिगहनं महामशकमण्डपम् ॥ २७ ॥

सम्मोहनोऽस्थिभङ्गश्च तप्तलोहमयो गुडः ।
बहुदुःखं महादुःखं कश्मलं शमलं मलम् ॥ २८ ॥

हालाहलो विरूपश्च सुरूपश्च तमोनुगः ।
एकपादस्त्रिपादश्च तीव्रश्चावीचिरन्तिमः ॥ २९ ॥

अष्टाविंशतिरेवैते क्रमशः पञ्चकाः स्मृताः ।
कोटीनामानुपूर्व्येण पञ्च पञ्चैव नायकाः ॥ ३० ॥

---

[1] ग्राहकुम्भीरनक्रास्याः–पु. पा. [2] मंडूकः–पु. पा. [3] अमेध्यश्च प्रती–क.
[4] भक्षान्त्रभक्षौ च–पु. पा. [5] जंकटः सुविलापश्च–मु. कण्डकः सुविशालश्च–पु. पा.

रौरवाद्यं च वीच्यन्तं शतमेकं तु सर्वतः ।
चत्वारिंशत्समधिकं महानरकमण्डलम् ॥ ३१ ॥

तेषु पापाः प्रपच्यन्ते नराः कर्मानुरूपतः ।
यातनाभिर्विचित्राभिराकर्मप्रक्षयाद्भृशम् ॥ ३२ ॥

सुगाढं हस्तयोर्बद्ध्वा तप्तशृङ्खलया नराः ।
महावृक्षाग्रशाखासु [1]दम्यन्ते यमकिंकरैः ॥ ३३ ॥

ततस्ते सर्वयत्नेन क्षिप्ता डोलयन्ति किंकरैः ।
डोलिताश्चातिवेगेन निस्संज्ञा यान्ति योजनम् ।
अन्तरिक्षस्थितानां च लोहभारशतं ततः ॥ ३४ ॥

पादयोर्बध्यते तेषां यमदूतैर्महाबलैः ।
तेन भारेण महता भृशमाताडिता नराः ॥ ३५ ॥

[2] ख्यायन्तः स्वानि कर्माणि तूष्णीं तिष्ठन्ति विह्वलाः ।
ततस्तप्तैरग्निवर्णैर्लोहदण्डैः सकण्टकैः ॥ ३६ ॥

हन्यन्ते किङ्करैर्घोरैः समन्तात्पापकर्मिणः ।
ततः क्षारेण दीप्तेन वह्नेरपि विशेषतः ॥ ३७ ॥

समन्ततः प्रलिप्यन्ते ताम्रेण च पुनः पुनः ।
द्रुतेनात्यन्तलिप्तेन क्षताङ्गा जर्जरीकृताः ॥ ३८ ॥

पुनर्विधाय चाङ्गानि शिरसः प्रभृति क्रमात् ।
वार्ताकवत्प्रपच्यन्ते तप्ततैले कटाहके ॥ ३९ ॥

विष्ठापूर्णे तथा कूपे क्रिमीणां निचये पुनः ।
मेदोऽसृक्पूयपूर्णायां वाप्यां क्षिप्यन्ति ते पुनः ॥ ४० ॥

भक्ष्यन्ते क्रिमिभिस्तीव्रैः लोहतुण्डैश्च वायसैः ।
श्वभिर्दंशैर्वृकैरुग्रैर्व्याघ्रैश्च [3]विकृतैर्नरैः ॥ ४१ ॥

---

[1] लंब्यन्ते–पु. पा. गम्यन्ते–मु. [2] ध्यायन्तः–क. ग. [3] विकृताननैः–क. ग.

पच्यन्ते मत्स्यवच्चापि प्रदीप्ताङ्गारराशिषु ।
प्रोतास्तीक्ष्णेषु शूलेषु नराः पापेन कर्मणा ॥ ४२ ॥

शैलपीठैरथाक्रम्य घोरैः कर्मभिरात्मजैः ।
तिलवत्संप्रपीड्यन्ते चक्राख्ये नरके नराः ॥ ४३ ॥

पच्यन्ते चातितप्तेषु लोहभाण्डेष्वनेकधा ।
तैलपूर्णकटाहेषु सुतप्तेषु पुनः पुनः ॥ ४४ ॥

[1] सर्वेन्द्रियाणि सम्मथ्य क्रमात्पापेन यातनाः ।
भवन्ति घोराः प्रत्येकं शरीरे तत्कृतेन च ॥ ४५ ॥

ये शृण्वन्ति गुरोर्निन्दां तेषां कर्णः पपूर्यते ।
अग्निवर्णैरयःकीलैस्तप्तैस्ताम्रादिभिर्द्रुतैः ॥ ४६ ॥

त्रपुसीसारकूटाद्यैः क्षारेण जतुना पुनः ।
सुतप्ततीक्ष्णतैलेन वज्रलेपेन चान्ततः ॥ ४७ ॥

क्रमादापूर्यते कर्णौ नरकेषु च यातनाः ।
अनुक्रमेण सर्वेषु भ्रमन्त्येतेषु यातनाः ॥ ४८ ॥

परदारांश्च पश्यन्ति लुब्धाः स्निग्धेन चक्षुषा ।
गुरोः कुर्वन्ति भ्रुकुटिं क्रूरनेत्राश्च ये नराः ॥ ४९ ॥

सूचीभिरग्निवर्णाभिस्तेषां [2] चक्षुः प्रविध्यते ।
क्षाराद्यैश्च क्रमात्सर्वैर्देहे सर्वाश्च यातनाः ॥ ५० ॥

स्पर्शलोभेन ये मूढाः संस्पृशन्ति परस्त्रियम् ।
तेषां तप्ताग्निवर्णाभिः [3] सूचीभिर्विध्यते करः ॥ ५१ ॥

ततः क्षारादिकैः सर्वं शरीरमनुलिप्यते ।
यातनाश्च महाकष्टाः सर्वेषु नरकेषु च ॥ ५२ ॥

परिष्वजन्ति चात्युग्रं प्रदीप्तं लोहशाल्मलिम् ।
हन्यन्ते पृष्ठदेशे च पुनर्भीमैर्महाबलैः ॥ ५३ ॥

---

[1] सर्वेन्द्रियाणामप्येवं—क. ग. [2] नेत्रं प्रपूर्यते—क. ग. [3] सूचीभिः पूर्यते नखः—ख. ग.

दन्तुरेणातिकुण्ठेन क्रकचेन बलीयसा ।
शिरःप्रभृति पाट्यन्ते घोरैः कर्मभिरात्मजैः ॥ ५४ ॥

तेन तेनैव रूपेण हन्यन्ते पारदारिकाः ।
गाढमालिङ्ग्यते नारी ज्वलन्ती लोहनिर्मिता ॥ ५५ ॥

पूर्वाकारं ज्वलन्तं तं पुरुषं लोहनिर्मितम् ।
दुश्चारिण्यः स्त्रियो गाढमालिङ्गन्ति वदन्ति च ॥ ५६ ॥

किं प्रधावसि वेगेन न ते [1] मोक्षोऽस्ति साम्प्रतम् ।
लङ्घितस्ते यथा भर्ता पापं भुंक्ष्व तथाधुना ॥ ५७ ॥

लोहकुम्भे विनिक्षिप्ताः सापिधाने शनैः शनैः ।
मृद्वग्निना प्रपच्यन्ते स्वपापैरेव मानवाः ॥ ५८ ॥

उलूखलाद्यैः [2] क्षोद्यन्ते प्रपीड्यन्ते शिलासु च ।
क्षिप्यन्ते चान्धकूपेषु दश्यन्ते भ्रमरैर्भृशम् ॥ ५९ ॥

क्रिमिभिर्भिन्नसर्वाङ्गाः शतशो जर्जरीकृताः ।
सुतीक्ष्णक्षुरकूपेषु क्षिप्यन्ते तदनन्तरम् ॥ ६० ॥

महाज्वाले च नरके पापाः पच्यन्ति सर्वतः ।
इतस्ततश्च धावन्ति दह्यमानास्तदर्चिषा ॥ ६१ ॥

पृष्ठेनानीय जङ्घे द्वे विन्यस्ते स्कन्धयोजिते ।
तयोर्मध्येन चाकृष्य बाहुपृष्ठेन गाढतः ॥ ६२ ॥

बध्वा परस्परं सर्वं सुदृढं पापरज्जुभिः ।
पिण्डबद्धं दशन्त्येनं भ्रमरास्तीक्ष्णलोहजाः ॥ ६३ ॥

मानिनां क्रोधिनां चैव तस्कराणां च दारुणाः ।
पिण्डबद्धाः स्मृता याम्या महाज्वाले च यातनाः ॥ ६४ ॥

रज्जुभिर्वेष्टिताङ्गाश्च प्रलिप्ताः कर्दमेन च ।
करीषवत्प्रपच्यन्ते [3] म्रियन्ते तेन ते तथा ॥ ६५ ॥

---

[1] मोहोऽस्ति सम्प्रति—मु. पा. [2] क्षोभ्यन्ते—ग. [3] तथा तेन म्रियन्ति च—क.

सुतीक्ष्णक्षारतोयेन [1] कर्कशासु शिलासु च ।
आपापसंक्षयात्पापा घृष्यन्ते चन्दनं यथा ॥ ६६ ॥

शरीराभ्यन्तरगतैः [2] सन्ततं क्रिमिभिर्नराः ।
भक्ष्यन्ते तीक्ष्णवदनैरादेहप्रक्षयाङ्कुशम् ॥ ६७ ॥

क्रिमीणां निचये क्षिप्ताः पूतिमांसस्य राशिषु ।
तिष्ठन्त्युद्विग्नहृदयाः पर्वताभ्यन्तरार्द्दिताः ॥ ६८ ॥

सुतप्तवज्रलेपेन [3] शरीरमुपलिप्यते ।
अधोमुखोर्ध्वपादाश्च द्रुतास्तप्यन्ति वह्निना ॥ ६९ ॥

वदनान्तः प्रविन्यस्तं सुप्रतप्तमयोगुडम् ।
ते खादन्ति पराधीना हन्यमानाश्च मुद्गरैः ॥ ७० ॥

ये शिवारामपुष्पाणि लोभात्संगृह्य पाणिना ।
जिघ्रन्ति मूढमनसो शिरसा धारयन्ति वा ॥ ७१ ॥

[4] आरोप्यते शिरस्तेषां सुतप्तैर्लोहशङ्कुभिः ।
ततः क्षारेण दीप्तेन तैलताम्रादिभिः क्रमात् ॥ ७२ ॥

शरीरे च महाघोराश्चित्रा नरकयातनाः ।
बहुधोत्पाद्यते जिह्वा येऽसत्याप्रियवादिनः ॥ ७३ ॥

सन्दंशेन सुतप्तेन प्रपीड्योरसि पादतः ।
मिथ्यागमप्रवक्तुश्च जिह्वा चास्य विनिर्गता ॥ ७४ ॥

[5] क्रोशार्धजिह्वा विस्तीर्णैर्हलैस्तीक्ष्णैः प्रपाट्यते ।
निर्भर्त्सयन्ति ये क्रूरा मातरं पितरं गुरुम् ॥ ७५ ॥

तेषां वज्रजलूकाभिर्मुखमादश्यते यतः ।
ततः क्षारेण ताम्रेण त्रपुणा सिच्यते पुनः ॥ ७६ ॥

---

[1] शर्करासु—क. ग. [2] सर्वतः—क. ग. [3] शरीरमनुलिप्यते—क.
[4] अपूर्यते—क. ग. [5] जिह्वार्धक्रोशविस्तीर्णैः—क.

द्रुतैरापूर्यतेऽत्यर्थं तप्तलोहैश्च तन्मुखम् ।
इतस्ततः पुनर्धावन् बध्यते यमकिङ्करैः ॥ ७७ ॥

ये निन्दन्ति महात्मानमाचार्यं धर्मदेशिकम् ।
शिवभक्तांश्च सम्मूढाः शिवधर्मं च शाश्वतम् ॥ ७८ ॥

तेषामुरसि कण्ठे च जिह्वायां दन्तसन्धिषु ।
तालुन्योष्ठे च नासायां मूर्ध्नि सर्वाङ्गसन्धिषु ॥ ७९ ॥

अग्निवर्णाः सुतप्ताश्च त्रिशिखा लोहशङ्कवः ।
आरोप्यन्ते सुबहुशः स्थानेष्वेतेषु मुद्गरैः ॥ ८० ॥

ततः [1] क्षारेण तप्तेन ताम्रेण त्रपुणा पुनः ।
तप्तलोहादिभिः सर्वैरापूर्यन्ते समन्ततः ॥ ८१ ॥

यातनाश्च महाचित्राः शरीरस्यापि सर्वशः ।
निश्शेषनरकेष्वेवं भ्रमन्ति क्रमशः पुनः ॥ ८२ ॥

ये गृह्णन्ति परद्रव्यं पद्भ्यां विप्रं स्पृशन्ति च ।
[2] शिवोपकरणं गां च ज्ञानं च लिखितं क्वचित् ॥ ८३ ॥

[3] हस्तपादादिभिस्तेषामापूर्यन्ते समन्ततः ।
क्षारताम्रादिभिर्दीप्तैर्दह्यन्ते क्रमशः पुनः ॥ ८४ ॥

नरकेषु च सर्वेषु विचित्रा देहयातनाः ।
भवन्ति बहुशः कष्टाः पाणिपादसमुद्भवाः ॥ ८५ ॥

ये शिवायतनारामवापीकूपमठाङ्गणम् ।
उपद्रवन्ति पापिष्ठा नृपास्तत्र वसन्ति च ॥ ८६ ॥

व्यायामोद्वर्तनाभ्यङ्गस्नानपानान्नभोजनम् ।
क्रीडनं मैथुनं द्यूतमशौचाद्याचरन्ति च ॥ ८७ ॥

[4] ते वधैर्विविधैर्घोरैरिक्षुयन्त्रादिपीडनैः ।
निरयाग्निषु पच्यन्ते यावदाचन्द्रतारकम् ॥ ८८ ॥

---

[1] क्षुरेण—क. [2] शिवोपकरणाङ्गं च—मु. [3] हस्तपादघनैस्तेषां—मु. [4] त एतैर्वि—ग.

शिवायतनपर्यन्ते शिवारामे च कुत्रचित् ।
समुत्सृजन्ति ये मूढाः पुरीषं मूत्रमेव वा ॥ ८९ ॥

तेषां शिश्नं सवृषणं [1] हन्यन्ते लोहमुद्गरैः ।
सूचीभिरग्निवर्णाभिस्ततश्चापूर्यते पुनः ।
लोहदण्डश्च सुमहानग्निवर्णः सकण्टकः ॥ ९० ॥

आरोप्यते गुदे तेषां यावन्मूर्ध्नि [2] विनिर्गतः ।
ततः [3]क्षारेण महता ताम्रेण त्रपुणा पुनः ॥ ९१ ॥

द्रुतेनापूर्यते गाढं गुदं शिश्नं च देहिनाम् ।
मनस्सर्वेन्द्रियाणां च यस्मादुक्तं प्रवर्तकम् ॥ ९२ ॥

तस्मादिन्द्रियदुःखेन जायते तत्सुदुःखितम् ।
अन्नपानमदत्तं यैर्मूढैर्नाप्यनुमोदितम् ॥ ९३ ॥

धने सत्यपि ये दानं न प्रयच्छन्ति तृष्णया ।
अतिथिं चावमन्यन्ते कालप्राप्तं गृहाश्रमे ॥ ९४ ॥

ते लोहतोरणे बद्धाः हस्तपादावधारिताः ।
विस्तारिताङ्गाः शुष्यन्ति तिष्ठन्त्यब्दशतं नराः ॥ ९५ ॥

हस्तपादललाटेषु कीलिता लोहशङ्कुभिः ।
नित्यं च विवृतं वक्त्रं कीलकद्वयघट्टितम् ॥ ९६ ॥

क्रिमिभिः प्राणिभिश्चोग्रैर्लोहतुण्डैश्च वायसैः ।
उपद्रवैर्बहुविधैर्मुखमन्तः प्रपीड्यते ॥ ९७ ॥

जिह्वा ततः [4]प्रभिन्ना च गाढं शृङ्खलया पुनः ।
तिष्ठन्ति लम्बमानाश्च लोहाकाराः सुवर्तुलाः ॥ ९८ ॥

ततः स्वमांसमुत्कृष्य तिलमात्रप्रमाणतः ।
खादितुं दीयते तेषां सूच्यग्रेण च शोणितम् ॥ ९९ ॥

---

[1] चूर्ण्यते—क. ग. [2] विनिर्गतैः—मु. पा. [3] क्षुरेण. [4] प्रबद्धा—च. क.

यदा निर्मांसतां प्राप्ताः कालेन बहुधा पुनः ।
ततः क्षारेण दीप्तेन तच्छरीरं प्रलिप्यते ॥ १०० ॥

सिच्यन्ते वर्षधाराभिः शुष्यन्ते वायुना पुनः ।
पुनस्तैलेन सिच्यन्ते सुतप्तेन समन्ततः ॥ १०१ ॥

इति चित्रविधैर्घोरैर्मथ्यमानाः स्वकर्मजैः ।
म्रियन्ते नैव पापिष्ठा यावत्पापस्य संक्षयः ॥ १०२ ॥

तस्मात्पापं न कुर्वीत चञ्चले जीविते सति ।
एवं क्लिष्टा विशुद्धाश्च सावशेषेण कर्मणा ॥ १०३ ॥

ततः क्षितिं समासाद्य जायन्ते देहिनः पुनः ।
स्थावरा विविधाः क्रूरास्तृणगुल्मादिभेदतः ॥ १०४ ॥

तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ।
निष्क्रान्ताः कीटयोनिभ्यो जायन्ते पक्षिणः क्रमात् ॥ १०५ ॥

संक्लिष्टाः पक्षिभावेन भवन्ति मृगजातिषु ।
मार्गं दुःखमतिक्रम्य जायन्ते पशुयोनिषु ॥ १०६ ॥

क्रमाद्गोयोनिमासाद्य जायन्ते मानुषे पुनः ।
व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् ॥ १०७ ॥

ततो मनुष्यतां प्राप्य तत्तत्पापानुरूपतः ।
संयुताः पापचिह्नैश्च वर्तन्ते प्राणिनस्त्विह ॥ १०८ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले नरकयातनानुवर्णनं नाम द्वितीयस्तरङ्गः

---

## तृतीयस्तरङ्गः

स्वामिन् पापानुगुण्येन तत्तच्चिह्नैः समन्विताः ।
भवेयुः प्राणिनो भूमावित्येवमुपवर्णितम् ॥ १ ॥

[1]केषां च कानि पापानां चिह्ना[2]नीत्युपवर्ण्यताम् ।
आकर्णय कुमार त्वं यदभिज्ञातुमीहसे ॥ २ ॥

पूर्वजन्मकृतं पापं व्याधिरूपेण पीड्यते ।
ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ॥ ३ ॥

सुवर्णचोरः कुनखी दुश्चर्मा गुरुतल्पगः ।
राजघ्नो राजयक्ष्मा स्यात् क्ष्माहर्ता क्षयपाण्डुकः ॥ ४ ॥

ब्रह्मघ्नः क्षयकासी स्यात् क्षयस्त्वेवं त्रिधा मतः ।
अन्नहर्ता भवेद्गुल्मी धान्यस्तेयी तु दर्दुरः ॥ ५ ॥

शाकहर्ता भवेच्छाखी पिटकी पुष्पहारकः ।
भगिनीगमनान्मर्त्यो जायते बहुमूत्रवान् ॥ ६ ॥

मातृगामी भवेद्यस्तु तस्य लिङ्गं विनश्यति ।
स्नुषाभिगमनाल्लोके शुक्रमेही [3]भवेन्नरः ॥ ७ ॥

इक्षुमेही भवेत्पापी कन्याभिगमनाद्भुवि ।
विश्वस्ताभिगमी यस्तु रक्तमेही भवेद्भुवि ॥ ८ ॥

सुतागामी भवेद्यस्तु शिश्नशूली [4]भवेद्भुवि ।
राजाङ्गनागो यः कामी [5]कामाद्यो गुरुदारगः ॥ ९ ॥

पराङ्गनायाः पुरुषो जायते चान्त्रवृद्धिमान् ।
गलरोगी [6]भवेत्सोऽपि सदा योऽनृतवाग्भुवि ॥ १० ॥

गण्डमाली भवेन्मर्त्यो ह्यभक्ष्यस्य च भक्षणात् ।
उपजिह्वी भवेन्मर्त्यो दुर्गन्धाघ्राणमात्रतः ॥ ११ ॥

पित्रोः सुरतमाकर्ण्य बुद्धिपूर्वमतन्द्रितः ।
बधिरत्वमवाप्नोति महन्निन्दाश्रुतौ तथा ॥ १२ ॥

---

[1] तेषां–ग. [2] नीति निरूप्यताम्–क. ग. [3] भवेद्भुवि–क. ग. [4] भवेत्सदा–क. [5] कामी यो–क. ग. [6] भवेत्पापी–ग.

स जात्यन्धो भवेन्मर्त्यः [1]परस्त्रीणामवेक्षणात् ।
अशुचिर्भास्करं पश्यन्नक्षत्राणि तथा ध्रुवम् ॥ १३ ॥

नक्तान्धः स भवेत्पापी कण्डूतिर्वा भवेदिह ।
ब्राह्मणश्वासरोधेन ह्यपस्मारी भवेन्नरः ॥ १४ ॥

पित्तवान् जायते लोके दुरन्नस्य च [2]भक्षणात् ।
श्लेष्मरोगी भवेल्लोके चैकादश्यन्नभुक्सदा ॥ १५ ॥

अरुचिस्तस्य भवति नित्यहोमं यदि त्यजेत् ।
छर्दिरोगी भवेन्मर्त्यः कूटसाक्ष्यं वदेद्यदि ॥ १६ ॥

हिक्कावान् जायते लोके परेषां सूचको हि [3]यः ।
आन्त्रवृद्धिर्भवेत्तस्य ह्युच्छिष्टान्नस्य भोजनात् ॥ १७ ॥

कर्णशूली [4]भवेल्लोके वृथालापाञ्छृणोति यः ।
नेत्रशूली भवेन्मर्त्यो हिंसा येन प्रदृश्यते ॥ १८ ॥

स्नानशून्यो भवेन्मर्त्यः शिरश्शूली भवेत्सदा ।
पार्श्वैकशूली भवति देवब्राह्मणदूषकः ॥ १९ ॥

हस्तशूली भवेल्लोके हस्तच्छेदी ह्यकारणात् ।
ताम्रस्तेयं यस्तु कुर्याद्रक्तमण्डलवाग्भवेत् ॥ २० ॥

श्वित्री भवेच्छ्वेतवस्त्ररूप्याणां स्तेयकारणात् ।
मन्दवाग्भृतकाध्यायी मूको वागपहारकः ॥ २१ ॥

बन्दिग्रहणजाद्दोषाज्जायते श्वासकासवान् ।
शिरोव्रणी भवेत्सोऽपि ह्यश्वहन्ता [5]तु यो नरः ॥ २२ ॥

कर्णव्रणी भवेत्पापी [6]भक्षकस्य च हिंसनात् ।
मयूरहननान्मर्त्यो जायते कृष्णबिन्दुकः ॥ २३ ॥

---

[1] परस्त्रीणां निरीक्षणात्–क. ग. [2] भोजनात्–क. ग. [3] सः–क. ग.
[4] भवेत्सोऽपि–क. ग. [5] भवेन्नरः–क. ग. [6] भषकस्य–क. ग.

बकहन्ता [1]तु यो लोके जायते [2]श्वेतबिन्दुकः ।
विसर्पी सर्पहननात् काकहन्ता तु कामिलः ॥ २४ ॥

गजचर्मा भवेत्सोऽपि गजो येन निहन्यते ।
यस्तु पारावतं हन्यात् सोऽपि श्वित्री भवेद्भुवि ॥ २५ ॥

बिडालं नकुलं गृध्रं भरद्वाजं शुकं तथा ।
सुपर्णं चाषकं हत्वा व्रणी सर्वाङ्गसन्धिषु ॥ २६ ॥

गन्धस्तेयी च दुर्गन्धी वक्रघ्राणश्च पुष्पहृत् ।
उष्ट्रहन्ता भवेच्छ्वित्री खरहन्ता तु घर्घरः ॥ २७ ॥

कपिलागोनिहन्ता स्यादन्तर्वलयमूलरुक् ।
नीलगोघ्नो भवेन्मर्त्यो [3]वृषसूचकमूलरुक् ॥ २८ ॥

श्वेतगोघ्नो भवेन्मर्त्यो वृषसूचकमूलरुक् ।
आरामे देवतागारे वल्मीके च सभास्थले ॥ २९ ॥

विण्मूत्रे यस्त्यजेज्ज्ञानात्स भूयात्पादशूलवान् ।
पूयव्रणी भवेन्मर्त्यः सर्पिषस्तेयसम्भवात् ॥ ३० ॥

उरोव्रणी भवेन्मर्त्यः परनार्युपगूहनात् ।
शीतज्वरी भवेन्मर्त्यस्तटाकानां विघातकः ॥ ३१ ॥

उष्णज्वरी भवेल्लोके ह्यग्निदाहविघातकः ।
परस्त्रियं नरो दृष्ट्वा कामबाणातुरोऽनिशम् ॥ ३२ ॥

तापज्वरी भवेल्लोक इह वान्यत्र जन्मनि ।
विवाहविघ्नकृल्लोके मृतजायो भवेद्भुवि ॥ ३३ ॥

चातुर्थिकज्वरी भूयात्त्यक्तसन्ध्यादिकर्मवान् ।
स सन्ततज्वरी भूयात् परसन्तापकृन्नरः ॥ ३४ ॥

एकाहिकं द्व्याहिकं वा ज्वरं भजति मानवः ।
गृहदाही भवेल्लोके ह्यद्य वाऽन्यत्र जन्मनि ॥ ३५ ॥

---

[1] भवेल्लोके—क. ग. [2] बिन्दुमान्—क. ग. [3] बहिर्वलयमूलरुक्—ग.

रजकश्चर्मकारश्च नटो [1]निषद एव च ।
कैवर्तम्लेच्छभिल्लाश्चेत्येते सप्तान्त्यजाः स्मृताः ॥ ३६ ॥

एतेषामङ्गना गच्छन्नूरुमूलव्रणी भवेत् ।
चण्डाल्यभिगमान्मर्त्यो जायतेऽत्र भगन्दरी ॥ ३७ ॥

दासीगामी भवेन्मेढ्रव्रणी तस्यान्तरेऽपि वा ।
पञ्चपर्वसु यः पत्नीं व्रजेत्कामातुरो नरः ॥ ३८ ॥

सोऽनपत्यो भवेन्मर्त्यः [2]पत्नथा ह्यस्य मृतिर्भवेत् ।
कक्षव्रणी भवेन्मर्त्यः परदारकुचग्रहात् ॥ ३९ ॥

पूयव्रणी भवेन्मर्त्यः कृमिदुर्गन्धसंयुतः ।
अतीव वेदनायुक्तो मधुदुग्धापहारकः ॥ ४० ॥

बालघ्नो मृतपुत्रः स्यादौषधादिविभेदनैः ।
आमयावी भवेन्मर्त्यः पञ्चयज्ञविगर्हणात् ॥ ४१ ॥

नेत्रव्रणी भवेन्मर्त्यः [3]रुष्टो दृष्ट्वा तु गोद्विजान् ।
यः पश्येत्सततं लोक इह वान्यत्र जन्मनि ॥ ४२ ॥

फलानां चाथ कोशानां स्तेयी भवति मानवः ।
उद्योगे सति बाहुल्ये फलं नास्तीह तस्य वै ॥ ४३ ॥

इन्धनस्स जलस्यापि गोमयस्य तुषस्य वा ।
स्तेयी भवति चेल्लोके स भूयात्परसेवकः ॥ ४४ ॥

लवणस्य गुडस्यापि आम्लस्य लशुनस्य वा ।
स्तेयी भवति यो मर्त्यः स तु कुष्ठी भवेद्भुवि ॥ ४५ ॥

व्रतानि परिगृह्यादावसमाप्य विमुञ्चति ।
नरकाननुभूयाशु हीनाङ्गो जायते भुवि ॥ ४६ ॥

मुक्तादिनवरत्नानां स्तेयी भवति मानवः ।
नरकं चानुभूयाशु कुरूपी जायते भुवि ॥ ४७ ॥

---

[1] बुरुड–क. ग. [2] पत्नी चास्य मृतिं भजेत्–क. ग. [3] कोपदृष्ट्या तु–क. ग.

उपवासदिने यस्तु दन्तधावनमाचरेत् ।
सोऽद्यैवान्यभवे वापि दुर्गन्धास्यो [1]भविष्यति ॥ ४८ ॥

यस्त्वौषधप्रयोगाद्यैर्हिंसां मनसि चिन्तयेत् ।
वातरोगी भवेल्लोके प्रमेही पर्वसङ्गमी ॥ ४९ ॥

[2]स पुमान्दन्तरोगी यो विप्रं संपीडयेच्छलैः ।
यो विप्रं पीडयेन्नित्यं जलान्तर्मज्जनादिभिः ॥ ५० ॥

सोऽन्यजन्मनि पापी स्यात्कम्पवायुप्रपीडितः ।
अव्रीडां रोगिणीं नारीमन्तर्वर्त्नीं कृतव्रताम् ॥ ५१ ॥

रजस्वलामकामां च नाक्रमेद्वै बलात्पुमान् ।
तेन वै पापशेषेण देहः क्रिमिमयो भवेत् ॥ ५२ ॥

निन्दकः शिवभक्तानां कोटिजन्मसु सूकरः ।
सप्तजन्मसु कुष्ठी स्यादन्त दास्यां प्रजायते ॥ ५३ ॥

पापानां बहुभेदानां यातनानुभवात्परम् ।
एवमादीनि चिह्नानि सन्ति नानाविधान्यपि ॥ ५४ ॥

सर्वेषामपि पापानामियमेका प्रतिक्रिया ।
सर्वागमपुराणादिप्रसिध्द्येयमुदीर्यते ॥ ५५ ॥

शिवेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
सप्तजन्मकृतं पापं भस्मीभवति तस्य वै ॥ ५६ ॥

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ ५७ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले दुष्कर्मजन्मरोगादिप्राप्तिदर्शनं नाम तृतीयस्तरङ्गः

---

[1] भवेद्भुवि—क. ग.  [2] स पुमान्धमूरोगी—क. ग.

## चतुर्थस्तरङ्गः

स्वामिन्नरकनामानो लोकास्तद्गर्भवासिनः ।
पुटाश्चैव त्रयस्त्रिंशत्तेषां परिमितिस्तथा ॥ १ ॥

तदन्तर्वर्तिनां चैव नरकाणां तथाऽभिधाः ।
नानाविधास्तत्र तत्र नरकेषु च यातनाः ॥ २ ॥

यातनानन्तरं पापचिह्नानामपि संभवः ।
उदीरितमभूदेतत्सर्वमेव विशेषतः ॥ ३ ॥

तदूर्ध्ववर्तिलोकानां विस्तारं कथय प्रभो ।
पुत्र तत्कथये तुभ्यं यदर्थमयमुद्यमः ॥ ४ ॥

चतुस्त्रिंशत्पुटादूर्ध्वं षड्लक्षाण्यायसं स्थलम् ।
तस्योपरि द्विकोटिं तु जलपूर्तिं विदुर्बुधाः ॥ ५ ॥

तस्यामशीतिलक्षं स्यात्त्रिंशत्साहस्रसंमितम् ।
पार्थिवं तद्विजानीयात्तस्मिन्पातालसप्तकम् ॥ ६ ॥

सप्ताधोलोकाः

अधोलोकास्तु पातालं रसातलमहातले ।
तलातलं च सुतलं वितलं चातलं तथा ॥ ७ ॥

शुक्लकृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः ।
भूमयो यत्र मैत्रेय वरप्रासादशोभिताः ॥ ८ ॥

पातालानामधश्चास्ते [1] वैष्णवी तामसी तमः ।
फणामणिसहस्रेण यश्च विद्योतयन्दिशः ॥ ९ ॥

सर्वान्करोति निर्वीर्यान् हिताय जगतोऽसुरान् ।
मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः ॥ १० ॥

---

[1] वैणवी तामसी तनुः–क. ग

किरीटस्रग्धरो भाति साग्निः श्वेत इवाचलः ।
नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः ॥ ११ ॥

साभ्रगङ्गाप्रपातोऽसौ कैलासाद्रिरिवोच्छ्रितः ।
लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुसलमुद्धृतम् ॥ १२ ॥

उपाश्रितः स्वयं कान्त्या यो वारुण्या च मूर्तया ।
कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोल्बणाः ॥ १३ ॥

संकर्षणात्मका रुद्रा निष्क्रामन्ति जगत्त्रये ।

भूकम्पनिदानम्

आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः ॥ १४ ॥

तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च ।
न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥ १५ ॥

यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ।
आस्ते कुसुममालेव कस्तद्वीर्यं सहिष्यते ॥ १६ ॥

यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ।
तदा चलति भूरेषा साद्रितोया सकानना ॥ १७ ॥

गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः ।
नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः ॥ १८ ॥

अष्टदिग्गजाः

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ १९ ॥

अष्टासु दिक्षु भूभारं वहन्त्येते हि दिग्गजाः ।

अष्टौ करिण्यः

करिण्योऽभ्रमुः कपिला पिङ्गलानुपमा क्रमात् ॥ २० ॥

ताम्रपर्णी सुदन्ती स्यादञ्जना चाञ्जनावती।
एवमष्टौ करिण्यश्च दिगन्तेष्वष्टसु स्थिताः ॥ २१ ॥

निवातकवचाद्याश्च दैत्यदानवसेविताः।
आसते दैत्यपतयः तस्मिन्नेव रसातले ॥ २२ ॥

तक्षकः पद्मककोंटशङ्खपालादिसेवितः।
फणामणिप्रकाशेन तत्र चास्ते महातले ॥ २३ ॥

तलातलाख्यलोके तु मयो नाम महासुरः।
अनेकदैत्यसहितो वीतविष्णुभयः सदा ॥ २४ ॥

आराधितस्य शर्वस्य प्रसादाद्वर्तते सुखम्।
आस्ते सुतललोके तु बलिर्नाम महासुरः ॥ २५ ॥

नारायणप्रसादेन [1] निर्भयो विगतज्वरः।
वितलाख्ये महालोके आस्ते दानवपुंगवः ॥ २६ ॥

महाक्रोधो महावीर्यः शम्भोश्च वरदानतः।
अतलाख्ये महालोके वलनामा महासुरः ॥ २७ ॥

आस्ते तथाविधैरेव दैतेयैः परिवारितः।
अतलाद्योजनानां तु सहस्रादूर्ध्वभागतः ॥ २८ ॥

हाटकेश्वरलोकोऽस्ति देवोऽस्मिन् हाटकेश्वरः।
पार्वत्या सह वैधात्रसृष्टिसाहाय्यकोद्यतः ॥ २९ ॥

तद्वीर्यजाता तटिनी तत्रास्ते हाटकाभिधा।
तदुत्पन्नं सुवर्णं तु विश्रुतं हाटकाख्यया ॥ ३० ॥

दैत्यानां भूषणं जातं मकुटादिविभेदतः।
तस्योपरिष्टाल्लक्षं तु योजनानां महीतलम् ॥ ३१ ॥

---

[1] वर्तते—ग,

पातालादिसप्तलोकस्थितिकथनम्

सप्तानामपि लोकानां विस्तारात् स्थितिरुच्यते ।
सप्त सन्ति भुवो लोकाः पातालाद्याः क्रमादधः ॥ ३२ ॥

दशसाहस्रमेकैकं विस्तारायाम[1]मखाततः ।
आद्यं त्वतलमासन्नं पातालं भूतलादधः ॥ ३३ ॥

योजनैर्दशसङ्ख्याक[2]सहस्रैरभिसम्मितम् ।
बलिप्रभृतयो दैत्या वसन्त्यस्मिन् महीतले ॥ ३४ ॥

विचित्ररत्नप्रासादगृहमण्डपमण्डिते ।
तदधो वितलं नाम पातालं [3]दशधा स्मृतम् ॥ ३५ ॥

पुलोमप्रमुखैर्दैत्यैर्नागैश्च परिसेवितम् ।
तदधः सुतलं नाम दशसाहस्रयोजनम् ॥ ३६ ॥

हिरण्याक्षसुतोपेतं सौवर्णसिकतान्वितम् ।
तदधो वितलं नाम पातालं पीतमृत्तिकम् ॥ ३७ ॥

कालनेमिमुखैर्दैत्यपतिभिः परिरक्षितम् ।
तलातलमतः प्राहुररुणावनिशोभितम् ॥ ३८ ॥

प्रह्लादप्रमुखैर्दैत्यैरधिष्ठितमनुत्तमम् ।
ततो रसातलं नाम परिपाण्डुरभूमिकम् ॥ ३९ ॥

यस्मिन् हयग्रीवमुखा निवसन्त्यसुराधिपाः ।
महातलमतः प्रोक्तं सप्तमं नीलभूमिकम् ॥ ४० ॥

हिरण्याक्षमुखा दैत्या वसन्त्यस्मिन् सुखान्विताः ।
एतेषु नागा रक्षांसि योगिनः कपिलादयः ॥ ४१ ॥

गन्धर्वाः पन्नगाः सिद्धाश्चारणाश्च सकिन्नराः ।
तत्रस्था ये महात्मानो मुनिपन्नगराक्षसाः ॥ ४२ ॥

---

[1] मतस्ततः—क. [2] सहस्रेणाभिसंवृतम्—क. [3] दृषदा—ग.

कामरूपधराः सर्वे दिव्याभरणभूषिताः ।
पातालानि विचित्राणि मणिसोपानवन्ति च ॥ ४३ ॥

पातालानां तु मध्ये तु विवराणि सहस्रशः ।
सन्ति रत्नविचित्राणि साप्सरोवनितानि च ॥ ४४ ॥

तेषु दैत्याश्च शतशो देवसङ्ग्रामनिर्जिताः ।
सकलत्रपरीवारा निवसन्त्यकुतोभयाः ॥ ४५ ॥

रसायनानि दिव्यानि सिद्धैः संसेवितानि च ।
औषधानि विचित्राणि प्रज्वलन्ति दिवानिशम् ॥ ४६ ॥

नैवार्करश्मयस्तेषु पातालेष्वपि सप्तसु ।
तापं कुर्वन्ति शीतं वा निशाकरकरास्तथा ॥ ४७ ॥

रत्नप्रभाभिश्चित्राभिर्भासितानि समन्ततः ।
यानान्नपानखाद्याद्यैर्युक्तानि हृदयङ्गमैः ॥ ४८ ॥

महापुरसहस्राणि सेवितान्यप्सरोगणैः ।
विचित्रमणिसोपानरत्नप्रासादवन्ति च ॥ ४९ ॥

पातालेऽतलसंज्ञे तु देवो लिङ्गस्वरूपवान् ।
हाटकेश्वरनाम्ना तु गीयते सिद्धचारणैः ॥ ५० ॥

पातालानां तु सप्तानामधस्तादजरामरः ।
अनन्तो नागराड् धत्ते ससहस्रशिरा भुवम् ॥ ५१ ॥

नागमूर्तिरचिन्त्यात्मा शिवशक्तिः सदोन्मुखः ।
कूर्मपृष्ठे पदन्यासं कृत्वा धत्ते भुवः स्थलम् ॥ ५२ ॥

कूर्मः षोडशसाहस्रं तदधस्तान्महाजलम् ।
रुद्रशक्त्या धृतोऽधस्तात्स्वय[1]मप्युक्तरूपया ॥ ५३ ॥

---

[1] मव्यक्तरूपया–ग.

सप्तपातालादिलोकस्थितलिङ्गानि

शिवः शम्भुः शङ्करश्च शितिकण्ठ उमापतिः ।
सर्वेश्वरो नीलकण्ठः क्रमशो लिङ्गसप्तकम् ॥ ५४ ॥

सप्तस्वपि च लोकेषु स्थिताः सम्पूज्य भक्तितः ।
तत्तल्लिङ्गप्रसादेन स्वाभीष्टानि भजन्ति हि ॥ ५५ ॥

अधः कटाहादारभ्य भूम्या साकं प्रमाणकम् ।
पञ्चाशत्कोटिसङ्ख्याकयोजनानीति निश्चयः ॥ ५६ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले सप्तपाताललोकस्वरूपवर्णनं
नाम चतुर्थस्तरङ्गः

---

## पञ्चमस्तरङ्गः

पातालादिकभूम्यन्तलोकभेदान्निरूपितान् ।
आकर्ण्य परमानन्दमविन्दं करुणानिधे ॥ १ ॥

यथा लोकेषु युष्माकं कीर्तिः सर्वेषु भासते ।
तथा बुद्धिः सुसूक्ष्मापि निष्प्रत्यूहं प्रवर्तते ॥ २ ॥

दृश्यमेनं महीलोकं सभेदं सस्वरूपकम् ।
अनुग्रहान्मयि स्वामिन् सर्वमेतन्निरूपय ॥ ३ ॥

साधु नन्दन यत्पृष्टं त्वया सूक्ष्मधिया शृणु ।
तस्योत्तरं ब्रवीम्यद्य निगमागमसम्मतम् ॥ ४ ॥

कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च ततः परम् ।
पञ्चाशच्च सहस्राणि सप्त द्वीपाः ससागराः ॥ ५ ॥

ततो हिरण्मयी भूमिर्दशकोटिप्रमाणतः ।
देवानां क्रीडनार्थाय लोकालोकस्ततः परम् ॥ ६ ॥

पर्वतो वलयाकारो योजनायुतविस्तृतः ।
तस्माद्बाह्यं तमो घोरं दुष्प्रेक्ष्यं जीववर्जितम् ॥ ७ ॥

पञ्चत्रिंशत्स्मृताः कोट्यो लक्षाण्येकोनविंशतिः ।
चत्वारिंशत्सहस्राणि योजनानि प्रमाणतः ॥ ८ ॥

सप्तसागरमानस्तु गर्भोदस्तदनन्तरम् ।
कोटियोजनमानस्तु कटाहः संव्यवस्थितः ॥ ९ ॥

ब्रह्माण्डोऽयं कटाहेन संयुक्तो मेरुमध्यतः ।
पञ्चाशत्कोटयो ज्ञेया दशदिक्षु समन्ततः ॥ १० ॥

जम्बूशाकाह्वयौ द्वीपौ कुशक्रौञ्चौ च शाल्मलिः ।
गोमेदः पुष्करश्चेति सप्तद्वीपाः प्रकीर्तिताः ॥ ११ ॥

एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लक्षयोजनविस्तारो जम्बूद्वीपः प्रकीर्तितः ॥ १२ ॥

सूर्यबिम्बसमाकारस्तावत् क्षारार्णवावृतः ।
जम्बूद्वीपाद् द्विगुणतः शाकद्वीपः समन्ततः ॥ १३ ॥

तावता क्षीरतोयेन समुद्रेण परीवृतः ।
कुशद्वीपो द्विगुणतः ततस्तत्परितः स्थितः ॥ १४ ॥

दधितोयेन परितः तावताम्बुधिना वृतः ।
क्रौञ्चस्तद्द्विगुणः सोऽपि घृततोयेन संवृतः ॥ १५ ॥

ततस्तु शाल्मलीद्वीपो द्विगुणस्तावतैव तु ।
इक्षुसारस्वरूपेण समुद्रेण परीवृतः ॥ १६ ॥

गोमेदः परितस्तस्माद् द्विगुणस्तावता वृतः ।
सुरातोयेन दैत्यानां मोहकेनार्णवेन हि ॥ १७ ॥

पुष्करस्तु ततो द्वीपो द्विगुणस्तावता वृतः ।
स्वादुतोयेन रम्येण समुद्रेण समन्ततः ॥ १८ ॥

जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः ।
तस्यापि मेरुराख्यातो मध्ये कनकपर्वतः ॥ १९ ॥

चतुरशीतिसाहस्रयोजनान्यस्य चोछ्रयः ।
प्रविष्टः षोडशाधस्ताद् द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ २० ॥

मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः ।
भूपद्मस्यास्य शैलोऽसौ कर्णिका[1]कारवत् स्थितः ॥ २१ ॥

शराववत् स्थितत्वाच्च द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
हैमीकृतो महेशस्य शुभाङ्गस्पर्शनेन च ॥ २२ ॥

दत्तूरपुष्पसंकाशः सर्वदेवहिते रतः ।
नेमयः कटकाकारा निर्गता दीप्तिमत्तराः ॥ २३ ॥

पञ्चविंशतिसाहस्रादुपरिष्टादपि क्षितेः ।
दशसाहस्रविस्ताराः प्रत्येकं चैवमेव हि ॥ २४ ॥

त्रिसहस्रसमुछ्राया वलयास्तस्य संस्थिताः ।
नेमिर्या मस्तकोपान्ते लोकपालसमाश्रिता ॥ २५ ॥

चक्रवाटीति तामाहुः सर्वरत्नप्रभावतीम् ।
तस्य चाष्टसु शृङ्गेषु पुर्योऽष्टौ समवस्थिताः ॥ २६ ॥

अमरावत्याद्यष्टपुर्यः

प्राच्यादिष्विन्द्रमुख्यानां नामभिस्ताः समन्विताः ।
नाम्नाऽमरावती पूर्वे पुरी शक्रस्य हेमजा ॥ २७ ॥

तेजोवती पुरी ज्ञेया वह्नेः कमललोहिता ।
पुरी संयमनी याम्या दक्षिणेऽञ्जनसन्निभा ॥ २८ ॥

रक्षोवती निर्ऋतेस्तु नगरी कृष्णलोहिता ।
वारुण्यां [2]शुद्धवत्युक्ता [3]वरुणस्येन्दुवत्स्थिता ॥ २९ ॥

वायव्ये गन्धवत्युक्ता वायोर्मरकतात्मिका ।
महोदया कुबेरस्य चोत्तरे सर्वरत्नजा ॥ ३० ॥

---

[1] कारतः स्थितः—क. ग. [2] सिद्धवतीति स्यात्. [3] वरुणस्येन्दुवती तथा—ग.

यशोवती हरस्योक्ता विशदा सुदुरासदा ।
प्रत्येकं षट्सहस्राणि योजनानां प्रकीर्तिताः ॥ ३१ ॥

अमरावत्यादिपुरीस्थिता: लोकपाललोकास्तत्रत्या देवताश्च

लोकास्तु लोकपालानामष्टानामपि शोभनाः ।
मेघविघ्नावती चैव सौवर्णी कुसुमावती ॥ ३२ ॥

पुर्योऽमरावतीसंस्थाः सुमतिः कामवत्यपि ।
मेघविस्सिद्ध आदित्याः साध्याश्चाप्सरसः क्रमात् ॥ ३३ ॥

ईशास्तेजोवती पुर्यां, विश्वकर्ममयाभिधौ ।
रेवतीमानवत्याख्ये पुर्यावाश्रित्य तिष्ठतः ॥ ३४ ॥

संयमिन्यां मातृनन्दा रोहिणी गुणवत्यपि ।
पितृभिश्चापि रुद्रैश्च श्रितैकादशसंख्यया ॥ ३५ ॥

रक्षोवत्यां पिङ्गला च कृष्णा चैव सुखावती ।
गान्धारी तु चतस्रस्तु पुरीः कर्मजदेवताः ॥ ३६ ॥

पिशाचप्रमुखाश्चैव समाश्रित्य वसन्ति हि ।
सिद्धसेना [1]हेमसंज्ञा तथा सिद्धवतीति च ॥ ३७ ॥

सिद्धवत्यां भूतवसुर्विद्याधरसमाश्रिता ।
गन्धवत्यां तु सिद्धाख्या किन्नरैः समधिष्ठिता ॥ ३८ ॥

महोदयायां गन्धर्वा चित्रा चैव शुभा तथा ।
प्रमदा चित्रवत्येवं पुर्यः पञ्च मनोहराः ॥ ३९ ॥

तासु चित्ररथश्चैव शारदा तुम्बुरुस्तथा ।
कर्मदेवाश्च गुह्याश्च निवसन्ति क्रमादिह ॥ ४० ॥

यशोवत्यां तु वैकुण्ठप्रजावत्यभिधे तथा ।
सर्वकामवतीत्युक्ताः पुर्यस्तासु क्रमा[2]दिह ॥ ४१ ॥

---

[1] महासंज्ञा—क. ग. [2] दिमे—क. ग.

नारायणश्च ब्रह्मा च धन्वन्तरिरितीश्वराः ।
इन्द्र ऐरावतारूढः शच्या सह विराजितः ॥ ४२ ॥

वज्रपाणिः स्वर्णवर्णो दिव्याभरणभूषितः ।
सप्तहस्तः सप्तजिह्वः षडस्रो मेघवाहनः ॥ ४३ ॥

स्वाहाप्रियो रक्तवर्णः स्रुक्स्रुवायुधधारकः ।
दण्डायुधो लोहिताक्षो यमो महिषवाहनः ॥ ४४ ॥

श्यामलासहितो रक्तवर्णो धूम्रमुखस्तथा ।
खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः ॥ ४५ ॥

ऊर्ध्वकेशो विरूपाक्षो दीर्घग्रीवापतिः प्रभुः ।
नागपाशधरः पीतवर्णो मकरवाहनः ॥ ४६ ॥

वरुणः कालिकानाथो रत्नाभरणभूषितः ।
प्राणिनां प्राणरूपोऽसौ द्विबाहुर्ध्वजपाणिमान् ॥ ४७ ॥

वायुः कृष्णमृगासीनः पूजनीयोऽञ्जनापतिः ।
अश्वासीनः कुन्तपाणिः प्रतप्तस्वर्णसन्निभः ॥ ४८ ॥

कुबेरश्चित्रलेखेशो यक्षगन्धर्वनायकः ।
पिनाकी वृषभारूढो गौरीपतिरनुत्तमः ॥ ४९ ॥

श्वेतवर्णश्चन्द्रमौलिर्नागयज्ञोपवीतधृत ।

मेरोरुपरि ब्रह्मपुरम्

चतुर्दशसहस्राणि योजनानां महापुरी ॥ ५० ॥

मेरोरुपरि विख्याता देवदेवस्य वेधसः ।
तत्रास्ते भगवान् ब्रह्मा विश्वात्मा विश्वभावनः ॥ ५१ ॥

उपास्यमानो योगीन्द्रैर्देवैरिन्द्रपुरोगमैः ।
तत्र देवेश्वराधीशं विश्वात्मानं प्रजापतिम् ॥ ५२ ॥

सनत्कुमारो भगवानुपास्ते नित्यमेव हि ।

ब्रह्मपुराग्रे शङ्करायतनम्

तत्र देवादिदेवस्य शङ्करस्यामितौजसः ॥ ५३ ॥

दीप्तमायतनं शुभ्रं पुरस्ताद्ब्रह्मणः स्थितम् ।
दिव्यकान्तिसमायुक्तं चतुर्द्वारं सुशोभनम् ॥ ५४ ॥

संकीर्णं सर्वतः शुद्धैर्ब्रह्मविद्भिर्निषेवितम् ।
देव्या सह महादेवः शशाङ्कार्काग्निलोचनः ॥ ५५ ॥

रमते तत्र देवेशः प्रमथैः परमेश्वरः ।
तत्र वेदविदः शान्ता मुनयो [1]ब्रह्मवादिनः ॥ ५६ ॥

पूजयन्ति महादेवं तापसाः सत्यवादिनः ।
तेषां साक्षान्महादेवो मुनीनां भावितात्मनाम् ।
गृह्णाति पूजां गिरिशः पार्वत्या परमेश्वरः ॥ ५७ ॥

मेरोरूर्ध्वभागे शृङ्गत्रयम्

मेरोस्तस्योर्ध्वभागे तु शृङ्गाणि त्रीणि सन्ति हि ।
मध्यशृङ्गं ब्रह्मवासं ऐशान्यं शङ्करस्य च ॥ ५८ ॥

नैरृत्यं वासुदेवस्य हेमशृङ्गं स्वयम्भुवः ।
रत्नजं शङ्करस्यापि राजतं केशवस्य च ॥ ५९ ॥

मेरोः शृङ्गाद्गङ्गापातः

तस्य शैलस्य शिखरात् क्षीरधारासमप्रभा ।
त्रिंशद्बाहुपरीणाहा भीमनिर्घातनिःस्वना ॥ ६० ॥

पुण्या पुण्यतमैर्जुष्टा गङ्गा त्रिपथगा शुभा ।
पतत्यजस्रं वेगेन ह्रदे चन्द्रप्रभाभिधे ॥ ६१ ॥

तया तूत्पादितः पुण्यः स ह्रदः सागरोपमः ।
सिद्धगन्धर्वमरुतस्तन्मध्य[2]वलयाश्रिताः ॥ ६२ ॥

दैत्यदानवगन्धर्वास्तस्याधो [2]वलयाश्रिताः ।

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले मेरुवर्णनं नाम
पञ्चमस्तरङ्गः

---

[1] ब्रह्मचारिणः—क. ग.  [2] वलयं श्रिताः—क. ग.

# षष्ठस्तरङ्गः

## केसराचलवर्णनम्

गुरो मेरोरूर्ध्वभागे स्थितं सर्वं निरूपितम् ।
अधुना तस्य परितो वर्तमाना महागिरिः ॥ १ ॥

के के शैलाः? कानि कानि सरांसि? तरवश्च के? ।
स्थानानि कानि तत्रापि? जनाः के तन्निवासिनः? ॥ २ ॥

एतत्सर्वं ममाचक्ष्व भगवन् मय्यनुग्रहात् ।
कुमार वर्णये सर्वं यच्छ्रोतुमभिकाङ्क्षसे ॥ ३ ॥

विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ।
वनैः सरोभिश्च समं दिक्ष्वेते केसराचलाः ॥

## केसराचलनामानि

पूर्वे तु मन्दरो नाम दक्षिणे गन्धमादनः ।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ॥ ४ ॥

## केसराचलस्थिताः वृक्षाः

कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ।
एकादशशतायामाः पादपा गिरिकेतवः ॥ ५ ॥

## जम्बूद्वीपस्य तन्नामप्राप्तिहेतुः

जम्बूद्वीपस्य यो जम्बूनामहेतुः स उच्यते ।
महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ॥ ६ ॥

अरत्नीनां शतान्यष्टौ एकषष्ट्यधिकानि तु ।
फलप्रमाणं संख्यातमृषिभिस्तत्त्वदर्शिभिः ॥ ७ ॥

पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वशः ।
रसेन तेषां प्रख्याता तस्या जम्बूनदीति वै ॥ ८ ॥

सरित् प्रवर्तते सा च पीयते तन्निवासिभिः ।
न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः ॥ ९ ॥

तत्पानस्वस्थमनसां जनानां तत्र जायते ।
तीरमृत्तद्रसं प्राप्य वायुना सुविशोषिता ॥ १० ॥

जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ।
तत्र जम्बूफलरसो नदी भूत्वा प्रसर्पति ॥ ११ ॥

मेरुं प्रदक्षिणीकृत्य जम्बूमूलं विशत्यधः ।

केसराचलस्य परितो विद्यमानानि वनानि

वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम् ॥ १२ ॥

वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ।

केसराचलस्थानि सरांसि

अरुणोदं महाभद्रं सशीतोदं समानसम् ॥ १३ ॥

सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ।

अरुणोदसरसः प्राक्स्थिताः केसराचलाः

[1] शीताम्भश्च कुमुद्वांश्च [2] करवी माल्यवांस्तथा ॥ १४ ॥

वैकङ्को मणिमांश्चैव प्लक्षवांश्चाचलोत्तमः ।
महानिलोऽथ रुचकः सुबिन्दुर्मन्दरस्तथा ॥ १५ ॥

वेणुमांश्च सुमेघश्च निषधो देवपर्वतः ।
इत्येते देवरचिताः सिद्धवासाः प्रकीर्तिताः ॥ १६ ॥

अरुणोदयस्य सरसः पूर्वतः केसराचलाः ।

महाभद्रसरसो दक्षिणभागस्थाः केसराचलाः

त्रिकूटः शिखरश्चैव पतङ्गो रुचकस्तथा ॥ १७ ॥

---

[1] शितान्तश्च—क. [2] कुररी—क. कुरुद्री—ग.

निषधो[1] वसुधारश्च कलिङ्गस्त्रिविधः शुभः ।
समूलो वसुसारश्च कुरवश्चैव सानुमान् ॥ १८ ॥

ताम्राभश्च विशालश्च कुमुदो वेणुपर्वतः ।
एकशृङ्गो महाशैलो गजशैलः पिशाचकः ॥ १९ ॥

पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः ।
इत्येते देवचरिता उत्कृष्टाः पर्वतोत्तमाः ॥ २० ॥

महाभद्रस्य सरसो दक्षिणे केसराचलाः ।

सुशीतोदसरसः पश्चिमस्थाः केसराचलाः

शशिवासः सवैडूर्यः कपिलो गन्धमादनः ॥ २१ ॥

जारुधिश्च सुगन्धिश्च त्रिशृङ्गश्चाचलोत्तमः ।
सुपार्श्वश्च सुपक्षश्च काकः कपिल एव च ॥ २२ ॥

पिञ्जरो भद्रशैलश्च सुरसश्च महाबलः ।
अञ्जनो मधुमांस्तद्वत् कुमुदो मकुटस्तथा ॥ २३ ॥

सहस्रशिखरश्चैव [2]पाण्डरः कृष्ण एव च ।
पारिजातो महाशैलः तथैव [3]कपिलादरः ॥ २४ ॥

सुषेणः पुण्डरीकश्च महामेघस्तथैव च ।
एते पर्वतराजानः सिद्धगन्धर्वसेविताः ॥ २५ ॥

[4]असितोदस्य सरसः पश्चिमे केसराचलाः ।

मानससरस उत्तरभागस्थाः केसराचलाः

शङ्खकूटोऽथ वृषभो हंसो नागस्तथैव च ॥ २६ ॥

कुलाञ्जनः शक्रशैलो नीलः कनक एव च ।
पुष्पकश्च सुमेघश्च वराहो विरजस्तथा ॥ २७ ॥

---

[1] वसुराजश्च–ग. [2] पाण्डवः–क. ग. [3] कपिलोदरः–क. ग. [4] सुशीतोदस्य.

मयूरः कपिलश्चैव महाकपिल एव च ।
इत्येते देवगन्धर्वसिद्धचारणसेविताः ॥ २८ ॥

सरसो मानसस्येह चोत्तरे केसराचलाः ।
एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम् ॥ २९ ॥

सन्ति चैवान्तरद्रो (णः ?) ण्यः सरांसि च वनानि च ।
वसन्ति तत्र मुनयः सिद्धाश्च ब्रह्मभाविताः ॥ ३० ॥

प्रसन्नाः शान्तरजसः सर्वदुःखविवर्जिताः ।

वैकुण्ठस्थानम्

सिताद्रिशिखरे चापि पारिजातवनं शुभम् ॥ ३१ ॥

तत्र शक्रस्य भवनं विपुलं रत्नमण्डितम् ।
स्फटिकस्तम्भसंयुक्तं हेमगोपुरशोभितम् ॥ ३२ ॥

तत्राथ देवदेवस्य विष्णोर्विश्वामरेशितुः ।
सुपुण्यं भवनं रम्यं सर्वरत्नोपशोभितम् ॥ ३३ ॥

तत्र नारायणः श्रीमान् लक्ष्म्या सह जगत्पतिः ।
आस्ते सर्वामरश्रेष्ठैः पूज्यमानः सनातनः ॥ ३४ ॥

अष्टवसुस्थानानि

तथा च वसुधारे तु वसूनां रत्नमण्डितम् ।
स्थानानामष्टकं पुण्यं दुराधर्षं सुरद्विषाम् ॥ ३५ ॥

सप्तर्षिस्थानानि

रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम् ।
सप्ताश्रमाणि पुण्यानि सिद्धावासयुतानि तु ॥ ३६ ॥

ब्रह्मभवनम्

तत्र हैमं चतुर्द्वारं वज्रनीलादिमण्डितम् ।
सुपुण्यं सुमहत्स्थानं ब्रह्मणोऽव्यक्तजन्मनः ॥ ३७ ॥

तत्र देवर्षयो विप्राः सिद्धा ब्रह्मर्षयः परे ।
उपासते सदा देवं पितामहमजं परम् ॥ ३८ ॥

स तैः सम्पूजितो नित्यं देव्या सह चतुर्मुखः ।
आस्ते हिताय लोकानां शान्तानां परमा गतिः ॥ ३९ ॥

जैगीषव्याश्रमः

तथैकशृङ्गशिखरे महापद्मैरलङ्कृतम् ।
स्वच्छामृतरसं पुण्यं सुगाङ्गं सुमहत्सरः ॥ ४० ॥

जैगीषव्याश्रमं तत्र योगीन्द्रैरुपशोभितम् ।
तत्रासौ भगवान्नित्यमास्ते शिष्यैः समावृतः ॥ ४१ ॥

प्रशान्तदोषैरक्षुद्रैर्ब्रह्मविद्भिर्महात्मभिः ।
शम्भुर्मनोहरश्चैव कौशिकः कृष्ण एव च ॥ ४२ ॥

सुमना देवपादश्च शिष्यास्तस्य प्रधानतः ।
सर्वयोगरताः शान्ता भस्मोद्धूलितविग्रहाः ॥ ४३ ॥

उपासते [1] महाचार्या ब्रह्मविद्यापरायणाः ।
तेषामनुग्रहार्थाय यतीनां शान्तचेतसाम् ॥ ४४ ॥

सान्निध्यं कुरुते भूयो देव्या सह महेश्वरः ।
अनेकान्याश्रमाणि स्युस्तस्मिन् गिरिवरोत्तमे ॥ ४५ ॥

मुनीनां युक्तमनसां सरांसि सरितस्तथा ।
तेषु योगरता विप्रा याजकाः संयतेन्द्रियाः ॥ ४६ ॥

ब्रह्मण्यासक्तमनसो रमन्ते ज्ञानतत्पराः ।

देवेन्द्रस्थानम्

सुमेघवाहनं स्थानं सहस्रादित्यसन्निभम् ॥ ४७ ॥
तत्रास्ते भगवानिन्द्रः शच्या सह सुरेश्वरः ।

---

[1] सहाचार्याः—क. ग.

दुर्गाभवनम्

गजशैले तु दुर्गाया भवनं मणितोरणम् ॥ ४८ ॥

आस्ते भगवती दुर्गा तत्र साक्षान्महेश्वरी ।
उपास्यमाना विविधैः शक्तिभेदैरितस्ततः ॥ ४९ ॥

राक्षसानां भवनानि

सुनीलस्य गिरेः शृङ्गे नानारत्नसमुज्ज्वले ।
राक्षसानां पुराणि स्युः सरांसि शतशो द्विजाः ! ॥ ५० ॥

यक्षभवनानि

तथा पुरशतं विप्राः शतशृङ्गे महाचले ।
स्फटिकस्तम्भसंयुक्तं यक्षाणा[1]मपि तेजसा ॥ ५१ ॥

सुपर्णभवनम्

श्वेतोदरगिरेः शृङ्गे सुपर्णस्य पुरं शुभम् ।
स तत्र गरुडः श्रीमान् साक्षाद्विष्णुरिवापरः ॥ ५२ ॥

लक्ष्मीभवनम्

अन्यच्च भवनं पुण्यं श्रीशृङ्गे मुनिसत्तम ! ।
तत्र सा परमा शक्तिर्विष्णोरतिमनोरमा ॥ ५३ ॥

अनन्तविभवा लक्ष्मीर्जगत्सम्मोहनोत्सुका ।
अध्यास्ते देवगन्धर्वसिद्धचारणवन्दिता ॥ ५४ ॥

तत्रैव देवदेवस्य विष्णोरायतनं महत् ।
सरांसि तत्र चत्वारि विचित्रकमलानि च ॥ ५५ ॥

---

[1] ममितौजसाम्–क. ग.

### विद्याधरपुराष्टकम्

तथा सहस्रशिखरे विद्याधरपुराष्टकम् ।
रत्नसोपानसंयुक्तं सरोभिश्चोपशोभितम् ॥ ५६ ॥

नद्यो विमलपानीयाश्चित्रनीलोत्पलान्तराः ।
यत्र सालवनं दिव्यं तत्रास्ते शङ्करोऽम्बया ॥ ५७ ॥

### महालक्ष्मीपुरम्

पारिजाते महाशैले महालक्ष्मीपुरं शुभम् ।
रम्यप्रासादसंयुक्तं घण्टाचामरभूषितम् ॥ ५८ ॥

गन्धर्वकिन्नराकीर्णमप्सरोनृत्तसंकुलम् ।
गणेश्वराङ्गनाजुष्टं धार्मिकाणां सुदर्शनम् ॥ ५९ ॥

तत्र सा वसते देवी नित्यं योगपरायणा ।
महालक्ष्मीर्महादेवी त्रिशूलवरधारिणी ॥ ६० ॥

त्रिनेत्रा सर्वशक्त्यौघैः संवृता सदसन्मयी ।

### सरस्वतीपुरम्

सुपार्श्वस्योत्तरे भागे सरस्वत्याः पुरोत्तमम् ॥ ६१ ॥

### गन्धर्वपुराणि

पाण्डुरस्य गिरेः शृङ्गे विचित्रद्रुमसंकुले ।
गन्धर्वाणां पुरशतं दिव्यस्त्रीभिः समन्वितम् ॥ ६२ ॥

तेषु नित्यं मदोत्सिक्ता नरा नार्यस्तथैव च ।
क्रीडन्ति मुदिता नित्यं विलासैर्भोगतत्पराः ॥ ६३ ॥

### अप्सरसां पुराणि

अञ्जनस्य गिरेः शृङ्गे नारीणां पुरमुत्तमम् ।
वसन्ति तत्राप्सरसो रम्भाद्या ललितालसाः ॥ ६४ ॥

चित्रसेनादयो यत्र समायान्त्यर्थिनः सदा ।

### रुद्रपुराणि

अनेकानि पुराणि स्युः कौमुदे देवसत्तमाः ! ॥ ६५ ॥

रुद्राणां शान्तमनसामीश्वरासक्तचेतसाम् ।
तेषु रुद्रा महा[1]योगान्महेशं समुपासते ॥ ६६ ॥

### गणेशपुरत्रयम्

पिञ्जरस्य गिरेः शृङ्गे गणेशानां पुरत्रयम् ।
नन्दीश्वरस्य कपिले तत्रास्ते वृषभाधिपः ॥ ६७ ॥

### भास्करभवनम्

तथा च [2]दारुके शृङ्गे देवदेवस्य धीमतः ।
दीप्तमायतनं पुण्यं भास्करस्यामितौजसः ॥ ६८ ॥

### चन्द्रभवनम्

[3]तच्छैलोत्तरदिग्भागे चन्द्रस्थानमनुत्तमम् ।
रमते तत्र रम्यात्मा भगवान् शीतदीधितिः ॥ ६९ ॥

### ब्रह्मभवनम्

अन्यच्च भवनं दिव्यं हंसशैले महर्षयः ! ।
सहस्रयोजनायामं सुवर्णमणितोरणम् ॥ ७० ॥

तत्रास्ते भगवान् ब्रह्मा सिद्धसङ्घैरभिष्टुतः ।
सावित्र्या सह विश्वात्मा वामदेवादिभिर्युतः ॥ ७१ ॥

### सिद्धपुरम्

तस्य दक्षिणदिग्भागे सिद्धानां पुरमुत्तमम् ।
सनन्दनादयो यत्र वसन्ति मुनिपुङ्गवाः ॥ ७२ ॥

---

[1] योगाः महेशं–क. ग. [2] जारुजे–क. चारुजे–ग. [3] तस्यैवोत्तर–क. ग.

दानवपुरम्

पञ्चशैलस्य शिखरे दानवानां पुरं वरम् ।

शुक्राचार्यभवनम्

नातिदूरेण [1] तस्याधो दैत्याचार्यस्य धीमतः ॥ ७३ ॥

कर्दमभवनम्

सुगन्धशैलशिखरे सरिद्भिरुपशोभिते ।
कर्दमस्याश्रमं पुण्यं तत्रास्ते भगवानृषिः ॥ ७४ ॥

सनत्कुमारभवनम्

तस्यैव पूर्वदिग्भागे किन्नरैश्च निषेविते ।
सनत्कुमारभवनं तत्रास्ते ब्रह्मवित्तमः ! ॥ ७५ ॥

सर्वेष्वेतेषु शैलेषु तथान्येषु मुनीश्वराः ! ।
सरांसि विमला नद्यो देवानामालयानि च ॥ ७६ ॥

सिद्धलिङ्गानि पुण्यानि मुनिभिः स्थापितान्यपि ।
वनान्याश्रमवर्याणि संख्यातुं नैव शक्नुयाम् ॥ ७७ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले केसराचलवर्णनं नाम षष्ठस्तरङ्गः

---

## सप्तमस्तरङ्गः

नवखण्डविभागः

कृतं सुमेरुतत्कीलकेसराचलवर्णनम् ।
नवखण्डविभागं ते प्रवक्ष्यामीह नन्दन ॥ १ ॥

---

[1] तस्याध—क. ग.

त्रयस्तु दक्षिणे ख्याताश्चोत्तरे त्रय एव च।
त्रयस्तु मध्यमे ख्याताः पर्वतान्तरितास्तथा ॥ २ ॥

वर्षत्रयं चतुष्कोणं [1]यत्प्राक्प्रत्यक्च मध्यतः।
मध्यायामोत्तरे द्वे द्वे दीर्घे शेषधनुस्समे ॥ ३ ॥

नवखण्डस्थिताः पर्वतास्तत्परिणाहश्च

निषधो हेमकूटश्च हिमवांश्चाचलोत्तमः।
मेरोरुत्तरतो नीलः श्वेतश्शृङ्गीति पर्वताः ॥ ४ ॥

लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथा परे।
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ५ ॥

भारतादिवर्षाः

भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम्।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतः स्थितम् ॥ ६ ॥

रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम्।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ७ ॥

नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः!।
निषधाद्धरिवर्षात्तु याम्यतो हेमकूटकः ॥ ८ ॥

नाम्ना किम्पुरुषः ख्यातो भारतं हिमवद्गिरेः।
रम्याख्यमुदभून्नीलाद्धिरण्यं श्वेतपर्वतात् ॥ ९ ॥

यदुत्तरं शृङ्गवतः कुरुवर्षं तदुच्यते।
नवसाहस्रविस्तारं तावताम्बुधिना वृतम् ॥ १० ॥

पश्चान्माल्यवतः प्राच्यां गन्धमादनशैलतः।
इलावृतं नीलगिरेर्याम्यतो निषधादुदक् ॥ ११ ॥

भद्राश्वं माल्यवत्प्राच्यां वर्षं भद्रजनाकुलम्।
सुकेतनं केतुमालं प्रतीच्यां गन्धमादनात् ॥ १२ ॥

---

[1] तत्प्राक्–क.

वर्षेष्वेतेषु सर्वेषु सप्त सप्त कुलाचलाः।
नद्यश्च शतशस्तेभ्यः सम्भूताश्च द्विजोत्तमाः! ॥ १३ ॥

न तेष्ववस्थाभेदोऽस्ति विवर्तिषु युगादिषु।
कल्पवृक्षफलाहाराः चिरं जीवन्ति ते जनाः ॥ १४ ॥

युगानुरूपप्रज्ञायुस्तेजोबलसमन्विताः।
कृशाः क्लिष्टाशना दुःखश्रमार्ता भारते जनाः ॥ १५ ॥

सर्वशः स्वर्गभूमीनां कर्मभूः कारणं यथा।
भुज्यते [1] द्वीपशैलेषु लोकेषु च शुभाशुभम् ॥ १६ ॥

मेरोश्च पश्चिमे भागे केतुमालो महीधरः।
जम्बूषण्डस्तु तत्रैव सुमहान्नन्दनोपमः ॥ १७ ॥

आयुर्दशसहस्राणि वर्षाणां तत्र भारत।
सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ॥ १८ ॥

अनामया वीतशोका नित्यं मुदितमानसाः।
जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः ॥ १९ ॥

गन्धमादनशृङ्गेषु कुबेरः सह राक्षसैः।
संवृतोऽप्सरसां सङ्घैर्मोदते गुह्यकाधिपः ॥ २० ॥

गन्धमादनपादेषु परेष्वमर[2]गन्धिकाः।
एकादशसहस्राणि वर्षाणां परमायुषः ॥ २१ ॥

तत्र कृष्णा नरा राजन् तेजोयुक्ता महाबलाः।
स्त्रियश्चोत्पलपत्राभाः सर्वाः सुप्रियदर्शनाः ॥ २२ ॥

नीलात्परतरं श्वेतं श्वेताद्वै रम्यकं परम्।
वर्षमैरावतं नाम ततः शृङ्गवतः परम् ॥ २३ ॥

तत्र स्थिते महाराज द्वे वर्षे दक्षिणोत्तरं।
इलावृतं मध्यमं तु पञ्चवर्षाणि चैव हि ॥ २४ ॥

---

[1] द्वीपशेषेषु—क. ग.  [2] खण्डिकाः—क. गण्डिकाः—ग.

उत्तरोत्तरमेतेभ्यो वर्षमुत्कृष्यते गुणैः ।
आयुःप्रमाणारोग्यैश्च धर्मतः कामतोऽर्थतः ॥ २५ ॥

समन्वितानि भूतानि तेषु वर्षेषु भारत ।
एवमेषा महाराज पृथिवी पर्वतैः श्रिता ॥ २६ ॥

कैलासः

[1] हिमकूटस्तु सुमहान्कैलासो नाम पर्वतः ।
यत्र वैश्रवणो राजा गुह्यकैः सह मोदते ॥ २७ ॥

मैनाकपर्वतः

अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति ।
हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः ॥ २८ ॥

बिन्दुसरस्तत्र गङ्गावर्णनं च

तस्य पार्श्वे महद्दिव्यं शुभं काञ्चनवालुकम् ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥ २९ ॥

दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ।
यूपा मणिमयास्तत्र वेद्यश्चापि हिरण्मयाः ॥ ३० ॥

तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ।
स्रष्ट्वा भूतपतिर्यत्र सर्वलोकान्सनातनः ॥ ३१ ॥

उपास्यते तिग्मतेजा वृतो भूतैः समन्ततः ।
नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः ॥ ३२ ॥

तत्र दिव्या त्रिपथगा प्रथमं तु प्रतिष्ठिता ।
ब्रह्मलोकादपक्रान्ता सप्तधा प्रवहत्यसौ ॥ ३३ ॥

सप्त दिव्यगङ्गाः

वस्वोकसारा नलिनी पावना च सरस्वती ।
जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी ॥ ३४ ॥

---

[1] हेमकूटः–क. ग.

अचिन्त्या दिव्यसंकल्पा प्रभावैश्च समन्विता ।
दृश्यादृश्या च भवति तत्र तत्र सरस्वती ॥ ३५ ॥

एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः ।

सप्तवर्षाणि

रक्षांसि वै [1] हिमवति हेमकूटे तु गुह्यकाः ॥ ३६ ॥

सर्पा नागाश्च निषधे गोकर्णं च तपोवनम् ।
देवासुराणां च गृहं श्वेतपर्वत उच्यते ॥ ३७ ॥

गन्धर्वा निषधे शैले नीले ब्रह्मर्षयस्तथा ।
शृङ्गिवांस्तु महाराज देवानां प्रतिसञ्चरः ॥ ३८ ॥

इत्येतानि महाभाग सप्तवर्षाणि भागशः ।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ॥ ३९ ॥

तेषामृद्धिर्बहुर्विधा दृश्यते दैवमानुषी ।
अशक्या परिसङ्ख्यातुं [2] श्रद्धयार्जवभूषया ॥ ४० ॥

यां तु पृच्छसि मां राजन् दिव्यामेनां शशाकृतिम् ।
पार्श्वे शशस्य द्वे वर्षे उक्ते ये दक्षिणोत्तरे ॥ ४१ ॥

कर्णौ तु नागद्वीपश्च कश्यपद्वीप एव च ।
ताम्रवर्णः शिरो राजन् श्रीमान्मलयपर्वतः ॥ ४२ ॥

एष द्वितीयो द्वीपस्तु दृश्यते शशसंस्थितिः ।
दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे ॥ ४३ ॥

उत्तराः कुरवो राजन् त्रयः सिद्धनिषेविताः ।
तत्र वृक्षा मधुफला नित्यपुष्पफलोद्गमाः ॥ ४४ ॥

पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च ।
सर्वकालफलास्तत्र केचिद्वृक्षा जनाधिप ॥ ४५ ॥

---

[1] हेमवति—क.  [2] श्रद्धयानुबुभूषता—क. ग.

अपरे क्षीरिणो नाम वृक्षास्तत्र जनाधिप ।
ये क्षरन्ति सदा क्षीरं वज्रसारामृतोपमम् ॥ ४६ ॥

वस्त्राणि च प्रसूयन्ते फलान्याभरणानि च ।
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका ॥ ४७ ॥

देवलोकाच्च्युताः सर्वे जायन्ते तत्र मानवाः ।
तुल्यरूपगुणोपेताः समेषु विषमेषु च ॥ ४८ ॥

मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ।
तेषां तत् क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् ॥ ४९ ॥

मिथुनं जायतेऽह्ना वै समं तत्र प्रवर्त्तते ।
तुल्यरूपगुणोपेतं समवेषं तथैव च ॥ ५० ॥

एकैकमनुरक्तं च चक्रवाकसमं प्रभो ।
निरामया वीतशोका नित्यं मुदितमानसाः ॥ ५१ ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
जीवन्ति ते महाराज न चान्योऽन्यं त्यजन्ति वै ॥ ५२ ॥

[1] भेरुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः ।
तान्निर्हरन्ति हि मृतान् दरीषु प्रक्षिपन्ति च ॥ ५३ ॥

उत्तराः कुरवो राजन्! आख्यातास्ते समासतः ।
मेरोः पार्श्वमहं पूर्वं वक्षाम्यथ यथातथम् ॥ ५४ ॥

### मेरुपर्वतपार्श्वभागवर्णनम्

तत्र पूर्वाभिषेके तु भद्राश्वस्य विशां पते! ।
भद्रसालवनं यत्तु कालाम्रश्च महाद्रुमः ॥ ५५ ॥

कालाम्रश्च महाभाग! नित्यपुष्पफलान्वितः ।
वृक्षस्त्रियोजनोत्सेधः सिद्धचारणसेवितः ॥ ५६ ॥

---

[1] भारुण्डा—ग.

तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः।
स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः ॥ ५७ ॥

चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः।
चन्द्रशीतलगात्र्यश्च नृत्तगीतविशारदाः ॥ ५८ ॥

दशवर्षसहस्राणि तत्रायुर्भरतर्षभ!।
कालाम्ररसपानास्ते नित्यसंस्थितयौवनाः ॥ ५९ ॥

नीलपर्वतदक्षिणभागस्थितजम्बूवृक्षादिवर्णनम्

दक्षिणेन तु नीलस्य निषधस्योत्तरेण च।
सुदर्शनो महाराज! जम्बूवृक्षः सनातनः ॥ ६० ॥

तथा माल्यवतः पृष्ठे दीप्यते तत्र हव्यवाट्।
नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ! ॥ ६१ ॥

तथा माल्यवतः श्रृङ्गे पूर्वे पूर्वा तु गण्डिका।
योजनानां सहस्राणि पञ्चाशन्माल्यवान् स्मृतः ॥ ६२ ॥

महारजतसंकाशा जायन्ते तत्र मानवाः।
ब्रह्मलोकाच्च्युताः सर्वे [1] सर्वे ते ब्रह्मवादिनः ॥ ६३ ॥

तपश्च तप्यमानास्ते भवन्ति ह्यूर्ध्वरेतसः।
संरक्षणार्थं भूतानां प्रविशन्ति दिवाकरम् ॥ ६४ ॥

षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च।
अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ॥ ६५ ॥

षष्टिवर्षसहस्राणि षष्टिरेव शतानि च।
आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ॥ ६६ ॥

रमणवर्षम्

दक्षिणेन श्वेतगिरेर्निषधस्योत्तरेण च।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥ ६७ ॥

---

[1] सर्वे च—ग.

शुक्लाभिजनसंपन्नाः सर्वे च प्रियदर्शनाः ।
निरामयाश्च ते सर्वे जायन्ते तत्र मानवाः ॥ ६८ ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
जीवन्ति ते महाराज ! नित्यं मुदितमानसाः ॥ ६९ ॥

हिरण्मयवर्षम्

दक्षिणेन तु नीलस्य निषधस्योत्तरेण च ।
वर्षं हिरण्मयं नाम यत्र हैरण्वती नदी ॥ ७० ॥

यत्र चायं महाराज ! पक्षिराट् पतगोत्तमः ।
महाबलास्तत्र सदा राजन् ! मुदितमानसाः ॥ ७१ ॥

एकादशसहस्राणि वर्षाणां ते जनाधिप ! ।
आयुःप्रमाणं जीवन्ति शतानि दश पञ्च च ॥ ७२ ॥

शृङ्गाणि वै शृङ्गवतस्त्रीण्येव मनुजाधिप ! ।
[1]एकं मणिमयं तत्र तथैकं रौक्ममद्भुतम् ॥ ७३ ॥

सर्वरत्नमयं चैकं भवनैरुपशोभितम् ।
तत्र स्वयंप्रभा देवी नित्यं वसति [2]शाम्भवी ॥ ७४ ॥

ऐरावतवर्षम्

उत्तरेण तु शृङ्गस्य समुद्रान्ते जनाधिप ! ।
वर्षमैरावतं नाम तस्य शृङ्गवतः परम् ॥ ७५ ॥

न तत्र सूर्यस्तपति न च जीर्यन्ति [3]जन्तवः ।
चन्द्रमाश्च सनक्षत्रैर्ज्योतिर्भूतैरिवावृतः ॥ ७६ ॥

पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः ।
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः ॥ ७७ ॥

---

[1] एवं–सु. पा. [2] शाण्डिली–ग. [3] मानवाः–ग.

[1]अनिष्पन्दा निराहाराः सुगन्धाश्च जितेन्द्रियाः ।
देवलोकाच्च्युताः सर्वे तथा विरजसो नृप ! ॥ ७८ ॥

त्रयोदशसहस्राणि वर्षाणां च नराधिप ! ।
आयुःप्रमाणं जीवन्ति नरा भरतसत्तम ! ॥ ७९ ॥

इलावृतवर्षम्

इलावृते पद्मवर्णा जम्बूफलरसाशिनः ।
त्रयोदशसहस्राणि शतवर्षाणि सुव्रत ! ॥ ८० ॥

किम्पुरुषवर्षम्

वर्षे किम्पुरुषे मर्त्याः हेमाभाः प्लक्षभोजनाः ।
दशवर्षसहस्राणि जीवन्ति स्थिरयौवनाः ॥ ८१ ॥

हरिवर्षम्

हरिवर्षे नराः शुभ्रा इक्षुदण्डरसाशनाः ।
सर्वे द्वादशसाहस्रजीवनाश्च निरामयाः ॥ ८२ ॥

त्रयोदशसहस्रायुर्जम्बूफलरसाशनाः ।
मेरुप्रस्थोपलब्धार्था [2]जना वर्षे इलावृते ॥ ८३ ॥

भद्राश्ववर्षम्

भद्राश्ववर्षे कालाम्रभोजनश्चन्द्रसन्निभः ।
दशवर्षसहस्रायुर्दुःखरोगभयोज्झितः ॥ ८४ ॥

वर्षायुतायुर्नीलाब्जद्युतिः पनससारभुक् ।

केतुमालम्

केतुमाले नरो दिव्यदेहगन्धो निरामयः ॥ ८५ ॥

---

[1] अनिष्यन्दाः—ग. [2] जनाः सर्वे—ग.

रम्यकवर्षम्

वर्षे तु रम्यके मर्त्या नैग्यग्रोधफलाशनाः ।
द्वादशाब्दसहस्राणि जीवन्ति च निरामयाः ॥ ८६ ॥

वर्षे हिरण्मये मर्त्या लिकुचाशनवर्धिताः
सार्धद्वादशसाहस्रजीवना रोगवर्जिताः ॥ ८७ ॥

त्रयोदशसहस्रायुः कल्पवृक्षफलाशनाः ।
युग्मप्रसूतिः कुरुषु नरा रोगभयोज्झिताः ॥ ८८ ॥

सदाशिवाद्यष्टमूर्तयः

सदाशिवो महादेवः कपाली नीललोहितः ।
स्थाणुः साम्बः शङ्कराख्यो दक्षिणामूर्तिसंज्ञितः ॥ ८९ ॥

एतेऽष्टमूर्तयः खण्डे सर्वदेवनिषेविताः ।
न तेषु वर्षते देवो भौमान्यम्भांसि तेषु वै ॥ ९० ॥

कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना ।
सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः ॥ ९१ ॥

नद्यश्च शतशस्तेभ्यः संप्रसूता द्विजोत्तमाः ! ।

भारतवर्षस्येतरवर्षापेक्षया श्रेष्ठ्यम्

यदेतद्भारतं वर्षं दक्षिणेन हिमाचलात् ॥ ९२ ॥

एतद्बीजमथान्येषां लोकानां द्विजपुङ्गवाः ! ।
कर्मभूमिर्न चान्यत्र संप्राप्तिः पुण्यपापयोः ॥ ९३ ॥

पुण्योपभोग एवोक्तो द्वीपवर्षेषु कृत्स्नशः ।
उत्तरेण महाम्भोधेर्दक्षिणेन हिमाचलात् ॥ ९४ ॥

नवसाहस्रविस्तारं नवभेदं हिमालयम् ।

कुलाचलाः सप्त

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ ९५ ॥

विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।

शतद्र्वादिमहानदीनामुत्पत्तिस्थानानि

शतद्रूचन्द्रभागाद्या हिमवत्पादनिस्सृताः ॥ ९४ ॥

वेदस्मृतिमुखाश्चान्याः पारियात्रोद्भवा मुने ।
नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिस्सृताः ॥ ९५ ॥

तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसम्भवाः ।
गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा ॥ ९६ ॥

सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ।
कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः ॥ ९७ ॥

त्रिसामाऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ।
ऋषिकुल्याकुमार्याद्याः शुक्तिमत्पादसंभवाः ॥ ९८ ॥

आसन्नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः ।
एवं तु नवखण्डोऽयं जम्बूद्वीपः प्रकीर्तितः ॥ ९९ ॥

बहुभिः पर्वतवरैर्नदीभिस्समलङ्कृतम् ।
जम्बूसंज्ञमिदं द्वीपं सुवृत्तं दर्पणोपमम् ॥ १०० ॥

लक्षयोजनविस्तारं बहिः क्षारोदसेवितम् ।
अन्यूनानतिरिक्ताश्च वर्धन्ते च ह्रसन्ति च ॥ १०१ ॥

उदयास्तमयाद्येषु चन्द्रस्यापो महार्णवे ।
बलाहकोऽथ मैनाकश्चक्रो वृषभपर्वतः ॥ १०२ ॥

चत्वारो बलभिद्वज्रघातभीता जले स्थिताः ।

और्वाग्निः

चक्रमैनाकयोर्मध्ये वायव्यां दिशि पावकः ॥ १०३ ॥

और्वो नाम तुरङ्गास्यो जलं पात्युद्गिर[1]त्यपि ।
स्थालीस्थमग्निसंयोगादुद्रेकि [2]सलिलं यथा ॥ १०४ ॥

---

[1] त्यपः—ग.    [2] सतिलं—ग.

तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तम ! ।
उदयास्तमयेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ १०५ ॥

दशोत्तराणि पञ्चैव त्वङ्गुलानां शतानि वै ।
अपां वृद्धिक्षयौ दृष्टा समुद्राणां महामुने ॥ १०६ ॥

समुद्रान्तःस्थिता द्वीपा बहवश्चाल्पयोजनाः ।
म्लेच्छप्रायजनाकीर्णा रक्षोभिश्च निषेविताः ॥ १०७ ॥

कन्याद्वीपाद्बहिः सिन्धोर्वेलानां षट्सहस्रकम् ।
नौसंचारः समुद्दिष्टः पञ्चाशद्योजनान्तरे ॥ १०८ ॥

इति श्री शिवतत्त्वरत्नाकरे द्वितीयकल्लोले नवखण्डविभागवर्णनं नाम सप्तमस्तरङ्गः

---

## अष्टमस्तरङ्गः

नवखण्डात्मकं जम्बूद्वीपं प्रोक्तं त्वया विभो ।
वक्तव्याश्चापरे द्वीपाः समुद्रैः परिवारिताः ॥ १ ॥

शृणु पुत्र ! ब्रवीम्यन्यान् द्वीपान्सागरसंवृतान् ।
तत्रस्थान्प्राणिवर्गांश्च कटाहावधिविश्रुतान् ॥ २ ॥

जम्बूद्वीपाद्द्विगुणितः शाकद्वीपस्समन्ततः ।
शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः ॥ ३ ॥

यत्पत्रवातसंस्पर्शादाह्लादो जायते नृणाम् ।
तत्र पुण्या जनपदा नाकाले म्रियते जनः ॥ ४ ॥

कुत एव हि दुर्भिक्षं क्षमातेजोयुता हि ते ।
शाकद्वीपेश्वरस्यापि हव्यस्य सुमहात्मनः ॥ ५ ॥

[1]सप्त वै तनयास्तेषां [2]ददौ वर्षाणि सप्तशः ।
जलदश्च कुमारश्च सुकुमारो मरीचकः ॥ ६ ॥

कुसुमोदः समोदार्कः सप्तमश्च महाद्रुमः ।
तत्संज्ञान्येव तत्रापि सप्त वर्षाण्यनुक्रमात् ॥ ७ ॥

तथैव पर्वता राजन्! सप्तात्र मणिपर्वताः ।
रत्नाकरास्तथा नद्यः तेषां नामानि संशृणु ॥ ८ ॥

अतीव गुणवत्सर्वं तत्र पुण्यं जनाधिप! ।
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते ॥ ९ ॥

प्रागायतो महाराज! मलयो नाम पर्वतः ।
यतो मेघाः प्रवर्तन्ते प्रभवन्ति च सर्वतः ॥ १० ॥

ततः पूर्वेण राजेन्द्र! जलधारो महागिरिः ।
तत्र नित्यमुपादत्ते वासवः परमं जलम् ॥ ११ ॥

यतो वर्षं प्रभवति वर्षाकाले जनेश्वर! ।
ततो गिरी रैवतको यत्र नित्यं प्रतिष्ठितः ॥ १२ ॥

रेवती दिवि नक्षत्रं पितामहकृतो विधिः ।
उत्तरेण तु राजेन्द्र! श्यामो नाम महागिरिः ॥ १३ ॥

नवमेघप्रभः प्रांशुः श्रीमानुज्ज्वलविग्रहः ।
यतः श्यामत्वमापन्नाः प्रजा जनपदेश्वर! ॥ १४ ॥

सर्वेष्वेव महाराज! द्वीपेषु सुगुणान्वित! ।
गौरः कृष्णश्च वर्णौ द्वौ तयोर्वर्णान्तरं नृप! ॥ १५ ॥

श्यामो यस्मात्प्रवृत्तो वै तस्माच्छ्यामो गिरिः स्मृतः ।
ततः परं महाराज! दुर्गशैलो महोदयः ॥ १६ ॥

केसरी केसरयुतो यतो वातः प्रवाति वै ।
सुकुमारी कुमारी च नलिनी [3]वेणुका तथा ॥ १७ ॥

---

[1] सप्तैवं—ग. [2] दध्यौ—ग. [3] रेणुका—ग.

इक्षुका [1]धेनुका चैव गभस्तिश्चेति निम्नगाः ।
तासां पिबन्ति सलिलं [2]तेन जीवन्ति जन्तवः ॥ १८ ॥

अनामया वीतशोका रागद्वेषविवर्जिताः ।
मगधा महसाश्चैव मागधा मन्दगास्तथा ॥ १९ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमेण तु ।
यजन्ति सततं देवं सर्वलोकैकसाक्षिणम् ॥ २० ॥

व्रतोपवासैर्विविधैर्देवदेवं दिवाकरम् ।
तेषां वै सूर्यसायुज्यं सामीप्यं च सरूपता ॥ २१ ॥

सलोकता च राजेन्द्र जायते तत्प्रसादतः ।
अन्याश्चायुतशस्तत्र क्षुद्रनद्यो महामुने ॥ २२ ॥

महीधरास्तथा सन्ति शतशोऽथ सहस्रशः ।
जम्बूद्वीपात् द्विगुणितः शाकद्वीपः समन्ततः ॥ २३ ॥

तावता क्षीरतोयेन समुद्रेण परीवृतः ।
क्षीराब्धौ शतसाहस्रैर्योजनानां सिते गृहे ॥ २४ ॥

अनन्तशयने विष्णुः शेते मणिमनोहरे ।
शाकात्तु द्विगुणः प्रोक्तो कुशद्वीपोऽग्निसन्निभः ॥ २५ ॥

कुशस्तम्भो देवकृतो वर्तते द्वीपनामकृत् ।
ज्योतिष्मत्तनयैर्गुप्तः खण्डैस्तन्नामभिर्युतः ॥ २६ ॥

उद्भिदो वेणिमांश्चैव [3]सुरथो लवणो धृतिः ।
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ॥ २७ ॥

तस्मिन् वसन्ति मनुजाः सह दैतेयदानवैः ।
तथैव देवगन्धर्वा यक्षःकिंपुरुषादयः ॥ २८ ॥

वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ।
[4]दमिकाः शुष्मिणः स्नेहान्मेन्देहाश्च [5]महारथाः ॥ २९ ॥

---

[1] वेणुका—पु. पा. [2] तत्र जीवन्ति मानवाः—ग. [3] वैरथो लम्बनो—पु. पा.
[4] दमिनः—ग. [5] महारथ—ग. महामुने—पु. पा.

तत्र ते तु कुशद्वीपे ब्रह्मरूपं महेश्वरम् ।
यजन्ते क्षपयन्त्यत्र स्वाधिकारफलप्रदम् ॥ ३० ॥

कुशद्वीपस्थिताः सप्तवर्षाचलाः

(विद्रुमः पाटलश्चैव हेमाद्रिश्च कुशेशयः ।)
विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा ॥ ३१ ॥

कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ।
वर्षाचलास्तु सप्तैते तत्र द्वीपे महामुने ॥ ३२ ॥

तत्र वहन्त्यो नद्यः सप्त

नद्यश्च सप्त तासां तु नामानीमान्यनुक्रमात् ।
[1]भूतपापा शिवा चैव पवित्रा सम्मतिस्तथा ॥ ३३ ॥

[2]तथा विद्युत्प्रभा रामा महानद्यश्च सप्त वै ।
अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाचलाः ॥ ३४ ॥

दधितोयेन परितस्तावताम्बुधिना वृतः ।
क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे ॥ ३५ ॥

स्कन्देन युद्ध्वा सुचिरं चित्रमायी सुमानवान् ।
सशैलस्तस्य दैत्यस्य कान्तिचित्रेण कर्मणा ॥ ३६ ॥

केतुतामगमत्तस्य नाम्ना क्रौञ्चस्य उच्यते ।
द्युतिमत्तनयैस्तुल्यनामवर्षविभेदवान् ॥ ३७ ॥

द्युतिमतोऽसुरस्य तनयाः

कुशलो [3]मननो गोष्णुः [4]पीवरश्चाथ कारकः ।
(मुनिश्च दुन्दुभिश्चैव सप्तैते द्युतिमत्सुताः ।

---

[1] धूत–ग. [2] 'विद्युदम्भा मही चान्या सर्वपापहरास्त्विमाः ।' कूर्मे–49–22.

[3] मल्लणश्चोष्णः–पु. पा. [4] पीवरश्चान्धकारकः–ग.

क्रौञ्चस्थिताः सप्त वर्षाचलाः

तत्रापि देवगन्धर्वसेविताः सुमनोहराः।
वर्षाचला महाबुद्धे ! तेषां नामानि मच्छृणु।

क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः।)
चतुर्थो रत्नशैलश्च स्वाहिनी हयसन्निभः॥ ३८॥

द्वीपावृत्पञ्चमश्चैव तथाऽन्यः पुण्डरीकवान्।
दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम्॥ ३९॥

द्वीपा द्वीपेषु ये शैला यथा [1] द्वीपेषु ते तथा।
सर्वेष्वेतेषु वर्षेषु वर्षशैलवरेषु च॥ ४०॥

निवसन्ति निरातङ्काः सह देवगणैः प्रजाः।
पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने॥ ४१॥

ते तत्र नद्यो मैत्रेय याः पिबन्ति शृणुष्व ताः।

वर्षनद्यः

सप्त प्रधानाः शतशस्तत्रान्याः क्षुद्रनिम्नगाः॥ ४२॥

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा।
ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः॥ ४३॥

अत्रापि विष्णुर्भगवान् पुष्कराद्यैर्जनार्दनः।
यागै रुद्रस्वरूपस्थ इज्यते यज्ञसन्निधौ॥ ४४॥

क्रौञ्चतो द्विगुणः सोऽपि घृततोयेन संवृतः।

शाल्मलिद्वीपस्तद्वर्षाणि च

शाल्मलिस्तस्य वर्षाणि सप्तैव तु वपुष्मतः॥ ४५॥

तनुजैः सह नामानि भिन्नान्यद्रिवरैः पृथक्।
श्वेतोऽथ हरितश्चैव जीमूतः सुप्रभस्तथा॥ ४६॥

---

[1] द्वीपानि ते–पु. पा.

रोहितो वैद्युतश्चापि मानसश्चापि सप्तमः ।
तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ॥ ४७ ॥

वर्षाभिव्यञ्जकास्ते तु तथा सप्तैव निम्नगाः ।

तत्रत्याः सप्तपर्वताः

कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः ॥ ४८ ॥

द्रोणो यत्र महौध्यश्च स चतुर्थो महीधरः ।
वैकङ्कः पञ्चमः षष्ठो महिषः सप्तमस्तथा ॥ ४९ ॥

कुमुद्वान्पर्वतवरः सरिन्नामानि मच्छृणु ।
[1]योनी तोषा वितृष्णा च चन्द्रा शुक्ला विमोचिनी ॥ ५० ॥

निवृत्तिश्चेति ता नद्यः स्मृताः पापहराः शिवाः ।
शाल्मलेये तु वर्णाश्च वसन्त्येते महामुने ! ॥ ५१ ॥

कपिलाश्चारुणाः पीताः कृष्णाश्चेति पृथक् पृथक् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम् ॥ ५२ ॥

भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् ।
वायुभूतं मखश्रेष्ठैर्यज्वनो यज्ञसंस्थितम् ॥ ५३ ॥

देवानामत्र सान्निध्यमतीव सुमनोहरे ।
शाल्मलिश्च महावृक्षो नाम्ना निर्वृतिकारकः ॥ ५४ ॥

सहस्रयोजनोच्छ्रायः शाल्मले शाल्मलिद्रुमः ।
अमराणां प्रियोऽर्काभः स तदाख्यानिबन्धनः ॥ ५५ ॥

ततस्तु शाल्मलिद्वीपो द्विगुणस्तावतैव तु ।
इक्षुसारस्वरूपेण समुद्रेण परीवृतः ॥ ५६ ॥

---

[1] कूर्म. 49–15.
यानि तोयानि कृष्णा च चन्द्रा सिक्ता विमोचिनी ।
विवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः ॥ मु. पा.

गोमेधो गोपतिर्नाम राजाऽभूद्गोसवोद्यतः ।
याज्योऽभूद्ध्विकल्पानामौचिथ्यानां मनोः कुले ॥ ५७ ॥

स तेषु हरियज्ञाय प्रवृत्तेषु भृगून् गुरून् ।
वव्रे तं गौतमः कोपादशपत्सोऽगमत्क्षयम् ॥ ५८ ॥

तद्यज्ञवाटे ता गावः प्लुष्टाः कोपाग्निना मुनेः ।
तन्मेदसा मही च्छन्ना गोमेधः स ततोऽभवत् ॥ ५९ ॥

प्लक्षद्वीपेश्वराः मेधातिथिपुत्राः सप्त

सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वराश्च वै ।
ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरम् ॥ ६० ॥

सुखोदयस्तथानन्दः शिवः क्षेमक एव च ।
ध्रुवश्च सप्तमश्चैषां प्लक्षद्वीपेश्वरा हि ते ॥ ६१ ॥

प्लक्षद्वीपवर्षाणि

पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा ।
आनन्दं च शिवं चैव क्षेमकं ध्रुवमेव च ॥ ६२ ॥

प्लक्षद्वीपवर्षपर्वताः

मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः ।
सप्तैव तेषां नामानि श‍ृणुष्व मुनिसत्तम ! ॥ ६३ ॥

गोमेधश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ।
सोमकः सुमनः शैलो वैभ्राजश्चैव सप्तमः ॥ ६४ ॥

वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघाः ! ।
वसन्ति देवगन्धर्वसहिताः सततं प्रजाः ॥ ६५ ॥

तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः ।
नाधयो व्याधयो वापि सर्वकालसुखं हि तत् ॥ ६६ ॥

तेषां नद्यश्च सप्तैव वर्षाणां तु समुद्रगाः ।
नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः ॥ ६७ ॥

प्लक्षद्वीपगता नद्यः

अनुतप्ता शिवा चैव विपापा [1]त्रिदिवाकृतिः ।
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥ ६८ ॥

एता नद्यस्तथा चैव प्रधानाः समुदीरिताः ।
क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः ॥ ६९ ॥

ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।
नैवापसर्पिणी तेषां न चैवोत्सर्पिणी स्थिता ॥ ७० ॥

न त्वेवास्ति युगावस्था तेषु स्थानेषु सप्तसु ।
त्रेतायुगसमः कालः सर्वदैव महामुने ! ॥ ७१ ॥

वर्णाश्चै तत्र चत्वारस्तान्निबोध वदामि ते ।

प्लक्षद्वीपगताश्चत्वारो वर्णाः

आर्यकाः कुरराश्चेह [2]विदंशा भाविनश्च ते ॥ ७२ ॥

विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ! ।

प्लक्षद्वीप इति संज्ञाया निमित्तम्

तस्माद्द्वीपाद् द्विगुणितस्तन्मध्ये सुमहातरुः ॥ ७३ ॥

प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ।
इज्यते भगवांस्तत्र त्रैवर्णैरार्यकादिभिः ॥ ७४ ॥

सोमरूपी जगत्स्रष्टा सर्वसर्वेश्वरो हरः ।
इत्येवमत्र राजेन्द्र ! प्लक्षद्वीप उदाहृतः ॥ ७५ ॥

पुष्करद्वीपवर्णनम्

समावेष्ट्य स्थितो द्वीपं सुरातोयो महाम्बुधिः ।
तमर्णवं समावृत्य स्थितः पुष्करसंज्ञितः ॥ ७६ ॥

---

[1] त्रिदिवाक्रमः–पु. पा.  [2] विदिशा–पु. पा.

गोमेधो गोपतिर्नाम राजाऽभूद्गोसवोद्यतः ।
याज्योऽभूद्बह्विकल्पानामौचिथ्यानां मनोः कुले ॥ ५७ ॥

स तेषु हविर्यज्ञाय प्रवृत्तेषु भृगून् गुरून् ।
वव्रे तं गौतमः कोपादशपत्सोऽगमत्क्षयम् ॥ ५८ ॥

तद्यज्ञवाटे ता गावः प्लुष्टाः कोपाग्निना मुनेः ।
तन्मेदसा मही च्छन्ना गोमेधः स ततोऽभवत् ॥ ५९ ॥

प्लक्षद्वीपेश्वराः मेधातिथिपुत्राः सप्त

सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वराश्च वै ।
ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरम् ॥ ६० ॥

सुखोदयस्तथानन्दः शिवः क्षेमक एव च ।
ध्रुवश्च सप्तमश्चैषां प्लक्षद्वीपेश्वरा हि ते ॥ ६१ ॥

प्लक्षद्वीपवर्षाणि

पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा ।
आनन्दं च शिवं चैव क्षेमकं ध्रुवमेव च ॥ ६२ ॥

प्लक्षद्वीपवर्षपर्वताः

मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः ।
सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ! ॥ ६३ ॥

गोमेधश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ।
सोमकः सुमनः शैलो वैभ्राजश्चैव सप्तमः ॥ ६४ ॥

वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघाः ! ।
वसन्ति देवगन्धर्वसहिताः सततं प्रजाः ॥ ६५ ॥

तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः ।
नाधयो व्याधयो वापि सर्वकालसुखं हि तत् ॥ ६६ ॥

तेषां नद्यश्च सप्तैव वर्षाणां तु समुद्रगाः ।
नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः ॥ ६७ ॥

### प्लक्षद्वीपगता नद्यः

अनुतप्ता शिवा चैव विपापा [1]त्रिदिवाकृतिः ।
अमृता सुकृता चैव समेतास्तत्र निम्नगाः ॥ ६८ ॥

एता नद्यस्तथा चैव प्रधानाः समुदीरिताः ।
क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः ॥ ६९ ॥

ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।
नैवापसर्पिणी तेषां न चैवोत्सार्पिणी स्थिता ॥ ७० ॥

न त्वेवास्ति युगावस्था तेषु स्थानेषु सप्तसु ।
त्रेतायुगसमः कालः सर्वदैव महामुने ! ॥ ७१ ॥

वर्णाश्चे तत्र चत्वारस्तान्निबोध वदामि ते ।

### प्लक्षद्वीपगताश्चत्वारो वर्णाः

आर्यकाः कुररश्चेह [2]विदंशा भाविनश्च ते ॥ ७२ ॥

विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ! ।

### प्लक्षद्वीप इति संज्ञाया निमित्तम्

तस्माद्वीपाद् द्विगुणितस्तन्मध्ये सुमहातरुः ॥ ७३ ॥

प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ।
इज्यते भगवांस्तत्र त्रैवर्णैरार्यकादिभिः ॥ ७४ ॥

सोमरूपी जगत्स्रष्टा सर्वसर्वेश्वरो हरः ।
इत्येवमत्र राजेन्द्र ! प्लक्षद्वीप उदाहृतः ॥ ७५ ॥

### पुष्करद्वीपवर्णनम्

समावेष्टय स्थितो द्वीपं सुरातोयो महाम्बुधिः ।
तमर्णवं समावृत्य स्थितः पुष्करसंज्ञितः ॥ ७६ ॥

---

[1] त्रिदिवाक्रमः—पु. पा. [2] विदिशा—पु. पा.

द्वीपो द्विभेदो लक्षाणां चतुष्षष्टिकविस्तरः।
पुष्कराधिपतेः पुत्रौ सवर्णस्य महात्मनः॥ ७७॥

महापीतो [1] घातकिश्च वर्षे तन्नामनी उभे।
पुष्करद्वीपमध्ये तु वलयाकारसंस्थितः॥ ७८॥

महामेरुपरीमाणो मानसोत्तरपर्वतः।
तस्योपरि दिगीशानामिन्द्रादीनां यथाक्रमम्॥ ७९॥

पुर्योऽष्टौ दिक्षु चाष्टासु सन्ति दिव्याप्सरोयुताः।
आमानसोत्तरान्मेरोरधितिष्ठन्ति मानवाः॥ ८०॥

श्वेतद्वीपवर्णनम्

मानसोत्तरपश्चार्धे श्वेतद्वीपो हरिप्रियः।
देवा अपि न तं गन्तुं शक्ता भक्तिविवर्जिताः॥ ८१॥

सनन्दनाद्या मुनयस्तत्र गच्छन्त्ययत्नतः।
[2] महापीतं तथैवान्यद्धातकीषण्डसंज्ञितम्॥ ८२॥

एकश्चात्र महाभाग! प्रख्यातो वर्षपर्वतः।
मानसोत्तरसंज्ञोऽयं मध्यतो वलयाकृतिः॥ ८३॥

योजनानां सहस्राणि ह्यूर्ध्वं पञ्चाशदुच्छ्रितः।
तावदेव च विस्तीर्णः पर्वतः परिमण्डलः॥ ८४॥

पुष्करद्वीपवलयं मध्येन विभजन्निव।
स्थितोऽसौ तेन विच्छिन्नं जातं वर्षद्वयं च तत्॥ ८५॥

वलयाकारमेकैकं [3] तयोर्मध्ये तथा गिरिः।
दशवर्षसहस्राणि तत्र जीवन्ति मानवाः॥ ८६॥

निरामया वीतशोका रागद्वेषविवर्जिताः।
नैवाधमोत्तमौ तेषां न वध्यवधकौ द्विज!॥ ८७॥

---

[1] दातकिश्च–ग. [2] महानीरं–पु. पा. [3] तयोर्वर्ष–पु. पा.

नेर्ष्यासूया भयं रोषो दोषा लोभादिका न च।
महापीतं [1]बहिर्वर्षं धातकीसंज्ञमन्ततः ॥ ८८ ॥

मानसोत्तरशैलस्थ देवदैत्यादिसेविते।
सत्यानृते न तत्र स्तः द्वीपे पुष्करसंज्ञिते ॥ ८९ ॥

न तत्र नद्यः शैला वा द्वीपे वर्षद्वयान्विते।
समरूपाश्च मनुजा देवास्तत्रैकरूपिणः ॥ ९० ॥

वर्णाश्रमाचारहीनं दानग्रहणवर्जितम्।
त्रयीवार्तादण्डनीतिशुश्रूषारहितं च यत् ॥ ९१ ॥

वर्षद्वयं तु मैत्रेय! भौमः स्वर्गोऽयमुत्तमः।
सर्वस्य सुखदः कालो जरारोगादिवर्जितः ॥ ९२ ॥

पुष्करे धातकीषण्डे महापीते च वै मुने।
न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् ॥ ९३ ॥

तस्मिन्निवसति ब्रह्मा पूज्यमानः सुरासुरैः।
तत्रैव मुनिशार्दूल शिवनारायणालये ॥ ९४ ॥

वसत्यत्र महादेवो हरोऽथ हरिरव्ययः।
सम्पूज्यमानो ब्रह्माद्यैः कुमाराद्यैश्च [2]योगिभिः ॥ ९५ ॥

भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम्।
षड्रसं भुञ्जते विप्र! प्रजाः सर्वाः सदैव हि ॥ ९६ ॥

स्वादूदकेनोदधिना पुष्करः परिवेष्टितः।
समानः पुष्करस्याब्धिर्विस्तारे मण्डले तथा ॥ ९७ ॥

एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः।
द्वीपाश्चैव समुद्राश्च समाना द्विगुणाः [3]परैः ॥ ९८ ॥

[4]यादांसि सर्वदा सर्वसमुद्रेषु समानि वै।
न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ ९९ ॥

तद्बहिः काञ्चनी भूमिर्नानारत्नद्रुमाचला।
क्रीडार्थं वेधसा सृष्टा देवानां दशकोटिका ॥ १०० ॥

---

[1] महद्वर्षं–ग. [2] मोगिभिः–ग. [3] परे–ग. [4] पर्यांसि–पु. पा.

### लोकालोकपर्वतवर्णनम्

लोकालोको बहिस्तस्या लोकालोकनियामकः ।
योजनायुतविष्कम्भस्तुङ्गश्शृङ्गपरिच्छदः ॥ १०१ ॥

तस्य शृङ्गेषु तिग्मांशुकराश्चन्द्रातपोपमाः ।
वसुदामा शङ्खपादो हिरण्यः केतुमानपि ॥ १०२ ॥

कर्दमस्य सुतास्तस्य चतुर्दिक्षु समाश्रिताः ।
लोकपालाः स्थितास्तत्र लोकालोके [1]चतुर्दिशि ॥ १०३ ॥

तमः परस्तान्निबिडं लक्षाण्येकोनविंशतिः ।
चत्वारिंशत्सहस्राणि पञ्चत्रिंशच्च कोटयः ॥ १०४ ॥

सप्तविंशतिलक्षाणि कोटिश्चैव समुद्रराट् ।
ब्रह्माण्डोऽयं कटाहेन संयुक्तो मेरुमध्यतः ॥ १०५ ॥

### द्वितीयकल्लोलोपसंहारः

पञ्चाशत्कोटयो ज्ञेया दशदिक्षु समन्ततः ।
ग्रन्थास्तु षट्छतान्येकचत्वारिंशच्च सङ्ख्यया ॥ १०६ ॥
तरङ्गैरष्टभिर्युक्ते कल्लोलेऽस्मिन्द्वितीयके ।
महाभारतवाराहे कौर्मं स्कान्दं च वैष्णवम् ॥ १०७ ॥
कुमारीकाण्डशैवादि सङ्गृह्यायं कृतोऽभवत् ।
श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसञ्जातेन लब्धश्रिया ।
गौरीभर्तुरनुग्रहाद्बसवराजेन्द्रेण क्लृप्ते पुनः
कल्लोलः परिपूरितः कृतिवरे त्वस्मिन्द्वितीयोऽभवत् ॥ १०८ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचिते वेदागमान्तर्गतविविधविद्यातत्त्वसारभूते शिवतत्त्वरत्नाकरे द्वितीयकल्लोले शाकद्वीपादिकटाहान्तवर्णनं नाम अष्टमस्तरङ्गः समाप्तः

———

[1] चतुर्दश—ग.

# तृतीयः कल्लोलः

## प्रथमस्तरङ्गः

अब्धौ शङ्करतां विमृश्य तनुजं बालं दिशत्यात्मने
सज्वालाह्विसरित्समीपनिहितः प्रम्लापितः प्रत्यहम्।
वृद्धिं नैत्यधुनापि निर्दयमहं प्राप्यार्थमेवाभवं
त्वामित्युक्तवतीं प्रियां प्रति हसन् गौरीपतिः पातु वः ॥

साब्धिद्वीपमहामेरुनदीशैलविभागवान्।
भूगोलस्यास्य विस्तारो गुरो! प्रोक्तः सविस्तरम् ॥ १ ॥

भवता पाल्यमानस्य लोकस्यास्य विवेचने।
विशेषो नेक्ष्यते स्वामिन्! अपारकरुणानिधे! ॥ २ ॥

ऊर्ध्वलोकस्य विस्तारं तत्स्वरूपं सविस्तरम्।
प्रकाशय महातेजः! प्रकाशितजगत्त्रयं! ॥ ३ ॥

नन्दनोदग्रया बुद्ध्या समानन्दयसे हि नः।
श्रोतुमिष्टं यदेतर्हि तुभ्यं तद्वर्णयाम्यहम् ॥ ४ ॥

### ऊर्ध्वलोकवर्णनम्

[1]तिथिलक्षो भुवर्लोको ध्रुवप्रान्तो महीतलात्।
तदूनकोटिः स्वर्लोकः स्वर्गवर्यसमाश्रयः ॥ ५ ॥

महर्द्विकोटिर्यत्रास्ते मरीच्यादिमुनिव्रजः।
जनोऽष्टकोट्यवच्छिन्नः पितृजह्नुजनालयः ॥ ६ ॥

तपोऽर्ककोटिर्यत्रास्ते महायोगी सनन्दनः।
[2]भृगुः सनत्कुमारश्च सनकश्च महातपाः ॥ ७ ॥

---

[1] तद्धि—ग.  [2] ऋभूः—ग.

ततः शतधृतेः स्थानं सत्यलोकः स्वयम्भुवः ।
कामातिशयसम्पन्नः कोटयो नव सप्त च ॥ ८ ॥

ततश्चतस्रः षट् चेति मधुत्रिपुरविद्विषोः ।
स्थाने ज्योतिर्मये चित्रे कोट्यश्चाण्डकटाहकः ॥ ९ ॥

शतकोटिप्रविस्तीर्ण इति ब्रह्माण्डकगोलकः ।
भूरादयस्त्रयो लोकाः कृतका इत्युदीरिताः ॥ १० ॥

जनोलोकादयो लोकाः त्रयश्चाकृतकाः स्मृताः ।
भूरादयस्त्रयो लोकाः सपातालाः सहार्णवाः ॥ ११ ॥

ब्रह्मणो दिनपर्यन्ते संह्रियन्ते पुनः पुनः ।
अहरादौ च सृज्यन्ते यथापूर्वं मुहुर्मुहुः ॥ १२ ॥

जनोलोकादयः सर्वे लीयन्ते ब्रह्मणः क्षये ।
अतोऽकृतकसंज्ञास्ते नान्तरा प्रभवन्ति यत् ॥ १३ ॥

शिंशुमार इति प्रोक्तो यादोरूपः प्रजापतिः ।
शिवशक्तिधृतोऽचिन्त्यो महर्लोकादधः स्थितः ॥ १४ ॥

आवहादिस्कन्धवायवः

तदाधारस्थिताः सप्तवायुस्कन्धा [1]महाचलाः ।
आधारा ग्रहनक्षत्रविमानानां नृपोत्तम ! ॥ १५ ॥

भूमेरुपरि मेघान्तमावहो वायुरुच्यते ।
प्रवहः सूर्यपर्यन्तमाचन्द्रादुद्वहः स्मृतः ॥ १६ ॥

ततो नक्षत्रपर्यन्तं संवहः परिकीर्तितः ।
विवहो ग्रहपर्यन्तस्तेभ्यश्चोर्ध्वं परावहः ॥ १७ ॥

सप्तर्षिभ्यस्तथा वायुः शिंशुमारान्तमूर्ध्वगः ।
बली परिवहो नाम सप्तैते स्कन्धवायवः ॥ १८ ॥

अष्टाविंशतिकोट्यस्तु रज्जवो वायुनिर्मिताः ।
शिंशुमाराश्रयाः सर्वाः प्रतिस्कन्धेषु भागशः ॥ १९ ॥

---

[1] महाबलाः—मु. पा.

वातरज्जुनिबद्धानि विमानानि दिवौकसाम् ।
अष्टाविंशतिकोट्यस्तु भ्राम्यन्ते वायुना [1] पुनः ॥ २० ॥

यावत्यस्तारकाः प्रोक्तास्तावत्यो वातरश्मयः ।
सर्वे ध्रुवनिबद्धा वै ग्रहास्ते वातरश्मिभिः ॥ २१ ॥

अनेन भ्राम्यमाणाश्च यथायोगं भ्रमन्ति च ।
भूमेः सन्निहिताः सन्ति ग्रहलोका अनेकशः ॥ २२ ॥

तत्र ग्रहाश्च बहवः सन्ति तेषामधीश्वराः ।
खड्गरावणनामा [2] तु रुद्रस्तस्य तु शक्तयः ॥ २३ ॥

अष्ट स्यु [3] श्चूलकुण्डाद्यास्तथा मातृगणादयः ।
परिग्रहा द्वारपालौ प्राचि स्तो रौद्रपिङ्गलौ ॥ २४ ॥

दक्षिणे तु स्मशानाङ्कभीषणौ पश्चिमे तथा ।
दृढकर्मा भृङ्गिरिटिर्द्वावेतावुत्तरे पुनः ॥ २५ ॥

आमर्दको महाकालश्चत्वारः कोणपालकाः ।
कुम्भकर्णो जातहरो भल्लाटोऽशोक इत्यपि ॥ २६ ॥

खट्वाङ्गशूलडमराङ्कुशखड्गचर्म-
घण्टाकपालशकलाभयमुण्डहस्तः ।
सन्ध्याभ्रसन्निभतनुर्बहुभूषणाढ्यो
भूतेश्वरो वसति पञ्चमुखाभिरामः ॥ २७ ॥

अष्टादश महाग्रहाः

अमरासुरनागाश्च यक्षगन्धर्वराक्षसाः ।
[4] हेड्काश्चलनिस्तेजोभस्मकाः पितरः [5] कुशाः ॥ २८ ॥

विनायकाः प्रलापाश्च पिशाचीत्यजयोनिजाः ।
[6] भूताख्येति समाख्याता अष्टादश महाग्रहाः ॥ २९ ॥

---

[1] नृप–ग. [2] नामानो–मु. पा. [3] श्चलुकुण्डाद्याः–ग. [4] हेड्कारमलिनि–ग. [5] कुशाः–ग. [6] भूताश्चेति–ग.

### व्यन्तरा नवग्रहाः

अपस्मारो द्विजो ब्रह्मराक्षसोऽवनिभुग्विशौ ।
वृषलो नीचचण्डालौ व्यन्तराश्च नवग्रहाः ॥ ३० ॥

### पूर्वसंस्थिता व्यन्तरग्रहाः

रुद्रक्रोधोद्भवाश्चैतेऽप्यन्ये च बहवो ग्रहाः ।
ते मन्त्रशास्त्रे संप्रोक्ताः सौरसेन्या महाज्वराः ॥ ३१ ॥

वातकः पैत्तिकश्चाथ श्लेष्मिकः सान्निपातिकः ।
अपस्मारः शृङ्खलश्च धनुर्धर इति क्रमात् ॥ ३२ ॥

कूश्माण्डश्चण्डवेगश्च लुण्डालो डिण्डिमस्तथा ।
कङ्कलाश्च कबन्धाश्च वेताला विहगाननाः ॥ ३३ ॥

गुह्यका गारुडा गृध्रा रासभाः किन्नराः परे ।
नग्नाः किम्पुरुषा रण्डाश्चण्डाला बर्बरास्तथा ॥ ३४ ॥

पतङ्गा बभ्रवः शुभ्राः नागाः पुण्ड्राश्च पिङ्गलाः ।
जटिला जाल्मला दीर्घा निखर्वाः [1] कृष्णयोनिजाः ॥ ३५ ॥

जालका विह्वलाश्चैते व्यन्तराः पूर्वसंस्थिताः ।

### दक्षिणाश्रिता व्यन्तरग्रहाः

चामुण्डा [2] दरहाश्चैव कुम्भीराः कुक्कुटास्तथा ॥ ३६ ॥

मूकाश्चान्धाश्च बधिरा मृगास्या निश्शठाः शठाः ।
वेचिका लब्धका लोध्रास्तथा प्रेताश्च किंकराः ॥ ३७ ॥

परेताः पूतिनासाश्च कृत्तिनासाश्च गोनसाः ।
ऊर्ध्वकेशाः स्फुलिङ्गाक्षा विद्युज्जिह्वाः प्लवङ्गमाः ॥ ३८ ॥

आमर्दा दुर्दुराः क्षुद्राः उच्छिष्टा व्याकुलास्तथा ।
कालाः करालाः [3] कादम्ब्या व्यन्तरा दक्षिणाश्रिताः ॥ ३९ ॥

---

[1] कृष्णयोजनाः—ग. [2] दरदाश्चैव—ग. [3] कादम्ब्या—ग.

पश्चिमाश्रिता व्यन्तरग्रहाः

भेरुण्डास्ताम्रचूडाश्च खर्जूरा जर्जराननाः ।
गोमुखाश्चाथ गोकर्णाः स्थूलकर्णास्तथाऽपरे ॥ ४० ॥

एकपादाश्चैकदंष्ट्राः शण्डकाश्चाथ शण्डिलाः ।
उल्लिङ्गाश्च कुलिङ्गाश्च गजास्याश्चर्पटाननाः ॥ ४१ ॥

शेखरास्त्रिशिराश्चान्ये खद्योता वैद्युताः पुनः ।
जीमूतकाः साग्रनखाः विस्रस्ता विस्रकास्तथा ॥ ४२ ॥

धूम्राश्च धूसराश्चैव सरलाः कुटिलास्तथा ।
कुम्भीनसा इति प्रोक्ता व्यन्तराः पश्चिमाश्रिताः ॥ ४३ ॥

उदगाश्रिता व्यन्तरग्रहाः

विश्वरूपा विरूपाश्च बहुरूपाश्च भीषणाः ।
निर्घासाश्चैव निर्भासा वर्ताः संवर्तकास्तथा ॥ ४४ ॥

आवर्ताः कीकसाः कुल्या निर्मांसा विकृताननाः ।
मलिनाः पूतिगन्धाश्च पापरूपाः पलाशनाः ॥ ४५ ॥

[1] योगिनीमन्त्रगर्भाश्च सुब्रह्मण्याश्च दक्षिणाः ।
सारस्वताः सहोत्राश्च [2] सुवस्त्राश्चाग्निरेतसः ॥ ४६ ॥

मदालसा मदोन्मत्ता मदान्धा मदलालसाः ।
त्रिवक्राःस्वादुराः शान्ता इत्युदग्व्यन्तराश्रिताः ॥ ४७ ॥

ग्रहावासस्थानानि

प्रत्येकं कान्तिभिन्नास्ते [3] प्रायः स्वाख्यानलक्षणाः ।
[4] ग्रहाश्मकूबशैलाग्रवनोपवनसानुषु ॥ ४८ ॥

सरिद्वापीसरःकूपतटाकोदन्वतस्तटे ।
सङ्गमे सरिदावर्ते गोकुले शून्यमन्दिरे ॥ ४९ ॥

---

[1] योगसामन्तगर्भाश्च—ग. [2] सुधास्याश्चाग्निरेतसः—ग. [3] प्रायः स्वाख्यासलक्षणाः—ग.
[4] ग्रहाश्च शैलकूटाग्र—ग.

एकवृक्षे चितास्थाने प्रभ्रष्टे देवतागृहे ।
निधिदेशे रसक्षेत्रे बिलद्वारे चतुष्पथे ॥ ५० ॥

ग्रामसीमान्तरे मातृस्थाने च क्षेत्रतीर्थयोः ।
आरामोद्यानयोः सौधप्रासादाट्टालकेषु च ॥ ५१ ॥

क्रीडापरा वसन्त्येषु स्थानेष्वन्येषु च ग्रहाः ।

ग्रहावेशार्हस्त्रीपुंसौ

प्रसूतां गर्भिणीं नग्नां ऋतुस्नातां दुराचरीम् ॥ ५२ ॥

आसन्नपुष्पां कामार्तां मद्यमांसाभिकांक्षिणीम् ।
मुह्यमानां विलासाढ्यां रथ्याचत्वरयोः स्थिताम् ॥ ५३ ॥

प्राप्तप्रथमसम्भोगां तैलाभ्यक्तामविक्षताम् ।
[1] हृष्टां क्लिष्टां हतां क्रुद्धां, हसिनं भीरुशोकिनौ ॥ ५४ ॥

शर्वर्याश्रितमुच्छिष्टं व्याधितं [2] कुसुमाहरम् ।
अलाभमूढं पूर्वाप्तनष्टद्रव्यं वियोगिनम् ॥ ५५ ॥

एकाकिनं कान्ततनुं भूषितं च निरायुधम् ।
ग्रहा गृह्णन्ति स्त्रीपुंसावीदृशावीश्वराज्ञया ॥ ५६ ॥

मेघलोकः

भूलोकादूर्ध्वभागे तु द्विषड्योजनमात्रतः ।
मेघलोको भवेत्तत्र मेघाः सर्वे वसन्ति हि ॥ ५७ ॥

जलधूमाग्निवायूनां संयोगात्संभवन्ति ते ।
[3] वारीण्येव तु वर्षन्ति तेषामीशः सहस्रदृक् ॥ ५८ ॥

धूमभेदेन धूमोद्भवमेघानां गुणभेदाः

यज्ञधूमोद्भवं चाभ्रं द्विजानां हितकृत्सदा ।
शत्राग्निधूमसम्भूतमभ्रं नैव हितं स्मृतम् ॥ ५९ ॥

[1] हृष्टं क्लिष्टं हतं क्रुद्धं—ग. [2] सकुतूहलम्—ग. [3] वारिणैव—ग.

अभिचाराग्निधूमोत्थं भूतनाशाय जायते ।
तस्मादाच्छादयेद्धूममभिचारकृतं नरः ॥ ६० ॥

एकमुद्दिश्य लोकस्य क्षयकृत्स भविष्यति ।
अपां निधानं जीमूताः षण्मासानिह सुव्रताः ॥ ६१ ॥

वर्षन्ति वारि जगतां हिताय पवनास्पदाः ।
न भ्रश्यन्ति यतोऽभ्राणि मेघा मेहनतः स्मृताः ॥ ६२ ॥

मेघभेदाः

काष्ठज्योतिश्च वैरिञ्चः पाक्षश्चेति पृथग्विधा ।
आद्यस्तु काष्ठसंयोगादग्नेर्धूमप्रवर्तितः ॥ ६३ ॥

द्वितीयस्तत्र सम्भूतो विरिञ्चोच्छ्वासवायुना ।
भूभृतामथ पक्षैस्तु गोप्रजादिहिते रतः ॥ ६४ ॥

वाह्नेया अथ जीमूतास्ते च प्रवहजाः शुभाः ।
वैरिञ्चोच्छ्वासजाः सर्वे प्रवहस्कन्धगास्तथा ॥ ६५ ॥

पक्षजाः पुष्कलाद्यास्तु ते परावहगाम्बुदाः ।
स्वल्पवृष्टिप्रदा दीर्घकालशीतसमीरणाः ॥ ६६ ॥

जीमूताश्च तथा क्षीणा धरापृष्ठसमाश्रिताः ।
अर्धक्रोशे च ते सर्वे जीमूताः सिद्धवासिनः ॥ ६७ ॥

तेषां हि प्रतिसर्गाणि बह्वनि स्युः पयोमुचाम् ।
पक्षजाः कल्पगाः सर्वे पर्वतानां महत्तराः ॥ ६८ ॥

कल्पान्तेऽग्निं च वर्षन्ति रात्रौ नाशाय नारद ! ।
यदा वै पुष्कलाद्यास्तु वर्षन्ति जलदा जलम् ॥ ६९ ॥

तदार्णवमभूत्सर्वं तत्र शेते गिरीश्वरः ।
आग्नेयानां श्वासजानां पक्षजानां पयोमुचाम् ॥ ७० ॥

सविद्युतां सतोयानां धूमो ह्याप्यायनः स्मृतः ।
एवं सर्वे प्रवर्षन्ति काले काले पयोमुचः ॥ ७१ ॥

इति श्री शिवतत्त्वरत्नाकरे तृतीयकल्लोले मेघाभ्रग्रहलोकवर्णनं नाम
प्रथमस्तरङ्गः

---

## द्वितीयस्तरङ्गः

कस्मिन्काले च के मेघा वर्षन्ति सलिलैर्महीम् ।
किं वा निमित्तमासाद्य तेभ्यो वृष्टिः प्रजायते ॥ १ ॥

एतन्मह्यं समाख्याहि गुरो मयि कृपा यदि ।
पुत्र ते कथयास्येतत् यदर्थस्ते समुद्यमः ॥ २ ॥

मेघानां वर्षणे निमित्तानि
(कार्तिकमार्गशीर्षयोः)

कार्तिके मार्गशीर्षे वा संक्रान्तौ यदि वर्षति ।
मध्यमं जायते सस्यं पौषमासे सुभिक्षदम् ॥ ३ ॥

दीपोत्सवदिने वारौ भौमार्कौ न शुभावहौ ।
गर्जिते कार्तिके मासे चतुर्मासेषु वर्षति ॥ ४ ॥

सुभिक्षं जायते तत्र सस्यसम्पत्तिरुत्तमा ।
सर्ववर्णास्तथा मेघा जायन्ते च पृथक् पृथक् ॥ ५ ॥

कुत्रचिच्च भवेद्वृष्टिः कुत्रचित्स्यादवर्षणम् ।
अभ्राणि श्वेतवर्णानि पीतवर्णानि वा यदि ॥ ६ ॥

कृष्णवर्णो भवेन्मेघस्ताम्रवर्णास्तथापरे ।
कांस्यवर्णो भवेन्मेघस्तथा सिन्दूरसप्रभः ॥ ७ ॥

कार्तिके चैव मासे तु स्यादेवं गर्भलक्षणम् ।
यन्नक्षत्रगते चन्द्रे गर्भं ब्रूयाच्च तद्वशात् ॥ ८ ॥

पञ्चोनविंशतौ चैव दिने प्रसवमादिशेत् ।
सितपक्षोद्भवाः कृष्णे कृष्णपक्षोद्भवाः सिते ॥ ९ ॥

निशि जातास्तथा चाह्नि [1] दिवा जातास्तथा निशि ।
सन्ध्याजाताश्च सन्ध्यायां पूर्वजाताश्च पश्चिमे ॥ १० ॥

---

[1] अह्निजाताः—ग.

प्राच्यामपरजाताश्च वर्षन्तीति विदुर्बुधाः ।
एते चान्ये च विज्ञेया व्यत्यये मरुतस्तथा ॥ ११ ॥

अश्विन्यां तु सुगर्भं च सुभिक्षं जायते ध्रुवम् ।
मार्गशुक्लतृतीयादौ मेघा दिनचतुष्टये ॥ १२ ॥

सगर्भा [1] यत्र जायन्ते सुभिक्षं तत्र निश्चितम् ।
मार्गस्य कृष्णपक्षे तु चतुर्थ्यां तु भुजङ्गमम् ॥ १३ ॥

ऋक्षं भवति मेघाश्च विद्युद्गर्जितसंयुताः ।
आषाढे शुक्लपक्षे तु सततं वर्षणं भवेत् ॥ १४ ॥

पञ्चमे च तथा षष्ठे सप्तमे च तथैव च ।
आश्लेषाचित्रपूर्वासु यदि गर्भः प्रजायते ॥ १५ ॥

आषाढे शुक्लपक्षे तु सततं वर्षणं भवेत् ।
अष्टमी नवमी चैव चित्रास्वातीसमन्विते ॥ १६ ॥

आषाढे शुक्लपक्षे तु जलयोगो भवेद्ध्रुवम् ।
दशम्येकादशी चैव त्वमावास्या विशेषतः ॥ १७ ॥

[2] गर्भो विद्युत्समायुक्तमभ्रं वा यदि जायते ॥ १८ ॥

आषाढे शुक्लपक्षे तु तद्दिने वर्षति ध्रुवम् ।
कार्तिकं मार्गशीर्षे च कथितं तव भामिनि ॥ १९ ॥

पुष्यमासे वर्षनिमित्तानि

पुष्यशुक्लचतुर्थ्यां तु संजाते विद्युदीक्षणे ।
अभ्रच्छन्नं [3] भवेच्चेष्टं मत्स्यमिन्द्रायुधं तथा ॥ २० ॥

अजपादं प्रयत्नेन अहोरात्रं निरीक्षयेत् ।
सर्वेषामपि चिह्नानाममोघं विद्युदीक्षणम् ॥ २१ ॥

आषाढे शुक्लपक्षे तु सफलं विद्युदीक्षणम् ।
तस्मिन् [4] ऋक्षे तु संप्राप्ते त्वहोरात्रं निरीक्षयेत् ॥ २२ ॥

---

[1] यदि–ग. [2] गर्भविद्यु–ग. [3] भवेच्छिष्टं–ग. [4] पक्षे–तु. ग.

विद्युन्मेघधनुर्मत्स्येष्वेकोऽपि यदि नो भवेत् ।
[1]न ऋक्षं [2]वर्षते तत्र न काले वर्षति ध्रुवम् ॥ २३ ॥

अनेन ज्ञायते सर्वं वर्षणं चाप्यवर्षणम् ।
विद्युत्संयोगजं गुह्यं न देयं यस्य कस्यचित् ॥ २४ ॥

एकादश्यां तथा ज्ञेयं सहिमं विद्युदीक्षणम् ।
सजलो रोहिणीयोगः समादेश्यो विचक्षणैः ॥ २५ ॥

आषाढे तद्दिने प्राप्ते रोहिण्यां च जलं बहु ।
पौषस्य पौर्णमासी या तथा कृष्णे द्वितीयका ॥ २६ ॥

मघानक्षत्रसंयुक्ता मेघच्छन्नापि वा तथा ।
[3](आषाढस्याप्यमायां तु बहुलं जलमादिशेत् ।
सर्पं भवेद्द्वितीयायां किंचित्सर्पभयं भवेत् ॥)
निष्पत्तिः सर्वसस्यानां नात्र कार्या विचारणा ॥ २७ ॥

पौषस्य कृष्णसप्तम्यां साभ्रं यदि नभस्स्थलम् ।
सहिमं ज्योतिषां योगमैशान्यां विद्युदीक्षणम् ॥ २८ ॥

श्रावणे शुक्लसप्तम्यां स्वातीयोगे [4]जलं भवेत् ।
निष्पत्तिः सर्वसस्यानां प्रजाश्च निरुपद्रवाः ॥ २९ ॥

अभ्राणि यदि दृश्यन्ते [5]पतेयुर्जलबिन्दवः ।
अभ्रच्छन्नं जलं स्वल्पं जलपातः सुवृष्टिदः ॥ ३० ॥

पौषे विद्युदमायां तु श्रावणे सहिमं यदि ।
अभ्रच्छन्नं नभश्चापि सजलं चात्र जायते ॥ ३१ ॥

श्रावणे पूर्णिमायां तु श्रवणे च जलं बहु ।
सुभिक्षं च समादेश्यं तस्मिन्वर्षे न संशयः ॥ ३२ ॥

[6]पौषस्य शुक्लपक्षे तु पूर्णिमा गर्भलक्षणम् ।
पौषस्य कृष्णतिथिषु यदि चेद्गर्भलक्षणम् ॥ ३३ ॥

---

[1] दुर्भिक्षं–ग. [2] वर्धते ? [3] ग. पुस्तकपाठः. [4] फलं–ग. [5] पतेद्वा जलसन्ततिः–ग. [6] इदमर्धं ग. पुस्तके न दृश्यते.

श्रावणे शुक्लपक्षे तु गर्भभूते च तद्दिने ।
पौषं च कथितं देवि माघमासमथ शृणु ॥ ३४ ॥

माघमासे वर्षनिमित्तानि

माघस्य शुक्लसप्तम्यां विद्युदभ्रं धनुर्जलम् ।
तुषारश्चैन्द्रचापश्च कौबेरे सर्वदिक्षु वा ॥ ३५ ॥

[1]सन्ध्या नीलारुणा तु स्यात्सुभिक्षं निरुपद्रवम् ।
माघस्य पूर्णिमा पित्र्या विद्युद्वातसमन्विता ॥ ३६ ॥

श्रावणस्य त्वमायां च मघायां च भवेज्जलम् ।
माघस्य नवमी कृष्णदशम्येकादशी तथा ॥ ३७ ॥

सर्वर्क्षगर्भसंयुक्ता बहु भाद्रपदे जलम् ।
माघमासे त्वमायां तु दृश्यन्ते जलदा यदि ॥ ३८ ॥

[2]तद्दिनं च भवेत्तत्र दिव्यगर्भं च जायते ।
भाद्रस्य पूर्णिमायां तु [3]यदि वर्षत्यहर्निशम् ॥ ३९ ॥

फाल्गुने शुक्लसप्तम्यां पूर्णिमायां [4]विशेषतः ।
निवाता गगने मेघा विजला विद्युता युताः ॥ ४० ॥

नभस्येतद्दिने प्राप्ते प्रभूतजलदायकाः ।
फाल्गुने कृष्णसप्तम्यामष्टम्यादि [5]चतुर्दिने ॥ ४१ ॥

(चतुर्दश्याममायां वा सगर्भे यदि जायते ।
अश्विनीशुक्लपक्षे तु सप्तम्यादितिथिष्वपि) ॥ ४२ ॥

सप्तऋक्षेण [6]संयुक्ताः प्रभूतजलदायकाः ।
चैत्रस्य शुक्लपक्षे तु पञ्चमी रोहिणीयुता ॥ ४३ ॥

पञ्चम्यां शिवदैवत्यं नवम्यां पुष्यमेव च ।
पूर्णिमासंयुता चित्रा तत्र यत्नाद्विलोकयेत् ॥ ४४ ॥

---

[1] संध्ये नीलारुणे चेत्स्यात्–ग. [2] तद्दिनं न भवेत्–ग. [3] यावद्वर्षेति–ग.
[4] तथैव च–ग. [5] चतुष्टये–ग. [6] युक्तासु–ग.

विद्युत्स्तनितसंयुक्तं प्रतिभासचतुष्टयम् ।
आषाढं रोहिणी हन्ति [1] यथार्द्रा श्रावणं तथा ॥ ४५ ॥

हन्ति भाद्रपदं पुष्यो हन्याच्चित्रा तथाऽऽश्विनम् ।
एभिस्तु गलितो ऋक्षैर्गर्भः पतति निश्चितम् ॥ ४६ ॥

चैत्रं तु वर्णितं देवि ज्ञातव्यं दैवचिन्तकैः ।
साभ्राः सौम्याः शुभाः प्रोक्ताः पौषास्तुहिनसंयुताः ॥ ४७ ॥

माघा मारुतसंयुक्ताः निवाताः फाल्गुनाः शुभाः ।
चैत्रस्तु बहुरूपो वै दक्षिणानिलसंयुतः ॥ ४८ ॥

सर्वे विद्युत्समायुक्ता गर्भाश्च शुभलक्षणाः ।

विद्युल्लक्षणानि

विद्युतो लक्षणं वक्ष्ये काले काले शुभावहम् ॥ ४९ ॥

ऐन्द्री तु जलदा विद्युदाग्नेयी जलनाशिनी ।
[2] याम्या स्वल्पजला प्रोक्ता नैर्ऋत्याडम्बरान्विता ॥ ५० ॥

यदा तदा महद्युद्धं राज्ञां पीडा जनस्य च ।
प्रभूतजलदा विद्युद्वारुणी सस्यदायिनी ॥ ५१ ॥

वातप्रदा तु वायव्या कौबेरी सस्यदायिनी ।
सर्वसस्यकरी विद्युदैशानी क्षिप्रवर्षदा ॥ ५२ ॥

प्रभूतजलदा ज्ञेया भृशं गर्जन्ति ये घनाः ।
विद्युतो मण्डलं चैव चिन्तनीयं सदा बुधैः ॥ ५३ ॥

[3] एतत्सर्वं समादेश्यं प्रथमे विद्युदीक्षणे ।
चक्षुर्भवति मेघानां विद्युन्मार्गप्रदर्शिनी ॥ ५४ ॥

मदोन्मत्ता महामेघा गर्जन्ते विद्युदीरिताः ।
विद्युदीशा न गर्जन्ति वर्षन्ति च जलं बहु ॥ ५५ ॥

यस्मिन्देशे सुभिक्षं स्याद्विद्युत्तत्रैव गच्छति ।

---

[1] आर्द्रा च श्रावणं तथा—ग. [2] याम्ये—ग. [3] यतः सर्वं—मु.

### ज्येष्ठमासे शुभाशुभलक्षणानि

ज्येष्ठमासं प्रवक्ष्यामि शुभाशुभफलावहम् ॥ ५६ ॥

ज्येष्ठशुक्ले तृतीयादौ चन्द्रं पूर्वं निरीक्षयेत् ।
स्वात्यन्तानि दशर्क्षाणि श्रूयते गर्जितं यदि ॥ ५७ ॥

ज्ञातव्यं गलितं देवि नात्र कार्या विचारणा ।
ज्येष्ठस्य पौर्णिमास्यां तु मूले प्रस्रवते यदि ॥ ५८ ॥

मासद्वयमनावृष्टिः [1]छिन्नं भवति भूतलम् ।
भानौ च रोहिणीमध्ये यदि वृष्टिः प्रजायते ॥

मासद्वयमनावृष्टिरीतयश्चातिभैरवाः ।
ज्येष्ठमासमतिक्रम्य पूर्वाषाढादिकेषु वै ॥ ५९ ॥

प्रायेण वृष्टिर्भवति वर्षाकालेऽपि भैरवा ।
ज्येष्ठस्य कृष्णपक्षे तु श्रवणं सधनिष्ठकम् ॥ ६० ॥

सुवृष्टिश्च सुगर्भश्च तथा कालः शुभो भवेत् ।

### ज्येष्ठाषाढयो रोहिणीयोगः

वक्ष्यामि रोहिणीयोगं ज्येष्ठाषाढसमुद्भवम् ॥ ६१ ॥

व्यभ्रं चावृष्टिदं चैतत्साभ्रं स्याद्वृष्टिकारणम् ।
सुभिक्षं जलपातेन न चेदेतद्द्वयं भवेत् ॥ ६२ ॥

सुभिक्षं प्रथमे यामे द्वितीये सर्प (र्व) पीडनम् ।
तृतीये प्रहरे वृष्टिर्मध्यमा तु प्रजायते ॥ ६३ ॥

चतुर्थे [2]खण्डवृष्टिः स्यात्सर्वसस्यानि पञ्चमे ।
षष्ठे तु मुद्गमाषाद्याः श्रेष्ठधान्यं च सप्तमे ॥ ६४ ॥

अष्टमे प्रहरे देवि विच्छिद्रां वृष्टिमादिशेत् ।
विलोक्य निपुणः सर्वं वृष्टिकर्मसमुद्भवम् ॥ ६५ ॥

---

[1] छिद्रं—ग. [2] मन्दवृष्टिः—ग.

ज्येष्ठमासे त्वमायां तु भानुं रक्तं विलोक्य च ।
तथा चन्द्रमसं वापि द्वितीयायां समागतम् ॥ ६६ ॥

यदोत्तरं शशी याति [1] मध्ये वा दक्षिणं रविः ।
उत्तमं मध्यमं नीचं [2] तं कालं च विदुर्बुधाः ॥ ६७ ॥

आर्द्रायां पतितं तोयं [3] स कालो गदितः शुभः ।
मृगादिमूलपर्यन्तं ज्येष्ठमासे निरीक्षयेत् ॥ ६८ ॥

निर्मलं च यदा पश्येत् सप्तऋक्षे च वर्षति ।
ज्येष्ठस्तु गदितो देवि ह्याषाढः कथ्यते शृणु ॥ ६९ ॥

आषाढे शुभाशुभलक्षणानि

आषाढे स्वातिनक्षत्रे नवम्यां जलसम्भवः ।
तत्राभ्रं विद्युदम्भो वा धान्यनिष्पत्तिकारणम् ॥ ७० ॥

आषाढे वृष्टिचिह्नानि

आषाढे पूर्णिमारात्रौ यदि चन्द्रो न दृश्यते ।
चतुरोऽपि तदा मासान् जलं वर्षति वासवः ॥ ७१ ॥

यदि वा निर्मलश्चन्द्रः परिवेषयुतो भवेत् ।

वातचिह्नानि

ऐन्द्रे वातः सुभिक्षाय ह्याग्नेये जलनाशनम् ॥ ७२ ॥

याम्ये दुर्भिक्षमादेश्यं नैर्ऋत्यां निर्जलं भवेत् ।
[4] वारुण्यां मध्यमा वृष्टि[5]र्वायव्यां चेतयः स्मृताः ॥ ७३ ॥

कौबेरे शोभनो वात ऐशाने च शुभप्रदः ।
ईदृशं वातचिह्नं तु पूर्णिमायां निरीक्षयेत् ॥ ७४ ॥

वाताय कपिला विद्युदातपायातिलोहिता ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ ७५ ॥

---

[1] तथैवादक्षिणं—ग. [2] सकालं पचतेऽधुना—ग. [3] तदा कालो गतः शुभः—ग.
[4] वारुणे—ग. [5] वायव्ये—ग.

बुधजीवसमायोगो बुधशुक्रसमागमः ।
शुक्रजीवसमायोगो जलयोगा इमे स्मृताः ॥ ७६ ॥

परिवेषधनुर्मत्स्यविद्युज्जलदगार्जितैः ।
सन्ध्यारागेण च ज्ञेयमासन्नं [1] वर्षणं बुधैः ॥ ७७ ॥

प्रावृषि शीतकरे भृगुपुत्रात्
सप्तमराशिगते [2] शुभवृष्टिः ।
सूर्यसुतो नवमपञ्चमगो वा
सप्तमगश्च जलागमनाय ॥ ७८ ॥

शुचौ कृष्णचतुर्थ्यां तु यदोदयगतः कविः ।
त्रिमासं पक्षसंयुक्तं तदा वर्षति वासवः ॥ ७९ ॥

आषाढे कृष्णपक्षे तु रोहिणीयोग उत्तमः ।
अभ्रं सविद्युदम्भो वा काले निष्पद्यते तदा ॥ ८० ॥

सुवृष्टी रोहिणीयोगे न च पूर्वोत्तरोऽनिलः ।
श्रूयते गर्जितं यत्र तत्र देशे [3] सुभिक्षता ॥ ८१ ॥

श्रावणे वृष्टिचिह्नानि

आषाढः कथितो देवि श्रावणं शृणु पार्वति ! ।
श्रावणे शुद्धसप्तम्यामस्तं याति दिवाकरे ॥ ८२ ॥

न वर्षेद्यदि पर्जन्यो जलं नास्ति च सर्वदा ।
चित्रास्वातीविशाखासु श्रावणे न जलं यदा ॥ ८३ ॥

वृष्ट्याशां तु तदा त्यक्त्वा नदीतीरमनुव्रजेत् ।
श्रावणे बहुले पक्षे चतुर्थ्यां चेन्न वर्षति ॥ ८४ ॥

पञ्चम्यां वाथ सन्ध्यायां निर्जलं क्षितिमण्डलम् ।
तन्नाशे वारुणे ऋक्षे चतुर्थ्यां चेज्जलं बहु ॥ ८५ ॥

---

[1] वृष्टिदर्शनं–ग. [2] शुभदृष्टे–ग. [3] सुभिक्षदा–ग.

अभ्रच्छन्नं नभश्चैव धनुर्विद्युच्च गर्जितम् ।
एभिश्च लक्षणैर्ज्ञेयं मासेषु प्रतिवर्षणम् ॥ ८६ ॥

दस्रभद्वितयस्थेऽर्के यदि वृष्टिर्भवेत्तदा ।
क्षेमं सुभिक्षमतुलमीतिदोषोऽग्निधिष्ण्यगे ॥ ८७ ॥

रोहिणीद्वितयस्थेऽर्के सस्यवृद्धिर्मनोजयः ।
रौद्रनक्षत्रगे सूर्ये यदि वृष्टिर्भवेत्तदा ॥ ८८ ॥

अनर्घताप्यनावृष्टिरीतिदोषस्त्वनर्थता ।
आर्द्राप्रवेशे वृष्टिः स्यात्सार्धमासमवर्षणम् ॥ ८९ ॥

दिवार्द्रा सस्यनाशाय रात्रौ सस्याभिवृद्धये ।
सायंकालेऽर्धरात्रे चेन्महार्घबहुवृष्टिकृत् ॥ ९० ॥

आदित्यादिद्विदेवान्तदशर्क्षेषु स्थिते रवौ ।
सस्यवृद्धिः सुभिक्षं स्याद्विना सिंहप्रवेशनम् ॥ ९१ ॥

मित्रभद्वितयस्थेऽर्के यदि वृष्टिर्भवेत्तदा ।
नृणां व्याधिभयं स्वल्पं सस्यानामीतितो भयम् ॥ ९२ ॥

पूर्वाषाढागते भानौ जीमूतैः परिवेष्टिते ।
तुषारानिलयुक्ते वा रूक्षानलयुतेऽपि वा ॥ ९३ ॥

क्रमादार्द्रादिके वृष्टिरवृष्टिस्तैरसंयुते ।
[1]विश्वपादार्क्षषट्केऽर्के स्थिते वृष्टिर्भवेद्यदि ॥ ९४ ॥

सुवृष्टिः क्षेममारोग्यं नृपाः स्वस्थाश्च सर्वदा ।
रेवतीसंस्थिते सूर्ये यदि वृष्टिर्भवेत्तदा ॥ ९५ ॥

पूर्वाषाढर्क्षभङ्गः स्यादार्द्राद्येषु न तर्षणम् ।
रेवत्यां यदि वृष्टिः स्याद्दशर्क्षेषु न वर्षणम् ॥ ९६ ॥

एतादृशैर्निमित्तैस्तु जानीयान्मेघवर्षणम् ।

---

[1] विश्वपादृक्ष—ग.

महामेघा नव

आवर्तश्चैव संवर्तः पुष्करद्रोणकालिकाः ॥ ९७ ॥

कालो नीलो वारुणश्च वाय्व[1]भ्रकरसंज्ञिताः ।
इत्येवं नवसङ्ख्याका महामेघाः प्रकीर्तिताः ॥ ९८ ॥

इत्युमाशिवयोः पूर्वं संवादात्मतया स्थितम् ।
मेघगर्भादिकं सर्वं वृष्टिकारणमीरितम् ॥ ९९ ॥

एतेषामपि मेघानां मेघलोको निवासभूः ।
भूमेर्द्वादशसाहस्रयोजनान्तरसंस्थितः ॥ १०० ॥

इति श्री शिवतत्त्वरत्नाकरे तृतीयकल्लोले मेघगर्भादिवर्णनं नाम
द्वितीयस्तरङ्गः

---

## तृतीयस्तरङ्गः

### गुह्यकलोकवर्णनम्

कथितो मेघलोकोऽथ लोको गुह्यक उच्यते ।
पिचण्डिलाः स्थूलवक्त्रा मेघगम्भीरनिस्वनाः ॥ १ ॥

गुह्यकाः शतशस्तत्र श्यामलाङ्गाश्च लोमशाः ।
न्यायोपार्जितवित्ताश्च गूहयन्ति च ये भुवि ॥ २ ॥

स्वर्णाङ्गगा धनाढ्याश्च शूद्रप्रायाः कुटुम्बिनः ।
तत्पुण्यलेशात्सर्वे ते गुह्यकत्वं प्रपेदिरे ॥ ३ ॥

गन्धर्वलोकवर्णनम्—(मौनेयदेवगन्धर्वाः)

वर्णितो गुह्यको लोको गान्धर्वस्त्वथ कथ्यते ।
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ॥ ४ ॥

---

[1] भ्रमिति सं—ग.

गोपतिर्धृतराष्ट्रश्च सूर्यवर्चास्तु सप्तमः ।
पत्रवानर्कवर्णश्च प्रयुगश्चेति विश्रुतः ॥ ५ ॥

भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ।
तथाशालिशिला राजन्! धृष्टद्युम्नश्चतुर्दशः ॥ ६ ॥

कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः ।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ७ ॥

प्रापेयदेवगन्धर्वाः

सिद्धः पूर्णश्च बर्हिश्च पूर्णाशश्च महायशाः ।
ब्रह्मचारी रतिगणः सुपर्णश्चेति सप्तमः ॥ ८ ॥

विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ।
इत्येते देवगन्धर्वाः प्रापेयाः परिकीर्तिताः ॥ ९ ॥

देवगायकाः

हाहाहूहूस्तुम्बराद्या गन्धर्वाः शतशस्तथा ।
देवानां गायका ह्येत चारणाः स्तुतिपाठकाः ॥ १० ॥

गन्धर्वत्वप्राप्तिहेतुकथनम्

भूलोके ये तु मनुजा धनलोभेन पार्थिवान् ।
स्तुवन्ति नादतत्त्वज्ञा गायन्ति च तदग्रतः ॥ ११ ॥

तत्राप्तधनदानेन गन्धर्वत्वं प्रपेदिरे ।
गीतविद्याप्रभावेन देवर्षिर्नारदो महान् ॥ १२ ॥

मान्यते वैष्णवे लोके श्रीशम्भोश्चापि वल्लभः ।
तुम्बुरुस्तत्प्रभावेन देवानामपि वल्लभः ॥ १३ ॥

नादरूपी शिवः साक्षान्नादतत्त्वविदौ हि तौ ।
स साक्षाद्गीतशास्त्रज्ञः प्राप्नोति परमं पदम् ॥ १४ ॥

देवानुचरतां प्राप्य क्रमेणैवेति सम्पदम् ।
गन्धर्वाणामयं लोकः सप्रपञ्चं निरूपितः ॥ १५ ॥

विद्याधरलोकवर्णनम्

विद्याधराणां लोकोऽथ प्रोच्यते राजपुङ्गव ! ।
चन्द्रापीडाह्वयो राजा तत्रास्ते लोकसत्तमे ॥ १६ ॥

विद्याधरैश्च विविधैरसङ्ख्यातैः समावृतः ।
उक्तो विद्याधरो लोकोऽप्सरो लोकोऽथ कथ्यते ॥ १७ ॥

अप्सरोलोकवर्णनम्

उर्वशी मेनका रम्भा चन्द्ररेखा तिलोत्तमा ।
वपुष्मती कान्तिमती लीलावत्युत्पलावती ॥ १८ ॥

अलम्बुसा गुणवती [1] स्यूतकेशी कलावती ।
कलानिधिर्गुणवती कर्पूरतिलकोर्वरा ॥ १९ ॥

अनङ्गतिलका चापि तथा मदनमोहिनी ।
चकोराक्षी चन्द्रकला तथा मुनिमनोहरा ॥ २० ॥

ग्रावद्रावा तपोद्वेष्ट्री सुनासा च सुवर्णिका ।
दारुसंजीविनी सुश्रीः क्रतुः शुल्का शुभानना ॥ २१ ॥

तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती ।
पञ्चाश्वमेधिका चैव राजसूयार्थिनी तथा ॥ २२ ॥

अष्टाग्नीषोमिका तद्वद्वाजपेयशतार्थिनी ।
इत्याद्यप्सरसां श्रेष्ठाः सहस्रं षष्टिसम्मितम् ॥ २३ ॥

एतस्मिन्नप्सरोलोके वसन्त्यन्या अपि स्त्रियः ।
गीतज्ञा नृत्यकुशलाः कामकेलिषु कोविदाः ॥ २४ ॥

नानादेशविशेषज्ञा नानाभाषाविशारदाः ।
दिव्यभोगैः सुसम्पन्नाः स्वेच्छाविधृतविग्रहाः ॥ २५ ॥

मासोपवासादिमहाव्रतानि
विधाय युद्धेषु विजित्य शत्रून् ।
तं प्राप्नुयादप्सरसां च लोकं
कामादिकेल्या श्रितसर्वकालम् ॥ २६ ॥

[1] स्यूतकेली.

सूर्यमण्डलवर्णनम्

भूमेर्योजनलक्षे तु मैत्रेय रविमण्डलम् ।
अथ प्रमाणसंस्थाने सूर्यादीनां शृणुष्व मे ॥ २७ ॥

योजनानां सहस्राणि भास्करस्य रथो महान् ।
ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ॥ २८ ॥

[1] सार्धकोटिद्वयं सप्तनियुतान्यधिकानि वै ।
योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ २९ ॥

दशयोजनसाहस्रो विस्तारायाम उच्यते ।
त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके ॥ ३० ॥

संवत्सरमये कृत्स्नं काले चक्रं प्रतिष्ठितम् ।
चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः ॥ ३१ ॥

पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामुने ! ।
द्विगुणश्च रथोपस्था [2] दक्षदण्डप्रमाणतः ॥ ३२ ॥

अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्धयोः ।
ह्रस्वोऽक्षस्तद्यु[3]गार्धं च ध्रुवाधारं रथस्य वै ॥ ३३ ॥

द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ।
हयाश्च सप्त च्छन्दांसि तेषां नामानि मे शृणु ॥ ३४ ॥

गायत्री च बृहत्युष्णिग् जगती त्रिष्टुबेव च ।
अनुष्टुप् पं रित्युक्ताश्छन्दांसि हरयो हरेः ॥ ३५ ॥

कल्पादौ संप्रयुक्ताश्च वहन्त्याभूतसंप्लवम् ।

मानससरसः परितो वासवादिपुर्यः

मानसोत्तरशैले तु पूर्वतो वासवी पुरी ॥ ३६ ॥

---

[1] सार्धकोटिस्तथा सप्त–पु. पा. [2] दीषादण्डः–पु. पा. [3] गार्धेन ध्रुवाधारो–पु. पा.

दक्षिणे तु यमस्यान्या प्रतीच्यां वरुणस्य च ।
उत्तरेण तु सोमस्य तासां नामानि मच्छृणु ॥ ३७ ॥

वस्वौकसारा शक्रस्य यास्या संयमिनी तथा ।
पुरी[1] शुद्धा जलेशस्य सोमस्य च विभावरी ॥ ३८ ॥

काष्ठां गतो दक्षिणतः [2] क्षिप्रं स परिसर्पति ।
मैत्रेय भगवान् भानुर्ज्योतिषां चक्रसंयुतः ॥ ३९ ॥

अहोरात्रव्यवस्थानकारणं भगवान् रविः ।
देवयानः परः पन्था योगिनां क्लेशसंक्षये ॥ ४० ॥

दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः ।
सर्वद्वीपेषु राजेन्द्र निशार्धः स तु सम्मुखः ॥ ४१ ॥

उदयास्तमयौ चैव सर्वकालं तु सम्मुखौ ।
दिशास्वशेषासु तथा मैत्रेय विदिशासु च ॥ ४२ ॥

यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ।
तिरोभावं तु यत्रैति तत्रैवास्तमयो रवेः ॥ ४३ ॥

नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ।
उदयास्तमयाख्यं हि दर्शनादर्शने रवेः ॥ ४४ ॥

शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ।
विकर्णौ द्वौ विकीर्णस्थांस्त्रीन्कोणान् द्वे पुरे तथा ॥ ४५ ॥

उदितो वर्धमानाभिरामध्याह्नात्तपन् रविः ।
ततः परं ह्रसन्तीभिर्गोभिरस्तं हि गच्छति ॥ ४६ ॥

उदयास्तमयाभ्यां च स्मृते पूर्वापरे दिशौ ।
यावत्पुरस्तात्तपति तावत्पृष्ठे च पार्श्वयोः ॥ ४७ ॥

ऋतेऽमरगिरेर्मेरोरुपरि ब्रह्मणः सभाम् ।
ये ये मरीचयोऽर्कस्य प्रयान्ति ब्रह्मणः सभाम् ॥ ४८ ॥

---

[1] शुभा–पु. पा. [2] क्षिप्तेषुरिव सर्पति–पु. पा.

ते ते निरस्तास्तद्भासा प्रतीपमुपयान्ति वै ।
तस्माद्दिश्युत्तरस्यां वै दिवारात्रं सदैव हि ॥ ४९ ॥

सर्वेषां द्वीपवर्षाणां मेरोरुत्तरतो यतः ।
प्रभा विवस्वतो रात्रावस्तं गच्छति भास्करे ॥ ५० ॥

विशत्यग्निमतो रात्रौ वह्निर्दूरात्प्रकाशते ।
वह्नेः प्रभा तथा भानुं दिनेष्वाविशति द्विज ॥ ५१ ॥

अतीव वह्निसंयोगादतः सूर्यः प्रकाशते ।
तेजसी भास्कराग्नेये प्रकाशात्मस्वरूपिणी ॥ ५२ ॥

परस्परानुप्रवेशादाप्यायेते दिवानिशम् ।
दक्षिणोत्तर[1]भूम्यर्थे समुत्तिष्ठति भास्करे ॥ ५३ ॥

अहोरात्रं विशत्यम्भ[2]स्ततो विशति शर्वरीम् ।

मौहूर्तिकी गतिः

आताम्रा हि भवन्त्यापो दिवा नक्तप्रवेशनात् ॥ ५४ ॥

दिनं विशति चैवाम्भो भास्करेऽस्तमुपागते ।
तस्माच्छुक्ला भवन्त्यापो नक्तमह्नः प्रवेशनात् । ५५ ॥

एवं पुष्करमध्ये तु यदायाति दिवाकरः ।
त्रिंशद्भागस्तु मेदिन्यां तदा मौहूर्तिकी गतिः ॥ ५६ ॥

कुलालचक्रसाम्येन भ्रमत्येव दिवाकरः ।
करोत्यहस्तथा रात्रिं विमुञ्चन्मेदिनीं द्विज ! ॥ ५७ ॥

अयनस्योत्तरस्यादौ मकरं याति भास्करः ।

विषुवद्गतिः

ततः कुम्भं च मीनं च राशे राश्यन्तरं द्विज ! ॥ ५८ ॥

---

[1] भूम्यर्धे. [2] स्तमःप्राकाश्यशीलवत्–पु. पा.

त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम् ।
प्रयाति सविता कुर्वन्नहोरात्रं ततः [1]समम् ॥ ५९ ॥

ततो रविः क्षयं याति वर्धते सुदिनं दिनम् ।

दक्षिणायनम्

ततश्च मिथुनस्यान्ते परां काष्ठामुपागतः ॥ ६० ॥

राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम् ।
कुलालचक्रपर्यन्तो यथा शीघ्रं प्रवर्तते ॥ ६१ ॥

दक्षिणप्रक्रमे सूर्यस्तथा शीघ्रं प्रवर्तते ।
अतिवेगितया कालं वायुवेगबलाच्चरन् ॥ ६२ ॥

तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ।
सूर्यो द्वादशभिः शैघ्र्यान्मुहूर्तैर्दक्षिणायने ॥ ६३ ॥

त्रयोदशार्धमृक्षाणामह्ना तु चरते द्विज ! ।
मुहूर्तैस्तावदृक्षाणां नक्तमष्टादशैश्चरन् ॥ ६४ ॥

अहो मन्दं चलं तद्वदर्को भ्रमति वै यतः ।
कुलालचक्रमध्यस्थो यथा मन्दं प्रसर्पति ॥ ६५ ॥

तथोदगयने सूर्यः सर्पते मन्दविक्रमः ।
तस्माद्दीर्घेण कालेन भूमिमल्पां तु गच्छति ॥ ६६ ॥

उत्तरायणम्

[2]अष्टादशमुहूर्तैस्तु पश्चिमं चोत्तरायणे ।
अहर्भवति [3]तत्रापि चरते मन्दविक्रमः ॥ ६७ ॥

त्रयोदशार्धमह्ना तु ऋक्षाणां चरते रविः ।
मुहूर्तैस्तावदृक्षाणि रात्रौ द्वादशभिश्चरन् ॥ ६८ ॥

---

[1]परम्–मु. पा. [2]अष्टादशमुहूर्तं यदुत्तरायणपश्चिमम्–पु. पा. [3]तच्चापि–पु. पा.

अहो मन्दतरं नाभ्यां चक्रं भ्रमति वै यथा ।
मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ ६९ ॥

कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ।
ध्रुवस्तथा हि मैत्रेय तत्रैव परिवर्तते ॥ ७० ॥

उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु ।
दिवानक्तं तु सूर्यस्य मन्दा शीघ्रा च वै गतिः ॥ ७१ ॥

मन्दाह्नि यस्मिन्नयने शीघ्रं नक्तं तदा गतिः ।
शीघ्रा गतिर्यदा रात्रौ तदा मन्दा दिवा गतिः ॥ ७२ ॥

एकप्रमाणमेवैष मार्गं याति दिवाकरः ।
अहोरात्रेण यो भुङ्क्ते समस्ता राशयो द्विज ! ॥ ७३ ॥

षडेव राशीन् [1]सो भुङ्क्ते रात्रावन्यांश्च षट् दिवा ।
राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिने ॥ ७४ ॥

तथा निशायां राशीनां प्रमाणाल्लघुदीर्घता ।
दिनानां ह्रस्वदीर्घत्वं तत्तद्भागेन जायते ॥ ७५ ॥

उत्तरे प्रक्रमे शीघ्रा निशि मन्दा दिवा गतिः ।
दक्षिणे चायने सैव विपरीता विवस्वतः ॥ ७६ ॥

उषा रात्रिः समाख्याता व्युष्टिश्चाप्युच्यते दिनम् ।
प्रोच्यते च तयोः सन्ध्या उषाव्युष्ट्योर्यदन्तरम् ॥ ७७ ॥

सन्ध्ययोरर्घ्यप्रदानकारणम्

सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे ।
मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति खादितुम् ॥ ७८ ॥

प्रजाप्रतिकृतः शापस्तेषां मैत्रेय ! रक्षसाम् ।
अक्षयत्वं शरीराणां मरणं च दिने दिने ॥ ७९ ॥

---

[1] यो-मु. पा.

ततः सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् ।
ततो द्विजोत्तमास्तोयं यत् क्षिपन्ति महामुने ! ॥ ८० ॥

प्रणवब्रह्मसंयोगाद्गायत्र्या चाभिमन्त्र्य च ।
दह्यन्ते तेन ते पापा वज्रीभूतेन वारिणा ॥ ८१ ॥

अग्निहोत्रे हूयते या समन्त्रा प्रथमाहुतिः ।
सूर्यो ज्योतिः सहस्रांशुस्तया दीप्यति भास्करः ॥ ८२ ॥

ओङ्कारो भगवान्विष्णुस्त्रिधामा वचसां पतिः ।
तदुच्चारणतस्ते तु विनाशं यान्ति राक्षसाः ॥ ८३ ॥

वैष्णवांशः परः सूर्यो योऽन्तर्ज्योति[1]रसक्षयः ।
अभिधायक ओङ्कारस्तस्य तत्प्रेरकः परः ॥ ८४ ॥

तेन तत्प्रेरितं ज्योतिरोङ्कारेणाथ दीप्तिमत् ।
आहन्त्यशेषरक्षांसि मन्देहाख्यान्यघानि वै ॥ ८५ ॥

तस्मान्नोल्लङ्घनं कार्यं सन्ध्योपासनकर्मणाम् ।
तं हन्ति सूर्यः सन्ध्यायां नोपास्तिं कुरुते तु यः ॥ ८६ ॥

ततः प्रयाति भगवान् ब्राह्मणैरभिरक्षितः ।
वालखिल्यादिभिश्चैव [2]प्रभुर्वैखानसैरपि ॥ ८७ ॥

इति श्रीशिवतत्त्वरत्नाकरे तृतीयकल्लोले गुह्यकादिलोकसूर्यरथगतिवर्णनं नाम तृतीयस्तरङ्गः

---

[1] रसंप्लवम्–पु. पा. [2] जगतः पालनोद्यतः–पु. पा.

## चतुर्थस्तरङ्गः

### सूर्यगत्या काष्ठादिकालभेदवर्णनम्

सूर्यस्य गत्या सम्भूतं कालभेदमहं ब्रुवे ।

काष्ठा निमेषा दशपञ्च चैव
त्रिंशच्च काष्ठाः कथिताः कलेति ।
त्रिंशत्कलाश्चैव भवेन्मुहूर्तः
तैस्त्रिंशता रात्र्यहनी समेते ॥ १ ॥

[1](ह्रासवृद्धी त्वहर्भागैर्दिवसानां यथाक्रमम् ।)
सन्ध्या मुहूर्तमात्रा वै ह्रासे वृद्धौ समा स्मृता ।
रेखाप्रभृत्यथादित्ये त्रिमुहूर्ते गते तु वै ॥ २ ॥

प्रातस्ततः स्मृतः कालो भागश्चाह्नः स पञ्चमः ।
तस्मात्प्रातस्तनात्कालात् त्रिमुहूर्तस्तु सङ्गवः ॥ ३ ॥

मध्याह्नस्त्रिमुहूर्तस्तु तस्मात्कालात्तु सङ्गवात् ।
तस्मान्माध्याह्निकात्कालादपराह्ण इति स्मृतः ।
त्रय एव मुहूर्तास्तु कालभागाः स्मृता बुधैः ॥ ४ ॥

अपराह्णे व्यतीते तु कालः सायाह्न उच्यते ।
[1](दश पञ्च मुहूर्तं वै मुहूर्तास्त्रय एव च ।)
दश पञ्च मुहूर्ते वै अहर्वैषुवतं स्मृतम् ॥ ५ ॥

वर्धते ह्रसते चैवाप्ययने दक्षिणोत्तरे ।
अहस्तु ग्रसते रात्रिं रात्रिश्च ग्रसते दिनम् ॥ ६ ॥

शरद्वसन्तयोर्मध्ये विषुवं तु विभाव्यते ।
तुलामेषगते भानौ समरात्रं दिनं तु तत् ॥ ७ ॥

कर्किण्यवस्थिते भानौ दक्षिणायनमुच्यते ।
उत्तरायणमित्युक्तं मकरस्थे दिवाकरे ॥ ८ ॥

---

[1] पु. पा.

त्रिंशन्मुहूर्तं कथितमहोरात्रं तु यन्मया।
तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते ॥ ९ ॥

मासः पक्षद्वयेनोक्तो द्वौ मासावृतुरर्कजौ।
ऋतुत्रयं चाप्ययनं द्वेऽयने वर्षसंज्ञिते ॥ १० ॥

संवत्सरादयः पञ्च चतुर्मासविकल्पिताः।
निश्चयः सर्वकालस्य युगमित्यभिधीयते ॥ ११ ॥

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः।
इद्वत्सरस्तृतीयः स्याच्चतुर्थश्चानुवत्सरः ॥ १२ ॥

वत्सरः पञ्चमश्चात्र कालोऽयं युगसंज्ञितः।
यः श्वेतस्योत्तरे शैलः शृङ्गवानिति विश्रुतः॥ १३ ॥

त्रीणि तस्य तु शृङ्गाणि यैरसौ शृङ्गवान्स्मृतः।
दक्षिणं चोत्तरं चैव मध्ये वैषुवतं तथा ॥ १४ ॥

शरद्वसन्तयोर्मध्ये तद्भानुः प्रतिपद्यते।
मेषादौ च तुलादौ च मैत्रेय! विषुवं स्मृतम् ॥ १५ ॥

तदा तुल्यमहोरात्रं करोति तिमिरापहः।
दश पञ्च मुहूर्तं वै तदेतदुभयं स्मृतम् ॥ १६ ॥

प्रथमे कृत्तिकाभागे यथा भास्वांस्तथा शशी।
विशाखानां चतुर्थेऽशे मुने! तिष्ठत्यसंशयम् ॥ १७ ॥

विशाखानां यदा सूर्यश्चरत्यंशं तृतीयकम्।
तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितम् ॥ १८ ॥

तदैव विषुवाख्यो वै कालः पुण्योऽभिधीयते।
तदा दानानि देयानि द्विजेभ्यः प्रयतात्मभिः ॥ १९ ॥

ब्राह्मणेभ्यः पितृभ्यश्च सुखमेतत्तु दानजम्।
दत्तदानस्तु विषुवे कृतकृत्योऽभिजायते ॥ २० ॥

तपस्तपस्यौ मधुमाधवौ द्वौ
शुक्रः शुचिश्चायनमुत्तरं स्यात् ।
नभोनभस्यौ च तथेष ऊर्जः
सहस्सहस्याविति दक्षिणं स्यात् ॥ २१ ॥

पितृयानपन्थाः

उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ॥ २२ ॥

तत्रासते महात्मानः ऋषयो येऽग्निहोत्रिणः ।
भूतारम्भकृतं ब्रह्म शंसन्तो ऋत्विगुद्यताः ॥ २३ ॥

[1]प्रारभन्ते लोककामास्तेषां लोकस्स दक्षिणः ।
सन्तत्या तपसा चैव मर्यादाभिः श्रुतेन च ॥ २४ ॥

जायमानास्तु पूर्वे च पश्चिमानां गृहेषु वै ।
पश्चिमाश्चैव पूर्वेषां जायन्ते निधनेष्विति ॥ २५ ॥

एवम् र्तमानास्ते तिष्ठन्त्याभूतसंप्लवम् ।
सवि र्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम् ॥ २६ ॥

देवयानपन्थाः

नागवीथ्युत्तरं यच्च सप्तर्षिभ्यश्च दक्षिणम् ।
उत्तरः [2]सवितुः पन्था देवयानस्तु स स्मृतः ॥ २७ ॥

तत्र ते [3]वासिनः सिद्धा विमला ब्रह्मचारिणः ।
सन्ततिं ते जुगुप्सन्ति तस्मान्मृत्युर्जितश्च तैः ॥ २८ ॥

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
उदक्पन्थानमर्यम्णः स्थित्वा चाभूतसंप्लवम् ॥ २९ ॥

ते सम्प्रयोगाल्लोभ(क ?)स्य सङ्गमस्य च वर्जनात् ।
इच्छाद्वेषप्रवृत्त्या च भूतारम्भविवर्जनात् ॥ ३० ॥

---

[1] प्रारभन्ते तु ये लोकास्तेषां पन्थाः स दक्षिणः ।–पु. पा.   [2] स विभुः–ग.
[3] वशिनः–मु. पा.

पुनश्च कामसंयोगाच्छब्दादौ दोषदर्शनात् ।
इत्येभिः कारणैः शुद्धास्तेऽमृतत्वं च भेजिरे ॥ ३१ ॥

यो रथः पूर्वमुदितो देवस्याशीतदीधितेः ।
स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा ॥ ३२ ॥

गन्धर्वैरप्सरोभिश्च ग्रामणीराक्षसैः सह ।
रक्तवर्णो महातेजा [1]द्विबाहुः पद्मभृद्रविः ॥ ३३ ॥

सप्तभिस्तुरगैर्युक्ते सप्तरज्जुसमन्विते ।
एकचक्ररथे तिष्ठन् पादाक्रान्तसरोरुहः ॥ ३४ ॥

माणिक्यकुण्डलधरः पद्मरागकिरीटधृत् ।
रक्ताम्बरधरो रम्यः सुव्यक्ताङ्गो मनोहरः ॥ ३५ ॥

### रवेर्द्वादशकलाः

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वबोधिनी धरणी क्षमा ॥ ३६ ॥

प्रभेति द्युमणेरेताः कला द्वादश कीर्तिताः ।

### रवेः किरणभेदाः

शतत्रयं त्रयस्त्रिंशत्सूर्यस्य किरणा हिमाः ॥ ३७ ॥

तावन्त्यो वर्षकिरणाः स्युरुष्णकिरणा अपि ।
बीजभूतस्तु किरण एक एव प्रकीर्तितः ॥ ३८ ॥

### चैत्रमासगतसप्तविधरविगणनामानि

धाता क्रतुस्थला चैव पुलस्त्यो वासुकिस्तथा ।
रथकृद्ग्राम[2]णीर्हेतिस्तुम्बुरुश्चैव सप्तमः ॥ ३९ ॥

एते वसन्ति वै चैत्रे मधुमासे सदैव हि ।

---

[1] द्विबाहुरुदभूद्रविः—ग.   [2] णिश्चेति तु—मु. पा.

वैशाखमासगतसप्तविधरविगणनामानि

आर्यमा पुलहश्चैव रसौजाः पुञ्जिकस्थला ॥ ४० ॥
प्रहेतिः कच्छनीरश्च नारदश्च रथे रवेः ।

ज्येष्ठमास............नामानि

माधवे तु वसन्त्येते, शुक्रसंज्ञे निबोध मे ॥ ४१ ॥

मित्रोऽत्रिस्तक्षको दक्षः पौरुषेयोऽथ मेनका ।
हाहा रथस्वनश्चेति राजन्नेते वसन्ति वै ॥ ४२ ॥

आषाढ............नामानि

वसिष्ठो वरुणो रम्भा सहजन्यो हुहूरथः ।
रथचित्तस्तथा शुक्रो वसन्त्याषाढसंज्ञिते ॥ ४३ ॥

श्रावण............नामानि

इन्द्रो विश्वावसुः स्रोता एलापुत्रस्तथाऽङ्गिराः ।
प्रम्लोचा च नभस्येते सर्पश्चार्के वसन्ति हि ॥ ४४ ॥

भाद्रपद ............नामानि

विवस्वानुग्रसेनश्च भृगुरापूरणस्तथा ।
अनुम्लोचा शङ्खपालो व्याघ्रो भाद्रपदे तथा ॥ ४५ ॥

आश्वयुज............नामानि

पूषा च सुरुचिर्वातो गौतमोऽथ धनञ्जयः ।
सुषेणश्च घृताची च वसन्त्याश्वयुजे रथे ॥ ४६ ॥

कार्तिक............नामानि

विभावसुभरद्वाजौ पर्जन्यैरावतौ तथा ।
विश्वाची सेनजिच्चापि कार्तिके चाधिकारिणः ? ॥ ४७ ॥

मार्गशीर्ष............नामानि

अंशकाश्यपताक्ष्यास्तु महापद्मस्तथोर्वशी ।
चित्रसेनस्तथा विद्युन्मार्गशीर्षाधिकारिणः ॥ ४८ ॥

पुष्य............नामानि

ऋतुर्भगस्तथोर्णायुः स्फूर्जः कार्कोटकस्था ।
अरिष्टनेमिश्चैवान्या पूर्वचित्तिर्वराप्सराः ॥ ४९ ॥

पौषे मासे वसन्त्येते सप्तार्कस्य रथान्तरे ।
लोकप्रकाशनार्थाय रथचर्याधिकारिणः ॥ ५० ॥

माघ.... .......नामानि

त्वष्टा च जमदग्निश्च कम्बलोऽथ तिलोत्तमा ।
[1] ब्रह्मव्रतोऽथ ऋतुजिद्धृतराष्ट्रश्च सप्तमः ॥ ५१ ॥

माघमासे वसन्त्येते सप्त भास्करमण्डले ।

फाल्गुन............नामानि

श्रूयतां चापरे सूर्ये फाल्गुने निवसन्ति ये ॥ ५२ ॥

विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् ।
विश्वामित्रस्तथा ऋक्षो यज्ञोपेतो महामुने ॥ ५३ ॥

मासेष्वेतेषु मैत्रेय ! वसन्त्येते तु सप्तकाः ।
सवितुर्मण्डले ब्रह्मन् विष्णुशक्त्युपबृंहिताः ॥ ५४ ॥

स्तुवन्ति मुनयः सूर्यं गन्धर्वैर्गीयते पुनः ।
अन्ये तु वालखिल्याश्च मुनयः षष्टिसम्मिताः ॥ ५५ ॥

सहस्रशस्तस्य रथे वसन्ते सूक्तवाचकाः ।

---

[1] ब्रह्मोपेतोऽथ, ब्रह्मापेतोऽथ–पु. पा.

खव्योमखत्रयखसागरषट्कनाग-
व्योमाष्टशून्ययमरूपनगाष्टचन्द्राः ।
१८७१२०८०८६४०००००००
ब्रह्माण्डसम्पुटपरिभ्रमणे समन्तात्
अभ्यन्तरे दिनकरस्य करप्रचारः ॥ ५६ ॥

चन्द्रमण्डलवर्णनम्

लक्षे दिवाकरस्यापि मण्डलाच्छशिनः स्थितिः ।
सोमो द्विजेशो द्विभुजो [1]गदावरदपाणिमान् ॥ ५७ ॥

दशाश्वरथगः श्वेतश्चात्रिनेत्रसमुद्भवः ।
अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ॥ ५८ ॥

चन्द्रस्य रथतुरगादयः

रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ।
सकृद्युक्ता रथे तस्मिन् वहन्ति स्मायुगाक्षयात् ॥ ५९ ॥

अश्वास्तक्षकवर्णास्ते वहन्ते शङ्खवर्चसः ।
अजामित्ररथश्चैव वृषो वाजी नरो हयः ॥ ६० ॥

अश्वाख्यस्तप्तधातुश्च हंसो व्योममृगस्तथा ।
इत्येतैर्नामभिः सर्वैर्दश चन्द्रमसो हयाः ? ॥ ६१ ॥

एते चन्द्रमसं देवं वहन्ति स्मायुगक्षयात् ।
वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ ६२ ॥

सुबन्धुनामकस्तस्य सारथिः परिकीर्तितः ।

षोडशेन्दुकलाः

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ॥ ६३ ॥

शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृताख्या च षोडशेन्दुकलाः स्मृताः ॥ ६४ ॥

---

[1] गदापरिघ-ग.

कलानां प्रथमादिक्रमेण अग्न्यादिभिः पानम्

प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ।
विश्वेदेवास्तृतीयां च चतुर्थीं सलिलाधिपः ॥ ६५ ॥

पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्यामष्टमीमज एकपात् ॥ ६६ ॥

नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् ।
दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥ ६७ ॥

द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः ।
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥ ६८ ॥

चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ।
क्षीणं पीतं सुरैः सोममाप्याययति दीप्तिमान् ॥ ६९ ॥

मैत्रेयैककलं सन्तं रश्मिनैकेन भास्करः ।
क्रमेण येन पीतोऽसौ देवस्तेन निशाकरः ॥ ७० ॥

आप्याययत्यनुदिनं भास्करो वारितस्करः ।
सम्भृतं चार्धमासेन तत्सोमस्थं सुधारसम् ॥ ७१ ॥

पिबन्ति देवा मैत्रेय! सुधाहारा यतोऽमराः ।
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ ७२ ॥

त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदारकम् ।
कलाद्वयावशिष्टस्तु प्रविष्टः सूर्यमण्डलम् ॥ ७३ ॥

अमाख्यरश्मौ वसति अमावास्या ततः स्मृता ।
अप्सु तस्मिन्नहोरात्रं पूर्वं वसति चन्द्रमाः ॥ ७४ ॥

ततो वीरुत्सु वसति प्रयात्यर्कं ततः क्रमात् ।
छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे ॥ ७५ ॥

पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति ।
सोमं पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके ॥ ७६ ॥

अपराह्णे पितृगणा जघन्यं पर्युपासते ।
पिबन्ति द्विलवं कालं शिष्टा तस्य कला तु या ॥ ७७ ॥

सुधामृतमयीं पुण्यां तामिन्दोः पितरो मुने ।
निस्सृतं तदमावास्यां गभस्तिभ्यः सुधामृतम् ।
मासं तृप्तिमवाप्याग्र्यां पितरः सन्ति निर्वृताः ॥ ७८ ॥

सोम्या बर्हिषदश्चैवमग्निष्वात्ताश्च ते त्रिधा ।
एवं देवान् सिते पक्षे कृष्णपक्षे तथा पितॄन् ॥ ७९ ॥

वीरुधश्चामृतमयैः शीतैरप्परमाणुभिः ।
वीरुदोषधिनिष्पत्त्या मनुष्यपशुकीटकान् ॥ ८० ॥

आप्याययति शीतांशुः प्रकाशाह्लादनेन च ।
सञ्चारो भानुवत्तस्य समाख्यातः पुरातनैः ॥ ८१ ॥

नक्षत्रमण्डलम्

पूर्णे शतसहस्रे तु योजनानां निशाकरात् ।
नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ॥ ८२ ॥

बुधमण्डलम्

द्वे लक्षे चोत्तरे राजन् बुधो नक्षत्रमण्डलात् ।
बुधः सोमसुतश्चात्रिगोत्रः पीताम्बरावृतः ॥ ८३ ॥

चतुर्मुखः खड्गचर्मगदावरदपाणिमान् ।
वाय्वग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च ॥ ८४ ॥

पिशङ्गतुरगैर्युक्तः सोऽष्टाभिर्वायुवेगिभिः ।

शुक्रमण्डलम्

तावत्प्रमाणमार्गे तु बुधस्याप्युशनाः स्थितः ॥ ८५ ॥

शुक्रश्चतुर्भुजः श्वेतवर्णश्वेतहयाननः ।
भृगुजो दण्डकरकाक्षमालाभयहस्तवान् ॥ ८६ ॥

सावरूथः सानुकर्षो युक्तो भूसम्भवैर्हयैः ।
सोपासङ्गपताकस्तु शुक्रस्यापि रथो महान् ॥ ८७ ॥

अङ्गारकमण्डलम्

ऊर्ध्वं द्विलक्षाच्छुक्रस्य भूमिपुत्रः सुदारुणः ।
भूसुतो रक्तवर्णश्च मेषवाहश्चतुर्भुजः ॥ ८८ ॥

शक्तिशूलगदाखड्गैर्भरद्वाजकुलोद्भवः ।
अष्टाश्वः काञ्चनः श्रीमान् भौमस्यापि रथो महान् ॥ ८९ ॥

पद्मरागारुणैरश्वैः संयुक्तो वह्निसम्भवैः ।
तावत्प्रमाणादुपरि भूपुत्रादङ्गिरावरः ॥ ९० ॥

बृहस्पतिमण्डलम्

गुरुः सुवर्णसदृशगात्रस्तुरगवाहनः ।
दण्डाक्षसूत्रकरकवरशोभिचतुर्भुजः ॥ ९१ ॥

अष्टाभिः पाण्डुभिर्युक्ते वाजिभिः काञ्चने रथे ।
तिष्ठंस्तिष्ठति वर्षं च राशौ राशौ बृहस्पतिः ॥ ९२ ॥

शनैश्चरमण्डलम्

गुरोरूर्ध्वं द्विलक्षात्तु योजनानां रवेः सुतः ।
शनिः सूर्यसुतो गृध्रवाहो नीलाङ्गकाश्यपिः ॥ ९३ ॥

चतुर्भुजश्चापबाणाभयहस्तोल्लसत्करः ।
आकाशसम्भवैरश्वैः शबलैः स्यन्दनं युतम् ॥ ९४ ॥

समारुह्य शनिर्याति मन्दगामी शनैश्चरः ।

राहुमण्डलम्

भूमेर्नवतिसाहस्रादूर्ध्वं तद्राहुमण्डलम् ॥ ९५ ॥

स्वर्भानोस्तुरगा ह्यष्टौ भृङ्गाभा [1] धूसरो रथः ।
सकृद्युक्तास्तु मैत्रेय ! वहन्त्यविरतं रथम् ॥ ९६ ॥

[1] धूसरं रथम्.

केतुरथाश्वाः

तथा केतुरथस्याश्वा अष्टौ वै वातरंहसः ।
पलालधूम्रवर्णाभा लाक्षारसनिभारुणाः ॥ ९७ ॥

अप्रदक्षिणगा राहोः केतोश्चापि तथा गतिः ।
सिंहिकातनयो राहुरपिबच्चामृतं पुरा ॥ ९८ ॥

शिरश्छिन्नोऽपि न प्राणैस्त्यक्तोऽसौ ग्रहतां गतः ।

ग्रहणम्

भषट्कान्तर्हितो राहुः सूर्याचन्द्रमसावुभौ ॥ ९९ ॥

छादयत्युरगाकारो वरदानात्स्वयम्भुवः ।
अन्धकारमयो राहुर्मेघच्छन्न इवोत्थितः ॥ १०० ॥

आच्छादयति सोमार्कौ पर्वकाले ह्युपस्थिते ।
तमोमयेऽस्य तमसो रविरश्मिपलायिनः ॥ १०१ ॥

भूच्छाया चन्द्रबिम्बश्च द्वे स्थाने परिकल्पिते ।
तत्र स्थितः स्वयं राहुर्वरदानात्स्वयम्भुवः ॥ १०२ ॥

विप्रदत्तहुतांशेन स्वैरमाप्यायितो भवेत् ।
दिग्दाहोल्कामहीकम्पतमोधूमरजांसि च ॥ १०३ ॥

कथयन्त्यागमं राहोः पुरः पर्वण्युपस्थिते ।
ग्रहपञ्चकसंयोगं दृष्ट्वा तु ग्रहणं वदेत् ॥ १०४ ॥

यदि न स्याद्बुधस्तत्र न तं दृष्ट्वा ग्रहं वदेत् ।
अष्टम्यां परिवेषः स्यात्तैले जलगते यदा ।
प्रसारिते विजानीयात्खण्डश्चेत्तत्र मोक्षणम् ॥ १०५ ॥

गणितेन निमित्तैश्च विज्ञेयं ग्रहणं बुधैः ।

ग्रहाणां वासः

सूर्यशुक्रबुधा मासं सार्धमासं क्षितेः सुतः ॥ १०६ ॥

गुरुर्वर्षं शनिर्वर्षौ सार्धौ द्वौ राहुकेतुकौ ।
सार्धैकवर्षं चन्द्रस्तु सपादद्विदिनं वसेत् ॥ १०७ ॥

सूर्यादिमण्डलप्रमाणम्

योजनानां सहस्रं तु दशान्वितमहःपतेः।
मण्डलं त्रिगुणैस्तैस्तु योजनैरतिविस्तृतम्॥ १०८॥

तावत्प्रमाणं पादेन हीनं चन्द्रस्य मण्डलम्।
तत्षोडशांशमानेन मितं भार्गवमण्डलम्॥ १०९॥

तत्पादोनं गुरोस्तस्मात्पादहीनं बुधस्य च।
तत्पादहीनं भौमस्य तथा सूर्यसुतस्य च॥ ११०॥

कृत्तिकादिनक्षत्रमण्डलप्रमाणम्

शतानि पञ्च चत्वारि त्रीणि द्वे चैकमेव च।
ऋक्षाणां कृत्तिकादीनां मण्डलानां क्रमान्मितिः॥ १११॥

महर्षिमण्डलम्

ततश्चोपरि लक्षात्तु रविपुत्रान्महर्षयः।
तिष्ठन्ति सर्वराशौ ते शतवर्षं वसन्ति च॥ ११२॥

मरीच्यादयो ब्रह्मणो मानसाः पुत्राः

मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः।
वसिष्ठश्च महाभागा ब्रह्मणो मानसाः सुताः॥ ११३॥

सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः।

मरीच्यादीनां पत्न्यः

सम्भूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः॥ ११४॥

स्मृतिरूर्जा क्रमादेताः पत्न्यो लोकस्य मातरः।
अरुन्धती महापुण्या पातिव्रत्यपरायणा॥ ११५॥

यस्याः स्मरणमूर्जाया गङ्गास्नानफलप्रदम्।

ध्रुवमण्डलम्

ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः ॥ ११६ ॥

मेथीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ।
अनेकरचनाव्यग्रहस्ताग्रन्यस्तलोचनः ॥ ११७ ॥

त्रिलोकीमण्टपस्तम्भसन्निभो भाति मध्यतः ।
अखिलान् ज्योतिषां राशीन् तुलया तोलयन्निव ॥ ११८ ॥

सूत्रधार इव व्योमव्यायामपरिमापकः ।
रात्रौ तद्दर्शनं कृत्वा दिनपापैः प्रमुच्यते ॥ ११९ ॥

तस्य स्मरणमात्रेण वेपन्ते पापराशयः ।
शिंशुमार इति प्रोक्तो यादोरूपः प्रजापतिः ।
विष्णुशक्तिधृतोऽचिन्त्यो भुवर्लोकादधः स्थितः ॥ १२० ॥

तदाधारस्थिताः सप्त वायुस्कन्धा महाबलाः ।

इति श्रीशिवतत्त्वरत्नाकरे तृतीयकल्लोले सूर्यादिगतिभेदनिरूपणं
नाम चतुर्थस्तरङ्गः

———

## पञ्चमस्तरङ्गः

ज्योतिश्चक्रस्वरूपं तु प्रपञ्चेनोपवर्णितम् ।
तदूर्ध्वलोकान् ब्रूमोऽद्य भुवर्लोकादिकान् शृणु ॥ १ ॥

भुवर्लोकः

तिथिलक्षे भुवर्लोको ध्रुवप्रान्तो महीतलात् ।
आदित्या वसवः साध्याश्चारणाश्च सकिन्नराः ॥ २ ॥

गन्धर्वा गारुडाश्चापि सिद्धा विद्याधरास्तथा ।
पक्षिणः पन्नगाश्चापि वसुरुद्रेन्द्रमारुताः ॥ ३ ॥

पिशाचयक्षरक्षांसि मुनयः पुण्यकारिणः ।
भुवर्लोके वसन्त्येते सर्वसाधारणे नृप ! ॥ ४ ॥

सुवर्लोकः

ऊर्ध्वं पञ्चोत्तराशीतिलक्षात्स्वर्लोक ईरितः ।
सुवर्लोके वसन्त्यष्टाविन्द्रादीनां जगन्ति हि ॥ ५ ॥

इन्द्रलोकवर्णनम्

इन्द्रलोको बहुविधरत्नप्रासादगोपुरः ।
पारिजातमुखाः पञ्च वर्तन्ते कल्पशाखिनः ॥ ६ ॥

तत्रत्यानां तु ते चित्रवासोभूषादिदायिनः ।
चिन्तामणिः स्वयं तेषां चिन्तितार्थप्रदायकः ॥ ७ ॥

कामधेनुसमुत्पन्नं तेषामन्नं चतुर्विधम् ।
ऐरावतश्चतुर्दन्तो वारणस्तत्र वर्तते ॥ ८ ॥

उच्चैःश्रवा अश्वरत्नमुद्यानमपि नन्दनम् ।
वैजयन्तोऽत्र सौधोऽपि मणिस्तम्भोपशोभितः ॥ ९ ॥

सुधर्माख्यसभामध्ये सहस्रकिरणप्रभे ।
सिंहासने सहस्राक्षो भाति स्वाराज्यमाचरन् ॥ १० ॥

वसवोऽष्टौ तथादित्या द्वादशैकादशोत्तरे ।
रुद्राः प्रजापतिश्चापि वषट्कारोऽन्यसोमपाः ॥ ११ ॥

त्रयस्त्रिंशत्सोमपाश्च तावन्तोऽग्नयादयो दिशाम् ।
पतयः सप्त षट्त्रिंशत्स्मर्तारो नारदादयः ॥ १२ ॥

तपस्विनस्तथोद्दालश्वेतकेतुमुखा अपि ।
हंसा हरिश्चन्द्रमुखाः परे राजर्षयस्तथा ॥ १३ ॥

अग्निष्टोमादयो यज्ञा ऊर्वश्याद्यप्सरोगणः ।
तत्र चित्ररथाद्यास्तु गन्धर्वा निवसन्ति हि ॥ १४ ॥

नवमेघाः

आवर्तो द्रोणकालौ च नीलसंवर्तपुष्कलाः ।
वारुणो वायुतमसी नवमेघा इहासते ॥ १५ ॥

प्रवहाद्या वसन्त्यत्र सप्तापि स्कन्धवायवः ।
गर्भाधानप्रभृतयश्चत्वारिंशत्क्रिया अपि ॥ १६ ॥

तत्र स्पृश्यादीनि बहुधा सन्ति यज्ञायुधान्यपि ।
उक्तान्येतानि सर्वाणि मूर्तान्येव वसन्ति हि ॥ १७ ॥

निष्प्रत्यूहं क्रतुशतं यः प्रवर्तयते पुमान् ।
जितेन्द्रियोऽमरावत्या सहाप्नोति पुलोमजाम् ॥ १८ ॥

तुलापुरुषमुख्यानि महादानानि षोडश ।
ये यच्छन्ति महात्मानस्ते लभन्तेऽमरावतीम् ॥ १९ ॥

अक्लीबवादिनोऽदीनाः सङ्ग्रामेष्वपराङ्मुखाः ।
विश्रान्ता वीरशयने तत्र तिष्ठन्ति भूभुजः ॥ २० ॥

अग्निपुरी

अग्निरर्चिष्मतीनाम्नि पुरे सिंहासने शुभे ।
पीतादिशक्तिसंयुक्ते वर्तते सुमहाद्युतिः ॥ २१ ॥

अग्नेरष्टमूर्तयः

जातवेदाः सप्तजिह्वो हव्यवाहस्ततः परम् ।
वैश्वानरोऽश्वोदरजस्तथा देवमुखः परः ॥ २२ ॥

कौमारतेजास्तदनु मूर्तिर्विश्वमुखोऽष्टमी ।

अग्नेः सात्विक्यो जिह्वाः

हिरण्यगगना रक्ता कृष्णा चैव तु सुप्रभा ॥ २३ ॥

बहुरूपाऽतिरिक्ताग्नेः सात्विक्यो रसना मताः ।
जातवेदसि ये भक्तास्ते वसन्त्यत्र सुव्रताः ॥ २४ ॥

अग्निप्रवेशं ये कुर्युर्दृढ सत्त्वा दृढेन्द्रियाः ।
स्त्रियो वा सत्त्वसम्पन्नास्ते वसन्त्यग्नितेजसः ॥ २५ ॥

अग्निहोत्ररता विप्रास्तथाग्निब्रह्मचारिणः ।
पञ्चाग्निव्रतिनो ये वै तेऽग्निलोकेऽग्नितेजसः ॥ २६ ॥

अग्निरेको द्विजातीनां निश्रेयसकरः परः ।
गुरुर्देवो व्रतं तीर्थं सर्वमग्निर्विनिश्चितः ॥ २७ ॥

अपावनानि सर्वाणि वह्निसंसर्गतः क्षणात् ।
पावनानि भवन्त्येव तस्माद्यः पावकः स्मृतः ॥ २८ ॥

संयमिनी पुरी धर्मराजश्च

याम्ये संयमिनी नाम पुरी तत्र सभान्तरे ।
आसने वर्तते प्राप्तधर्माधर्मविचारकृत् ॥ २९ ॥

तस्य मध्ये धर्मराजो दण्डहस्तो विराजते ।
ये धर्मकर्मनिरतास्तैः सौम्यो दृश्यते यमः ॥ ३० ॥

धर्मरूपः प्रकृत्यैव निस्सङ्गैः पुण्यराशिभिः ।
अयमेव हि पिङ्गाक्षः क्रोधरक्तान्तलोचनः ॥ ३१ ॥

दंष्ट्राकरालवदनो विद्युज्ज्वलनभीषणः ।
ऊर्ध्वकेशोऽतिकृष्णाङ्गः प्रलयाम्बुदनिःस्वनः ॥ ३२ ॥

कालदण्डोद्यतकरो भ्रुकुटीकुटिलाननः ।
धर्मस्तस्यास्ति पुरतः कालो दक्षिणतोऽसिभृत् ॥ ३३ ॥

अधर्मः पृष्ठतो वामे मृत्युर्भीषणपाशभृत् ।

धर्मसविधे विद्यमानानि

धर्मस्य सविधे त्वग्निष्टोमाद्यानि वसन्ति हि ॥ ३४ ॥

व्रतान्यपि च दानानि सत्राणि विविधानि च ।
तथैव पुण्यकर्माणि मूर्तिमन्ति वसन्ति हि ॥ ३५ ॥

मनोऽनुमन्ता प्राणश्च नरोपनसवीर्यवान् ।
चित्तिर्हयनरश्चैव हंसो नारायणस्तथा ॥ ३६ ॥

प्रभवोऽयं विभुश्चैव साध्या द्वादश धर्मज्ञ! ।
न्यायो वैशेषिकश्चैव मीमांसा [1] साङ्ख्यमेव च ॥ ३७ ॥

पातञ्जलं च वेदान्तं शैवं वैष्णवमेव च ।
तत्र राजर्षयः सन्ति ययातिनहुषादयः ॥ ३८ ॥

तत्रर्षयोऽप्यगस्त्याद्याः पुण्योऽश्वत्थमुखो द्रुमः ।
अग्निष्वात्तादयस्तत्र पितरः सन्ति सर्वदा ॥ ३९ ॥

वर्तन्तेऽत्र सभामध्ये सर्वे भास्वरमूर्तयः ।
गन्धर्वाश्च महात्मानः शतशश्चाप्सरोगणः ॥ ४० ॥

एते चान्ये च बहवो धर्मस्य पुरतः स्थिताः ।
कलाकाष्ठादयो मूर्ताः कालस्य पुरतः स्थिताः ॥ ४१ ॥

अधर्माग्रे विद्यमानानि

अधर्माग्रे पञ्चमहापातकान्युपपातकैः ।
सङ्कलीकरणाद्यैश्च वर्तन्ते सह नित्यशः ॥ ४२ ॥

तत्र वेदविरुद्धानि चार्वाकादिमतान्यपि ।

मृत्युसमीपे विद्यमाना रोगाः

मृत्योः समीपेऽजीर्णादिक्षयान्ता रोगराशयः ॥ ४३ ॥

तत्र नित्यं वसन्त्येते वाताद्या मूर्तिधारिणः ।
त्रिपाद्भस्मप्रहरणो रक्ताक्षस्त्रिशिरा ज्वरः ॥ ४४ ॥

श्वासः कूर्माङ्गसंस्थानो दीर्घो दण्डधरः कृशः ।
करेण वादयन् घण्टां विवृताक्षोऽतिभीषणः ॥ ४५ ॥

[1] मिथ्यमेव—ग.

श्वासस्त्रिबाहुपाशाक्षकमण्डलुसमुज्ज्वलः ।
हिक्कारोगः पिशाचीभिः पतन्नुद्बाहुरावृतः ॥ ४६ ॥

राजयक्ष्मा कृशतनुस्तत्र चापासितर्जिनी ।
दधत्त्रिनेत्रो दंष्ट्राभ्यां दष्टोष्ठो हन्तुमुद्यतः ॥ ४७ ॥

अर्शोरोगः कृशो वक्रः खड्गखेटभृदूर्ध्वदृक् ।
अतिसारोऽत्रफलकी किङ्किणी नूपुरी कृशः ॥ ४८ ॥

मूत्राघातामयष्षण्डः कर्तरीवज्रधृत्करः ।
प्रमेहः पाणिमुद्यम्य दक्षिणं पाशभीषणः ॥ ४९ ॥

शोभः पार्श्वेक्षणः कुर्वन् पादाघातं सगर्जनः ।
आन्त्रवृद्धिः कृशो नृत्यन्मेदिनीमवलोकयन् ॥ ५० ॥

पाशप्रधारी सततं कपालेन पिबन्मधु ।
गुल्मः कुञ्चितसर्वाङ्गो दण्डधारी भयङ्करः ॥ ५१ ॥

दधानः किङ्किणीमालां बद्धकेशो द्विलोचनः ।
प्लीहायकृद्गृहौ द्वौ च वरदाभयधारिणौ ॥ ५२ ॥

कृशाङ्गौ पाशदुष्प्रेक्षौ खड्गदण्डभयङ्करौ ।
महोदरामयः स्थूलः क्रूरो महिषपृष्ठगः ॥ ५३ ॥

खड्गचर्मधरः क्रान्तस्तस्थौ पीताम्बरावृतः ।
[1]शोभः पञ्चकरस्तीक्ष्णो दशाक्षः शरचापधृत् ॥ ५४ ॥

दधानः क्षुरिकां पट्टं कुलिशं चाङ्कुशं तथा ।
कुष्ठः कुत्सितसर्वाङ्गः सर्पयज्ञोपवीतवान् ॥ ५५ ॥

दाहः प्राणहरः क्रुद्धस्त्रिणेत्रः किङ्कणीयुतः ।
वायुर्भयंकरः पङ्गुः पाशी धावन्समन्ततः ॥ ५६ ॥

विकीर्णकेशः पार्श्वस्थान् भर्त्सयन्नेणवाहनः ।
त्र्यक्षोऽक्षिरोगस्तूणीरपाशभृद्वरदोऽभयः ॥ ५७ ॥

---

[1] शोषः.

कर्णरोगः क्वणन् घण्टां सकपालो जपन् स्थितः ।
कण्ठरोगः करालास्यो द्विभुजः पाशकुन्तधृत् ॥ ५८ ॥

कपालमालादुर्दर्शः सोष्णीषो वरभूषणः ।
गण्डरोगः करैः षड्भिःशङ्खचक्रगदास्तथा ॥ ५९ ॥

पाशं चापं शरान् बिभ्रद्धावन्निम्नशिरा महान् ।
लम्बालकस्तीक्ष्णजिह्वो दण्डरोगो द्विबाहुकः ॥ ६० ॥

भगन्दरगदः प्रांशुः शीर्णकेशाभिबन्धनः ।
पङ्गुः पाशाङ्कुशधरः पीठासीनः ककुद्युतः ॥ ६१ ॥

श्रीपदांस्त्रिपदः क्रुद्धः पतन् क्षुरधनुर्धरः ।
मुसली दशहस्तश्च खेटदण्डधनुर्धरः ॥ ६२ ॥

इत्याद्याकृतयो रोगा मृत्योः सविधवर्तिनः ।

निर्ऋतिस्तत्समीपवर्तिनो राक्षसाश्च

रक्षसो नगरी नीला तत्र नीलविभूषणः ॥ ६३ ॥

नीलाम्बरधरो भाति सभामध्ये तु निर्ऋतिः ।
राक्षसा निवसन्त्यस्याममरद्रोहिणः सदा ॥ ६४ ॥

जातिमात्रेण रक्षांसि स्मृताः पुण्यजना इमे ।
अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा ॥ ६५ ॥

सर्पो व्याघ्रस्तथापश्च वातो विद्युद्दिवाकरः ।
ब्रह्मोपेताश्च विप्रेन्द्रा यज्ञोपेताश्च राक्षसाः ॥ ६६ ॥

ये शूद्राः पुण्यकर्माणस्तेऽप्यत्र निवसन्ति हि ।

वरुणस्तत्समीपवर्तिनो नागादयः

पुरे सुखासमाख्याने सुधाशक्तिसमन्विते ॥ ६७ ॥

सिंहासनेऽस्ति वरुणः शतचन्द्रसमप्रभे ।
तक्षको वासुकिः शेषः कुलिशः शङ्खपालकः ॥ ६८ ॥

पद्मश्चैव महापद्मः कर्कोटक इतीरितः ।
कम्बलाश्वतरश्चैलापुत्रानन्तधनञ्जयाः ॥ ६९ ॥

एते तु परिवाराः स्युर्वरुणस्य जलेशितुः ।
चित्ररत्नप्रभाभास्वदालवालविराजिताः ॥ ७० ॥

फलपुष्पभरानम्राः सन्त्यस्मिन्कल्पशाखिनः ।
प्रह्लादो विप्रचित्तिश्च शतशो दैत्यदानवाः ॥ ७१ ॥

लवणाद्यब्धयस्तत्र गङ्गाद्याः सरितस्तथा ।
शोणादयो नदास्तत्र ग्राहाद्या जलचारिणः ॥ ७२ ॥

गीतवादित्रनिरता गन्धर्वाप्सरसां गणाः ।
वापीकूपतटाकानां कर्तारो निर्जले वने ॥ ७३ ॥

निर्जले जलदातारः परसन्तापहारिणः ।
तथा नानाप्रकारांश्च विकारानैक्षवान्बहून् ॥ ७४ ॥

गोरसानां प्रदातारस्तथा गोमहिषीप्रदाः ।
निर्भया वारुणे लोके निवसन्ति लसन्ति च ॥ ७५ ॥

वायुस्तत्परितःस्थिताश्च मरुद्गणाः

वायुर्गन्धवतीनाम्नि पुरे हरिमणीमये ।
पीठे वरे निवसति तस्यैते परितः स्थिताः ॥ ७६ ॥

प्राणोऽपानः समानश्च व्यानोदानौ तथैव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ ७७ ॥

एते दशेतरे चापि प्रवहाद्याश्च वायवः ।
श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ७८ ॥

महाबलाभिधः षष्ठः सप्तमोऽ[1]नल एव च ।
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ॥ ७९ ॥

---

[1] अनलवेधनः—ग.

रयोयः कर्कररश्चैव समीरणसमाधकौ ।
मरुतः स्यात्सप्तदशो मारुतो नाम योनितः ॥ ८० ॥

जगत्प्राणश्च पवनो वातसंज्ञः प्रभञ्जनः ।
पवमानो नभस्वांश्च तरस्व्यतिबलस्तथा ॥ ८१ ॥

द्रविडो धवयूधाश्च गात्रजोऽप्यधराभिधः ।
ऊर्ध्वदृग्गतिदूरश्च फणिजः साधकस्तथा ॥ ८२ ॥

विश्वपूरकसंज्ञश्च जगदाश्रय एव च ।
विश्वातिरिक्तसंज्ञोऽन्यः सजागर इतीरितः ॥ ८३ ॥

विश्वोदरश्चाग्रजश्च तीव्रकश्च सुरंहकः ।
बीजवर्धनकस्तद्वज्जीवः स्यात्पुष्कलोद्वहः ॥ ८४ ॥

अञ्जनापतिसंज्ञश्च व्यक्तमूर्तिश्च विश्वगः ।
इति तेऽत्र समाख्याताः शुभदाश्च मरुद्गणाः ॥ ८५ ॥

सङ्ख्या चैकोनपञ्चाशत्सूर्यलोकोपकारकाः ।
आतपेषु प्रतप्तानां पान्थानां व्यजनादिभिः ॥ ८६ ॥

ये हरन्ति श्रमं तेषां तत्र वासः प्रकीर्तितः ।

कुबेरस्तत्समीपवर्तिनश्च यक्षादयः

कुबेरस्त्वलकापुर्यामास्ते मणिमयासने ॥ ८७ ॥

सिद्धार्थौ मणिभद्रश्च सुमना नन्दनो यशाः ।
कण्डूतिः पन्नगः शङ्खो मणिमान्पद्मरोमकौ ॥ ८८ ॥

सर्वान्नभोजी पिङ्गाक्षश्चतुरो मन्दराश्रयः ।
प्रद्योतः सुषचन्द्रश्च मेघवर्णो जयावहः ॥ ८९ ॥

द्युतिमान्केतुमांश्छ्वेतमौलिमान्विजयाकृतिः ।
पद्मवर्णो मेघवर्णः पुष्पदन्तः सुदर्शनः ॥ ९० ॥

पूर्णमानी हिरण्याक्षः शतजिह्वो बलाहकः ।
बलाकविपुलौ पद्मनाभः कुमुदचीरकौ ॥ ९१ ॥

सुगन्ध इत्यमी यक्षास्तेषां राजा धनाधिपः ।

यक्षिण्यः षट्त्रिंशत्

विचित्रा विभ्रमा हंसी भीषणी जनरञ्जिका ॥ ९२ ॥

विशाला मदनी तुष्टा कालकण्ठी महाभया ।
माहेन्द्री शङ्खिनी चान्द्री मङ्गला वटवासिनी ॥ ९३ ॥

मेखला सकला लक्ष्मीर्मालिनी विश्वनायिका ।
सुलोचना सुशोभा च कामदा च विलासिनी ॥ ९४ ॥

कामेश्वरी नन्दिनी च स्वर्णरेखा मनोहरा ।
प्रमोदा रागिणी सिद्धा पद्मिनी च रतिप्रिया ॥ ९५ ॥

कल्याणदा कलारक्षा ततश्च सुरसुन्दरी ।
इति षट्त्रिंशदाख्याता यक्षिण्योऽभीष्टसिद्धिदाः ॥ ९६ ॥

चेटकाश्चतुःषष्टिः

विभ्रमो वाहको वीरः कटको रजको रविः ।
सिंहनादो महानादः सुग्रीवः कर्कटः शठः ॥ ९७ ॥

बिडालाक्षो बिडालास्यः कुमारः खजरो भवः ।
मयूरो मङ्गलो भीमो द्वीपिवक्त्रः खराननः ॥ ९८ ॥

मातङ्गश्च निशाचारी विषग्राही वृकाननः ।
सैरिभास्यो वाजिमुखः पशुवक्त्रो मृगाननः ॥ ९९ ॥

क्षोभको माणिभद्रश्च क्रीडकः सिंहवक्त्रकः ।
श्येनास्यः कङ्कवदनः काकास्यो हयवक्त्रकः ।
महोदरः स्थूलशिरा विकृतास्यो वराननः ॥ १०० ॥

अफालः कुक्कुटास्यश्च मायावी मदनालसः ।
मनोहरो दीर्घजङ्घः स्थूलदन्तो दशाननः ॥ १०१ ॥

सम्मुखः पण्डितः क्रुद्धो वरदास्यः सुसम्मुखः ।
कपटी कौतुकी कालः कितवः किङ्करः खलः ॥ १०२ ॥

भञ्जको भयदः खाद्यः सर्वगश्चेति चेटकाः ।
चतुष्षष्टिः समाख्याताः कुबेरस्य पुरे स्थिताः ॥ १०३ ॥

नवनिधयः

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च वरश्च निधयो नव ॥ १०४ ॥

हिमवदादिपर्वताः

हिमवान्पारियात्रश्च विन्ध्यकैलासमन्दराः ।
मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः ॥ १०५ ॥

इन्द्रनीलः सुनाभश्च मेरुमुख्याश्च पर्वताः ।
एते चान्ये च बहवो मूर्तिमन्तो वसन्ति हि ॥ १०६ ॥

यज्ञार्थं यो धनं सर्वं दरिद्रेभ्यः प्रदाय तु ।
कारयेद्यज्ञमखिलं स तत्र निवसेत्सुखम् ॥ १०७ ॥

यशोवतीनाम्नि पुरे परमेश्वरः

पुरे यशोवतीनाम्नि मणिसिंहासने शुभे ।
वामादिशक्तिसंयुक्ते वर्तते परमेश्वरः ॥ १०८ ॥
अघोरास्त्रस्वरूपोऽयमीशानादिममूर्तिभिः ।

अष्टमूर्तयः

शर्वः पशुपतिश्चोग्रो रुद्रश्च भव ईश्वरः ॥ १०९ ॥
महादेवो भीम इति मूर्तयोऽष्टौ वसन्ति हि ।

अष्टौ सेनानायकाः

उमा चण्डेश्वरो नन्दी महाकालो गणेश्वरः ॥ ११० ॥
वृषो भृङ्गिरिटः स्कन्द इत्यष्टौ सैन्यनायकाः ।

अष्टभैरवाः

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च ॥ १११ ॥

कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ।

सप्तमातरः

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ ११२ ॥

वाराही चैव चेन्द्राणी चामुण्डा सप्त मातरः ।

सिद्धयोगिन्यश्चतुःषष्टिः

दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी ॥ ११३ ॥

पिशाचिनी डाकिनी च कालरात्रिर्निशाचरी ।
कङ्काली रौद्रवेताली हुङ्कारी भुवनेश्वरी ॥ ११४ ॥

ऊर्ध्वकेशी विरूपाक्षी शुष्काङ्गी नरभोजिनी ॥ ११५ ॥

फट्कारी वीरभद्री च धूम्राक्षी कलहप्रिया ।
रक्ताक्षी राक्षसी घोरा विश्वरूपा भयङ्करी ॥ ११६ ॥

कामाक्षी चोग्रचामुण्डी भीषणी त्रिपुरान्तकी ।
वीरकौमारिका चण्डी वाराही मुण्डधारिणी ॥ ११७ ॥

भैरवी हस्तिनी क्रोधा दुर्मुखी प्रेतवाहिनी ।
खट्वाङ्गी दीर्घलम्बोष्ठी मालती मन्त्रयोगिनी ॥ ११८ ॥

[1] अर्दिनी चक्रिणी ग्राहकङ्काली [2] कालरूपिणी ।
कण्टकी ताडकी शुक्री यमदूती करालिनी ।
शङ्खिनी पद्मिनी क्षीरा असङ्गा च प्रहारिणी ॥ ११९ ॥

लक्ष्मीश्च कामुकी लोला काकदष्ट्रिरधोमुखी ।
धूर्जटी मालिनी घोरा कपाली विषभोजिनी ॥ १२० ॥

---

[1] अस्थिनी—ग.   [2] भुवनेश्वरी—ग.

चतुष्षष्टिः समाख्याता योगिन्यो वरसिद्धिदाः ।
योगिन्यस्तु चतुष्षष्टिः वीरभद्रमुखा अपि ॥ १२१ ॥

गणेशा भूतमुख्याश्च ग्रहलोकनिवासिनः ।
नित्यं तत्रैव तिष्ठन्ति स्वैरसंचारतत्पराः ॥ १२२ ॥

इति स्वर्लोकसंस्थानि जगन्त्युक्तानि सम्प्रति ।
स्वर्लोकादूर्ध्वभागे तु योजनानां [1]द्विकोटितः ॥ १२३ ॥

### महोलोकवर्णनम्

महोलोकोऽस्ति तत्रर्षिर्मार्कण्डेयो मृकण्डुजः ।
ऋषिभिस्तु मरीचाद्यैः सहितः पूजयञ्छिवम् ॥ १२४ ॥

तदेकहृदयस्तत्र वर्तते नित्यनन्दितः ।

### जनोलोकवर्णनम्

महोलोकादष्टकोटियोजनादुपरि स्थितः ॥ १२५ ॥

जनलोकस्तत्र सन्ति वसिष्ठाद्या महर्षयः ।
पितृभिः सहिता नित्यं गोत्रभेदप्रवर्तकाः ॥ १२६ ॥

इति श्रीशिवतत्त्वरत्नाकरे तृतीयकल्लोले भुवर्लोक-महोलोक-जनोलोकवर्णनं नाम पञ्चमस्तरङ्गः

---

## षष्ठस्तरङ्गः

अकारि जनलोकान्तसर्वलोकप्रपञ्चनम् ।
तपोलोकादिकाल्लोकानधुना विवृणु प्रभो ! ॥ १ ॥

तनुज ! श्रूयतामेतन्मनुजानामगोचरम् ।
यदन्वयुज्यतेदानीं दीयते तत्र चोत्तरम् ॥ २ ॥

---

[1] त्रिकोटितः—ग.

तपोलोकवर्णनम्

तदूर्ध्वे तु तपोलोकः कोट्यो द्वादशाप्यतः ।
साध्या नाम सुरा यत्र वसन्ति मुनिभिः सह ॥ ३ ॥

सनत्कुमारः सनको नारदश्च सनन्दनः ।
सनातनाद्या योगीन्द्रास्तथा तत्र महौजसः ॥ ४ ॥

ब्रह्मलोकवर्णनम्

सत्यलोकस्तदुपरि द्व्यष्टकोटिसमुच्छ्रयः ।
ऊर्ध्वे ब्रह्मा चतुर्वक्त्रो ब्रह्मलोके व्यवस्थितः ॥ ५ ॥

सेव्यमानः सदा देव्या सरस्वत्या विशुद्धया ।
त्रयीमय्या महाम्भोजे दीप्यते स्वेन तेजसा ॥ ६ ॥

दक्षः प्रचेताः पुलहो मरीचिः कश्यपस्तथा ।
आदित्याश्च तथा राजन् ! वसवश्चाश्विनौ तथा ॥ ७ ॥

पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्दमस्तथा ।
भृगुरत्रिर्वसिष्ठश्च गौतमश्च महाकविः ॥ ८ ॥

अथर्वाङ्गिरसश्चैव वालखिल्या मरीचिपाः ।
मनो विद्यान्तरिक्षं च वायुस्तेजो जलं मही ॥ ९ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च भूपते ! ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवि ॥ १० ॥

अगस्त्यश्च महाराज ! मार्कण्डेयश्च दीप्तिमान् ।
जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा ॥ ११ ॥

दुर्वासश्च माहाभाग ऋष्यशृङ्गश्च धार्मिकः ।
सनत्कुमारो भगवान् योगाचार्यो महातपाः ॥ १२ ॥

असितो देवलश्चैव जैगीषव्यस्तथैव च ।
पुरुषोऽजातशत्रुश्च महावीरस्तथा मणिः ॥ १३ ॥

आयुर्वेदस्तथाष्टाङ्गो वेदस्तत्र च भारत ! ।
चन्द्रमाः सहनक्षत्रैरादित्यश्च गभस्तिमान् ॥ १४ ॥

वायवः क्रतवश्चैव संकल्पः प्राण एव च ।
अर्थो धर्मश्च कामश्च द्वेषो हर्षस्तथा मदः ॥ १५ ॥

आयान्ति तत्र सहिता गन्धर्वाप्सरसां गणाः ।
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ १६ ॥

शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥ १७ ॥

मन्त्रो रथन्तरश्चैव हरिमान्वसुमानपि ।
मारुतो विश्वकर्मा च पर्वाण्यपि धरापते ! ॥ १८ ॥

तथा पितृगणाः सर्वे मूर्तिमत्यश्च देवताः ।
ऋग्वेदः सामवेदश्च वेदाङ्गानि च सर्वशः ॥ १९ ॥

ग्रहा यज्ञाश्च सोमश्च दैवतानि च सर्वशः ।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा ॥ २० ॥

वाणी धृतिः श्रुतिश्चैव यज्ञः क्षान्ति[1]र्मतिर्यशः ।
सामानि स्तुतिगीतानि गाथाश्च विविधा अपि ॥ २१ ॥

भाष्याणि तर्कयुक्तानि देहवन्ति विशां पते ! ।
क्षणो लवो मुहूर्तश्च दिवारात्रिश्च भूपते ! ॥ २२ ॥

संवत्सराः पञ्चयुगाः समा रात्रिश्चतुर्विधा ।
कालचक्रं च यद्दिव्यं नित्यमक्षरमव्ययम् ॥ २३ ॥

देवमातरः

दनुर्दित्यदिती चैव विनता सुरसा तथा ।
काला च कारभिर्देवी सरमा चाथ गौतमी ॥ २४ ॥

---

[1] श्रुतिर्यशः—ग.

पृषत्काराश्च ता देव्यस्तत्रासन्देवमातरः।
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रर्यष्टिस्तथा जरा ॥ २५ ॥

पृथ्वी गङ्गा च देवी श्रीर्ह्रीः स्वाहा कीर्तिरेव च।
सुरादेवी शचीदेवी तथा तुष्टिररुन्धती ॥ २६ ॥

सम्पत्तिराशा नियतिः पुष्टिर्देवी रतिस्तथा।

पितृगणाः

विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ २७ ॥

पितॄणां च गणान् विद्धि सप्तैतान्भरतर्षभ !।
चत्वारो मूर्तिमन्तो वै त्रयश्चाप्यशरीरिणः ॥ २८ ॥

वैराजाश्च महाभागा अग्निष्वात्ताश्च भूपते !।
गार्हपत्या नाम परे पितरो लोकविश्रुताः ॥ २९ ॥

सोमपा एकशृङ्गाश्च अन्वाहार्याः कलास्तथा।
एते चतुर्षु वर्णेषु भुञ्जते पितरो नृषु ॥ ३० ॥

राक्षसाश्चैव यक्षाश्च गुह्यका दानवास्तथा।
पुरन्दरश्च देवेन्द्रो धनदो वरुणो यमः ॥ ३१ ॥

महादेवश्च भगवान् सदा गच्छति पर्वसु।
देवो नारायणस्तत्र ऋषयो देवतर्षयः ॥ ३२ ॥

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम्।
प्रजापतीनां पञ्चाशदृषीणामपि भूमिप ! ॥ ३३ ॥

एते चान्ये च बहवः स्वयम्भुवमुपासते।
अतिथीनागतान्देवान् दैत्यानपि तथा मुनीन् ॥ ३४ ॥

महाभागानपि तथा ब्रह्मा लोकपितामहः।
मधुरेण च साम्ना च भगवान्प्रतिगृह्य च ॥ ३५ ॥

नित्यशः साधुमानार्थैर्युनक्ति मनुजानपि।

अष्ट पार्थिवसिद्धयः पिशाचानाम्

स्थौल्यं सौक्ष्म्यं बालभावो युवत्वं वार्धकं तथा ॥ ३६ ॥

नानाजातिस्वरूपत्वमपृथ्वीभूतरूपता ।
शश्वत्सुगन्धसेवित्वमष्टौ पार्थिवसिद्धयः ॥ ३७ ॥

पिशाचानां गुणास्त्वेते कथिताः सिद्धिवेदिभिः ।

आप्याः सिद्धयो रक्षसाम्

वार्निरासो वार्षु भूमाविनचारोऽपिपासया ॥ ३८ ॥

वार्धिपानं च निर्वारिस्थाने वारिप्रदर्शनम् ।
ग्रावादिताडने जातेऽप्यव्रणत्वं करान्तरे ॥ ३९ ॥

सिन्धोः सन्धारणं प्राप्तरसता नीरसस्य च ।
अनीरभूतरूपत्वमाप्या अष्टौ हि सिद्धयः ॥ ४० ॥

स्थौल्याद्याः षोडशैते स्युः सिद्धयो भुवि रक्षसाम् ।

आग्नेयाः सिद्धयो यक्षाणाम्

देहेऽग्न्युत्पादनं वह्निभीतित्यागोऽप्सु तत्स्थितिः ॥ ४१ ॥

पाणौ तद्धारणं चान्नाद्यतिपाचनकर्म च ।
अप्रयत्नं जगद्दाहः क्ष्मादिभूतत्रयं विना ॥ ४२ ॥

उभाभ्यामेव भूताभ्यां शरीरस्य च धारणम् ।
अतीतानागतार्थानां तत्त्वतो ह्यवधारणम् ॥ ४३ ॥

दूरशब्दश्रुतिः सर्ववृत्तान्तावगमस्तथा ।
विना यत्नं दिव्यदृष्टिर्दिव्यसारग्रहस्तथा ॥ ४४ ॥

दिव्यगन्धग्रहश्चेति ख्यातं षड्डुपसर्गकम् ।
अग्नेरष्टौ गुणाः ख्याताः पूर्वैः षोडशभिर्युताः ॥ ४५ ॥

चतुर्विंशतिरेते स्युर्यक्षाणामिह सिद्धयः ।

वायवीयाः सिद्धयो गन्धर्वाणाम्

मनोजवत्वं भूतान्तःप्रवेशोऽद्र्यादिधारणम् ॥ ४६ ॥

गुरुत्वं लघुता हस्तानिलधारणमेव च ।
भूमिकम्पनमङ्गुल्या निर्वाप्यैकदेहता ॥ ४७ ॥

वायोरष्टौ सिद्धयोऽमूः पूर्वैरेताः समाहृताः ।
गन्धर्वाणां सिद्धयः स्युरिति सिद्धिविदो विदुः ॥ ४८ ॥

आकाशसिद्धयो महेन्द्रस्य

अच्छायत्वमदृश्यत्वं यथेष्टविषयेप्सुता ।
खेचरत्वाद्रिलङ्घित्वे [1] शैलगर्भीकृतिस्तथा ॥ ४९ ॥

आकाशपिण्डीकरणमशरीरित्वमित्यमूः ।
व्योम्नः स्युः सिद्धयो ह्यष्टौ पूर्वोक्तैः संयुता इमे ॥ ५० ॥

चत्वारिंशद्गुणाः प्रोक्ता महेन्द्रस्य बुधोत्तमैः ।

मानसाः सिद्धयः सौम्यस्य

यथाकामोपलब्धिश्च यथाकामविनिर्गमः ॥ ५१ ॥

सर्वाभिभूतिः सकलगुह्यार्थानां प्रदर्शनम् ।
कर्मानुगुणनिर्माणं वशित्वं प्रियदर्शनम् ॥ ५२ ॥

संसारदर्शनं चेति मानसा अष्ट सिद्धयः ।
चत्वारिंशद्गुणैः पूर्वैरेताः सौम्यस्य सिद्धयः ॥ ५३ ॥

अहंकारसिद्धयो ब्रह्मणः

भेदनं ताडनं बन्धो मोचनं ग्रहणं तथा ।
संसारे परिवृत्तिश्च प्रसादोऽनुग्रहस्तथा ॥ ५४ ॥

---

[1] तैल–ग.

मृत्युकालजयश्चाष्टावहङ्कारस्य सिद्धयः ।
पूर्वैः सह युताश्चैता ब्रह्मणो वरसिद्धयः ॥ ५५ ॥

बुद्धिसिद्धयः

जगतो जननं रक्षा लय इष्टाभ्यधिक्रिया ।
इष्टलोकप्रवृत्तिश्च तुल्यलोकसमुद्भवः ॥ ५६ ॥
शुभाशुभकृती चाष्टौ बुद्धिसिद्धय ईरिताः ।
चतुष्षष्ट्या गुणैर्ब्रह्मा सत्यलोकेऽन्वितः स्थितः ॥ ५७ ॥
विष्ण्वादीनां सिद्धयस्तु नृणां वाचामगोचराः ।
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ॥ ५८ ॥
ब्रह्माश्रयी दीप्यमाना कथिता ब्रह्मणः सभा ।

वैकुण्ठलोकवर्णनम्

वैकुण्ठलोकस्तस्योर्ध्वे चतुष्कोट्यन्तरे स्थितः ॥ ५९ ॥
तत्रास्ते भगवान्नित्यं वासुदेवो जगत्पतिः ।
सर्वलोकगुरुः श्रीमानादिमूर्तिः सनातनः ॥ ६० ॥
शङ्खकौमोदकीपद्मचक्रयुक्तश्चतुर्भुजः ।
सेव्यमानो महालक्ष्म्या तार्क्ष्येण च महात्मना ॥ ६१ ॥
नीलोत्पलदलश्यामः श्रीवत्साङ्कश्चतुर्भुजः ।

विष्णोर्दशावताराः

मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ॥ ६२ ॥
रामो रामश्च रामश्च बुद्धः कल्कीति वै दश ।
एवं दशावतारैस्तु दुष्टान्संहरति प्रभुः ॥ ६३ ॥
वैष्णवाः कोटिशस्तत्र स्तुवन्तस्तमुपासते ।
पाञ्चरात्रोक्तदीक्षाद्यैः सर्वे निर्मलमानसाः ॥ ६४ ॥

इति श्री शिवतत्त्वरत्नाकरे तृतीयकल्लोले तपोलोक सत्यलोक
विष्णुलोकवर्णनं नाम षष्ठस्तरङ्गः

---

## सप्तमस्तरङ्गः

श्रीगुरो! विष्णुलोकान्ता लोकाः सम्प्रति वर्णिताः।
तस्योपरितनो लोकः कीदृशस्तद्वदस्व मे॥ १॥

नन्दनाकर्णय स्वैरं यच्छ्रोतुमभिकांक्षसे।
पञ्चकोटि तदूर्ध्वं तु दिव्यं शैवपदं शुभम्॥ २॥

### कुमारस्थानम्

विष्णुलोकात्परं स्थानं कुमारस्य महात्मनः।
स्वच्छमौक्तिकसङ्काशं वरभोगसमन्वितम्॥ ३॥

### उमादेवीस्थानम्

स्कन्दस्थानात्परं स्थानमुमादेव्याः प्रकीर्तितम्।
तप्तचामीकरप्रख्यमशेषगुण[1]मण्डितम्॥ ४॥

### रुद्रलोकवर्णनम्

उमास्थानाच्च परतः स्थानमाद्यमुमापतेः।
नभसोऽस्य परेपारे रुद्रलोकः स्वयंप्रभः॥ ५॥

दिव्यहर्म्यैर्गृहैश्चैव विमानैरतिशोभितैः।
काञ्चनैर्विविधैः शुभ्रैरुपेतः शयनासनैः॥ ६॥

उद्यानैः शोभितो रम्यैर्नित्यपुष्पफलद्रुमैः।
सदा वसन्तसन्तुष्टपुंस्कोकिल[2]विराजितैः॥ ७॥

कामरूपधरैर्दिव्यैः सूर्येन्दुज्वलनप्रभैः।
गणैरध्युषितो नित्यमसंख्यातैर्महात्मभिः॥ ८॥

स्त्रीजनैर्बहुभिर्दिव्यैः पीनोन्नतपयोधरैः।
तनूदरैर्बृहच्छ्रोणितटदीप्तात्ममेखलैः॥ ९॥

---

[1] संयुतम्—ग.  [2] विराविभिः—ग.

फुल्लपद्मनिभास्याङ्घ्रिपाणिभिः स्निग्धकान्तिभिः।
वासोभिरञ्चितैः श्लक्ष्णैः कल्पवृक्षसमुद्भवैः॥ १०॥

नानाभरणमालाभिर्भूषितैश्चारुलोचनैः।
सुस्निग्धसूक्ष्मधम्मिल्लरदहस्ताङ्गुलीसखैः॥ ११॥

शृङ्गारादिरसाभिज्ञैर्मनोनयनहारिभिः।
शोभितः पुरुषैश्चापि भोगिभिः कामरूपिभिः ।।१२॥

रुद्रकन्यास्तथा चान्याः सालङ्कारा मनोहराः।
कृशोदरा विलासिन्यः सन्ति पीनोन्नतस्तनाः॥ १३॥

ये रुद्रभक्ता राजानो ब्राह्मणाश्च विशस्तथा।
शिवप्रसादाद्गच्छन्ति तं लोकं श्रद्धयान्विताः॥ १४॥

रुद्रलोकमध्यस्थितसर्वतोभद्रपीठवर्णनम्

तन्मध्ये सर्वतोभद्रं योजनायुतविस्तृतम्।
शिवपीठासनाम्भोजं दीप्यते काञ्चनं सदा॥ १५॥

धर्मादिभिर्महाकायैर्धृतं तैर्सिहरूपिभिः।
सहस्रार्धमितोत्तुङ्गकर्णिकं समनोहरम्॥ १६॥

विद्येश्वरादिभिर्देवैः कलाभिः शक्तिभिस्तथा।
पञ्चवक्त्रस्तदध्यास्ते देव्या सार्धं महेश्वरः॥ १७॥

धर्मात्मा वृषभस्तस्य वाहनोऽग्रे महारवः।
शेतेऽभिमुखमम्भोजे पूर्णचन्द्रनिभाकृतिः॥ १८॥

उपासते मातृगणास्तथा गोमातरो भवम्।
वेदाश्चाङ्गानि शास्त्राणि पुराणं स्मृतयस्तथा॥ १९॥

पितासौ सर्वलोकानां माता शक्तिः शिवाश्रिता।
राजा च सर्वलोकानां तच्चिह्नैरुपशोभितः॥ २०॥

कैलाससभा

कैलासोऽस्य सभा दिव्या देवर्षिगणसेविता।
शिवप्रभावसन्दीप्ता सुमृष्टा शिवयोगिभिः॥ २१॥

गन्धर्वा गायकास्तस्य नर्तक्योऽप्सरसस्तथा।
विद्याधरा वाद्यकरा गणास्तु [1] सहचारणाः ॥ २२ ॥

तस्याऽऽसन्मन्त्रिणो वेदाः कलाभिः षष्टिभिः सह।
राज्यं च सुमहत्तस्य भुवनानि चतुर्दश ॥ २३ ॥

सीमादुर्गो महामेरुः कोशो धर्मस्त्वनुत्तमः।
विष्णुर्दण्डपतिश्चास्य मित्राणि शिवयोगिनः ॥ २४ ॥

[2] द्वाःपौ नन्दिमहाकालौ युवराजश्च षण्मुखः।
पुरोहितश्च ब्रह्माभूत् कालज्ञोऽस्य दिवाकरः ॥ २५ ॥

वह्निर्महानसपतिर्गणाधीशोऽस्य हासकृत्।
महिषी पार्वती ज्ञेया रक्षाकर्ता सुरोत्तमः ॥ २६ ॥

शिवदूत्यः स्मृता दास्यो लोकपालाश्च नायकाः।
किङ्कराश्चेतरे देवाः शत्रवो भक्तिवर्जिताः ॥ २७ ॥

तद्राज्ये चोररूपेण वर्तन्ते दैत्यदानवाः।
कालनेमिमुखा राजन्! दुष्टान्तःकरणास्तथा ॥ २८ ॥

तेभ्यो राज्यस्य रक्षार्थं मन्त्रयित्वा स मन्त्रिभिः।
पृथक् पृथक् स भूतानां चकारैकैकमीश्वरम् ॥ २९ ॥

रुद्रलोकरक्षका ईश्वराः

लोकाधिराज्ये लक्ष्मीशं शक्रं चापि दिवौकसाम्।
कुबेरं सर्वरत्नानां निधीनां यक्षरक्षसाम् ॥ ३० ॥

प्रह्लादं सर्वदैत्यानां वैनतेयं पतत्रिणाम्।
वैवस्वतं पितॄणां च वरुणं यादसामपि ॥ ३१ ॥

वासुकिं सर्वनागानां मानुषाणां महीपतिम्।
यज्ञवेदिं क्रियाकाण्डे ज्योतिर्वारिमुचां रविम् ॥ ३२ ॥

---

[1] सहचारिणः—ग. [2] द्वास्थौ—ग.

कवीनां मामपि ब्रह्मन्! वृक्षाणां प्लक्षमेव च ।
संस्थाप्यैतानधिपतीन् शिक्षारक्षाक्षमान्विभुः ॥ ३३ ॥

मोदते मुनिभिः सार्धं शिवभक्तैर्मनस्विभिः ।
आयुधानि च दिव्यानि चक्रादीनि दिवौकसाम् ॥ ३४ ॥

स एव दत्तवान्पूर्वं विष्ण्वादीनां द्विजोत्तम! ।
पञ्चविंशत्परार्धानि गणानां कामरूपिणाम् ॥ ३५ ॥

निखर्वं चारणानां हि परिवारो जगत्पतेः ।
तस्मात्सर्वाणि भूतानि भवन्ति प्रभवन्ति च ॥ ३६ ॥

लीयन्ते च पुनस्तस्मिन् अनादिनिधने शिवे ।
ये तस्याज्ञामिमां लोके [1] भिन्दन्ति द्विजसत्तम! ॥ ३७ ॥

तेषां नरकवासादिदण्डपातनकारकः ।
योगमायाधरस्त्वेष स्थूलसूक्ष्मादिमूर्तिभिः ॥ ३८ ॥

क्रीडत्येको यथाजोषं ज्ञायते नाल्पबुद्धिभिः ।
तेजोमयस्य नैवान्तं जग्मतुर्ब्रह्मकेशवौ ॥ ३९ ॥

किं पुनर्लौकिका मूढाः कूपमण्डूकसन्निभाः ।
एषु त्रैलोक्यरक्षार्थं कैलासे भूतलेऽपि च ॥ ४० ॥

पातालेऽपि च सर्वेषु रुद्ररूपी चरत्युत ।
उत्कृष्टे सर्वजातीनां महच्छब्दः प्रयुज्यते ॥ ४१ ॥

तस्मात्समस्तदेवानां महादेवोऽयमुत्तमः ।
यथा तस्मात्समुद्भूतं पुनस्तत्र प्रलीयते ॥ ४२ ॥

अव्यक्तं व्यक्तिमापन्नं काष्ठाद्वह्निर्यथोत्थितः ।
चतुर्दशसु लोकेषु स एवैकः प्रतिष्ठितः ॥ ४३ ॥

तथापि तं न जानन्ति पापा भिन्नधियोऽक्षरम् ।
पापेन कर्मणा नुन्ना नरा निरयपातिनः ॥ ४४ ॥

---

[1] निन्दन्ति--ग.

स्मर्तुमप्यलसा मूढाः शिवं स्वर्गप्रदं स्मृते।
अग्नीषोमस्वरूपेण जगदेतच्चराचरम् ॥ ४५ ॥

[1]जीवयत्येक एवासौ विश्वात्मा विश्वतोमुखः।
स एव देवो बहुधा रूपं कृत्वा जगत्त्रयम् ॥ ४६ ॥

पाति विश्वेश्वरः शम्भुः संहरत्यपि लीलया।
अनेककोटिसाहस्रैः स्वचिह्नाद्युपलक्षितैः ॥ ४७ ॥

रुद्रसङ्घैर्जगत्कृत्स्नमापूरितमभूदिदम्।
एकमेव यदा देवं तमसः परमीश्वरम् ॥ ४८ ॥

शाश्वतं जगतां योनिं तदा [2]योगी विमुच्यते।
अचिन्त्योऽव्यक्तरूपोऽपि योगिनां हितकाम्यया ॥ ४९ ॥

शिवलोकादिषु ब्रह्मन्! व्यक्तो योगेन तिष्ठति।
सर्वज्ञो जगतां नाथः शिवलोके वसन्नपि ॥ ५० ॥

जानाति जगतां वृत्तमशेषेण नृपो यथा।
स्थाने ज्योतिर्मये चित्रे कोटिश्चाण्डकटाहकः ॥ ५१ ॥

शतकोटिप्रविस्तीर्ण इति ब्रह्माण्डगोलकः।
ब्रह्माण्डस्य बहिर्भागे वीरभद्रनियन्त्रिताः ॥ ५२ ॥

पालयन्तोऽवतिष्ठन्ते रुद्रास्तु शतसङ्ख्यया।

ब्रह्माण्डबहिर्भागे वीरभद्रनियन्त्रिता शत रुद्राः (इन्द्रदिशि वर्तमाना दश रुद्राः)

कपालीशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः ॥ ५३ ॥

विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः।
इन्द्रवीर्यं समाक्रम्य स्थितास्तत्पूजिता दश ॥ ५४ ॥

---

[1] जरयत्येक--ग. मु--पा. [2] भवतीति शेषः

अग्निदिशि वर्तमाना दश रुद्राः

अग्नी रुद्रो हुताशी च पिङ्गलः खादको हरः ।
वलनो दहनो बभ्रुर्भस्मान्तकक्षयान्तकौ ॥ ५५ ॥

आग्नेय्यां संस्थितास्त्वेते पूजितास्तेन रुद्रवत् ।

याम्यदिशि वर्तमाना रुद्राः

विधातृधातृकर्तृश्रीकामसर्वनियोक्तृकाः ॥ ५६ ॥

याम्ये दशेशसंयोक्तृहाराश्च यमपूजिताः ।

निर्ऋतिदिशि वर्तमाना रुद्राः

नैऋतो वारुणो हन्ता क्रूरदृष्टिर्भयानकः ॥ ५७ ॥

ऊर्ध्वशेफा विरूपाक्षो धूम्रो लोहितदंष्ट्रकः ।
एते च निर्ऋतिबलमतिक्रम्य सदा स्थिताः ॥ ५८ ॥

वरुणदिशि वर्तमाना रुद्राः

बलो ह्यतिबलश्चैव पाशहस्तो महाबलः ।
श्वेतोऽथ जयभद्रश्च दीर्घबाहु[1]र्जलप्रदः ॥ ५९ ॥

सुनामा भैरवश्चैव वरुणेन प्रपूजिताः ।

वायुदिशि वर्तमाना रुद्राः

शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णो भयान्तकः ॥ ६० ॥

पञ्चात्मकः पञ्चशिखः कपर्दी मेघवाहनः ।
वायुना पूजितास्त्वेते दश रुद्रा महाबलाः ॥ ६१ ॥

कुबेरदिशि वर्तमाना रुद्राः

निधीशो रूपवान् धन्यः सौम्यः शान्तो जटाधरः ।
कामप्रसादो लक्ष्मीशः प्रकाशश्चेन्दु[2]यज्ञपः ॥ ६२ ॥

कुबेरबलमाक्रम्य स्थिता रुद्रास्त्वमी दश ।

---

[1] जलान्तकः–ग.  [2] यज्ञपौ–मु. पा.

ईशानदिशि वर्तमाना रुद्राः

ईशानश्चैव विद्येशो ज्ञानवान्मातृपिङ्गलः ॥ ६३ ॥

भूतपालो बली मित्रं वेदागमसुखङ्करः ।
ईशानदिशि वर्तन्ते पूजितास्तेन ते दश ॥ ६४ ॥

पाताले विद्यमाना रुद्राः

बलिप्रियो वृषधरो वीरो ग्रसनपालकौ ।
शुभः सुवीर्यो वृषभः पातालेशश्च लोहितः ॥ ६ ५ ॥

एते दशावतिष्ठन्ते पाताले पालनोद्यताः ।

ऊर्ध्वभागस्थिता रुद्राः

अध्यक्षश्च नभो लिप्सुः शम्भुर्विभुविचक्षणौ ॥ ६६ ॥

विवाहगुणसंवाहास्त्र्यक्षास्त्रिदशवन्दिताः ।
ब्रह्माण्डस्योर्ध्वभागस्था दश रुद्रा इमे स्मृताः ॥ ६७ ॥

एवं शतेन रुद्राणां भुवनं परिपाल्यते ।
सन्तीदृशानामण्डानामयुतान्यर्बुदानि च ॥ ६८ ॥

सर्वाण्येवंविधान्येव यादृशं कीर्तितं त्विदम् ।

अनेकब्रह्माण्डालंकृतशम्भुवर्णनम्

शम्भुरेतादृशैर्भूरि ब्रह्माण्डैर्भात्यलङ्कृतः ॥ ६९ ॥

एक एव तदा शम्भुर्ब्रह्माण्डाभरणो बभौ ।
द्विषट्ककोटिब्रह्माण्डैः पादे पादे च नूपुरम् ॥ ७० ॥

द्विषट्ककोटिब्रह्माण्डैः कङ्कणं करयोर्दधत् ।
शेषः कनिष्ठिकाङ्गुल्या मुद्रिकावलयीकृतः ॥ ७१ ॥

सव्यापसव्योपवीती पृथग्द्विशतकोटिभिः ।
पक्षद्वयस्थैर्ब्रह्माण्डैः [1] रञ्जिते भुजभूषणे ॥ ७२ ॥

---

[1] रचिते—क. ग.

पार्श्वद्वयप्रचलितचतुर्विंशतिकोटिभिः ।
ब्रह्माण्डैर्ग्रथितां मालां वक्षस्स्थाने बिभर्ति सः ॥ ७३ ॥

ब्रह्माण्डमेकं नासाग्रे रचितां मूर्ध्नि मालिकाम् ।
ब्रह्माण्डकोटिविंशत्या संदधानः शिरोमणिम् ॥ ७४ ॥

ब्रह्माण्डकोट्या ग्रथितं [1] कटकं करपङ्कजे ।
ब्रह्माण्डानन्तकोट्यस्तु रोमकूपेषु लीलया ॥ ७५ ॥

फलान्यौदुम्बराणीव हरस्याङ्गेषु तान्यपि ।
सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः ॥ ७६ ॥

तत्र तत्र प्रवर्तन्ते ब्रह्माणो हरयो हराः ।
सर्वाण्येतादृशान्येव यादृशं कीर्तितं त्विदम् ॥ ७७ ॥

अणिमादिसमृद्धस्य किं न सम्भाव्यते विभोः ।
सङ्कल्पादेव तत्सिद्धेर्वंकुरेव वचोऽल्पता ॥ ७८ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचिते वेदागमान्तर्गतविविधविद्यातन्त्रसारभूते शिवतत्त्वरत्नाकरे तृतीयकल्लोले शिवलोकादिकटाहान्तवर्णनं नाम सप्तमस्तरङ्गः समाप्तः

———

तरङ्गैः सप्तभिर्युक्ते कल्लोलेऽस्मिंस्तृतीयके ।
ग्रन्थानां षट्शतीपञ्चचत्वारिंशत्समन्विते ॥

महाभारतवाराहे कौर्मं स्कान्दं च वैष्णवम् ।
कुमारीकाण्डशैवादि सङ्गृह्यायं कृतोऽभवत् ॥

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचेन्नवीरकरसञ्जातेन लब्धश्रिया ।
गौरीभर्तुरनुग्रहाद्बसवराजेन्द्रेण क्लृप्ते पुनः
कल्लोलः परिपूरितः कृतिवरे त्वस्मिंस्तृतीयोऽभवत् ॥

———

[1] करकं—क. ग.

# चतुर्थः कल्लोलः

## प्रथमस्तरङ्गः

वीक्ष्यास्यं हरिनीलकुट्टिमगतं मातुः पयोजभ्रमात्
हर्तुं वाञ्छति बिम्बितं हरिमनुप्रेक्ष्य द्रुतं [1] धावति।

[2] विघ्नेशेऽनुजबर्हिभीतिविगलद्बन्धोदराहौ श्लथे।
संश्लिष्याननचुम्बनोद्यतकरे शम्भुर्हसन्नोऽवतात्॥ १॥

भगवन्! विदिताशेषवेद्यजात! [3] कृपाम्बुधे!।
ब्रह्माण्डान्तर्गताँल्लोकानवेदं त्वत्प्रसादतः॥ २॥

पुण्या तद्वापगावच्च गम्भीरा तत्स्थिताब्धिवत्।
तत्रत्यकल्पतरुभिः समं सर्वार्थदायिनी॥ ३॥

तत्रत्यपुष्पसुरभिस्तत्सुधामधुरं क्रमात्।
तद्वायुवेगिनी तद्वत्स्पष्टवर्णविभागिनी॥ ४॥

उपदेशमयी वाणी मामानन्दं नयत्यसौ।
कालाग्निरुद्रलोकाच्च शिवलोकान्तमीरिते॥ ५॥

समस्तलोकविस्तारे खण्डे भारतनामनि।
श्रुतेऽपि सम्प्रति नदीनददेशाद्रिभेदिनि॥ ६॥

प्रपञ्चे श्रवणं चित्रमीहते मम सम्प्रति।
सुत! प्रशस्तमप्राक्षीर्ब्रुवे तस्योत्तरं शृणु॥ ७॥

### भारतवर्षवर्णनम्

भरणात्तु प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनैश्चैवं वर्षं तद्भारतं स्मृतम्॥ ८॥

---

[1] वाञ्छति—मु. पा. [2] विघ्नेशोऽनुज—क. [3] गुणाम्बुधे—क. ग.

इतः स्वर्गश्च मोक्षश्च [1]मध्यमश्चाप्यतः स्मृतः।
न खल्वन्यत्र मर्त्यानां भूमौ कर्मविधिः स्मृतः॥ ९॥

तदिदं भारतं वर्षं यस्मिन् स्वायम्भुवादयः।
चतुर्दशैते मनवः प्रजासर्गं वितेनिरे॥ १०॥

दक्षिणं यत्समुद्रस्य [2]हिमसाह्वस्य चोत्तरम्।
वर्षं तद्भारतं नाम यत्रैषा भारती प्रजा॥ ११॥

भारतस्यास्य वर्षस्य नव भेदान् शृणुष्व मे।
सहस्रयोजनमितान् प्रत्येकं राजपुङ्गव॥ १२॥

इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान्।
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः॥ १३॥

अयं तु नवमस्तेषां कन्यासंज्ञस्तु मध्यगः।
सहस्रयोजनायामः स तु वर्णाश्रमान्वितः॥ १४॥

अस्मिन्मन्वन्तरे तेऽष्टौ द्वीपाः सगरनन्दनैः।
अन्वेषमाणैस्तुरगं खात्वा जलनिधीकृताः॥ १५॥

भारतादिवर्षमर्यादापर्वताः

सुमाली हेममाली च शम्भुः स्वर्णगिरिस्तथा।
वैडूर्यो रजतश्चैव मणिश्च मणिमानपि॥ १६॥

एवमष्टौ महाशिलाः समुद्रान्तर्व्यवस्थिताः।
मर्यादाकारकाः क्षिप्ता वर्षाणां सगरात्मजैः॥ १७॥

आयतो यत्कुमारीतो द्वीपोऽयं दक्षिणोत्तरः।
सहस्रयोजनमितः कन्यकाख्योऽतिशोभनः॥ १८॥

तत्ते वर्षं प्रवक्ष्यामि यथाश्रुतमरिन्दम!।

---

[1] मध्यमश्च इतः—क. ग. [2] हिमनागस्य—मु. पा.

सप्त कुलपर्वताः

महेन्द्रो मलयः सह्यः शुक्तिमानृक्ष एव च ॥ १९ ॥

विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।
तेषां सहस्रशो राजन् ! पर्वतास्तु समीपगाः ॥ २० ॥

अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः ।
अन्ये [1]तत्रापरिज्ञाता ह्रस्वा ह्रस्वोपजीविनः ॥ २१ ॥

आर्या म्लेच्छाश्च कौरव्य ! तैर्मिश्राः पुरुषा विभो ।

महानद्यः

नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् ॥ २२ ॥

गोदावरीं नर्मदां च बाहुदां च महानदीम् ।
शतद्रूं चन्द्रभागां च यमुनां च महानदीम् ॥ २३ ॥

दृषद्वतीं विपाशां च विपापां स्थूलवालुकाम् ।
नदीं वेत्रवतीं चैव कृष्णवेणीं च निम्नगाम् ॥ २४ ॥

इरावतीं वितस्तां च पयोष्णीं देविकामपि ।
वेदस्मृतां वेदवतीं त्रिदिवामिक्षुलामिलाम् ॥ २५ ॥

करीषिणीं चित्रवर्णां चित्रसेनां च निम्नगाम् ।
गोमतीं धूतपापां च [2]मदनां च महानदीम् ॥ २६ ॥

कौशिकीं त्रिदिवां कृत्यां निचितां लोहितारिणीम् ।
रहस्यां शतकुम्भां च सरयूं च नरेश्वर ! ॥ २७ ॥

चर्मण्वतीं वेत्रवतीं हस्तिसोमां दिशं तथा ।
शरावतीं पयोष्णीं च वेणां भीमरथीं तथा ॥ २८ ॥

कावेरीं कृष्णतारूपां तापीं शतबलीमपि ।
नीवीरामहितां चापि सुप्रयोगां नराधिप ! ॥ २९ ॥

---

[1] तत्र परि–क.   [2] वन्दनां–मु.

पवित्रां कुण्डलां सिन्धुं [1] वञ्जुलां पुरमालिनीम् ।
पूर्वाभिरामां वीरां च वेणां मेघावतीं तथा ॥ ३० ॥

पलाशिनीं पापहरां माहेन्द्रां पिप्पलावतीम् ।
[2] करीषिणीं सुलसां च सुरघां वारिमर्दिनीम् ॥ ३१ ॥

[3] पुरुहां प्रवरां मेनां [4] मेघां घृतवतीं तथा ।
पुरावतीमनुष्णां च [5] सुल्व्यां चार्विं च कौरव ! ॥ ३२ ॥

सदानीरामधृष्यां च [6] सुकुमारां महानदीम् ।
सदाकान्तां शिवां चैव तथा वीरवतीमपि ॥ ३३ ॥

हिरण्वतीं चित्रवहां चित्रसेनां च निम्नगाम् ।
रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् ॥ ३४ ॥

उपेन्द्रां बहुलां चैव कुबेरामम्बुवाहिनीम् ।
वैनदीं पिञ्जरां क्षीणां प्रवेणां च महानदीम् ॥ ३५ ॥

विदिशां कृष्णवेणीं च ताम्रां च कपिलामपि ।
शैलूषनाम्नीं वेदीं च हरिवासां महापगाम् ॥ ३६ ॥

शीघ्रां च विपुलां चापि भरद्वाजां च निम्नगाम् ।
कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्रकाम् ॥ ३७ ॥

दुर्गामतिशिलां चैव ब्रह्ममेध्यां रसावतीम् ।
विरजामधिरोहीं च तथा जम्बूनदीमपि ॥ ३८ ॥

सुनासां तमसीं दासीं सामन्यां वरणामसीम् ।
नीलां धृतकरां चैव पर्णाशां च महानदीम् ॥ ३९ ॥

मानवीं वृषभां चैव ब्रह्ममेधां बृहस्पतीम् ।
एताश्चान्याश्च बहुधा महानद्यो जनाधिप ! ॥ ४० ॥

---

[1] वञ्जरां [2] करीषिणीमसिक्नीं च कुशचीरां महानदीम्–पु. पा. [3] मकरीं–पु. पा. [4] हेमां–पु. पा. [5] शैब्यां कापीं च भारत–पु. पा. [6] कुशधारां–पु. पा.

सदानीरमयीं हृष्टां मन्दगां मन्दगामिनीम् ।
ब्रह्माणीं च [1]महागौरीं दुर्गामपि च भारत ! ॥ ४१ ॥

चित्रोपलां चित्ररथामुज्ज्वलां करवाहिनीम् ।
मन्दाकिनीं वैतरणीं कौशां चापि महानदीम् ॥ ४२ ॥

शुक्तीमतीं मरुत्तां च पुष्पवत्युत्पलावतीम् ।
रौहीत्यां करतोयां च तथैव वृषभङ्गिनीम् ॥ ४३ ॥

कुमारीमृषिकुल्यां च ब्रह्मकुल्यां च भारत ! ।
सरस्वतीं सुपुण्यां च सर्वगङ्गाश्च भारत ! ॥ ४४ ॥

विश्वस्य मातरः सर्वाः सर्वाश्चैव महाफलाः ।
तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः ॥ ४५ ॥

इत्येताः सरितो राजन् समाख्याता यथास्मृति ।

भारतवर्षीया जनपदाः

अत ऊर्ध्वं जनपदान्निबोध गदतो मम ॥ ४६ ॥

तत्रामी कुरुपाञ्चाला साल्वमाद्रेयजाङ्गलाः ।
[2]शूरसेनाः कुलिङ्गाश्च मौरा मौकास्तथैव च ॥ ४७ ॥

मत्स्याश्मकूटाः कौसल्याः कुन्तलाः काशिकोसलाः ।
चेदयश्च सकारूषा भोजाः सिन्धुपुलिन्दकाः ॥ ४८ ॥

उत्तमाश्च दशार्णाश्च मेखलाश्चोत्कलैः सह ।
पाञ्चालाः [3]काशिकाश्चैव [4]ह्येकपृष्ठा युगन्धराः ॥ ४९ ॥

गोधा माद्राः कलिङ्गाश्च काशयोऽपरकाशयः ।
कुकराश्चैव दाशार्णाः पिञ्जलाश्चैव भारत ! ॥ ५० ॥

---

[1] महासौरीं. [2] शूरसेनाः पुलिन्दाश्च बोधा मालास्तथैव च । मत्स्याः कुशल्या/सौशल्याः पन्तयः कान्तिकोसलाः चेदिमत्स्यकरूशाश्च–पु. पा. [3] कोशकाश्चैव–क. ग. [4] नैकपृष्ठा धुरन्तराः–पु. पा.

कुन्तयोऽवन्तयश्चैव तथैव वरकुन्तयः ।
गोमन्ता मन्दकाः पाण्ड्या विदर्भा रूपवाहिकाः ॥ ५१ ॥

अश्मकाः पांसुराष्ट्राश्च गोपराष्ट्राः कनीनकाः ।
आदिराष्ट्राः सुकुट्टाश्च मल्लराष्ट्रास्तु केरलाः ॥ ५२ ॥

[1] वनवास्या यवाक्षाश्च चक्राश्चक्रभयानकाः ।
विदेहा मलयाः सूक्ष्मा मलदा विजयास्तथा ॥ ५३ ॥

अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ।
मल्लाः सुधेष्णाः प्राह्लूतास्तथा महिषवर्षुकाः ॥ ५४ ॥

बाह्लीका वाटधानाश्च आभीराः कालतोयकाः ।
अपरान्ताश्च शूराश्च पह्लावाश्चर्ममण्डनाः ॥ ५५ ॥

अटवीशबराश्चैव मारुभूमाश्च भारत ! ।
उपावृत्तानुवृत्ताश्च सुरसाः केकयास्तथा ॥ ५६ ॥

कुन्ताः परान्ता द्वैपेयाः कक्ष्याः सामुद्रनिष्कुटाः ।
आन्ध्राश्च बहवो राजन् ! अन्तर्गिर्यास्तथैव च ॥ ५७ ॥

बहिर्गिर्या मलपदा मागधा मानवर्यदाः ।
अत्युत्तराः प्रावृषयो भार्गवाश्च जनाधिप ! ॥ ५८ ॥

पुण्ड्रा भार्गाः किराताश्च सुदष्टा यामुनास्तथा ।
शका निषादा निषधास्तथैवावन्तिनैर्ऋताः ॥ ५९ ॥

दुश्शूराः प्रतिमास्त्याश्च कुरटाः कुशलास्तथा ।
तीरग्राहाः शूरसेना रीजका रम्यकोङ्कणाः ॥ ६० ॥

तिलकाः पारशीकाश्च मधुमन्तः शकुन्तलाः ।
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा ॥ ६१ ॥

आभिसारा उलूकाश्च शैवला बहुकातराः ।
दर्विता उत्सवा दर्वा वलजा रणमारकाः ॥ ६२ ॥

[1] वारवन्यायवाहाश्च चक्राश्चक्रातयः शकाः–पु. पा.

बहुकाद्याश्च कौरव्याः सुदामानः सुवर्णकाः ।
दर्भाः करीशकाश्चैव कुलिन्दोपत्यकास्तथा ॥ ६३ ॥

वनायवो दशापार्श्वरोमाणः कुशबिन्दवः ।
कच्छा गोपालकच्छाश्च लाङ्गलाः [1] करपल्लवाः ॥ ६४ ॥

किराता बर्बराः सिद्धा विदेहास्ताम्रलिप्तकाः ।
[2] पुलिन्दपुण्ड्रसैरन्ध्राः पार्वतीयाश्च भारत ! ॥ ६५ ॥

भारतवर्षदक्षिणभागे विद्यमाना जनपदाः

अथापरे जनपदा दक्षिणे भरतर्षभ ! ।
द्राविडाः केरलाः प्राच्या मूषिका वनवासिनः ॥ ६६ ॥

कर्नाटका माहिषका विकल्पा मुषिकास्तथा ।
कर्णिकाः कुन्तलाश्चैव सौद्भिदानलकारिकाः ॥ ६७ ॥

कोकष्टिकास्तथा चोलाः कोङ्कणा मालवास्तथा ।
समाङ्गाः कोपनाश्चैव कुकुराङ्गारमाहिषाः ॥ ६८ ॥

त्र्यम्बकाः करकाः प्रेष्ठाः समवेगवशास्तथा ।
तथैव विन्ध्यपुलकाः पुलिन्दा वल्कलैः सह ॥ ६९ ॥

मालवा मल्लुकाश्चैव तथैवापरवर्णकाः ।
मूलकास्तरवालाश्च श्रुतिजाः पूर्वसृञ्जयाः ॥ ७० ॥
आदिदापाः शिरालाश्च सूचकास्तनयास्तथा ।

उत्तरभारतवर्षीयजनपदाः

उत्तराश्च परे म्लेच्छाः क्रूरा भरतसत्तम ! ॥ ७१ ॥

यवनाश्च सुखाम्भोजा दारुणा म्लेच्छजातयः ।
सक्षद्रुहाः कुन्तलाश्च हूणाः पारदगैः सह ॥ ७२ ॥

तथैव शमठाः स्विन्नास्तथैव दशमालिकाः ।
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ॥ ७३ ॥

[1] परपल्लवः–क. ग. कुरुवर्णकाः–पु. पा. [2] पुण्ड्राः पुण्ड्राश्च सौरन्ध्राः–क. ग.

शूद्राभीराश्च दरदाः काश्मीराः पशुभिः सह ।
[1] खशिकाश्च तुकाराश्च बहवो गिरिगह्वराः ॥ ७४ ॥

आत्रेयाश्च भरद्वाजास्तथैव स्तेनपोषकाः ।
औपकाश्च पुलिङ्गाश्च किराता नीचजातयः ॥ ७५ ॥

तोमरा हंसमार्गाश्च तथैव करभञ्जकाः ।
कुलिन्दाः कुलकाश्चैव तङ्गणाः पलतङ्गणाः ॥ ७६ ॥

एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ।
उद्देशमात्रेण मया देशाः सङ्कीर्तिता इमे ॥ ७७ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले सामान्यतो नदीदेशादिवर्णनं नाम प्रथमस्तरङ्गः

---

## द्वितीयस्तरङ्गः

देशा नाम्ना समाख्याताः कन्याद्वीपान्तरे स्थिताः ।
प्राधान्येनात्र के देशाः प्रसिद्धिं समुपागताः ॥ १ ॥

सर्वेषु तेषु देशेषु धर्मदेशाश्च कीदृशाः ? ।
तत्र के पर्वताः पुण्याः प्राधान्यं समुपागताः ? ॥ २ ॥

कैः पर्वतैः समुत्पत्तिः कासां वा सरितामभूत् ? ।
नदीषु तासु कासां वा प्राधान्यं पुण्यगौरवात् ? ॥ ३ ॥

एतत्सर्वं समाख्याहि गुरो ! विख्यातविक्रम ! ।
नन्दनाकर्णयस्वैतद्यच्छ्रोतुमभिकाङ्क्षसे ॥ ४ ॥

एते प्रधानदेशाः स्युः कन्याद्वीपान्तरस्थिताः ।

---

[1] खाशीराश्चान्तचाराश्च पह्लवा–पु. पा.

कन्याद्वीपस्थिताः प्रधानदेशाः

अङ्गा वङ्गाः कलिङ्गाश्च कर्नाटाश्चैव केरलाः ॥ ५ ॥

कामरूपाश्च गौडाश्च वनवासाश्च कुन्तलाः ।
कोङ्कणा मागधाश्चैव सुराष्ट्रा मालवास्तथा ॥ ६ ॥

[1] लाटा भोटा वराटाश्च शबराः कुकरास्तथा ।
कुरवोऽवन्तयः पाण्ड्या मद्रसिंहलघूर्जराः ॥ ७ ॥

पारशीकाश्च मिथिलाः पञ्चालाः शौरसेनयः ।
गान्धारा बाह्लिकाश्चैव तौलवाः साल्वपुण्ड्रकाः ॥ ८ ॥

प्राग्ज्योतिषाश्च मत्स्याश्च चेदयो बर्बरास्तथा ।
नेपालगौडकाश्मीराः कान्यकुब्जाश्च मागधाः ॥ ९ ॥

खुरसाणा महाराष्ट्राः कोसलाः केकयास्तथा ।
अहिच्छत्रास्त्रिलिङ्गाश्च प्रयागाः करहाटकाः ॥ १० ॥

काम्भोजाश्चैव भोजाश्च चोला हूणाश्च काशयः ।
षट्पञ्चाशदिमे देशाः प्रसिद्धिं समुपागताः ॥ ११ ॥

कन्याद्वीपस्थाः पर्वताः

कोलाहलश्च वैभ्राजो मन्दरो दर्दुराचलः ।
वाबन्धुमो वैद्युतश्च मैनाकः सुरसस्तथा ॥ १२ ॥

तुङ्गप्रस्थो नागगिरी रोचनः पाण्डराचलः ।
पुष्पाद्रिश्च जयन्तश्च रैवतः पाण्डुरेव च ॥ १३ ॥

ऋश्यमूकश्च गोमन्तः कुटशैलः कृतस्थलः ।
श्रीपर्वतश्च कोशश्च वाराहश्चित्रकूटकः ॥ १४ ॥

कुटजः शङ्खवर्णश्च महानागगिरिस्तथा ।
महेन्द्रमुख्याश्च तथा सप्तसङ्ख्याः कुलाचलाः ॥ १५ ॥
एतैर्मिश्रा जनपदा म्लेच्छाश्चार्याश्च भागशः ।

[1] लाटा इत्यादि सार्धश्लोकद्वयं क. पुस्तके नास्ति.

कन्याद्वीपस्था नद्यः—तत्र हिमवत्पादसम्भवाः

गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथा नदी ॥ १६ ॥

यमुना शतरूपा च वितस्तैरावती कुहूः ।
गोमती धूतपापा च बाहुदा च दृषद्वती ॥ १७ ॥

विपाशा देविका चक्षुर्निश्चला गण्डकी तथा ।
कौशिकी च महाभागा नदी कुशिकनन्दिनी ॥ १८ ॥

एताश्चान्याश्च शतशो हिमवत्पादनिस्सृताः ।

पारियात्रोद्भवा नद्यः

वेदस्मृतिर्देवनदी वृत्रघ्नी सिन्धुवल्लभा ॥ १९ ॥

सुवर्णा नादिनी चैव सदानीरा मही तथा ।
पराशा शृण्वती [1] लूयी विदशा वेत्रवत्यपि ॥ २० ॥
[2] सिप्रा ह्यवन्ती च तथा पारियात्रोद्भवा इमाः ।

ऋक्षपर्वतसञ्जाता नद्यः

शोणा च सरयूश्चापि नर्मदा सुरसा कृपा ॥ २१ ॥
मन्दाकिनी दशार्णा च चित्रकूटा तथापरा ।
चित्रोपला च तरसा करमोदा पिशाचिका ॥ २२ ॥

तथान्या पिप्पला शोणा विपापा वञ्जुला नदी ।
सरोजिनी शुक्तिमती [3] मालिनी त्रिदिवा क्रमात् ॥ २३ ॥
ऋक्षपर्वतसंजाता महानद्य इमाः स्मृताः ।

विन्ध्यपादसम्भवा नद्यः

शीघ्रा पयोष्णी निर्विन्ध्या निषधा वेगवाहिनी ॥ २४ ॥
वेणा वैतरणी चैव सिनीवाली कुमुद्वती ।
तोया चैव महागौरी दुर्गा चाम्भःशिवा तथा ॥ २५ ॥
विन्ध्यपादप्रसूतास्तु नद्यः पुण्यतमा इमाः ।

---

[1] लूपी—क. ग. [2] शुभ्रा—क. सृप्या—ग. [3] मंकिनी—क. ग.

सह्यपादसम्भवा नद्यः

गोदावरी भीमरथी कृष्णवेणी तथा परा ॥ २६ ॥

तुङ्गभद्रा सुप्रयोगा वाही कावेर्यथाम्बिका ।
चण्डिका च तथा दिव्या पश्चिमार्णवगामिनी ॥ २७ ॥

सह्यपादविनिष्क्रान्ता इत्येताः सरिदुत्तमाः ।

मलयपर्वतजाता नद्यः

कृतमाला ताम्रपर्णी पुष्पजातिस्तथोत्पला ॥ २८ ॥
मलयाद्रिसमुद्भूता नद्यः शिवजला इमाः ।

महेन्द्रपर्वतजाता नद्यः

इक्षुदा पितृसोमा च त्रिदिवा वंशकारिका ॥ २९ ॥
ऋषिकुल्या चाङ्कुली च महेन्द्रप्रभवा इमाः ।

शुक्तिमत्पर्वतसम्भवा नद्यः

ऋषिकुल्या कुमारी च मन्दगा मन्दवाहिनी ॥ ३० ॥

कृपा पलाशिनी चैव शुक्तिमत्पादनिस्सृताः ।
विश्वस्य मातरः सर्वाः सर्वपापहरा इमाः ॥ ३१ ॥

अन्याः सहस्रशः सन्ति क्षुद्रनद्योऽल्पवारयः ।
प्रावृट्काले प्रवाहाश्च गिरिगह्वरगोचराः ॥ ३२ ॥

वासयोग्या धर्मदेशाः

धर्मदेशमथेदानीं वासयोग्यं वदामि ते ।
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥ ३३ ॥

तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ।
कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शौरसेनयः ॥ ३४ ॥

एष ब्रह्मर्षिदेशोऽयमार्यावर्तादनन्तरः ।
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ॥ ३५ ॥

प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ।
आसमुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् ॥ ३६ ॥

तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ।
ब्रह्मावर्तः परो देशः ऋष्यावर्तस्त्वनन्तरः ॥ ३७ ॥

मध्यदेशास्ततो न्यून आर्यावर्तस्त्वनन्तरः ।
कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा ॥ ३८ ॥

समृद्धो धर्मदेशः स्यादाश्रयेरन्विपश्चितः ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ ३९ ॥

निवासो न विना पुण्यैर्नराणामिह जायते ।
जितामित्रो नृपो यत्र बलवान् धर्मतत्परः ॥ ४० ॥

तत्र नित्यं वसेत्प्राज्ञः कुतः कुनृपतौ सुखम् ।
पौराः सुसंयता यत्र सततं न्यायवर्तिनः ॥ ४१ ॥

यत्रामत्सरिणो लोकास्तत्र वासः सुखोदयः ।
यस्मिन् कृषीवला राष्ट्रे प्रायशो नातिभोगिनः ॥ ४२ ॥

यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ।
[1]ध्रियमाणा नरा यत्र प्रयच्छेयुरयाचितम् ॥ ४३ ॥

स्वस्थचित्तो [2]वसेत्तत्र कृतकृत्य इवात्मवान् ।
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ॥ ४४ ॥

सदैव तत्र निवसेद्धर्मशीलेषु साधुषु ।
धनिकः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः ॥ ४५ ॥

पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ।
कीकटेष्वपि देशेषु यत्र माहेश्वरो जनः ॥ ४६ ॥

मनाक् प्रपन्नो निवसेत् काशीक्षेत्रसमं हि तत् ।
यस्मिन् देशे वसेन्नित्यं शिवभक्तः क्षमान्वितः ॥ ४७ ॥

---

[1] प्रीयमाणा:-मु. पा.   [2] भवेत्तत्र-क.

सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः ।
चण्डालवाटिकायां वा शिवभक्तः स्थितो यदि ॥ ४८ ॥

तच्छ्रेणिः शिवलोकः स्यात् तद्गृहं शिवमन्दिरम् ।
रुद्राध्यायी वसेद्यत्र ग्रामे वा नगरेऽपि वा ॥ ४९ ॥

न तत्र क्षुत्पिपासाद्या दुर्भिक्षं व्याधयोऽपि वा ।

## त्रयोविंशतिर्वैष्णवानि पुण्यक्षेत्राणि

अथाष्टषष्ठिक्षेत्राणि पुण्यानि कथयामि ते ॥ ५० ॥

सालग्रामं कुरुक्षेत्रं प्रयागं पद्मनाभकम् ।
पुण्डरीकं माधवं च काञ्ची च पुरुषोत्तमम् ॥ ५१ ॥

बृन्दावनं च श्रीरङ्गं वेदपादनगस्तथा ।
द्वारका च तथाऽयोध्या सह्यपर्वत एव च ॥ ५२ ॥

श्रीपतिश्च तथा पुत्र ! नैमिशं कुरुजाङ्गलम् ।
सिंहामलकशैलाख्यमहोबलमतः परम् ॥ ५३ ॥

गारुडं चैव गोपालं कोकाख्यं मधुराख्यकम् ।
वैष्णवेषूत्तमं क्षेत्रं त्रयोविंशतिसंज्ञकम् ॥ ५४ ॥

## शिवक्षेत्राणि

सेतुर्गोकर्णवाल्मीके गजारण्यं गया तथा ।
वृद्धाचलं चाभ्रसभा वातापिक्षेत्रमेव च ॥ ५५ ॥

अगस्त्यभास्करक्षेत्रेऽगस्त्यनाथाख्यमेव च ।
सोमेश्वरश्च भीमेशः कुरुक्षेत्रारुणाचले ॥ ५६ ॥

जप्येश्वरं कुम्भघोणं नैमिशारण्यमेव च ।
वेदारण्यं कालहस्ती कमलालय एव च ॥ ५७ ॥

मध्यार्जुनं विरूपाक्षं श्वेतारण्यं हलाहलम् ।
केदारं भद्रपादश्च काशी चैव त्रियम्बकम् ॥ ५८ ॥

वैयाघ्रपादं साम्बाख्यं पुष्करं स्थाणुसंज्ञकम् ।
शिवगङ्गा महारण्यं रुद्रकोटिर्हरालयम् ॥ ५९ ॥

श्रीशैलक्षेत्रमित्यादिशिवक्षेत्राण्यनेकशः ।
क्षेत्राण्येतानि वसतां भुक्तिमुक्तिप्रदानि वै ॥ ६० ॥

शक्तिपीठानि

वारणास्यां विशालाक्षी मीनाक्षी मधुरापुरे ।
काञ्चीपुर्यां च कामाक्षी लङ्कायामपि शङ्करी ॥ ६१ ॥

महालक्ष्मीः कोल्लपुरे कन्याकुब्जे च कुब्जिका ।
जालन्धरे महादेवी सिंहले सिंहकेश्वरी ॥ ६२ ॥

पर्वते पार्वती चक्रवाट्यां माणिक्यदेविका ।
उज्जयिन्यां महाकाली हिमाद्रौ हिमरूपिणी ॥ ६३ ॥

श्रीशैले भ्रमराम्बा च विन्ध्याद्रौ विन्ध्यवासिनी ।
सुमेता सुप्रभा देवी योगिनी योगिनीपुरे ॥ ६४ ॥

काले च काद्रवेयाख्या पूर्णक्षेत्रे च पूर्णिका ।
एवमादीनि शक्तीनां पीठानि सुबहून्यपि ॥ ६५ ॥

स्कन्दपर्वतास्त्रयः

स्कन्दाचलः कुमाराद्रिर्हेमकूटस्तथैव च ।
एते स्कन्दा महापुण्या ब्रह्मवर्चसदास्त्रयः ॥ ६६ ॥

भैरवस्थानानि पञ्च

जम्बीरशोण[1]नादाख्यो गोमन्त्याख्यमतः परम् ।
महीषाख्यनगश्चैव पञ्चमो द्रोणपर्वतः ॥ ६७ ॥

एते वै भैरवस्थानाः सर्वानुष्ठानसिद्धिदाः ।

[1] नागाख्यो—क.

पुण्यारण्यभूमयः

चम्पका नैमिशा चैव दण्डका च गुहाह्वया ॥ ६८ ॥

द्वैपायनीया बदरी कदलीति तथाष्टमी ।
एते पुण्यतमा लोके ह्यरण्याः पुण्यसंज्ञकाः ॥ ६९ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले प्रधानदेशशैलतीर्थक्षेत्रवर्णनं नाम द्वितीयस्तरङ्गः

———

## तृतीयस्तरङ्गः

अवादिषत देशानां नदीनामप्यनेकशः ।
तत्रत्यपुण्यदेशानां तीर्थक्षेत्रभुवामपि ॥ १ ॥

श्रीमद्भिर्नामतो भेदाः क्रमादेषां पृथक् पृथक् ।
के के नृपाः कदा क्षोणीमेनां प्रागशिषन्विभो ! ॥ २ ॥

एतन्मह्यं समाचक्ष्व यद्यस्त्यस्मिन् जने दया ।
भो पुत्र ! चित्रमेतत्ते ब्रवीम्यवहितः शृणु ॥ ३ ॥

सूर्यवंशसम्भूतिः

ब्रह्मणोऽभून्मरीचिस्तु तस्माज्जातोऽथ कश्यपः ।
तस्माद्विवस्वांस्तस्माच्च वैवस्वतमनुर्महान् ॥ ४ ॥

तमारभ्य च राजानो बुधान्ताः क्ष्मामपालयन् ।

चन्द्रवंशसम्भूतिः

उदितः सूर्यवंशोऽयं चन्द्रवंशोऽथ कथ्यते ॥ ५ ॥

ब्रह्मणोऽत्रिः समुत्पन्नस्तस्माच्चन्द्रस्ततो बुधः ।
तस्मात्पुरूरवा जात एवमाजनमेजयात् ॥ ६ ॥

विक्रान्तिभाजो राजानो गोपायन्ति स्म भूतलम् ।
उभयेऽमी च राजन्या भव्यकीर्तिपराक्रमाः ॥ ७ ॥

शकाधिपतयः सन्तो रक्षन्ति स्मातिधार्मिकाः ।
पुत्र! त्वं शृणु सम्यक्तान् कथयामि यथाक्रमम् ॥ ८ ॥

कालेषु केषुचित्तत्र केचिदेव महीभृतः ।

### कालभेदवर्णनम्

तं कालभेदं दुर्ज्ञेयमादौ ते वर्णये शृणु ॥ ९ ॥

तीक्ष्णसूच्याब्जपुष्पस्य दलभेदस्त्रुटिर्भवेत् ।
तच्छतं लव इत्युक्तं तत्त्रिंशच्च निमेषकः ॥ १० ॥

निमेषश्चाष्टविंशत्या कालो गुर्वक्षरः स्मृतः ।
दशगुर्वक्षरोच्चारकालः प्राणोऽभिधीयते ॥ ११ ॥

षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता ।
नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते ॥ १२ ॥

पञ्चघ्नैस्त्रिदिनैः पक्षः पक्षौ द्वौ मास इष्यते ।
ऋतुर्मासद्वयं तत्र त्रिभिस्तैरयनं स्मृतम् ॥ १३ ॥

तद्द्वयं वत्सरश्चैव नवभेदो महामुने!

### नव वत्सरभेदाः

ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं गुरोस्तथा ॥ १४ ॥
सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव ।

### मानविभागः

तेषां विभागमपि मे निबोध मुनिपुङ्गव! ॥ १५ ॥

दर्शावधिं मासमुशन्ति चान्द्रं
सौरं तथा भास्करराशिभेदात् ।
त्रिंशद्दिनं सावनमाहुरार्याः
नाक्षत्रमिन्दोर्भगणभ्रमैश्च ॥ १६ ॥

निखिलग्रहचारश्च सङ्क्रान्तेः कालनिर्णयः ।
दिनरात्रिप्रमाणं च सौरमानेन गृह्यते ॥ १७ ॥

वृद्धेर्विधानं स्त्रीगर्भे मृतिसूतकनिर्णयः ।
ग्रहाणां मध्यमा भुक्तिः सावनेनैव गृह्यते ॥ १८ ॥

भचक्रभ्रमणं मेघगर्भो नक्षत्रमानतः ।
उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् ॥ १९ ॥

तिथिपर्वादि निखिलं चान्द्रमानेन गृह्यते ।
उदेति यस्मिन्नक्षत्रे प्रवासोपगतो गुरुः ॥ २० ॥

तस्मात्संवत्सरो [1] मासाद्बार्हस्पत्यः प्रगण्यते ।
कार्तिकादिसमा ज्ञेया द्विद्विनक्षत्रचारिणः ॥ २१ ॥

त्रिभिर्भाद्रपदं ज्ञेयं फाल्गुनाश्वयुजौ तथा ।

संवत्सरः

यदा माघस्य शुक्लस्य प्रतिपच्चोत्तरायणम् ॥ २२ ॥

[2] सहोदयः श्रविष्ठाभिः सोमार्कौ प्रतिपद्यतः ।
प्रथमः सोऽग्निदैवत्यो नाम्ना संवत्सरः स्मृतः ॥ २३ ॥

परिवत्सरः

यदा माघस्य शुक्लस्य त्रयोदश्यामुदग्रविः ।
युक्ते चन्द्रमसा रौद्रे वासवं प्रतिपद्यते ॥ २४ ॥

द्वितीयः सोऽर्कदैवत्यः प्रोच्यते परिवत्सरः ।

इदावत्सरः

कृष्णे मांघस्य दशमी वासवादौ दिवाकरे ॥ २५ ॥

चान्द्रं तृतीयं सम्प्राहुरिदावत्सरकं बुधाः ।

---

[1] मासो बार्हस्पत्यः—ग.   [2] सहोदयप्रविष्ठाभिः—मु. पा.

अनुवत्सरः

सप्तमीं माघशुक्लस्य वासवादौ दिवाकरे ॥ २६ ॥
चतुर्थमिन्द्रदैवत्यं तमाहुरनुवत्सरम् ।

इद्वत्सरः

यद्युत्तरायणं कृष्णे चतुर्थ्यां तपसो भवेत् ॥ २७ ॥
इद्वत्सरः स विज्ञेयः पञ्चमो मृत्युदैवतः ।
नियतं पञ्चमस्यान्ते तथैव स्यात्सहोदयः ॥ २८ ॥

युगविभाजकमानानि

सावनं चापि सौरं च नाक्षत्रं चान्द्रमेव च ।
चत्वार्येतानि मानानि यैर्युगं प्रविभज्यते ॥ २९ ॥

दिव्यमानेन विभागः

मासैर्द्वादशभिर्वर्षं दैवं तदह उच्यते ।
सुरासुराणामन्योन्यमहोरात्रयोर्विपर्ययः ॥ ३० ॥

मानुषेणैव मानेन पितॄणां दिनमेककम् ।
शतत्रयेण वर्षाणां षष्ट्या च द्विजसत्तम ! ॥ ३१ ॥

मनुष्यसङ्ख्यया वर्षो देवानामिह गण्यते ।
इति दिव्येन मानेन चतुर्युगविकल्पनम् ॥ ३२ ॥

दिव्य—कृतयुगाब्दाः

[1] चत्वारि तु सहस्राणि युगानां कृतमुच्यते ।
तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३३ ॥

दिव्य—त्रेतायुगाब्दाः

[2] सहस्रत्रितयं दैवं त्रेतायुगमुदाहृतम् ।
तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३४ ॥

---

[1] ४०००+४००+४०० = ४८००. [2] ३०००+३००+३०० = ३६००.

दिव्य—द्वापरयुगाब्दाः

[1]सहस्रद्वितयं दैवं वर्षाणां द्वापरं स्मृतम् ।
तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३५ ॥

दिव्य—कलियुगाब्दाः

[2]कलिः सहस्रवर्षं तु दिव्याब्दानां द्विजर्षभ ! ।
तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३६ ॥

दिव्य—चतुर्युगाब्दाः

[3]तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम् ।

दिव्य—मन्वन्तरम्

तेषां च सप्ततिः सैका मन्वन्तरमिहोच्यते ॥ ३७ ॥

इत्थं युगसहस्रेण भूतसंहारकारकः ।
कल्पो ब्राह्ममहः प्रोक्तः तावती तस्य शर्वरी ॥ ३८ ॥

परमायुश्शतं तस्य तथाहोरात्रसङ्ख्यया ।
इति दैवेन मानेन युगादिपरिकल्पना ॥ ३९ ॥

मानुषमानेन कृतादिविभागः

मानुषेणाथ मानेन तेषां क्लृप्तिरिहोच्यते ।
[4]खखाभ्रवसुनेत्राद्रिशशिनः कृतवत्सराः ॥ ४० ॥

[5]त्रेताभ्रखखर्तुवङ्कलोचनेन्दुः स कथ्यते ।
[6]द्वापराब्दा वियत्पूर्णपूर्णाब्धिरसकुञ्जराः ॥ ४१ ॥

[7]कलिसंवत्सराः पूर्णव्योमाभ्राद्वित्रिसागराः ।

---

[1] २०००+२००+२००=२४००. [2] १०००+१००+१००=१२००.
[3] १२०००. [4] ४८००×३६०=१७२८०००. [5] ३६००×३६०=१२९६०००.
[6] २४००×३६०=८६४०००. [7] १२००×३६०=४३२०००.

[1] महायुगाब्दाः पूर्णाभ्र[2]चतुष्काद्वित्रिसागराः ।
[3](महायुगैर्महीशैलैर्मनुः, तैरर्णवेन्दुभिः) ॥ ४२ ॥

*अहः पद्मोद्भवस्योऽक्तं निशाप्येतावती मता ।
दिनैस्तैस्त्रिंशता मासस्तेऽब्दो द्वादश ते शतम् ॥ ४३ ॥

ब्रह्मणः परमायुस्तदिति शास्त्रविनिश्चितम् ।

### मन्वादिसन्धयः

[4] खखाभ्रगजनेत्राद्रिचन्द्राः सन्धिर्मनोः स्मृतः ॥ ४४ ॥

[5] खसप्तद्वित्रिवार्धिश्च कल्पकालः प्रकीर्तितः ।
[6] खचतुष्कं च नेत्राद्रिः कल्पसन्धिः प्रकीर्तितः ॥ ४५ ॥

[7] खत्रयं गजनागाक्षि कृतसन्धिप्रमाणकम् ।
[8] खत्रयं ऋतुचन्द्राक्षि त्रेतासन्धिः प्रकीर्तितः ॥ ४६ ॥

[9] खत्रयं [10]गतिवेदा[ब्जा] द्वापरे सन्धिसंज्ञकम् ।
[11] खत्रयं नेत्रशैलाश्च कलिसन्धिः प्रकीर्तितः ॥ ४७ ॥

### कृते नृपतयः

हरिश्चन्द्रो नलो राजा पुरुकुत्सः पुरूरवाः ।
सगरः कार्तवीर्यश्च कृताख्ये शकभूभृतः ॥ ४८ ॥

### तेषां वत्सराः

[12] खत्रयं वसुनागाक्षि हरिश्चन्द्रस्य वत्सराः ।
[13] तथैव तु नले राज्ञि शककालः प्रकीर्तितः ॥ ४९ ॥

---

[1] १२००० × ३६० = ४३२००००. [2] व्योमखद्वित्रि इति स्यात्. [3] महाशैलैरिति मातृकापाठः, [3] ४३२०००० × ७१ = ३०६७२००००. * ३०६७२०००० × १४ = ४२९४०८००००. [4] १७२८०००. [5] ४३२००००००००. [6] ७२००००. [7] २८८०००. [8] २१६०००. [9] १४४०००. [10] गतिवेदाश्चेति मातृकापाठः. [11] ७२०००. [12] २८८०००. [13] २८८०००.

[1] खत्रयं च खराद्र्याक्षि पुरुकुत्सस्य कीर्तितः ।
[2] खत्रयं नागवार्ध्यक्षि पुरूरवस ईरितः ॥ ५० ॥

[3] खत्रयं गजनागाक्षि सगरस्य प्रकीर्तितः ।
[4] खत्रयं गजवेदाक्षि कार्तवीर्यस्य वत्सराः ॥ ५१ ॥

त्रेतायां शकनृपतयः

मान्धाता च दिलीपश्च रघुराजोऽज एव च ।
तथा दशरथो रामस्त्रेतायां शकभूभृतः ॥ ५२ ॥

तेषां वत्सराः

[5] खत्रयं शैलऋत्वब्धिर्मान्धातुश्च प्रकीर्तितः ।
[6] खत्रयं रसचन्द्राग्निर्दिलीपस्य शकः स्मृतः ॥ ५३ ॥

[7] खत्रयं च रसेन्द्वक्षि रघोः संवत्सरास्तथा ।
[8] त्रिपूर्णखररूपाक्षीण्यजभूमिपतेः समाः ॥ ५४ ॥

[9] चतुश्शून्यं कुमारास्यं दशस्यन्दनवत्सराः ।
[10] खत्रयं चन्द्ररूपं च रामचन्द्रस्य वत्सराः ॥ ५५ ॥

द्वापरे शकनृपतयः

ययातिर्नहुषश्चैव दुष्यन्तः शन्तनुस्तथा ।
चित्रवीर्यश्च पाण्डुश्च द्वापरे शकभूभृतः ॥ ५६ ॥

तेषां वत्सराः

[11] खत्रयं रसरूपाक्षि ययातेः शकवत्सराः ।
[12] खत्रयेभेन्दुरूपाणि नहुषस्य तु वत्सराः ॥ ५७ ॥

---

[1] २७६०००. [2] २४८०००. [3] २८८०००. [4] २४८०००. [5] ४६७०००. [6] ३१६०००. [7] २१६०००. [8] २१६०००. [9] ६००००. [10] ११०००. [11] २१६०००. [12] ११८०००.

[1] खत्रयं रसनेत्रेन्दुर्दुष्यन्तस्य तु वत्सराः ।
[2] खत्रयं गतिनेत्रेन्दुः शन्तनोर्वत्सराः स्मृताः ॥ ५८ ॥

[3] चतुःपूर्णं गतीन्दूच चित्रवीर्यस्य वत्सराः ।
[4] तथैव पाण्डुनृपतेर्द्वापरे वत्सराः स्मृताः ॥ ५९ ॥

कलौ शकनृपतयः

युधिष्ठिरो विक्रमशालिवाहनौ
ततो नृपः स्याद्विजयाभिनन्दनः ।
क्रमेण नागार्जुनभूपतिः कलिः
कलौ युगे षट्छकसंज्ञकाः स्मृताः ॥ ६० ॥

तेषां वत्सराः

[5] गतिवेदाश्च शून्याग्निर्युधिष्ठिरशकः स्मृतः ।
[6] पञ्चाग्निचन्द्रसङ्ख्याका विक्रमे शकवत्सराः ॥ ६१ ॥

[7] खत्रयं नागरूपे च शालिवाहस्य वत्सराः ।
[8] खचतुष्केन्दुवर्षाणि शको विजयनन्दने ॥ ६२ ॥

[9] खपञ्चकं गतियुतं नागार्जुनशकः स्मृतः ।
[10] रूपाक्षिनागसङ्ख्याकः कलेः शक उदाहृतः ॥ ६३ ॥

षट्चक्रवर्तिनः

हरिश्चन्द्रो नलो राजा पुरुकुत्सः पुरूरवाः ।
सगरः कार्तवीर्यश्च षडेते चक्रवर्तिनः ॥ ६४ ॥

महाराजाः

[11] गयोऽम्बरीषः शशिबिन्दुरङ्गदः
पृथुर्मरुत्तो भरतः सुहोत्रः ।
रामो दिलीपः शिबिरन्तिदेवौ
ययातिमान्धातृभगीरथाश्च ॥ ६५ ॥

---

[1] १२६०००. [2] १२४०००. [3] १४००००. [4] १४००००. [5] ३०४४. [6] १३५. [7] १८०००. [8] १००००. [9] ४०००००. [10] ८२१. [11] एवमेव मातृकापाठः.

एते षोडश सङ्ख्याका महाराजाः प्रकीर्तिताः।
चतुर्वर्णाश्रमाचारान् पालयन्तो यथाक्रमम् ॥ ६६ ॥

सर्वे ते क्षत्रधर्मेण रक्षन्ति स्म महीमिमाम्।
कार्तिके शुक्लनवमी तृतीया माधवेऽमला ॥ ६७ ॥

माघे दर्शो नभस्ये तु कामरात्रिर्युगादयः।

युगभेदेनानुष्ठेया धर्माः

तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ॥ ६८ ॥

द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः।
[1] त्रेतायामाब्दिको धर्मो द्वापरे मासिकः स्मृतः ॥ ६९ ॥
यथाशक्ति चरेत्प्राज्ञस्तदह्ना प्राप्नुयात्कलौ।

युगभेदेन सेव्यानि क्षेत्राणि

पुष्करं तु कृते सेव्यं त्रेतायां नैमिशं तथा ॥ ७० ॥
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत्।

युगभेदेन धर्मशास्त्रप्राशस्त्यम्

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ॥ ७१ ॥
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।

युगभेदेन प्राणाश्रयस्थानानि

कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः ॥ ७२ ॥
द्वापरे रक्तमापन्नाः कलावन्नं समाश्रिताः।

युगभेदेन गर्भोत्पत्तिः

गर्भो भवेत्कृते स्मृत्वा त्रेतायां दृष्टिमात्रतः ॥ ७३ ॥
द्वापरे स्पर्शनाद्गर्भः कलौ संसर्गमात्रतः।

---

[1] एवमेव मातृकापाठः, कृते च दशभिर्वर्षैरिति योजनीयम्।

युग............दानप्रकारः

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ॥ ७४ ॥
द्वापरे याचमानाय सेवया दीयते कलौ ।

कलौ शङ्करनामकीर्तनस्य प्राशस्त्यम्

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ ७५ ॥
यदाप्नोति तदाप्नोति कलौ संकीर्त्य शङ्करम् ।

युगाधिपाः

कृतत्रेताधिपो विष्णुर्द्वापरे पद्मजोऽधिपः ॥ ७६ ॥
कलौ रुद्रोऽधिपः प्रोक्तो युगानामीश्वराः क्रमात् ।

चतुस्त्रिद्व्येकपादाढ्यो धर्मः कृतयुगादिषु ॥ ७७ ॥
आयुष्यं च तथा प्राज्ञैः प्राणिनां निश्चितं शतम् ।

मनुष्यादीनामायुःप्रमाणम्

शतमायुर्मनुष्याणां द्विशतं चैव रक्षसाम् ॥ ७८ ॥
सहस्रं काकफणिनां षट्त्रिंशन्मृगपक्षिणाम् ।

व्याघ्राणां च चतुष्षष्टिः शतं केसरिदन्तिनाम् ॥ ७९ ॥
भल्लूकानां वानराणां मण्डूकानां शतत्रयम् ।

द्वात्रिंशत्तु तुरङ्गाणां खराणां पञ्चविंशतिः ॥ ८० ॥
लुलायानां तथोष्ट्राणां चतुर्विंशतिसम्मितम् ।

षोडशाजाविकानां तु शुनां द्वादशसम्मितम् ॥ ८१ ॥
हंसानां पञ्चदशकं कुक्कुटानां समाष्टकम् ।

कपोतानां पञ्चदश बर्हिणां विंशतिस्तथा ॥ ८२ ॥
मार्जारशशकादीनामायुर्द्वादश वत्सराः ।

मत्स्यकच्छपनक्राणां जलूकानां च विंशतिः ॥ ८३ ॥
मक्षिकामशकानां च मत्कुणानां त्रिमासकम् ।

स्वेदजक्रिमिदंशानां षण्मासा आयुरुच्यते ॥ ८४ ॥
बभ्रुमूषकपल्लीनां सरटानां दशाब्दकम् ।

जीवेत्पिपीलिका वर्षमित्थमायुर्विनिश्चयः ॥ ८५ ॥
एतच्च द्वापरत्रेताकृतसंज्ञे युगत्रये ।

उत्तरोत्तरमेव स्यादुक्ताद्द्वित्रिचतुर्गुणम् ॥ ८६ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले युगकल्पव्यवस्था शकाधिपति षोडशमहाराजादिवर्णनं नाम तृतीयस्तरङ्गः

---

## अथ चतुर्थस्तरङ्गः

स्वामिन् शकाधिपतयो महाराजाश्च षोडश ।
चतुर्वर्णाश्रमाचारान् [1] बहुधा प्रत्यपालयन् ॥ १ ॥

इत्याज्ञप्तमभूत्पूर्वं वर्णाः के? ते चतुर्विधाः ।
आश्रमाश्च तदाचाराः कीदृशाः ? कथयस्व तान् ॥ २ ॥

येषां तु पालनं राज्ञां मुख्यधर्म इतीरितम् ।
कुमार! तान्वयं ब्रूमो निश्श्रेयसविधायकान् ॥ ३ ॥

### चत्वारो वर्णाः

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चत्वार एव ते ।
वर्णा इति समाख्याता एतेषां ब्राह्मणोऽधिकः ॥ ४ ॥

### ब्राह्मणस्य कर्माणि

अध्यापनं चाध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चेति कर्माणि ब्राह्मणस्य षट् ॥ ५ ॥

### क्षत्रियधर्माः

प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
रक्षणं सर्ववर्णानां युद्धे शत्रुवधस्तथा ॥ ६ ॥

---

[1] पृथिव्यां—ग.

दुष्टपक्षिमृगाणां च दुष्टानां शासनं नृणाम् ।
अविश्वासश्च सर्वत्र चमूरक्षणमेव च ॥ ७ ॥

सदा संचारितैश्चारैर्लोकवृत्तान्तवेदनम् ।
सदास्त्रभरणं चैव राज्ञां धर्मः सनातनः ॥ ८ ॥

वैश्यधर्माः

पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वाणिज्यं च कुसीदं च वैश्यस्य कृषिरेव च ॥ ९ ॥

वाणिज्यकर्मोपयोगिमानानि

त्रिविधानि तु मानानि विशां वाणिज्यकर्मणि ।
तत्र साधनभूतानि निरूप्यन्ते क्रमादिह ॥ १० ॥

अङ्गुल्या तुलया चैव प्रस्थेनेति त्रिधा हि तत् ।

अङ्गुलिमानम्

तिर्यग्यवोदराण्यष्टावूर्ध्वा हि व्रीहयस्त्रयः ॥ ११ ॥

प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ।
[1] वितस्ती द्वे अरत्निः स्यात्चतुर्हस्तं भवेद्धनुः ॥ १२ ॥
इत्यङ्गुलिसमुद्भूतं प्रमाणं समुदाहृतम् ।

तुलामानम्

दशार्धगुञ्जाः प्रवदन्ति माषं
माषैस्तथा षोडशभिस्तु निष्कम् ।
निष्कैश्चतुर्भिःपलमाद्यकं स्यात्
शतं पलानां च तुलां वदन्ति ॥ १३ ॥

विंशतिस्तु तुला भारं प्रवदन्ति मनीषिणः ।
तोलनस्य परिज्ञाने तुलामानमिदं मतम् ॥ १४ ॥

---

[1] वितस्तिद्वयरत्निः-ग.

प्रस्थादिमानम्–(मागधम्)

सहस्रं स्यान्मुष्टिमितं द्विमुष्टिं प्रसृतिं विदुः ।
प्रसृत्योर्द्वितयं चैव ह्यञ्जलिः कथ्यते बुधैः ॥ १५ ॥

अञ्जलिद्वितयं चैव कुडुवं परिकीर्तितम् ।
चतुर्भिः कुडुवैः प्रस्थस्तैश्चतुर्भिस्तथाढकम् ॥ १६ ॥

चतुर्भिराढकैर्द्रोणं पञ्चभिस्तैस्तु खारिका ।
मागधं मानमित्युक्तं मानविद्भिस्तु पण्डितैः ॥ १७ ॥

दशाङ्गुलोच्छ्रितं मानं विस्तृतं पञ्चभिस्तु यत् ।
विज्ञेयः पुरुषाहारश्चतुर्भिः कुडुवस्तु तैः ॥ १८ ॥
इति मानं समुद्दिष्टं धान्यनिष्क्रयसाधनम् ।

उत्तरदेशीयं मानम्

वराटिकानां दशकद्वयं यत्
सा काकिनी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्ममिहावगम्यं
द्रम्मैस्तथा षोडशभिश्च निष्कः ॥ १९ ॥

तुल्या यवाभ्यां कथितात्र गुञ्जा
वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ ।
गद्याणकस्तद्द्वयमिन्द्रतुल्यैः
वल्लैस्तथैको घटकः प्रदिष्टः ॥ २० ॥
एतत्पद्यद्वयेनोक्तं मानमुत्तरदेशजम् ।

कर्षणोपकरणानि

योक्त्रं दामापि शकटं [1]कुन्त्रिका हलवाहिका ॥ २१ ॥
लवित्रं पालिका चैव कर्षोपकरणं विदुः ।

---

[1] कुन्ताकाहलवाहिका–ग,

कृषेः प्रधानानि साधनानि

अनड्वान् धान्यवृष्टी च सुभूमिश्च चतुष्टयम् ॥ २२ ॥

कृषेः प्राधान्यकं चैतदेकहीना न वै कृषिः ।
इति वैश्योचिता धर्माः ससाधनमुदीरिताः ॥ २३ ॥

शूद्रधर्माः

शुश्रूषणं द्विजगवां देवानां चाप्यमायया ।
तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः ॥ २४ ॥

चत्वार आश्रमाः

प्रथमस्त्वाश्रमाणां च व्रती गुर्वग्निसेवकः ।
गृही द्वितीयो वनगस्तृतीयः कृच्छ्रसाधनः ॥ २५ ॥

चतुर्थो भिक्षुरुद्दिष्टः सर्वसङ्गविवर्जितः ।

ब्राह्मणादीनामुपनयनकालः

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ॥ २६ ॥

आषोडशाब्दपर्यन्तं कालमाहुश्च गौणकम् ।
गर्भादेकादशेऽब्दे तु राजन्यस्योपनायनम् ॥ २७ ॥

आद्वाविंशतिपर्यन्तं कालमाहुर्विपश्चितः ।
विशश्चोपनयः प्रोक्तो गर्भद्वादशके तथा ॥ २८ ॥

चतुर्विंशाब्दपर्यन्तं [1]कालो गौणः प्रकीर्तितः ।

उपनयनकालातिक्रमे प्रायश्चित्तम्

एतत्कालावधिर्यस्य द्विजस्यातिक्रमेत वै ॥ २९ ॥

सावित्रीपतितं विद्यान्नालपेत्तं कदाचन ।
द्विजोपनयने विप्राः! मुख्यकालव्यतिक्रमे ॥ ३० ॥

द्वादशाब्दं चरेत् कृच्छ्रं पश्चाच्चान्द्रायणं तथा ।
सान्तपद्वितयं कृत्वा यथाकर्म समाचरेत् ॥ ३१ ॥

---

[1] कालमाहुर्विपश्चितः—क. ग.

### विप्रादीनामुपवीतम्

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् ॥ ३२ ॥

### मौञ्जी

मौञ्जी विप्रस्य विज्ञेया धनुर्ज्या क्षत्रियस्य तु ।
आविर्वैश्यस्य विज्ञेया, शृणुध्वमजिनं तथा ॥ ३३ ॥

### अजिनम्

विप्रस्य प्रोक्तमैणेयं रौरवं क्षत्रियस्य तत् ।
आजं वैश्यस्य विज्ञेयं, दण्डान्वक्ष्ये यथाक्रमम् ॥ ३४ ॥

### दण्डाः

पालाशो ब्राह्मणस्योक्तो नृपस्यौदुम्बरस्तथा ।
बैल्वो वैश्यस्य विज्ञेयः प्रमाणं शृणुत द्विजाः ! ॥ ३५ ॥

### दण्डप्रमाणम्

विप्रस्य केशमानं स्यादाललाटं नृपस्य तत् ।
नासाग्रसम्मितं दण्डं वैश्यस्याहुर्विपश्चितः ॥ ३६ ॥

### वासांसि

तथा वासांसि वक्ष्यामि विप्रादीनां यथाक्रमम् ।
काषायं चैव माञ्जिष्ठं हारिद्रं परिकीर्तितम् ॥ ३७ ॥

### गुरुकुलवासः

उपनीतो द्विजो विप्राः ! परिचर्यापरो गुरोः ।
वेदग्रहणपर्यन्तं निवसेद्गुरुवेश्मनि ॥ ३८ ॥

प्रातःस्नायी भवेद्वर्णी समित्कुशफलादिकम् ।
गुर्वर्थमाहरेन्नित्यं काल्यं काल्यं मुनीश्वराः ! ॥ ३९ ॥

यज्ञोपवीतमजिनं दण्डं च द्विजसत्तमाः ! ।
नष्टे भ्रष्टे नवं मन्त्राद्धृत्वा भ्रष्टं जले त्यजेत् ॥ ४० ॥

सायं प्रातश्चाग्निकार्यं यथाचारं जितेन्द्रियः ।
कुर्यात्प्रतिदिनं वर्णी ब्रह्मयज्ञं च तर्पणम् ॥ ४१ ॥

अग्निकार्यपरित्यागी पतितः प्रोच्यते बुधैः ।
ब्रह्मयज्ञविहीनश्च ब्रह्महा परिकीर्तितः ॥ ४२ ॥

देवताभ्यर्चना कार्या शुश्रूषानुदिनं गुरोः ।
नित्यं भुञ्जीत भिक्षान्नं नैकान्नादी कदाचन ॥ ४३ ॥

आनीयानिन्द्यविप्राणां गृहे भिक्षां जितेन्द्रियः ।
निवेद्य गुरुवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥ ४४ ॥

वर्णिनो वर्णिनः प्राहुर्भिक्षान्नेनैव केवलम् ।
तस्मादनिन्द्यगेहेषु भिक्षां देहीति याचयेत् ॥ ४५ ॥

भवत्पूर्वं ब्राह्मणस्य भवन्मध्यं नृपस्य तु ।
भवदन्त्यं विशः प्रोक्तं भिक्षाया हरणे वचः ॥ ४६ ॥

मधुस्त्रीमांसलवणं ताम्बूलं दन्तधावनम् ।
उच्छिष्टभोजनं चैव दिवास्वापं च वर्जयेत् ॥ ४७ ॥

छत्रपादुकगन्धांश्च तथा माल्यानुलेपनम् ।
प्रक्षाल्य पादावाचम्य गुरोरभिमुखः सदा ॥ ४८ ॥

तस्य पादौ च संगृह्य [1] नित्यमध्ययनं चरेत् ।
अष्टकासु चतुर्दश्यां प्रतिपत्पर्वणोस्तथा ॥ ४९ ॥

महाभरण्यां विप्रेन्द्राः! श्रवणद्वादशीदिने ।
[2] नभस्येऽपरपक्षे च द्वितीयायां तथैव च ॥ ५० ॥

शयनोत्थानद्वादश्योः श्रोत्रिये गृहमागते ।
परिवेषादिके सूर्ये तथा विप्रावमानने ॥ ५१ ॥

सन्ध्यायां गर्जिते मेघे प्रवृद्धे कलहे तथा ।
उल्काऽशनिप्रपाते च वर्षे चाकालिके तथा ॥ ५२ ॥

---

[1] अधीयत विचक्षणः—क. ग. [2] भाद्रपदापर—क. ग.

मन्वादिषु च विप्रेन्द्राः! युगादिषु चतुर्ष्वपि ।
नाधीयीत द्विजः कश्चित्सर्वकामफलेप्सुकः ॥ ५३ ॥

मन्वादींश्च प्रवक्ष्यामि शृणु त्वं सुसमाहितः ।

मन्वादयः

आश्वयुक्छुक्लनवमी कार्तिके द्वादशी सिता ॥ ५४ ॥

तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
आषाढशुक्लदशमी सिता माघस्य सप्तमी ॥ ५५ ॥

श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ।
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ॥ ५६ ॥

कार्तिके फाल्गुने चैत्रे ज्येष्ठे पञ्चदशी सिता ।
मन्वादयः समाख्याताः कृतस्याक्षय्यकारकाः ॥ ५७ ॥

अनध्यायाध्ययने दोषः

अनध्यायेष्वधीतानां प्रजां प्रज्ञां यशः श्रियम् ।
आयुष्यं बलमारोग्यं निकृन्तति यमः स्वयम् ॥ ५८ ॥

नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥ ५९ ॥

शब्दब्रह्ममयो विष्णुर्वेदः साक्षाद्धरिः स्मृतः ।
वेदाध्यायी ततो विप्रः सर्वान्कामान्समश्नुते ॥ ६० ॥

चतुर्विधाः ब्रह्मचारिणः

प्राजापत्यश्च गायत्रो वैदिको नैष्ठिकस्तथा ।
एवं प्रकीर्तिता ब्रह्मचारिणस्ते चतुर्विधाः ॥ ६१ ॥

तेषां चतुर्णां पूर्वोक्ता धर्माः साधारणाः स्मृताः ।

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले चतुर्वर्णधर्मब्रह्मचारिधर्मवर्णनं नाम चतुर्थस्तरङ्गः

———

## अथ पञ्चमस्तरङ्गः

उक्ताश्चतुर्णां वर्णानामाचारा वर्णिनामपि।
उदीर्यन्ते गृहस्थानां धर्माः सम्प्रति तान् शृणु ॥ १ ॥

### दारसंग्रहः

वेदग्रहणपर्यन्तं वर्णी गुरुकुले वसन्।
अनुज्ञातस्ततस्तेन कुर्या[1]द्दारपरिग्रहम् ॥ २ ॥

वेदाङ्गानि च वेदांश्च धर्मशास्त्राणि च द्विजः।
अधीत्य गुरुवे दत्वा दक्षिणां च भवेद्गृही ॥ ३ ॥

### परिग्रहार्हकन्यालक्षणम्

रूपलक्षणसम्पन्नां सुगुणां सत्कुलोद्भवाम्।
द्विजः समुद्वहेत्कन्यां सुशीलां धर्मचारिणीम् ॥ ४ ॥

अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ ५ ॥

कुवलयदलकान्तिः स्वर्णगौरद्युतिर्वा
करचरणनखेषु स्निग्धरक्ता तथाक्ष्णोः।
सममृदुपदयुग्मा स्वल्पभुक्स्वल्पनिद्रा
कमलकुलिशचक्राद्यङ्किता पाणिपादे ॥ ६ ॥

अकपिलकचहस्ता चाप्रलम्बोदरास्या
वरणविधिषु कन्या शस्यते शीलसारा।

### वरणविधौ वर्ज्याः कन्याः

बहिरथ च रुदन्ती जृम्भते या च सुप्ता
वरणविधिसमेतास्तां बुधा वर्जयन्ति ॥ ७ ॥

---

[1] द्वग्निपरिग्रहम्.

गिरितरुतटिनीनां नामभिः पक्षिणां वा
समधिकपरिहीना व्याधितः क्रूरगात्री ।
अधरमधिकलम्बं कोटरं पिङ्गलं वा
नयनमथ वहन्ती कर्कशं पाणिपादम् ॥ ८ ॥

श्वसिति हसति रोदित्येव या भोजनेऽपि
स्तनमथ पतितोर्ध्वं बिभ्रती श्मश्रुला वा ।
विषमकुचयुगा वा वामना शूर्पकर्णी
कुदशनपरुषोक्तिर्दीर्घजङ्घातिदीर्घा ॥ ९ ॥

पिटकचययुता वा लोमशा पाणिपार्श्व-
स्तनपरिसरपृष्ठे जङ्घयोरुत्तरोष्ठे ।
भ्रमणविधिषु यस्याः कम्पते क्ष्मातलं वा
पतति हसनकाले गण्डयोर्वा तरङ्गः ॥ १० ॥

भवति समधिका वा पादजाङ्गुष्ठ[1]योर्या
तदुपवसतिरन्या हीयते मध्यमा वा ।
पतति भुवि कनिष्ठाऽनामिका वा द्वयं वा
न यदि वरणकृत्ये कन्यका वर्जनीया ॥ ११ ॥

अष्टौ विवाहभेदाः

विवाहोऽष्टविधः प्रोक्तो ब्राह्माद्यो मुनिसत्तमाः ! ।
पूर्वः पूर्वो वरो ज्ञेयः पूर्वाभावे परः परः ॥ १२ ॥

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमो मतः ॥ १३ ॥

ब्राह्मेणैव विवाहेन विवहेद्वैदिकोत्तमः ।
दैवेनाप्यथवा कुर्यात्केचिदार्षं प्रचक्षते ॥ १४ ॥

प्राजापत्यादयो विप्राः ! विवाहाः पञ्च गर्हिताः ।
अभावे त्वत्र पूर्वेषां कुर्यादेव परान्बुधः ॥ १५ ॥

---

[1] तोऽस्याः—क· ग.

आनीय चार्चयित्वा तु श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥ १६ ॥

यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।
अलङ्कृतसुतादानं दैवं धर्मं प्रचक्षते ॥ १७ ॥

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥ १८ ॥

सहोभौ चरतां धर्ममिति वाचानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥ १९ ॥

ज्ञातिभ्यो द्रविणं दत्वा कन्यायाश्चैव शक्तितः ।
कन्यापहारः स्वाच्छन्द्यादासुरो धर्म उच्यते ॥ २० ॥

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्व इति विज्ञेयो विवाहः कामसम्भवः ॥ २१ ॥

हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य हरते कन्यां राक्षसो विधिरुच्यते ॥ २२ ॥

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥ २३ ॥

प्राजापत्यब्राह्मदैवार्षसंज्ञाः
कालेषूक्तेष्वेव कार्या विवाहाः ।
गान्धर्वो वा राक्षसो वाऽऽसुरो वा
पैशाचो वा सार्वकालं विधेयः ॥ २४ ॥

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोः ॥ २५ ॥

एतेषु च विवाहेषु प्रशस्तं स्वानुरूपकम् ।
विवाहं प्राप्य धर्मांस्तु गृहस्थानां समाश्रयेत् ॥ २६ ॥

गृहस्थधर्माः

तांस्तु धर्मान्समासेन वर्णयामि पुनः श्रृणु ।
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च ॥ २७ ॥

नृयज्ञो ब्रह्मयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ।
कुर्यादेतान्पञ्च यज्ञान्प्रत्यहं सुसमाहितः ॥ २८ ॥

देवार्चनं ततः कुर्याद्वैश्वदेवं यथाविधि ।
आयान्तमतिथिं सम्यग्गन्धाद्यैश्च प्रपूजयेत् ॥ २९ ॥

वक्तव्या मधुरा वाणी गृहमभ्याग[1]तेषु वै ।
जलान्नकन्दमूलैर्वा गृहदानेन वार्चयेत् ॥ ३० ॥

गृहात्प्रतिनिवर्तेत [2]यतश्चेन्नार्चितोऽतिथिः ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ३१ ॥

अतिथिलक्षणम्

अज्ञातगोत्रनामानमन्यग्रामादुपागतम् ।
विपश्चितोऽतिथिं प्राहुस्तं शम्भुमिव पूजयेत् ॥ ३२ ॥

औपासनं च होतव्यं सायंप्रातर्द्विजातिभिः ।
अयने विषुवे चैव युगादिषु चतुर्ष्वपि ॥ ३३ ॥

दर्शे चापरपक्षे च श्राद्धं कुर्याद्गृही द्विजः ।
नवधान्ये समायाते गृही श्राद्धं समाचरेत ॥ ३४ ॥

मन्वादिषु मृताहे च [3]संक्रान्तावष्टकासु च ।
श्रोत्रिये गृहमायाते ग्रहणे चन्द्रसूर्ययोः ॥ ३५ ॥

पुण्यक्षेत्रेषु तीर्थेषु गृही श्राद्धं समाचरेत् ।
वासरेष्वनिषिद्धेषु संविशेदार्तवे स्त्रियम् ॥ ३६ ॥

---

[1] तेऽतिथौ—मु. पा. [2] अतिथिर्नार्चितो यतः—क. ग. [3] अष्टकासु च सप्तमाः !—क. ग.

पुत्रानुत्पाद्य च ऋणं पितॄणामपि निर्हरेत् ।
अष्टम्यां चैव सङ्क्रान्तौ व्यतीपाते च पर्वसु ॥ ३७ ॥

विधृतौ च चतुर्दश्यामेकादश्यां दिनत्रये ।
एतेषु दिवसेष्वेव न गच्छेदृतुषु स्त्रियम् ॥ ३८ ॥

यदि गच्छेत्स पापी स्यान्मोहाद्वा रौरवं व्रजेत् ।
प्रातर्मध्यन्दिने चैव गृहस्थः स्नानमाचरेत् ॥ ३९

भृत्यमित्रादिसंयुक्तस्ततो भुञ्जीत वाग्यतः ।
रात्रावपि यथाशक्ति शयनासनभोजनैः ॥ ४० ॥

कन्दमूलफलैर्वापि [1] यजेदतिथिमागतम् ।
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ ४१ ॥

सत्यानृताभ्यामपि वा न श्ववृत्त्या कथञ्चन ।
ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम् ॥ ४२ ॥

मृतं तु याचितं प्रोक्तं प्रमृतं कृषिरुच्यते ।
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ ४३ ॥

वृत्तिष्वेतासु महितामेकां वृत्तिमुपाश्रयेत् ।
अग्निष्टोमादिकान्यज्ञान्यथाशक्ति समाचरेत् ॥ ४४ ॥
एवमादिसदाचारा गृहस्थानामुदीरिताः ।

### गृहस्थचातुर्विध्यम्

गृही चतुर्विधस्त्वेष प्रथमो वार्तवृत्तिकः ॥ ४५ ॥
यायावरश्च स्वाधीनवृत्तिर्मौनीति भेदतः ।

### वानप्रस्थानां धर्माः

दूषितां स्वतनुं दृष्ट्वा पलिताद्यैस्ततः परम् ॥ ४६ ॥
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ।
भवेत्त्रिषवणस्नायी नखश्मश्रुजटाधरः ॥ ४७ ॥

[1] आयन्तमतिथिं यजेत्-क. ग.

अधः शायी ब्रह्मचारी पञ्चयज्ञपरायणः ।
फलमूलाशनो नित्यं स्वाध्यायनिरतः सदा ॥ ४८ ॥

वर्जयेद्ग्रामजातानि पुष्पाणि च फलानि च ।
भुञ्जीत षोडशग्रासान्न कुर्याद्रात्रिभोजनम् ॥ ४९ ॥

अभ्यङ्गं वन्यतैलेन वानप्रस्थः समाचरेत् ।
व्यवायं वर्जयेच्चैव निद्रालस्यं च वर्जयेत् ॥ ५० ॥

वानप्रस्थः प्रकुर्वीत तपश्चान्द्रायणादिकम् ।
सहेत शीतवातादि वह्निं परिचरेत्सदा ॥ ५१ ॥

आरण्यकैः पदार्थैस्तु जीविकां समुपाश्रयेत् ।

चतुर्विधा वानप्रस्थाः

वानप्रस्थश्चतुर्धासावाद्य औदुम्बरो भवेत् ॥ ५२ ॥

[1] वैवासकोऽथ प्रक्षाली पौर्णिमश्चेति भेदतः ।
वनस्थधर्म इत्युक्तो यतीनामथ कथ्यते ॥ ५३ ॥

यतिधर्माः

यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ ५४ ॥

तीर्थाश्रमवनारण्यगिरिपर्वतसागराः ।
सरस्वती भारती च पुरीनामानि वै दश ॥ ५५ ॥

एतानि यतिनामानि तेषामेकं समुद्वहन् ।
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ॥ ५६ ॥

शमादिगुणसंयुक्तः कामक्रोधविवर्जितः ।
नग्नो वा जीर्णकौपीनो भवेन्मुण्डी यतिर्द्विजाः ! ॥ ५७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
एकरात्रं वसेद्ग्रामे त्रिरात्रं नगरे तथा ॥ ५८ ॥

[1] वैपासकोऽय—क.

भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद्यतिः ।
अनिन्दितद्विजगृहे व्यङ्गारे भुक्तवर्जिते ॥ ५९ ॥

विवादरहिते चैव भिक्षार्थं पर्यटेद्यतिः ।
भवेत्त्रिषवणस्नायी देवपूजापरायणः ॥ ६० ॥

जपेच्च प्रणवं नित्यं यतात्मा नियतेन्द्रियः ।
आत्मानं चिन्तयेच्चैव नीलग्रीवं जटाधरम् ॥ ६१ ॥

अव्ययं परिपूर्णं च सदानन्दैकविग्रहम् ।
पठेदुपनिषद्वाक्यं वेदान्तार्थं विचिन्तयेत् ॥ ६२ ॥

परध्यानपरो यस्तु यतिर्विगतमत्सरः ।
स याति परमानन्दं परं ज्योतिः सनातनम् ॥ ६३ ॥

सन्न्यासिनो भेदास्तल्लक्षणं च

कुटीचको बहूदश्च हंसः परमहंसकः ।
इति संन्यासिनां भेदाश्चतुर्धा परिकीर्तिताः ॥ ६४ ॥

जरया वाऽऽमयाद्यैर्वा संयुक्तो विकलश्च वा ।
कुटिं कृत्वा गृहाभ्याशे वसेद्यः स कुटीचकः ॥ ६५ ॥

प्रातः प्राह्णे च मध्याह्ने सायाह्ने च पराह्णके ।
व्रतिवत्स्नाति यो भिक्षुः सर्वदा स बहूदकः ॥ ६६ ॥

येन केनचिदाच्छन्नो येन केन च वृत्तिमान् ।
यत्र क्वचन शायी च ज्ञानी हंसः स वै स्मृतः ॥ ६७ ॥

बहिःसूत्रविनिर्मुक्ता अन्तः सूत्रपरायणाः ।
अशिखादण्डिनः शान्ताः स्मृताः परमहंसकाः ॥ ६८ ॥

कुटीचकश्च संन्यस्य स्वे स्वे सद्मनि नित्यशः ।
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथ वा ॥ ६९ ॥

शिखायज्ञोपवीती स्यात्त्रिदण्डः सकमण्डलुः ।
बहूदकश्च संन्यस्य बन्धुपुत्रादिवर्जितः ॥ ७० ॥

सप्तागारं चरेद्भैक्षमेकान्नं तु परित्यजेत् ।
गोवालरज्जुसम्बद्धं त्रिदण्डं शिक्यमुद्धरेत् ॥ ७१ ॥

जलपात्रं पवित्रं च खनित्रं च कृपाणिकाम् ।
शिखां यज्ञोपवीतं च देवताराधनं चरेत् ॥ ७२ ॥

हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
कन्थां कौपीनमाच्छाद्यमङ्गवस्त्रं बहिःपटम् ॥ ७३ ॥

एकं तु वैणवं दण्डं धारयेत्परहंसकः ।?
परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम् ॥ ७४ ॥

शिखां यज्ञोपवीतं च नित्यकर्म च सन्त्यजेत् ।

यतिषु निष्ठाभेदेन मुख्यामुख्यविवेकः

मुख्यस्तेषां यतिर्योऽसौ ज्ञाननिष्ठः सुनिस्पृहः ॥ ७५ ॥

द्वितीयस्तत्त्वनिष्ठश्च तृतीयः [1] श्रवणस्पृहः ।
चतुर्थो मन्त्रनिष्ठः स्यात्पञ्चमो नोपपद्यते ॥ ७६ ॥

चतुर्णामपि वर्णानामाश्रमाणां च सर्वदा ।
निष्ठाचतुष्टयं चैतत्प्रायेण न निषिध्यते ॥ ७७ ॥

लिङ्गनिष्ठा तु कर्तव्या लोकसङ्ग्रहकारणात् ।
विज्ञातृज्ञेययोर्यस्तु योगं परमहंसकः ॥ ७८ ॥

सुविजानाति तत्त्वेन लिङ्गनिष्ठः स वै भवेत् ।
निष्ठासु तत्परो योगी हंसो वा परमोऽपि वा ॥ ७९ ॥

ज्ञातृविज्ञेययोरैक्यमविजानन् द्विजोत्तमाः ! ।
न त्यजेदात्मनः सूत्रं बाह्यं ब्रह्मविनिर्मितम् ॥ ८० ॥

ब्रह्मसूत्रलक्षणम्

सिसृक्षुरेक एवाग्रे समासीनः शिवः स्वयम् ।
सृष्ट्वा गुणमयीं मायां सूत्ररूपामिवाकरोत् ॥ ८१ ॥

[1] श्रवणप्रियः–क. ग.

तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम् ।
स्वयं ब्रह्मा भवेद्रुद्रो रुद्रश्चास्य क्षयाय सः ॥ ८२ ॥

यज्ञात्मकेन हरिणा ब्रह्मात्मनि शिवेऽव्यये ।
तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमिति स्मृतम् ॥ ८३ ॥

यज्ञेन चोपवीतत्वाद्यज्ञसूत्रं विदुर्बुधाः ।
तदाज्ञयावृतत्वाच्च ब्रह्मणो ब्रह्मसूत्रकम् ॥ ८४ ॥

तावल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः ।
शिवसृष्टास्त्रयो वर्णास्त्रिवृत्सूत्रं समाश्रयन् ॥ ८५ ॥

तद्ग्रन्थिमाश्रितस्तारस्त्रिमात्रो नादसंयुतः ।
तद्ग्रन्थ्यग्रं च सावित्री वेदमाता शिवाज्ञया ॥ ८६ ॥

एवं द्वादशदैवत्यं ब्रह्मसूत्रं द्विजन्मनाम् ।

### यतीनां बाह्यब्रह्मसूत्रवर्जनम्

त्यक्तेषणत्रयो योगी ह्यात्मानात्मविवेकवान् ॥ ८७ ॥

त्यजेन्मायात्मकं सूत्रं निर्मायः कर्मवर्जितः ।
इति कर्तव्यता लोके ब्रह्मसूत्रधृतो भवेत् ॥ ८८ ॥

तस्य द्वन्द्वेषु सक्तिः स्यात्सङ्गो बन्धावहः स्मृतः ।
तस्मात्सङ्गविनिर्मुक्त्यै कार्याकार्यविवेकिना ॥ ८९ ॥

निराशिषा निस्पृहेण त्याज्यं सूत्रं विजानता ।
त्यक्त्वान्यथा चेत्पतति नरके शाश्वतीः समाः ॥ ९० ॥

यत्नेनोपनिषन्मात्रं पठेन्नैव च पाठयेत् ।
वेदान्ताञ्छ्रावयेच्छिष्यान्दान्तान्सङ्गविवर्जितः ॥ ९१ ॥

सदाचारांश्च संपृष्टो वदेन्नान्यत्कदाचन ।
वर्जयेदर्थशास्त्रादीन् लौकिकांश्च प्रयत्नतः ॥ ९२ ॥

चतुर्थकाल आपन्ने भिक्षार्थं पर्यटेद्यतिः ।

कल्लोले

यत्यशनम्

तृणाम्बुपर्णभक्षो वा फलमूलपयोऽशनः ॥ ९३ ॥
एतेषामेकतो यत्र वर्तते यतिरुत्तमः ।

भिक्षाटननियमः

अथवा करपात्रेण गोमुखेन विशेषतः ॥ ९४ ॥
करपात्रो गृहान् सप्त पर्यटेन्मौनतो यतिः ।
प्रथमं गृहमागत्य नारायणमनुस्मरन् ॥ ९५ ॥

भिक्षां प्रगृह्य हस्तेन प्रणवेन जलं क्षिपेत् ।
मौनेन भिक्षां प्राश्नीयात्करं न क्षालयेत्तथा ॥ ९६ ॥

गृहमन्यत्समागम्य पूर्ववत्तत्र कारयेत् ।
सप्तमेऽवसथे भिक्षुस्तथैव तु समाचरेत् ॥ ९७ ॥

हस्तप्रक्षालनादीनि तत्रैव च समापयेत् ।
करकं वैणवं पात्रमलाबुं नालिकेरजम् ॥ ९८ ॥

धारयेन्नित्यकर्मार्हं यतिः सर्वत्र सिद्धिदम् ।
एतेषामप्यभावे तु दारुपात्रं तु धारयेत् ॥ ९९ ॥

विरक्तस्य दण्डाद्यनावश्यकता

विरक्तस्य यतेर्भूप! न दण्डो न कमण्डलुः ।
न देवतार्चनं तत्र ध्यानमेकं विशिष्यते ॥ १०० ॥

सहस्रतन्तुभिः प्रोता कन्था शीतनिवारिणी ।
शय्याजिनं वा भूमिर्वा व्याघ्रचर्म विशिष्यते ॥ १०१ ॥

एवमाद्या यतेर्धर्माः समासेन प्रकीर्तिताः ।
इत्येवमाश्रमाचारान्यः करोति द्विजः क्रमात् ॥ १०२ ॥
स याति परमं स्थानं यत्र गत्वा न शोचति ।

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले गृहस्थवानप्रस्थसन्यासिधर्मवर्णनं नाम

पञ्चमस्तरङ्गः

---

## अथ षष्ठस्तरङ्गः

वर्णानामाश्रमाणां च सदाचाराः पृथक् पृथक् ।
विशेषतः समुद्दिष्टा अथ साधारणांस्तु तान् ॥ १ ॥

### आश्रमिणां साधारणा धर्माः

आचारानाश्रमस्थानां वर्णयामि सुधीः! शृणु ।
ब्राह्मे मुहूर्त उत्थाय पुरुषार्थाविरोधिनीम् ॥ २ ॥

वृत्तिं संचिन्तयेद्विप्रः कृतकेशप्रसाधनः ।
दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ ३ ॥

कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ।
शिरः प्रावृत्य वस्त्रेण [1]महीमाच्छाद्य च तृणैः ॥ ४ ॥

वहन् काष्ठं करेणैकं तावन्मौनी भवेद् द्विजः ।

### मलमूत्रविसर्जनानर्हप्रदेशाः

पथि गोष्ठे नदीतीरे तटाके कूपसन्निधौ ॥ ५ ॥

तथा च वृक्षच्छायायां कान्तारे वह्निसन्निधौ ।
देवालये तथोद्याने कृषिभूमौ चतुष्पथे ॥ ६ ॥

ब्राह्मणानां समीपे च तथा गोगुरुयोषिताम् ।
तुषाङ्गारकपालेषु जलमध्ये तथैव च ॥ ७ ॥

एवमादिषु देशेषु मलमूत्रे न कारयेत् ।

### शौचस्यावश्यकत्वं तत्प्रकारश्च

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ॥ ८ ॥

शौचाचारविहीनस्य समस्तं कर्म निष्फलम् ।
शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ॥ ९ ॥

---

[1] अन्तर्धाय तृणैर्महीम्—क. ग.

कल्लोले

मृज्जलाभ्यां बहिश्शुद्धिर्भावशुद्धिस्तथान्तरम् ।
गृहीतशिश्न उत्थाय शौचार्थं मृदमाहरेत् ॥ १० ॥

(गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ।

मृत्तिकाशौचम्

अनुच्छिष्टप्रदेशेषु शौचार्थं मृदमाहरेत् ॥)
न मूषकादिखनितां हलोत्कृष्टां तथैव च ।
वापीकूपतटाकेषु नाहरेद्बाह्यमृत्तिकाम् ॥ ११ ॥

शौचं कुर्यात्प्रयत्नेन चादायान्तर्जले मृदम् ।
लिङ्गे मृदेका दातव्या तिस्रो वामे उभे द्वयोः ॥ १२ ॥

अपाने पञ्च वामे तु दश सप्त तथोभयोः ।
तिस्रस्तिस्रः प्रदातव्याः पादयोर्मृत्तिकाः पृथक् ॥ १३ ॥

एवं शौचं प्रकुर्वीत गन्धलेपापनुत्तये ।

आश्रमभेदेन शौचवृद्धिः

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ १४ ॥

त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ।
व्रतस्थानां च सर्वेषां यतिवच्छौचमिष्यते ॥ १५ ॥

एवं शौचं विनिर्वर्त्य पश्चाद्वै सुसमाहितः ।
उदङ्मुखः प्राङ्मुखो वा आचामेत्प्रयतेन्द्रियः ॥ १६ ॥

ततः स्नानं प्रकुर्वीत मार्जनं जलतर्पणम् ।

सन्ध्योपासनम्

ततः सन्ध्यामुपासीत गायत्र्यार्घ्यं रवेः क्षिपेत् ॥ १७ ॥

गायत्रीं च जपेत्प्रातस्तिष्ठन्नासूर्यदर्शनात् ।
तथैव सायमासीनो जपेदा ऋक्षदर्शनात् ॥ १८ ॥

उपास्य सन्ध्यां मध्याह्ने क्षिपेदर्घ्यं च पूर्ववत् ।
ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ॥ १९ ॥

वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ।
प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ॥ २० ॥

यतेस्त्रिषवणस्नानं सकृत्तु ब्रह्मचारिणः ।
नोपास्ते यो द्विजः सन्ध्यां धूर्तो मर्त्यो ह्यनापदि ॥ २१ ॥

पाषण्डः स हि विज्ञेयः सर्वकर्मबहिष्कृतः ।

भोजननियमः

यदीच्छेत्सर्वपापानि हन्तुं निरवशेषतः ॥ २२ ॥

मौनेनान्नं समश्नीयात्पात्रं नैव परित्यजेत् ।
संस्थाप्य चासने पादौ वस्त्रार्धं परिधाय वा ॥ २३ ॥

मुखेन धमितं भुक्त्वा सुरापीत्युच्यते बुधैः ।
खादितार्धं पुनः खादेन्मोदकानि फलानि वा ॥ २४ ॥

प्रत्यक्षलवणाशी तु गोमांसाशी निगद्यते ।
पानीयं पायसं भैक्षं घृतं लवणमेव च ॥ २५ ॥

हस्तदत्तं तु यो भुङ्क्ते तुल्यं गोमांसभक्षणात् ।
सूपे वा परमान्ने वा घृतपात्रं यदि क्षिपेत् ॥ २६ ॥

तद्घृतं सुरया तुल्यं तदन्नं मांसवद्भवेत् ।
आपोशने चाचमने पेयद्रव्येषु च द्विजः ॥ २७ ॥

शब्दं न कारयेद्विद्वान् कुर्याच्चेन्नारकी भवेत् ।
पथ्यं हृद्यं प्रभुञ्जीत वाग्यतोऽन्नमकुत्सयन् ॥ २८ ॥

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्त उदङ्मुखः ॥ २९ ॥

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
पूजितं त्वशनं नित्यं [1] बलमूर्जं प्रयच्छति ॥ ३० ॥

---

[1] बलमायुः—ग,

कल्लोले

न चैवात्यशनं कुर्यादस्वर्ग्यं रोगसाधनम् ।
अलाबुं वर्तुलाकारं [1]वृन्ताकं कुन्दसन्निभम् ॥ ३१ ॥

प्राणान्तेऽपि च नाश्नीयान्मसूरान्नं तुषादिकम् ।
वृन्ताकं च कलिङ्गं च बिल्वोदुम्बरभिस्सटाः ॥ ३२ ॥

उदरे यस्य जीर्यन्ते तस्य [2]दूरतरः शिवः ।

अपेयक्षीरम्

अवत्सायाः पयो धेन्वा दशाहाभ्यन्तरे च यत् ॥ ३३ ॥

वत्सान्तरप्रस्नविण्याः क्रान्ताया वृषभेण च ।
आविकं कारभं क्षीरमपेयं तद्विवर्जयेत् ॥ ३४ ॥

उत्तरापोशनं कृत्वा पवित्रं तत्र सन्त्यजेत् ।
कृत्वा द्वादश गण्डूषान् हस्तौ पादौ च मार्जयेत् ॥ ३५ ॥

ततस्त्वाचम्य विप्रेन्द्रः शास्त्रचिन्तापरो भवेत् ।

ताम्बूलचर्वणम्

सुपूगं च सुपर्णं च सुचूर्णेन समन्वितम् ॥ ३६ ॥

प्रदाय द्विजदेवेभ्यस्ताम्बूलं चर्वयेद्बुधः ।
अखण्डितं च क्रमुकमप्रक्षालितपर्णकम् ॥ ३७ ॥

अशोधितं च यच्चूर्णं शक्रस्यापि श्रियं हरेत् ।

निषिद्धकर्माणि

परान्नं नैव भुञ्जीत परवादं च वर्जयेत् ॥ ३८ ॥

पादेन नाक्रमेत्पादमुच्छिष्टं नैव लङ्घयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः ॥ ३९ ॥

पूज्यं देवालयं वापि नापसव्यं व्रजेद्द्विजः ।
देवार्चाचमनस्नानव्रतश्राद्धक्रियादिषु ॥ ४० ॥

---

[1] वार्ताकं–ग. [2] दूरगतः–क. ग.

न भवेन्मुक्तकेशश्च नैकवस्त्रधरस्तथा ।
सदोपवीतिना भाव्यं सदा बद्धशिशेन च ॥ ४१ ॥

विशिखोऽनुपवीती च यत्करोति न तत्कृतम् ।
केशश्मश्रुनखानां च वृद्धौ क्षौरं तु कारयेत् ॥ ४२ ॥

चतुर्थी नवमी षष्ठी चतुर्दश्यष्टमी तथा ।
अमावास्या च दैवज्ञैः क्षौरकर्मणि नेष्यते ॥ ४३ ॥

सौम्येज्यशुक्रसोमानां क्षेमारोग्यसुखप्रदम् ।
क्षौरं प्रोक्तं विपश्चिद्भिर्मृगे पुष्ये [1] पुनर्वसौ ॥ ४४ ॥

ज्येष्ठाश्विनीकरद्वन्द्वरेवतीषु च शोभनम् ।
क्षौरे राजाज्ञया जाते नक्षत्रं नैव [2]शोधयेत् ॥ ४५ ॥

क्षौरकर्मण्यपि स्नायाद्धालितैः शुद्धवारिभिः ।
अन्यस्त्रियं न गच्छेच्च पैशुन्यं परिवर्जयेत् ॥ ४६ ॥

नापसव्यं व्रजेद्विप्रमश्वत्थं च चतुष्पथम् ।
न वदेत्परपापानि स्वपुण्यं नैव कीर्तयेत् ॥ ४७ ॥

न दुर्जनैः सह वसेन्नाशास्त्रं श्रुणुयात्तथा ।
आसवद्यूतगीतेषु द्विजस्तु न रतिं व्रजेत् ॥ ४८ ॥

आर्द्रास्थि च तथोच्छिष्टं शूद्रं च पतितं तथा ।
शूर्पं च [3]भषकं स्पृष्ट्वा सचेलं स्नानमाचरेत् ॥ ४९ ॥

दीपखट्वातनुच्छाया केशवस्त्रनखोदकम् ।
अजमार्जाररेणुश्च हन्ति पुण्यं पुराकृतम् ॥ ५० ॥

शूर्पवातं प्रेतधूमं तथा शूद्रान्नभोजनम् ।
वृषलीपतिसङ्गं च दूरतः परिवर्जयेत् ॥ ५१ ॥

अजारजः खररजः वेश्याचरणजं रजः ।
संमार्जनीरजश्चैव हन्ति पुण्यं पुराकृतम् ॥ ५२ ॥

---

[1] च तेषु च—क. ग.   [2] लोक्यते—क. ग.   [3] पतितं—क.

कल्लोले

शिरोभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
ताम्बूलमशुचिर्नाद्यात्तथा सुप्तं न बोधयेत् ॥ ५३ ॥

नाशुद्धोऽग्निं परिचरेत्पूज्यांश्च गुरुदेवताः ।
न वामहस्तेनैकेन पिबेद्वक्त्रेण वा जलम् ॥ ५४ ॥

नातिक्रमेद्गुरोश्छायां तदाज्ञां न मुनीश्वराः ! ।
न निन्देद्योगिनो विप्रान् व्रतिनोऽपि यतींस्तथा ॥ ५५ ॥

परस्परस्य [1] मर्माणि न कदाचिद्वदेद्बुधः ।

गुरूणामभिवादनक्रमः

अभिवादनशीलः स्याद्वृद्धेषु च यथाक्रमम् ॥ ५६ ॥

ज्ञानवृद्धास्तपोवृद्धा वयोवृद्धा इति त्रयः ।
आध्यात्मिकानि दुःखानि निवारयति यो गुरुः ॥ ५७ ॥

वेदशास्त्रोपदेशेन तं पूर्वमभिवादयेत् ।
असावहमिति ब्रूयाद्द्विजो वै ह्यभिवादने ॥ ५८ ॥

अनभिवाद्याः

नाभिवाद्याश्च विप्रेण क्षत्रियाद्याः कदाचन ।
नास्तिकं भिन्नमर्यादं कृतघ्नं ग्रामयाजकम् ॥ ५९ ॥

स्तेनं च कितवं चैव कदाचिन्नाभिवादयेत् ।
पाषण्डं पतितं व्रात्यं तथा नक्षत्रजीविनम् ॥ ६० ॥

उन्मत्तं च शठं धूर्तं धावन्तमशुचिं तथा ।
अभ्यक्तशिरसं चैव जपन्तं नाभिवादयेत् ॥ ६१ ॥

तथा स्नानं प्रकुर्वन्तं समित्पुष्पधरं तथा ।
उदपात्रधरं चैव भुञ्जानं नाभिवादयेत् ॥ ६२ ॥

---

[1] कर्माणि—क. ग.

विवादशीलिनं दण्ड्यं वमन्तं जलमध्यगम् ।
भिक्षान्नधारिणं चैव शयानं नाभिवादयेत् ॥ ६३ ॥

भर्तृघ्नीं पुष्पिणीं जारां सूतिकां भगपालिनीम् ।
कृतघ्नां च तथा चण्डीं कदाचिन्नाभिवादयेत् ॥ ६४ ॥

सभायां यज्ञशालायां देवतायतनेषु च ।
प्रत्येकं तु नमस्कारो हन्ति पुण्यं पुरा कृतम् ॥ ६५ ॥

कृतेऽभिवादने यस्तु न कुर्यात्प्रतिवादनम् ।
नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव सः ॥ ६६ ॥

### धर्मानुशासनम्

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदयालुत्वं षड्विधं धर्मशासनम् ॥ ६७ ॥

### पूर्वपुण्यनाशकानि वर्ज्यानि

स्नानं रजकतीर्थे च भोजनं गणिकागृहे ।
नापितस्य गृहे क्षौरं हन्ति पुण्यं पुरा कृतम् ॥ ६८ ॥

दीपपात्रस्थितं तैलं तथाभ्यङ्गावशिष्टकम् ।
कुम्भस्थसलिलस्नानं हन्ति पुण्यं पुराकृतम् ॥ ६९ ॥

विप्राग्न्योर्विप्रयोश्चैव दम्पत्योर्गुरुशिष्ययोः ।
नन्दिशङ्करयोश्चैव खरयोरजयोस्तथा ॥ ७० ॥

गमनं मध्यदेशे तु हन्ति पुण्यं पुराकृतम् ।
यत्यन्नं यतिपात्रस्थं यतिभिः प्रेरितं तथा ॥ ७१ ॥

दम्पत्योर्भुक्तशिष्टं च हन्ति पुण्यं पुराकृतम् ।
तोरणस्तम्भयोर्मध्ये उच्छिष्टद्वयमध्यतः ॥ ७२ ॥

पापिनोर्मध्यभागे च न गन्तव्यं द्विजातिभिः ।
दिवा कपित्थच्छायायां रात्रावश्वत्थबिम्बतः ॥ ७३ ॥

कल्लोले

अहोरात्रं करञ्जस्य न गन्तव्यं द्विजातिभिः ।
वर्ज्यं पर्युषितं पुष्पं तथा पर्युषितं जलम् ॥ ७४ ॥

अन्नं पर्युषितं वर्ज्यमशुद्धं सर्वथा नरैः ।

द्रव्यशुद्धिः

अप्यशुद्धान्पदार्थांश्च शुद्धान्कृत्वोपयोजयेत् ॥ ७५ ॥

तेषां शुद्धिप्रकारस्तु साम्प्रतं परिकीर्त्यते ।
धनं दानेन शुद्धं स्याद्धान्यं ब्राह्मणभोजनात् ॥ ७६ ॥

पृथ्वीशुद्धिर्वृष्टिकाले सूक्ष्मा भूः प्रोक्षणादिभिः ।
प्रक्षालितानां भाण्डानां स्पृष्टौ त्यागो विधीयते ॥ ७७ ॥

गुडोपदंशलवणैः पूरितानां खरादिभिः ।
संस्पर्शे भाजनेऽन्यस्मिन्निक्षेपाच्छुद्धिरिष्यते ॥ ७८ ॥

चण्डालरजकादीनामागमे गृहवर्तिनाम् ।
भाण्डानां स्यात्परित्यागो न द्रव्याणां विसर्जनम् ॥ ७९ ॥

मृत्स्वर्णतृणकाष्ठानां श्वास्थिचण्डालवायसैः ।
स्पर्शने विहितं शौचं सोमसूर्यांशुमारुतैः ॥ ८० ॥

तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥ ८१ ॥

सुवर्णरूप्यशङ्खाश्ममुक्तारत्नमयानि च ।
कांस्यायस्ताम्रतीक्ष्णानि त्रपुसीसमयानि च ॥ ८२ ॥

निर्लेपानि विशुद्ध्यन्ति केवलेन जलेन च ।
गण्डूषपादशौचं यः कुर्यात्कांस्यस्य भाजने ॥ ८३ ॥

षण्मासं भुवि निक्षिप्य पुनरङ्गारमादिशेत् ।
लोहानां दहनाच्छुद्धिर्मृद्गोमयजलैरपि ॥ ८४ ॥

व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥ ८५ ॥

गृहदाहे समुत्पन्ने दग्धे च पशुमानुषे ।
अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य सङ्ग्रहः ॥ ८६ ॥

मृण्मयेनावबद्धानामधो भुवि च तिष्ठताम् ।
यवमाषतिलादीनां न [1]दोषो मनुरब्रवीत् ॥ ८७ ॥

न च प्राणिवधो यत्र केवलं गृहदीपनम् ।
तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन् ॥ ८८ ॥

निर्यासानां गुडानां च लवणानां तथैव च ।
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ॥ ८९ ॥

सेकात्तु कथिता शुद्धिरित्याह भगवान्यमः ।
और्णकौशेयकुतुपपट्टक्षौमदुकूलजाः ॥ ९० ॥

अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ।
तान्येवाशुद्धियुक्तानि क्षालयेच्छोधनैः स्वकैः ॥ ९१ ॥

धान्यकल्कैः सुफलजै रसैः क्षारानुगैरपि ।
शोषयित्वा नयेत् किंचित्करैः सम्मार्जयेन्मुहुः ॥ ९२ ॥

पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि ।
लवङ्गजीरकद्राक्षामरीचादिषु वस्तुषु ॥ ९३ ॥

स्पृष्टेषु सत्सु पूर्वोक्तैः शुद्धिः स्यात्पलतः परम् ।
शुण्ठीक्रमुकजातीनां हरिद्रावचयोस्तथा ॥ ९४ ॥

उक्तस्पृष्टौ भवेच्छुद्धिरूर्ध्वं द्विपलमानतः ।
जम्बीरमातुलुङ्गादिफलानां दशकोशतः ॥ ९५ ॥

अधिकं तु परिग्राह्यं ततो न्यूनं तु संत्यजेत् ।
रामठौषधनिर्यासप्रभृतीनां विशेषतः ॥ ९६ ॥

सुवर्णमानतो न्यूनं परित्याज्यं मनीषिभिः ।
पूर्णचन्द्रोदयादीनां प्रोक्षणाच्छुद्धिरीरिता ॥ ९७ ॥

---

[1] दोषान्–क.

कल्लोले

नारायणादितैलानां शुद्धिः [1]पात्रान्तरे धृतौ ।
पटोलीकारवल्ल्यादिवृन्ताकप्रभृतिष्वपि ॥ ९८ ॥

भारमात्रं परिग्राह्यं चण्डालैराहृतेष्वपि ।
कपित्थकदलीकेलीकण्टकादिफलेष्वपि ॥ ९९ ॥

एकैकस्यापि न त्यागः पूर्वोक्तस्पर्शनेष्वपि ।
सहस्रजनभोज्येऽन्नराशावन्त्येन वीक्षिते ॥ १०० ॥

तद्दृष्टांशं परित्यज्य प्रोक्षणात्तद्विशुद्ध्यति ।
पात्रमध्ये विनिक्षिप्ते केशादिपरिदूषिते ॥ १०१ ॥

तावन्मात्रं समुद्धृत्य प्रोक्षयेद्ब्रह्मवारिणा ।
इति वर्णाश्रमाचाराः समासेन निरूपिताः ॥ १०२ ॥

अत्याश्रमाचारः

अत्याश्रमाभिधानोऽथ प्रोच्यते पञ्चमाश्रमः ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ १०३ ॥

अतिवर्णाश्रमी चेति क्रमाच्छ्रेष्ठा विचक्षण ! ।
विद्योत्कर्षबलेनैव गुरुर्भवति नान्यथा ॥ १०४ ॥

गृहस्थोऽपि वनस्थस्य यतेरप्यम्बुजेक्षण ! ।
वानप्रस्थाश्रमस्थोऽपि तथा सन्यासिनो हरे ! ॥ १०५ ॥

अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न तस्यापि भवेच्छ्रेष्ठो यथाऽहं पुरुषोत्तम ! ॥ १०६ ॥

अतिवर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते ।
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ॥ १०७ ॥

स वर्णानाश्रमान् सर्वानतीत्य स्वात्मनि स्थितः ।
योऽतीत्य स्वाश्रमान्वर्णानात्मनैव स्थितः पुमान् ॥ १०८ ॥

सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवादिभिः ।

[1] पात्रान्तरोद्धृतौ—क. ग.

पञ्चाक्षरीविद्यया शोधनम्

पञ्चाक्षरी परा विद्या शिवज्योतिरवाप्तये ॥ १०९ ॥

ओंकारः प्रणवः सूक्ष्मो विद्यानां बीजमुत्तमम् ।
तस्मादशेषतत्त्वानि प्रणवेन विशोधयेत् ॥ ११० ॥

यथा तद्गुणसंख्यानमात्मानं भावयेच्छिवम् ।
शिवीभूतशरीरेऽस्मिन् हंसेनात्मानमानयेत् ॥ १११ ॥

त्रिपुण्ड्रविधिः

शिवाग्निभस्ममन्त्रेण समाधाय विशोधयेत् ।
सितेनोद्धूलयेद्देहमग्निरित्यादिसप्तभिः ॥ ११२ ॥

त्रियायुषं जमदग्नेरिति कुर्यात्त्रिपुण्ड्रकम् ।

शिरोललाटश्रुतिकण्ठ[1]बाहु-
नाभिप्रदेशेषु षडङ्गुलानि ।
विचिन्तयेत्स्वात्मनि शम्भुमीशं
शिवं परं शान्तमुमासहायम् ॥ ११३ ॥

भस्माङ्गमाविष्कृतसर्वदीप्ति-
मत्याश्रमाचारमिमं वदन्ति ॥

अत्याश्रमोऽयं सर्वेषु चतुर्ष्वप्याश्रमेषु च ।
यः पशुः स पशुत्वं च व्रतेनानेन सन्त्यजेत् ॥ ११४ ॥

चिन्तयित्वा तु पूर्वोक्तं हृदयं पद्ममुत्तमम् ।
आत्मानमथ कर्तारं तप्तानलसमप्रभम् ॥ ११५ ॥

मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम् ।
ओङ्कारबोधितं तत्त्वं शाश्वतं शिवमच्युतम् ॥ ११६ ॥

अव्यक्ते प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ।
तदन्तः परमं तत्त्वमनाधारं निरञ्जनम् ॥ ११७ ॥

---

[1] बाहूरुनाभिदेशेषु—क. ग.

ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ।
विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः ॥ ११८ ॥

संस्थाप्य मयि चात्मानं निर्मले परमे पदे ।
प्लावयित्वाऽऽत्मनो देहं तेनैव ज्ञानवारिणा ॥ ११९ ॥

महात्मा मन्मयो भस्म गृहीत्वा ह्यग्निहोत्रजम् ।
तेनोद्धूल्य च सर्वाङ्गमग्निरित्यादिमन्त्रतः ॥ १२० ॥

चिन्तयेत्स्वात्मनीशानं परंज्योतिःस्वरूपिणम् ।
एष पाशुपतो योगः पशुपाशविमुक्तये ॥ १२१ ॥

सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः ।
उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् ॥ १२२ ॥

आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ।
व्रतं पाशुपतं येन सम्यगाचरितं बुधाः! ॥ १२३ ॥

तस्य ज्ञानं विजायेत तेन पाशविमोचनम् ।
उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन केवलम् ॥ १२४ ॥

आमनन्ति मुनिश्रेष्ठाः श्वेताश्वतरशाखिनः ।
उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् ॥ १२५ ॥

आमनन्ति मुनिश्रेष्ठाः साक्षात्कैवल्यशाखिनः ।
अयमत्याश्रमो धर्मो यैः समाचरितो मुदा ॥ १२६ ॥

तेषामेव शिवज्ञानं संसारोच्छेदकारणम् ।
लिङ्गं शिवो भवेत्क्षेत्रमङ्गं संयोग आश्रयः ॥ १२७ ॥

तस्माल्लिङ्गाङ्गसंयुक्तो योऽपि सोऽत्याश्रमी भवेत् ।
एतद्वेदशिरोनिष्ठाः प्राहुः पाशुपतं मुने ॥ १२८ ॥

एतच्छिरोव्रतं प्राहुः केचिदत्याश्रमं बुधाः ।
केचित्तद्व्रतमित्याहुः केचिच्छाम्भवमैश्वरम् ॥ १२९ ॥

ब्रह्माण्डतो निर्गमनाभ्युपायो
नास्त्येव शास्त्रेष्वखिलेषु भूप !।
व्रतेन वा पाशुपतेन मुक्ति-
र्मृतेन काश्यामपि वाऽऽप्यतेऽत्र ॥ १३० ॥

नान्याश्रमेष्वस्ति विशिष्टमुक्तिः
शैवेऽस्ति मुक्तिः परमा परेषाम् ।
मूढात्मनां मुक्तितया मतानां
सन्यासयोगादि समाश्रितानाम् ॥ १३१ ॥

अत्याश्रमिप्रशंसा

उपवीतिसहस्रेभ्यो वेदाध्यायी विशिष्यते ।
वेदाध्यायिसहस्रेभ्यः साग्निकस्तु विशिष्यते ॥ १३२ ॥

साग्निकानां सहस्रेभ्यो यज्ञयाजी विशिष्यते ।
यज्ञयाजिसहस्रेभ्यः सोमयाजी विशिष्यते ॥ १३३ ॥

सोमयाजिसहस्रेभ्यः सत्रयाजी विशिष्यते ।
सत्रयाजिसहस्रेभ्यः सर्वविद्यार्थपारगः ॥ १३४ ॥

सर्वविद्यार्थवित्कोट्याः शिवभक्तो विशिष्यते ।
तस्मात्पूज्या नमस्कार्या वर्णाश्रमपरायणैः ॥ १३५ ॥

वर्णाश्रमानतिक्रान्ताः शिवभक्तिपरायणाः ।
एतेषु शिवभक्तिश्च रुद्राक्षाणां च धारणम् ॥ १३६ ॥

भस्मनोद्धूलनं चापि त्रिपुण्ड्रस्यापि धारणम् ।
पञ्चाक्षरीजपो नित्यं शिवस्याभ्यर्चनं तथा ॥ १३७ ॥

ध्यानं च शाङ्करं सत्यं येषु तेऽत्युत्तमाः स्मृताः ।
एवमत्याश्रमः प्रोक्तः सर्वेषामुत्तमोत्तमः ॥ १३८ ॥

एवं वर्णाश्रमार्हाणां धर्माणामननुष्ठितौ ।
निषिद्धानामनुष्ठानात्प्रायश्चित्ती भवेन्नरः ॥ २३९ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले वर्णाश्रमसाधारणधर्मात्याश्रमस्वरूप-
निरूपणं नाम षष्ठस्तरङ्गः

# अथ सप्तमस्तरङ्गः

वर्णाश्रमांस्तदाचारान् श्रुत्वा श्रीमदुदीरितान् ।
ज्ञातार्थोऽस्मि गुरो! श्रोतुमन्यदस्ति कुतूहलम् ॥ १ ॥

विहितस्याननुष्ठाने निषिद्धकरणेषु च ।
प्रायश्चित्तार्हता नृणामिति श्रीमद्भिरीरितम् ॥ २ ॥

कस्य वा कर्मणः किं वा प्रायश्चित्तमिति स्मृतम् ।
एतन्मह्यं समाख्याहि गुरो! मयि कृपावशात् ॥ ३ ॥

### महापातकानि

प्रायश्चित्तमहं वक्ष्ये पापानामधुना शृणु ।
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ॥ ४ ॥

महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ।
यस्तु संवत्सरं त्वेतैः शयनासनभोजनैः ॥ ५ ॥
संवसेत्सह तं विद्यात्पतितं सर्वकर्मसु ।

### ब्रह्महत्याप्रायश्चित्तम्

अज्ञानाद्ब्राह्मणं हत्वा चीरवासा जटी भवेत् ॥ ६ ॥

तस्यैव हतविप्रस्य कपालमपि धारयेत् ।
तदभावे मुनिश्रेष्ठ! कपालं चान्यदेव वा ॥ ७ ॥

तद्द्रव्यं ध्वजदण्डे तु धृत्वा वनचरो भवेत् ।
वन्याहारो भवेन्नित्यमेकवारं मिताशनः ॥ ८ ॥

सम्यक्सन्ध्यामुपासीत त्रिकालं स्नानमाचरेत् ।
स्वाध्यायाध्यापनादीनि वर्जयेत्संस्मरेद्धरिम् ॥ ९ ॥

ब्रह्मचारी भवेन्नित्यं गन्धमाल्यादि वर्जयेत् ।
यदि वन्यैर्न जीवेत ग्रामे भिक्षां समाचरेत् ॥ १० ॥

शरावपात्रधारी स्याद् द्वारिस्थो विष्णुतत्परः ।
वदेच्च ब्रह्महास्मीति सप्तागाराणि पर्यटेत् ॥ ११ ॥

द्वादशाब्दव्रतं कुर्यादेवं हरिपरायणः ।
ब्रह्महा शुद्धिमाप्नोति कर्मार्हश्चैव जायते ॥ १२ ॥

व्रतमध्ये मृगैर्वापि चोरैर्वापि निपातितः ।
गोनिमित्तं द्विजार्थे वा प्राणान्वापि परित्यजेत् ॥ १३ ॥

यद्वा दद्याद् द्विजेन्द्रेभ्यो गवामयुतमुत्तमम् ।
एतेष्वन्यतमं कृत्वा ब्रह्महा शुद्धिमाप्नुयात् ॥ १४ ॥

दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत् ।
दीक्षितं क्षत्रियं हत्वा चरेद् ब्रह्महणो व्रतम् ॥ १५ ॥

आचार्यादिवधे चैव व्रतमुक्तं चतुर्गुणम् ।
हत्वा तु विप्रमात्रं च चरेत्संवत्सरं व्रतम् ॥ १६ ॥

एष विप्रस्य कथितः प्रायश्चित्तविधिर्द्विज ! ।

### इतरहत्याप्रायश्चित्तम्

द्विगुणं क्षत्रियस्योक्तं त्रिगुणं तु विशः स्मृतम् ॥ १७ ॥

ब्राह्मणं हन्ति यः शूद्रस्तं मौसल्यं विदुर्बुधाः ।
राज्ञैव शिक्षा कर्तव्या शास्त्रेष्वेवं विनिश्चितम् ॥ १८ ॥

ब्राह्मणीनां वधे त्वर्धं पादः स्यात्कन्यकावधे ।
वधे त्वनुपनीतानां तथा पादव्रतं चरेत् ॥ १९ ॥

हत्वा तु क्षत्रियं विप्राः ! षडब्दं कृच्छ्रमाचरेत् ।
संवत्सरत्रयं वैश्यं शूद्रं हत्वा तु वत्सरम् ॥ २० ॥

दीक्षितस्य स्त्रियं हत्वा ब्राह्मणीं चाष्टवत्सरम् ।
ब्रह्महत्याव्रतं कृत्वा शुद्धो भवति निश्चितम् ॥ २१ ॥

वृद्धातुरस्त्रीबालानामर्धमुक्तं मनीषिभिः ।

### सुरापाने प्रायश्चित्तम्

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ॥ २२ ॥

चातुर्वर्ण्यैरपेया स्यात्तथा स्त्रीभिश्च पण्डिताः ! ।
क्षीरं घृतं वा गोमूत्रमेतेष्वन्यतमं द्विजाः ! ॥ २३ ॥

स्नात्वार्द्रवासा नियतो नारायणमनुस्मरन् ।
पक्वाग्निसन्निभं कृत्वा पिबेच्च कुडवं ततः ॥ २४ ॥

तप्तलोहेन पात्रेण ह्यायसेनापि वा पिबेत् ।
ताम्रेण वाथ पात्रेण तत्पीत्वा मरणं व्रजेत् ॥ २५ ॥

सुरापी शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ।
अज्ञानाज्जलबुद्ध्या तु सुरां पीत्वा द्विजश्चरेत् ॥ २६ ॥

ब्रह्महत्याव्रतं सम्यक्चिह्नपरिवर्जितम् ।
यदि रोगनिवृत्त्यर्थमौषधार्थं सुरां पिबेत् ॥ २७ ॥

तस्योपनयनं भूयस्तथा चान्द्रायणद्वयम् ।
सुरासंस्पृष्टमन्नं वा सुराभाण्डोदकं तथा ॥ २८ ॥

सुरापानसमं प्राहुस्तथा चार्द्रस्य भक्षणम् ।

सुराभेदाः

तालं च पानसं चैव द्राक्षाखर्जूरसम्भवम् ॥ २९ ॥

माधुकं शैलमारिष्टं मैरेयं नारिकेलजम् ।
गौडी माध्वी सुरा मद्यमेवमेकादश स्मृतम् ॥ ३० ॥

एतेष्वन्यतमं विप्रो न पिबेद्वै कदाचन ।

स्तेयम्

समक्षं वा परोक्षं वा बलाच्चौर्येण वा तथा ॥ ३१ ॥
परस्वानामुपादानं स्तेयमित्युच्यते बुधैः ।

सुवर्णप्रमाणम्

सुवर्णस्य प्रमाणं तु मन्वाद्यैरभिभाषितम् ॥ ३२ ॥

वक्ष्ये शृणुध्वं विप्रेन्द्राः! प्रायश्चित्तोक्तिसाधकम् ।
गवाक्षगतमार्तण्डरश्मिमध्ये प्रदृश्यते ॥ ३३ ॥

त्रसरेणुप्रमाणं तु रज इत्युच्यते बुधैः ।
त्रसरेण्वष्टकं लीक्षा तत्त्रयं राजसर्षपम् ॥ ३४ ॥

तद्गौर[1]सर्षपत्रिकं तत्षट्कं यव उच्यते ।
यवत्रयं कृष्णलः स्यान्माषः स्यात्तस्य पञ्चकम् ॥ ३५ ॥
माषषोडशमानं तु सुवर्णमिति कथ्यते ।

स्वर्णस्तेयप्रायश्चित्तम्

हृत्वा ब्रह्मस्वमज्ञानाद्द्वादशाब्दं तु पूर्ववत् ।
कपालध्वजहीनं तु ब्रह्महत्याव्रतं चरेत् ॥ ३६ ॥

गुरूणां यज्ञकर्तॄणां धर्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानां तु हृत्वा [2]हेमादिकं नरः ॥ ३७ ॥

कृत्तात्मदेहो देहे च सम्पूर्णं लेपयेद् घृतम् ।
करीषाच्छादितो दग्धः स्तेयपापाद्विमुच्यते ॥ ३८ ॥

ब्रह्मस्वं क्षत्रियो हृत्वा वाजिमेधेन शुद्ध्यति ।
आत्मतुल्यसुवर्णं वा दद्याद्वा गोसवं चरेत् ॥ ३९ ॥

ब्रह्मस्वं यस्तु हृत्वा च पश्चात्तप्तः पुनर्दिशेत् ।
तप्तसान्तपनं कृत्वा द्वादशाहोपवासतः ॥ ४० ॥

शुद्धिमाप्नोति विप्रेन्द्र ! ह्यन्यथा पतितो भवेत् ।
रत्नासनमनुष्यस्त्रीधेनुभूम्यादिकेषु च ॥ ४१ ॥

सुवर्णसदृशेष्वेषु प्रायश्चित्तार्थमुच्यते ।
त्रसरेणुसमं हेम हृत्वा कुर्यात्समाहितः ॥ ४२ ॥

प्राणायामद्वयं सम्यक्तेन शुद्ध्यति सत्तमाः ।
प्राणायामत्रयं कुर्याद् हृत्वा लीक्षाप्रमाणकम् ॥ ४३ ॥

प्राणायामांश्च चतुरो राजसर्षपमात्रके ।
गौरसर्षपमानं तु हृत्वा हेम विचक्षणैः ॥ ४४ ॥

---

[1] सर्षपं त्रिः स्यात्तत्षट्कं—क. ग. [2] हेमसुवर्णकम्—क. ग.

कल्लोले

स्नात्वा च विधिवत्कार्यं गायत्र्यष्टसहस्रकम् ।
यवमानसुवर्णस्य स्तेये शुद्ध्यै जपेद्विजाः ! ॥ ४५ ॥

आसायं प्रातरारभ्य गायत्रीं वेदमातरम् ।
हेमकृष्णलमानं तु हृत्वा सान्तपनं चरेत् ॥ ४६ ॥
माषप्रमाणहेम्नस्तु प्रायश्चित्तं प्रकथ्यते ।

गोमूत्रपक्वयवभुक् त्रिभिर्मासैर्विशुद्ध्यति ।
किंचिन्न्यूनसुवर्णस्य स्तेये मुनिवरोत्तमाः ! ॥ ४७ ॥

गोमूत्रपक्वयवभुगब्देनैकेन शुद्ध्यति ।
सम्पूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वराः ! ॥ ४८ ॥

ब्रह्महत्याव्रतं तत्र द्वादशाब्दं समाचरेत् ।
सुवर्णमानान्न्यूने तु रजतस्तेयकर्मणि ॥ ४९ ॥

कुर्यात्सान्तपनं सम्यक्तथा चान्द्रायणद्वयम् ।
शतादूर्ध्वं सहस्रान्ते प्रोक्तं चान्द्रायणाष्टकम् ॥ ५० ॥

सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत् ।
कांस्यपित्तलमुख्येषु [1] कान्तसीसादिके तथा ॥ ५१ ॥

सहस्रनिष्कमाने तु पराकं परिकीर्तितम् ।
प्रायश्चित्तं तु रत्नानां स्तेये रजतवत्स्मृतम् ॥ ५२ ॥

## गुरुतल्पगमनप्रायश्चित्तम्

गुरुतल्पगतानां तु प्रायश्चित्तं प्रचक्षते ।
अज्ञानान्मातरं गत्वा सपत्नीमथवापि च ॥ ५३ ॥

स्वयमेव स्वमुष्कं तु छिन्द्यात्पापमुदाहरन् ।
हस्ते गृहीत्वा तन्मुष्कं स गच्छेन्नैर्ऋतीं दिशम् ॥ ५४ ॥

गच्छन्नेवाग्रतः संस्थं कदाचिन्न विचारयेत् ।
अपश्यन्पृष्ठतो गच्छेत्प्राणान्तमनुशुद्ध्यति ॥ ५५ ॥

[1] अयस्कान्ते तथैव च—क.

मेरुप्रपतनं वापि कुर्यात्पापमुदाहरन् ।
स्ववर्णोत्तमवर्णस्त्रीगमने त्वधिकारतः ॥ ५६ ॥

ब्रह्महत्याव्रतं कुर्याद्द्वादशाब्दं समाहितः ।
स्वमत्याभ्यासतो गच्छन् सवर्णामुत्तमां च वा ॥ ५७ ॥

करीषवह्निना दग्धो शुद्धिं याति द्विजोत्तम ! ।
रेतस्सेकात्पूर्वमेव निवृत्तो यदि मातरि ॥ ५८ ॥

ब्रह्महत्याव्रतं कुर्याद्रेतस्सेकेऽग्निदाहनम् ।
स्ववर्णोत्तमवर्णासु निवृत्तो वीर्यमोचनात् ॥ ५९ ॥

ब्रह्महत्याव्रतं कृत्वा षडब्दं कृच्छ्रमाचरेत् ।
क्षत्रियां पितृभार्यां वा गत्वा विप्रः सकृन्मुने ! ॥ ६० ॥

ब्रह्महत्याव्रतं कुर्यान्नवाब्दान्विष्णुतत्परः ।
वैश्यायां पितृपत्न्यां च षडब्दं कृच्छ्रमाचरेत् ॥ ६१ ॥
गत्वा शूद्रां गुरोर्भार्यां त्र्यब्दकृच्छ्रं समाचरेत् ।

मातृष्वसारं च पितृष्वसार-
माचार्यभार्यां श्वशुरस्य पत्नीम् ।
आचार्यपुत्रीमथ मातुलानीं
पुत्रीं च गच्छेद्यदि कामतो यः ॥ ६२ ॥

दिनद्वयं ब्रह्महत्याव्रतं कुर्याद्यथाविधि ।
एकस्मिन्नेव दिवसे बहुवारे त्रिवार्षिकम् ॥ ६३ ॥

एकवारे कृते त्वब्दव्रतं कृत्वा विशुद्ध्यति ।
दिनत्रयं गतो वह्निदग्धः शुद्ध्येत नान्यथा ॥ ६४ ॥

चण्डालीं पुल्कसीं चैव स्नुषां च भगिनीं तथा ।
मित्रस्त्रियं शिष्यपत्नीं यस्तु वै कामतो व्रजेत् ॥ ६५ ॥

ब्रह्महत्याव्रतं कुर्यात्षडब्दं मुनिसत्तमाः ! ।
अकामतो व्रजेद्यस्तु त्र्यब्दं कृच्छ्रं समाचरेत् ॥ ६६ ॥

### महापातकिसंसर्गप्रायश्चित्तम्

महापातकिसंसर्गप्रायश्चित्तं तु कथ्यते ।
यस्य येन भवेत्सङ्गो ब्रह्महादिचतुर्ष्वपि ॥ ६७ ॥

तत्तद्व्रतं तु निर्वर्त्य शुद्धिमाप्नोत्यसंशयम् ।
अज्ञानात्पञ्चरात्रं तु सङ्गमेभिः करोति चेत् ॥ ६८ ॥

कायकृच्छ्रं चरेत्सम्यगन्यथा पतितो भवेत् ।
द्वादशाहं तु संसर्गे महासान्तपनं चरेत् ॥ ६९ ॥

सङ्गं कृत्वार्धमासं तूपवासान् दशाचरेत् ।
पराकं माससंसर्गे चान्द्रं मासत्रये व्रतम् ॥ ७० ॥

कृत्वा षण्माससङ्गं तु कुर्याच्चान्द्रायणत्रयम् ।
किंचिन्न्यूनाब्दसङ्गे तु षण्मासं व्रतमाचरेत् ॥ ७१ ॥
अस्य च त्रिगुणं प्रोक्तं ज्ञानात्सङ्गे यथाक्रमम् ।

### संकलीकरणप्रायश्चित्तम्

ग्रामारण्यखरोष्ट्राश्वमृगीमीनाहिमाहिषीः ॥ ७२ ॥
सङ्कलीकरणं प्रोक्तमर्धकृच्छ्रं चरेद्वधे ।

### मलिनीकरणप्रायश्चित्तम्

आरण्यपक्षिणो ये च जलजा ये च पक्षिणः ॥ ७३ ॥
क्रिमिकीटादिघातश्च मद्यानुगतभोजनम् ।
फलेक्षुकुसुमस्तेयं मलिनीकरणं विदुः ॥ ७४ ॥
मलिनीकरणे चैवमब्दकृच्छ्रं समाचरेत् ।

### अपात्रीकरणप्रायश्चित्तम्

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ॥ ७५ ॥
असत्यभाषणं चैवमपात्रीकरणं विदुः ।
अपात्रीकरणे राजन्नब्दकृच्छ्रं समाचरेत् ॥ ७६ ॥

जातिभ्रंशकरप्रायश्चित्तम्

ब्राह्मणस्य रुजः कुर्यान्मद्याघ्राणं तथैव च ।
जैह्मं सर्वत्र मत्येषु पुरुषेषु च मैथुनम् ॥ ७७ ॥

जातिभ्रंशकरं प्रोक्तमब्दकृच्छ्रं समाचरेत् ।

मण्डूकादिवधप्रायश्चित्तम्

मण्डूकं नकुलं काकं वराहं मूषकं तथा ।
मार्जाराजाविकशुनो हत्वा वै कुक्कुटं तथा ॥ ७८ ॥

कृच्छ्रार्धमाचरेद्विद्वन् ! त्रिकृच्छ्रं चाश्वहा चरेत् ।
तप्तकृच्छ्रं करिवधे पराकं गोवधे स्मृतम् ॥ ७९ ॥

यानशय्यासनाद्येषु पुष्पमालाफलेषु च ।
भक्ष्य[1]भोज्योपहारे च पञ्चगव्यं विशोधनम् ॥ ८० ॥

शुष्ककाष्ठतृणानां च द्रुमाणां च गुडस्य च ।
चर्मवस्त्रामिषाणां च त्रिरात्रं स्यादभोजनम् ॥ ८१ ॥

टिट्टिभादीनां हनने प्रायश्चित्तम्

टिट्टिभं चक्रवाकं च हंसं कारण्डवं तथा ।
उलूकं सारसं चैव कपोतं जालपादुकम् ॥ ८२ ॥

शुकं चाषं बलाकं च शिशुमारं च कच्छपम् ।
एतेष्वन्यतमं हत्वा द्वादशाहमभोजनम् ॥ ८३ ॥

प्राजापत्यव्रतं कुर्याद्रेतोविण्मूत्रभक्षणे ।
चान्द्रायणत्रयं प्रोक्तं शूद्रोच्छिष्टस्य भोजने ॥ ८४ ॥

रजस्वलादिस्पर्शनप्रायश्चित्तम्

रजस्वलां च चण्डालं महापातकिनं तथा ।
सूतिकां पतितं चैवमुच्छिष्टं रजकादिकम् ॥ ८५ ॥

---

[1] भोज्याप.

स्पृष्ट्वा सचेलं स्नायीत घृतस्य प्राशनं तथा ।
गायत्रीं च विशुद्धात्मा जपेदष्टशतं तथा ॥ ८६ ॥

एतेष्वन्यतमं स्पृष्ट्वा भुञ्जीताज्ञानतो यदि ।
त्रिरात्रोपोषितः शुध्येत् पञ्चगव्यस्य सेवनात् ॥ ८७ ॥

दानस्नानजपादीनां भोजनश्राद्धयोस्तथा ।
मध्ये श्रृणोति यद्येषां शब्दं कुर्यात्कथं द्विजाः ! ॥ ८८ ॥

उद्वमेद्भुक्तमन्नं च स्नात्वा चोपवसेत्ततः ।
द्वितीयेऽह्नि घृतं प्राश्य शुद्धिमाप्नोति पण्डितः ॥ ८९ ॥

पापानामधिकं पापं द्विजदैवतनिन्दनम् ।
न दृष्टा निष्कृतिस्तेषां सर्वशास्त्रेषु सत्तमाः ! ॥ ९० ॥

अभक्ष्यभक्षणे विप्र ! अभोज्यानां च भोजने ।
छर्दयित्वा तदन्नं तु पञ्चगव्यं पिबेत्ततः ॥ ९१ ॥

एतत्ते कथितं सर्वं प्रायश्चित्तमिदं मया ।
प्रायश्चित्तेन पूतात्मा मुक्तो भवति पातकैः ॥ ९२ ॥

### सान्तपनादिकृच्छ्रलक्षणम्

अथ सान्तपनादीनां कृच्छ्राणां लक्ष्म कथ्यते ।
मुण्डस्त्रिषवणस्नायी ह्यधः शायी जितेन्द्रियः ॥ ९३ ॥

[1] स्त्रीशूद्रपतितैः सार्धं वर्जयेदपि भाषणम् ।
पवित्राणि जपेच्छक्त्या जुहुयाच्चैव शक्तितः ॥ ९४ ॥

माषान्मसूरमुद्गांश्च परान्नं मैथुनं तथा ।
क्षारक्षौद्राशनानां च लवणस्य फलस्य च ॥ ९५ ॥

भक्षणं नैव कुर्वीत कृच्छ्रचान्द्रायणादिषु ।
श्राद्धं कुर्याद्व्रतान्ते च गोहिरण्यादिदक्षिणम् ॥ ९६ ॥

---

[1] स्त्रीशूद्रपतितानां च–क. ग.

आपोहिष्ठेतिसूक्तं च शुद्धवत्याघमर्षणम् ।
संवर्त्यः स्वस्तिमत्यश्च पावमान्यस्तथैव च ॥ ९७ ॥

सर्वत्रैव प्रयोक्तव्याः कृच्छ्रादिव्रतकर्मणि ।
कुशग्रन्थ्युदकक्षीरदधिगोमूत्रविड्घृतम् ॥ ९८ ॥

प्राश्यापरेह्न्युपवसन् कृच्छ्रसान्तपनं चरेत् ।

पञ्चगव्यविधिः

गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम् ॥ ९९ ॥
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ।
घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा ॥ १०० ॥

अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ।
गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश ॥ १०१ ॥

क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ।
गोमूत्रवद् घृतस्य स्यात्तदर्धं तु कुशोदकम् ॥ १०२ ॥

अन्येन स्वल्पविद्धं वा पिबेद्द्रव्यं पयः सकृत् ।
गव्यस्य पयसोऽल्पत्वे गव्यमेव भवेद्दधि ॥ १०३ ॥

दध्नोऽभावे तु तक्रं स्यात्तक्राभावे तु यावकम् ।
एतदेव समभ्यस्तं यतिसान्तपनं स्मृतम् ॥ १०४ ॥

पृथक् सान्तपनद्रव्यैः षडहं चोपवासतः ।
सप्तमाहं तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ १०५ ॥

त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं सर्पिस्त्र्यहं क्षीरं ततः शुचिः ॥ १०६ ॥

महासान्तपनं चैतन्मतान्तरसमाश्रयात् ।
क्रमादेकैकमेतेषां त्रिरात्रमुपयोजयेत् ॥ १०७ ॥

त्र्यहं चोपवसेदन्ते महासान्तपनं विदुः ।
एतान्येव तथा पेयान्येकैकस्य त्र्यहं त्र्यहम् ॥ १०८ ॥

महासान्तपनं नाम श्वपाकमपि शोधयेत् ।
पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ॥ १०९ ॥

प्रत्येकं प्रत्यहं पीतैः पूर्णकृच्छ्र उदाहृतः ।
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ॥ ११० ॥

एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ।
षट्पलं च पिबेदम्भः क्षीरं च त्रिपलं पिबेत् ॥ १११ ॥

पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ।
एतैरेव सुशीतैःस्याच्छीतकृच्छ्र उदाहृतः ॥ ११२ ॥

एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥ ११३ ॥

सायं तु द्वादशग्रासाः प्रातः पञ्चदश स्मृताः ।
सप्तविंशतिभिर्ग्रासैः परं निरशनं स्मृतम् ॥ ११४ ॥

कुक्कुटाण्डप्रमाणाः स्युर्यथावास्यं वसेत्सुखम् ।
यथाकथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥ ११५ ॥

अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनम् ।
कृच्छ्रातिकृच्छ्रतपसा दिवसानेकविंशतिम् ॥ ११६ ॥

द्वादशाहोपवासश्च पराकः परिकीर्तितः ।
पिण्याकतिलतक्राम्बुसक्तुभिः परिवासरम् ॥ ११७ ॥

एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ।
तिथिवृद्ध्या हरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ॥ ११८ ॥

एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं त्विदम् ।
यथा कथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् ॥ ११९ ॥

मासेनैवोपभुञ्जीत चान्द्रायणमिदं परम् ।
अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते ॥ १२० ॥

नियतात्मा हविष्यं च यतिचान्द्रायणं चरेत् ।
चतुरः प्रातरश्नीयाद्ग्रासानतिसमाहितः ॥ १२१ ॥

चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरेत् ।
त्रींस्त्रीन्पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः ॥ १२२ ॥

हविष्यान्नेन वै मासमृषिचान्द्रायणं भवेत् ।
एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्धयेत् ॥ १२३ ॥

उपस्पृश्य त्रिषवणमेतच्चान्द्रायणं स्मृतम् ।
एतदाचरणं नृणां सर्वपापविशोधनम् ॥ १२४ ॥

मानसानां वाचिकानां कायिकानां च पाप्मनाम् ।
सकृदभ्यासतो वाऽपि ज्ञानतोऽज्ञानतोऽपि वा ॥ १२५ ॥

क्षुद्राणां महतां चापि कृतानां बहुभेदिनाम् ।
प्रायश्चित्तं भवेदेका सकृच्छिवपदस्मृतिः ॥ १२६ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले प्रायश्चित्तनिरूपणं
नाम सप्तमस्तरङ्गः

---

## अथाष्टमस्तरङ्गः

जनमेजयपर्यन्तं द्वापरे सोमवंशजाः ।
सूर्यवंशसमुत्पन्नाः सुमित्रान्ताः कलाविति ॥ १ ॥

उदीरितमभूत्स्वामिन् ! कलौ तद्वंशसम्भवाः ।
वर्णाश्रमादिधर्माणां पालनं चक्रिरे न वा ॥ २ ॥

एतन्मह्यं समाख्याहि श्रोतुमस्ति कुतूहलम् ।
पापैः समावृतेऽप्यस्मिन्कलावेते युगे नृपाः ॥ ३ ॥

सर्वान्वर्णाश्रमाचारानसंकरमवर्तयन् ।
तान्ब्रवीम्यधुना पुत्र ! राज्ञो धर्मपरायणान् ॥ ४ ॥

### सोमवंशनृपाः

सोमवंशसमुत्पन्नान्प्रथमं जनमेजयात् ।
शतानीकस्ततश्चाश्वमेधदत्तोऽभवत्सुतः ॥ ५ ॥

कृष्णस्तस्मादभूदुष्णस्ततश्चित्ररथस्ततः ।
[1]द्रष्ट्रमानभवत्तस्मात्सुषेणोऽस्मात्सुनीतकः ॥ ६ ॥

ततो द्रुतो नृचक्षुस्तु तस्मात्सुखबलस्ततः ।
परिप्लवः सुनयनस्ततो मेधाव्यतः परम् ॥ ७ ॥

नृपञ्जयस्ततो दूर्वस्तस्मात्तिग्मोऽभवत्ततः ।
शतानीको दुर्दमनस्ततस्तस्मा[2]द्रुहीततः ॥ ८ ॥

चण्डपाणिस्ततस्तस्मान्निमिस्तु क्षेमकस्ततः ।
कलौ युगे सोमवंशे राज्ञां तु क्षेमकोऽवधिः ॥ ९ ॥

ततः परं भूपतिषु भुवि संकीर्णजातिषु ।
वर्णानामाश्रमाणां च धर्मह्रासः क्रमादभूत् ॥ १० ॥

धर्मप्रवृत्तिं शिथिलां विलोक्य च समन्ततः ।
अवतीर्य दयावश्यो भगवान्बसवेश्वरः ॥ ११ ॥

धर्मं संस्थापयामास सर्वमेव धरातले ।
वीरशैवमतं स्थाप्य प्रकाशनमकारयत् ॥ १२ ॥

### बसवेश्वरावतारः

तस्याविर्भावमधुना विचित्रं कथयामि ते ।
मिथःसंवादरूपेण पुराणान्तःप्रतिष्ठितम् ॥ १३ ॥

महेश्वरो भवः शम्भुः पार्वतीवल्लभः शिवः ।
आदिसर्गस्य समये प्रपञ्चस्याखिलस्य च ॥ १४ ॥

रजांसीव स्थूलरूपा रोमकूपेषु मे पुनः ।
सूक्ष्मरूपाश्च जलधौ बुद्बुदावलयो यथा ॥ १५ ॥

---

[1] धृष्ट—ग.  [2] द्रुहीतरः—क. ग.

अनेकशोऽवतिष्ठन्ते ब्रह्माण्डानां समुत्कराः।
तस्माद्वोढुं कः क्षमेत मामित्यात्मानमात्मना ॥ १६ ॥

धारयामीति सञ्चिन्त्य वृषो भूत्वारुरोह तम् ।
अभूत्तदादि वेदान्तवेद्यः श्री वृषभेश्वरः ॥ १७ ॥

वाहनं तस्य देवस्य किमल्पं शङ्करोऽपरः ।
अयोनिसम्भवो लोकपावनो गोकुलाधिपः॥ १८ ॥

द्वितीयः शम्भुरित्युर्व्यां प्रसिद्धो धर्मविग्रहः ।
वृषभेशस्वरूपं तु प्रोक्तमेतन्मया सुत ? ॥ १९ ॥

लीलान्तरं च तस्यैव नन्दिकेश्वरनामकम् ।
तत्प्रवृत्तिमथो वक्ष्ये लैङ्गे संवादरूपकम् ॥ २० ॥

गते वरेण्ये वरदे सहस्राक्षे शिलादनः।
आराधयन्महादेवं तपसाऽतोषयद्भवम् ॥ २१ ॥

तदा तस्यैवमनिशं तत्परस्य द्विजस्य तु ।
दिव्यं वर्षसहस्रं तु गतं क्षणमिवोल्बणम् ॥ २२ ॥

वल्मीकेनावृताङ्गश्च भक्षितश्च खगैर्मुनिः ।
भक्षितोऽथ वृकाद्यैश्च भक्षितोऽहिमुखैर्मुनिः ॥ २३ ॥

वज्रसूचीमुखैश्चान्यै रक्तकीटैश्च सर्वतः।
निर्मांसरुधिरत्वग्वै निर्लेपः कुड्यवत् स्थितः ॥ २४ ॥

अस्थिशिष्टोऽभवत्पश्चात्तममन्यत शङ्करः ।
यदा स्मृतो मुनिः सोऽयं शङ्करेणासुरारिणा ॥ २५ ॥

तदैव मुनिशार्दूलश्चोत्ससर्ज क्रमं द्विजः।
तपतस्तस्य तपसा [1] प्रतुतोष च शङ्करः ॥ २६ ॥

[2] तुष्टः समेत्य प्रोवाच सगणश्चोमया सह।

---

[1] प्रभुस्तुष्टोऽथ–पु. पा. [2] तुष्टस्तवेत्यथोवाच–पु. पा.

ईश्वर उवाच :—

किं कार्यं तपसाऽनेन तव तात? महामते! ॥ २७ ॥

ददामि पुत्रं सर्वज्ञं सर्वशास्त्रार्थपारगम्।
ततः प्रणम्य देवेशं स्तुत्वोवाच शिलादनः ॥ २८ ॥

हर्षगद्गदया वाचा सोमं सोमविभूषणम्।

शिलादनः—

भगवन् देवदेवेश त्रिपुरार्दन! शङ्कर! ॥ २९ ॥
अयोनिजं मृत्युहीनं पुत्रमिच्छामि सत्तम!।

ईश्वरः—

(पूर्वमाराधितो विप्र! ब्रह्मणाहं तपोधन!।

तपसा चावतारार्थं मुनिभिश्च सुरोत्तमैः ॥)
तव पुत्रो भविष्यामि नन्दिनाम्ना त्वयोनिजः ॥ ३० ॥

पिता भविष्यसि मम पितुर्वै जगतां मुने!।
एवमुक्त्वा तु स मुनिं प्रणिपत्य स्थितं घृणी ॥ ३१ ॥

सोमः सोमभृदीशानस्तत्रैवान्तरधीयत।

नन्दीश्वरः—

लब्धपुत्रः पिता रुद्रात्प्रीतो मम महामुने! ॥ ३२ ॥

यज्ञाङ्गणं चकाराथ यज्ञार्थं यज्ञवित्तमः।
[1]ततः क्षणादहं शम्भोस्तनुजस्तस्य [2]तेजसा ॥ ३३ ॥

सञ्जातः पूर्वमेवाहं युगान्ताग्निसमप्रभः।

ववर्षुस्तदा पुष्कलावर्तकाद्या
जगुः किन्नराः खेचराश्चैव सिद्धाः।
शिलादात्मजत्वं गते मय्यथेन्द्रः
ससर्जाशु वृष्टिं सुपुष्पाम्बुमिश्राम् ॥ ३४ ॥

---

[1] तदक्षणादहं–पु. पा.  [2] चाज्ञाया–पु. पा.

तं दृष्ट्वा कालसूर्याभं जटामुकुटधारिणम् ।
त्र्यक्षं चतुर्भुजं शान्तं शूलखट्वाङ्गधारिणम् ॥ ३५ ॥

वज्रिणं वज्रदंष्ट्रं च वज्रिणाऽऽराधितं शिशुम् ।
वज्रकुण्डलिनं घोरं नीरदोपमनिःस्वनम् ॥ ३६ ॥

ब्रह्माद्यास्तुष्टुवुः सर्वे सुराः सेन्द्राः सुरेश्वराः ।
नेदुः समन्ततः सर्वे ननृतुश्चाप्सरोगणाः ॥ ३७ ॥

मुनीन्द्रा मुनिशार्दूला ऋग्यजुस्सामसम्भवैः ।
स्तोत्रैर्माहेश्वरैः स्तुत्वा मां प्रणेमुर्महातपाः ! ॥ ३८ ॥

ब्रह्मा हरिश्च रुद्रश्च शक्रः साक्षाच्छिवोऽम्बिका ।
जीवश्चेन्दुर्महातेजाः भास्करः पवनोऽनलः ॥ ३९ ॥

ईशानो निर्ऋतिर्यक्षो यमो वरुण एव च ।
विश्वेदेवास्तथा रुद्रा वसवश्च महाबलाः ॥ ४० ॥

लक्ष्मीः साक्षाच्छची ज्येष्ठा देवी चैव सरस्वती ।
अदितिश्च दितिश्चैव श्रुतिर्लज्जा धृतिस्तथा ॥ ४१ ॥

नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा ।
वृषेन्द्रश्च महातेजा धर्मो धर्मात्मजस्तथा ॥ ४२ ॥

आवृत्य मां तथालिङ्गय तुष्टुवुर्मुनिसत्तमाः ! ।
शिलादोऽपि मुनिर्दृष्ट्वा पिता मे तादृशं तदा ॥ ४३ ॥

प्रीत्या प्रणम्य तुष्टात्मा तुष्टावेष्टप्रदं सुतम् ।

शिलादः—

भगवन् देवदेवेश त्रियम्बक ! ममाव्यय ॥ ४४ ॥

पुत्रोऽसि जगतां यस्मात्त्राता दुःखं च किं पुनः ।
रक्षको जगतां यस्मात्पिता मे पुत्र[1] सुव्रत ! ॥ ४५ ॥

---

[1] सर्वग—क. ग.

अयोनिज! नमस्तुभ्यं जगद्योने! पितामह!।
पितः! पुत्र! महेशान! जगतां च जगद्गुरो!॥ ४६॥

वत्स वत्स महाभाग पाहि मां परमेश्वर!
त्वयाहं नन्दितो यस्मान्नन्दी नाम्ना सुरेश्वर!।
तस्मान्नन्दय मां नन्दिन्नमामि जगदीश्वर!॥ ४७॥

प्रसीद पितरौ मेऽद्य रुद्रलोकं गतौ विभो!।
पितामहाश्च भो नन्दिन्नवतीर्णे महेश्वरे॥ ४८॥

ममैव सफलं लोके जननं जगतां गुरो!।
तुभ्यं नमः सुरेशान! नन्दीश्वर! महेश्वर!॥ ४९॥

पुत्र! पाहि महाबाहो! देवदेव! जगद्गुरो!।
पुत्रं त्वामेव नन्दीश! मत्वा यत्कीर्तितं मया॥ ५०॥

क्षम्यतां क्षम्यतां वत्स! वत्स! स्तुत्य! सुरासुरैः।
एवं स्तुत्वा तु तं बालं प्रणम्य बहुमानतः॥ ५१॥

मुनीश्वरान् स संप्रेक्ष्य शिलादः [1] संवृतोऽवदत्।

शिलादः—

पश्यध्वं मुनयः सर्वे महाभाग्यं ममाव्ययम्॥ ५२॥

नन्दी यज्ञाङ्गणे देवश्चावतीर्णो यतः प्रभुः।
मत्समः कः पुमाल्लोके देवो वा [2] दानवोऽपि वा॥ ५३॥

एष नन्दी यतो जातो यज्ञभूमौ हिताय मे।

शैलादिः—

मया सह पिता तुष्टः प्रणम्य च महेश्वरम्॥ ५४॥

उटजं स्वं [3] जगामाथ निधिं लब्ध्वेव निर्धनः।
यदा गतोऽहमुटजं शिलादस्य महामुनेः॥ ५५॥

---

[1] सुमतोऽवदत्–क. ग. [2] मानवोऽपि वा–ग. [3] जगामाशु–क.

तदा वै दैविकं रूपं त्यक्त्वा मानुष्यमास्थितः।
मानुष्यमास्थितं दृष्ट्वा पिता मे लोकपूजितः ॥ ५६ ॥

व्यलपद्दुःखितोऽत्यर्थं स्वजनैश्च समावृतः।
जातकर्मादिकं चैव चकार मम सर्ववित् ॥ ५७ ॥

सालङ्कायनपुत्रो वै शिलादः पुत्रवत्सलः।
उपदिष्टा हि तेनैव ऋक्छाखा यजुषस्तथा ॥ ५८ ॥

सामशाखासहस्रं च साङ्गोपाङ्गं महामुने!।
आयुर्वेदो धनुर्वेदो गान्धर्वो वास्तुलक्षणम् ॥ ५९ ॥

हस्तिनां चरितं चैव नराणां चैव लक्षणम्।
सम्पूर्णे सप्तमे वर्षे ततोऽथ मुनिसत्तमौ ॥ ६० ॥

मित्रावरुणनामानौ तपोयोगबलान्वितौ।
तस्याश्रमं गतौ दिव्यौ द्रष्टुं मामाज्ञया विभोः ॥ ६१ ॥

ऊचतुस्तं महात्मानौ मां निरीक्ष्य मुहुर्मुहुः।
तात! नन्द्ययमल्पायुः सर्वशास्त्रार्थपारगः ॥ ६२ ॥

न दृष्टमेवमल्पायुरस्य वर्षार्धतः परम्।
इत्युक्तवति विप्रेन्द्रे शिलादः पुत्रवत्सलः ॥ ६३ ॥

मामालिङ्ग्य च दुःखार्तो रुरोदातीव विस्वरम्।
हा पुत्र पुत्र पुत्रेति पपात च महीतले ॥ ६४ ॥

अहो विधेर्बलं चैव विधातुश्चेति दुःखितः।
तस्य चार्तस्वरं श्रुत्वा तदाश्रमनिवासिनः ॥ ६५ ॥

निपेतुर्विह्वलाः सर्वे रक्षां चक्रुश्च मङ्गलाम्।
तुष्टुवुश्च महादेवं त्रियम्बकमुमापतिम् ॥ ६६ ॥

हुत्वा त्रियम्बकेनैव मधुनाज्येन संप्लुताम्।
दूर्वामयुतसंख्याकां सर्पिर्द्रव्यसमन्विताम् ॥ ६७ ॥

पिता विगतसंज्ञश्च तथा चैव पितामहः।
निश्चेष्टश्च बभूवासौ मृतवन्निपपात ह ॥ ६८ ॥

कड़ोले

मृत्योर्भीतोऽहमाचिरात् शिरसा चाभि[1]वन्दितम् ।
मृतवत्पतितं साक्षात्पितरं च पितामहम् ॥ ६९ ॥

प्रदक्षीणीकृत्य च तं रुद्रजाप्यपरोऽभवम् ।
हृत्पुण्डरीकसुषिरे ध्यात्वा देवं त्रियम्बकम् ॥ ७० ॥

त्र्यक्षं दशभुजं शान्तं पञ्चवक्त्रं सदाशिवम् ।
सरितश्चान्तरे पुण्ये स्थितं मां परमेश्वरः ॥ ७१ ॥

तुष्टोऽब्रवीन्महादेवः सोमः सोमार्धभूषणः ।

शिवः—

वत्स ! नन्दिन् महाभाग ! मृत्योर्भीतिः कुतस्तव ॥ ७२ ॥

मयैव प्रेरितौ विप्रौ मत्समस्त्वं न संशयः ।
वत्सैतत्तव देहं च लौकिकं परमार्थतः ॥ ७३ ॥

नास्त्येव दैविकं दृष्टं शिलादेन पुरा तव ।
देवैश्च मुनिभिः सिद्धैर्गन्धर्वैर्दानवोत्तमैः ॥ ७४ ॥

पूजितं च पुरा वत्स दैविकं नन्दिकेश्वर ! ।
संसारस्य स्वभावोऽयं सुखं दुःखं पुनः पुनः ॥ ७५ ॥

नृणां [2]योगे रतिस्त्याज्या सर्वदैव विवेकिनाम् ।
एवमुक्त्वा तु मां साक्षात्सर्वदेवेश्वरेश्वरः ॥ ७६ ॥

कराभ्यां [3]स शुभाभ्यां चोभाभ्यां मां परमेश्वरः ।
पस्पर्श भगवान् रुद्रः प्रणतार्तिहरो हरः ॥ ७७ ॥

उवाच च महादेवस्तुष्टात्मा वृषभध्वजः ।
निरीक्ष्य गणपांश्चैव देवीं हिमवतः सुताम् ॥ ७८ ॥

मामालोक्य च तुष्टात्मा महादेवः सुरेश्वरः ।

ईश्वरः—

अमरो जरया त्यक्तो नित्यं दुःखविवर्जितः ॥ ७९ ॥

[1] वन्द्य · तम्–क. ग.  [2] योनिपरित्यागः सर्वदैव विवेकिनः–पु. पा.
[3] कोमलाभ्यां–मु. पा.

अक्षयश्चाव्ययश्चैव सपिता ससुहृज्जनः।
इष्टो मम सदा चैव मम पार्श्वगतः सदा ॥ ८० ॥

मद्बलश्चैव भविता महायोगबलान्वितः।
एवमुक्त्वा च मां देवो भगवान् सगणस्तदा ॥ ८१ ॥

कुशेशयमयीं मालां समुन्मुच्यात्मनस्तथा।
आबबन्ध महातेजा माहादेवो वृषध्वजः ॥ ८२ ॥

[1]तया च मालयाऽतीव[1] शुभया कण्ठसक्तया।
त्र्यक्षो दशभुजश्चैव द्वितीय इव शङ्करः ॥ ८३ ॥

तत एव समादाय हस्तेन परमेश्वरः।
उवाच ब्रूहि किं तेऽद्य ददामि वरमुत्तमम् ॥ ८४ ॥

ततो जटाश्रितं वारि गृहीत्वा चातिनिर्मलम्।
उक्त्वा नदी भवेत्येवं ससर्ज वृषभध्वजः ॥ ८५ ॥

तत आदित्यतोया च पूर्णा सितजला शुभा।
पद्मोत्पलवनोपेता प्रावर्तत महानदी ॥ ८६ ॥

तामुवाच महादेवो नदीं परमशोभनाम्।
यस्माज्जटोदकादेव प्रवृत्ता त्वं महानदी ॥ ८७ ॥

तस्माज्जटोदका पुण्या भविष्यसि सरिद्वरा।
त्वयि स्नात्वा नरः कश्चित् सर्वपापैः प्रमुच्यते ॥ ८८ ॥

ततो देव्या महादेवः शैलादिनमजः प्रभुः।
सुतस्तेऽयमिति प्रोच्य पादयोः संन्यपातयत् ॥ ८९ ॥

सा मामाघ्राय शिरसि हस्ताभ्यां परिमृज्य च।
पुत्रप्रेम्णाऽभ्यषिञ्चत्सा स्रोतोभिः स्तनजैस्त्रिभिः ॥ ९० ॥

पयसा शङ्खगौरेण देवदेवं निरीक्ष्य सा।
त्रीणि स्रोतांसि तान्यस्याः स्रोतस्विन्योऽभवंस्तदा ॥ ९१ ॥

---

[1] तयाहं मालया जातः—पु. पा.

नदीं त्रिस्रोतसं देवो भगवानवदद्भवः ।
(त्रिस्रोतसं नदीं दृष्ट्वा वृषः परमहर्षितः । )
ननाद नादात्तस्मात्तु सरिदन्या ततोऽभवत् ॥ ९२ ॥

वृषध्वनिरिति ख्याता देवदेवेन सा नदी ।
जाम्बूनदमयं चित्रं[1] सर्वरत्नमयं शुभम् ॥ ९३ ॥

[2]स दिवश्च च्युतं दिव्यं निर्मितं विश्वकर्मणा ।
मकुटं चाबबन्धेशो मन्मूर्ध्नि वृषभध्वजः ॥ ९४ ॥

कुण्डले च शुभे दिव्ये वज्रवैडूर्यभूषिते ।
आबबन्ध महादेवः स्वयमेव महेश्वरः ॥ ९५ ॥

मां तथाभ्यर्चितं व्योम्नि दृष्ट्वा मेघैः प्रभाकरः ।
मेघाम्भसाऽभ्यषिञ्चन्मां शैलादिनमथो मुने ! ॥ ९६ ॥

तस्याभिषिक्तस्य तदा प्रवृत्ते स्रोतसी भृशम् ।
यस्मात्सुवर्णं निर्भिद्य नद्येषा संप्रवर्तिता ॥ ९७ ॥

स्वर्णोदकेति तामाह महादेवस्त्रियम्बकः ।
जाम्भूनदमयाद्यस्माद् द्वितीया मकुटाच्छुभा ॥ ९८ ॥

प्रावर्तत नदी पुण्या प्रोचुर्जाम्बूनदेति ताम् ।
एतत्पञ्चनदं नाम [3]जप्येश्वरसमीपगम् ॥ ९९ ॥

अथ देवो महादेवः सर्वदेवपतिर्भवः ।
देवीमुवाच शर्वाणीमुमां गिरिसुतामजाम् ॥ १०० ॥

देवि ! नन्दीश्वरं देवमभिषेक्ष्यामि भूतले ।
[4]नगानप्याहरिष्यामि किं वा त्वं मन्यसे शुभे ॥ १०१ ॥

तस्य तद्वचनं श्रुत्वा भवानी हृषितानना ।
स्मयन्ती वरदं प्राह भवं भूतपतिं विभुम् ॥ १०२ ॥

---

[1] सर्वरत्नविभूषितम्–मु. पा. [2] त्रिदिवश्च–मु. पा. स्वं देवश्चाद्भुतं–पु. पा.
[3] जटेश्वर [4] गणानप्या–क. ग.

देव्युवाच—

सर्वलोकाधिपत्यं च गणेशानां तथैव च ।
सर्वमर्हति देवेश ! शैलादिस्तनयो मम ॥ १०३ ॥

ततः स भगवान् देवः सर्व[1]देवेश्वरेश्वरः ।
सस्मार गणपान् दिव्यान् देवदेवो वृषध्वजः ॥ १०४ ॥

स्मरणादेव रुद्रस्य सम्प्राप्तास्ते गणेश्वराः ।
सर्वे सहस्रहस्ताश्च सहस्रायुधधारिणः ॥ १०५ ॥

त्रिनेत्राश्च महात्मानस्त्रिदशैरभिवन्दिताः ।
कालाग्निकोटिसंकाशा जटामकुटधारिणः ॥ १०६ ॥

कोटिकोटिगणैस्तुल्यैरात्मनां च गणेश्वराः ।
असंख्याता महात्मानस्तत्राजग्मुर्मुदा युताः ॥ १०७ ॥

गायन्तश्च द्रवन्तश्च नृत्यन्तश्च महाबलाः ।
मुखाडम्बरवाद्यानि नादयन्तस्तथैव च ॥ १०८ ॥

रथैर्नागैर्हयैश्चैव वायुमर्कटवाहनाः ।
विमानेषु तथाऽऽरूढा हेमचित्रेषु वै गणाः ॥ १०९ ॥

भेरीमृदङ्गवाद्यैश्च पणवानकगोमुखैः ।
वादित्रैर्विविधैश्चान्यैः पटहैरेकपुष्करैः ॥ ११० ॥

भेरीमुरजसन्नादैराडम्बरकडिण्डिमैः ।
[2] मर्दलैर्दर्दुलैश्चक्रैस्तलघातैरनेकशः ॥ १११ ॥

[3] नाद्यमानैर्महायोगा आजग्मुर्देवसंसदम् ।
ते गणेशा महासत्वाः सर्वदेवेश्वरेश्वराः ॥ ११२ ॥

प्रणम्य देवीं देवं च वचनं चेदमब्रुवन् ।
भगवन् ! देवदेवेश ! त्रियम्बक ! वृषध्वज ! ११३ ॥

---

[1] लोकेश्वरेश्वरः—मु. पा.

[2] मर्दलैर्वेणुवीणाभिर्विविधैस्तालनिस्स्वनैः ।
दर्दुरैस्तालघातैश्च कच्छपैः पणवैरपि ॥ पु. पा. [3] वाद्यमानैः—मु. पा.

कल्लोले

किमर्थं च स्मृता देव! ह्याज्ञापय महाद्युते!।
किं सागरान्छोषयामो यमं वा सह किंकरैः ॥ ११४ ॥

[1]हन्मो मृत्युसहायं वा सवह्निमथ पद्मजम्।
बध्वेन्द्रं सहदेवैश्च सहविष्णुं च वायुना ॥ ११५ ॥

आनयामः सुसंक्रुद्धान् दैत्यान्वा दानवैः सह।
कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया ॥ ११६ ॥

कस्य वाऽद्योत्सवो देव सर्वकाम[2]समृद्धिमान्।
तांस्तथा वादिनः सर्वान् गणेशान् भवसम्मतान् ॥ ११७ ॥

उवाच देवः सम्पूज्य कोटिकोटिगणान्प्रभुः।

ईश्वरः—

शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः ॥ ११८ ॥

श्रुत्वा च प्रयतात्मानः कुर्वन्तु तदशङ्किताः।
नन्दीश्वरोऽयं पुत्रो नः सर्वेषामीश्वरेश्वरः ॥ ११९ ॥

प्रियोऽग्रनायकश्चैव सेनानीर्वः सुबुद्धिमान्।
तमिमं मम सन्देशाद्यूयं सर्वे च [3] सम्मताः ॥ १२० ॥

सेनान्यमभिषिञ्चध्वं महायोगपतिं पतिम्।
एवमुक्ते भगवता गणपाः सर्व एव ते ॥ १२१ ॥

एवमस्त्विति संमन्त्र्य सम्भारानाहरंस्ततः।
ततः शिवाश्रयं दिव्यं जाम्बूनदमयं शुभम् ॥ १२२ ॥

आसनं मेरुसंकाशं मनोहरमुपाहरन्।
नैकस्तम्भमयं चापि चारुचामीकरप्रभम् ॥ १२३ ॥

मुक्तादामावलम्बं च मणिरत्नविभूषितम्।
स्तम्भैश्च वैडूर्यमयैः किङ्किणीजालसंयुतम् ॥ १२४ ॥

---

[1] हन्मो मृत्युसुतां मृत्युं पशुपद्धन्म पद्मजम्।—पु. पा. [2] समृद्धये—पु. पा.
[3] संहताः—क.

प्रवरास्तरसंयुक्तं मण्डपं विश्वतोमुखम् ।
कृत्वा चक्रुश्च तन्मध्ये तदासनवरं शुभम् ॥ १२५ ॥

तस्याग्रतः पादपीठं नीलवज्रावभासितम् ।
चक्रुः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ ॥ १२६ ॥

सम्पूर्णौ परमाम्भोभिररविन्दावृताननौ ।
कलशानां सहस्रं च सौवर्णं राजतं तथा ॥ १२७ ॥

ताम्रजं मृण्मयं चैव सर्वतीर्थाम्बुपूरितम् ।
छत्रं शतशलाकं च जाम्बूनदमयं शुभम् ॥ १२८ ॥

शङ्खहारेन्दुगौरेण पृष्ठेनापि विराजितम् ।
व्यजनं चन्द्रशुभ्रं च हेमदण्डं च चामरम् ॥ १२९ ॥

ऐरावतः सुप्रतीकः गजावेतौ सुपूजितौ ।
मकुटं काञ्चनं चैव निर्मितं विश्वकर्मणा ॥ १३० ॥

कुण्डले चामले दिव्ये वज्रं चैव वरायुधम् ।
जाम्बूनदमयं सूत्रं केयूरद्वयमेव च ॥ १३१ ॥

हारं च मणिभिश्चित्रं निर्मितं विश्वकर्मणा ।
सम्भाराणि तथान्यानि विविधानि बहून्यपि ॥ १३२ ॥

[1] सममानिन्युरव्यग्रा गणपा देवसम्मताः ।
ततो देवाश्च सेन्द्राश्च सनारायणकास्तथा ॥ १३३ ॥

मुनयो भगवान्ब्रह्मा नव ब्रह्माण एव च ।
वेदाश्च लोकाः सर्वे ते तत्राजग्मुर्मुदा युताः ॥ १३४ ॥

तेष्वागतेषु सर्वेषु भगवान् परमेश्वरः ।
सर्वकार्यविधिं कर्तुमादिदेश पितामहम् ॥ १३५ ॥

पितामहोऽपि भगवान् नियोगादेव तस्य तु ।
चकार सर्वं भगवानभिषेकं समाहितः ॥ १३६ ॥

अर्चयित्वा ततो ब्रह्मा स्वयमेवाभ्यषेचयत् ।
ततो विष्णुस्ततः शंक्र [2] ऋषयश्च सहामरैः ॥ १३७ ॥

---

[1] ते समा—क.   [2] लोकपालास्तथैव च—पु. पा.

वासोयुगं तथा दिव्यं गन्धं दिव्यं तथैव च ।
केयूरे कुण्डले चैव मुकुटं हारमेव च ॥ १३८ ॥

छत्रं शतशलाकं च वालव्यजनमेव च ।
दत्तं महात्मना तेन ब्रह्मणा परमेष्ठिना ॥ १३९ ॥

ऋषयस्तुष्टुवुश्चैनं पितामहपुरोगमाः ।
स्तुतवत्सु ततस्तेषु विष्णुः सर्वजगत्पतिः ॥ १४० ॥

शिरस्यञ्जलिमाधाय तुष्टाव च समाहितः ।
प्राञ्जलिः प्रयतो भूत्वा जयशब्दं चकार ह ॥ १४१ ॥

ततो गणाधिपाः सर्वे ततो देवास्ततोऽसुराः ।
एवं स्तुतश्चाभिषिक्तो [1] देवैर्ब्रह्मादिभिः सह ॥ १४२ ॥

उद्वाहश्च कृतस्तत्र नियोगात्परमेष्ठिनः ।
मरुतां च सुता देवी सुयशाख्या बभूव या ॥ १४३ ॥

लब्धं शशिप्रभं छत्रं तया [2] रत्नविभूषितम् ।
चारुभिश्चामरासक्तहस्ताग्रैः स्त्रीगणैर्युतम् ॥ १४४ ॥

सिंहासनं च परमं तया चाधिष्ठितं मया ।
अलङ्कृता महालक्ष्म्या मकुटाद्यैश्च भूषणैः ॥ १४५ ॥

लब्धश्च परमो हारो देव्या कण्ठगतस्तया ।
वृषेन्द्रश्च सितो नागः सिंहः सिंहध्वजस्तथा ॥ १४६ ॥

रथश्च हेम्नो हारश्च चन्द्रबिम्बसमप्रभः ।
अद्यापि ददृशे कश्चिन्मया नात्र समः क्वचित् ॥ १४७ ॥

सान्वयं च गृहीत्वा मां तथा सम्बन्धिबान्धवैः ।
आरुह्य वृषमीशानो मया सह गतः शिवः ॥ १४८ ॥

इत्येवं नन्दिनो वृत्तमाविर्भावादिकं क्रमात् ।
विवाहान्तं समाख्यातं समासाद्विस्मयावहम् ॥ १४९ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले बसवेश्वरावतारान्तरनन्दीश्वराविर्भावादि-
विवाहान्तवृत्तान्तकथनं नाम अष्टमस्तरङ्गः

---

[1] देवैः समरुत्कैः सह—क. ग.   [2] तत्र विभूषितम्—पु. पा.

## अथ नवमस्तरङ्गः

आविर्भावादिकं वृत्तं नन्दिनः समुदीरितम् ।
तस्यैव नन्दिनो भूमौ बसवेश्वररूपतः ॥ १ ॥

आविर्भावोऽस्ति यस्तं ते समासाद्वर्णये श्टणु ।

अस्ति प्रशस्तो धरणीधरेन्द्रो
दिश्युत्तरस्यां धृतदेवदेवः ।
कश्चिद्विपश्चित्प्रथितप्रभावः
कैलासनामा कलधौतरूपः ॥ २ ॥

कथाप्रसङ्गैः प्रमथास्तदीयै-
रास्थानसौभाग्यविशेषगर्भैः ।
महेशसेवासुखमात्मनान्त-
र्विभावयन्तो मुनयोऽप्यतिष्ठन् ॥ ३ ॥

अथाश्रितानामखिलान्तरात्मा
स्वयं विदित्वाऽभिमतं स्वयम्भूः ।
उमासमेतो विजयाजयाभ्यां
महासभामण्डपमाससाद ॥ ४ ॥

पुरान्तको दुर्मतगर्वहन्ता
गिरीन्द्रजाप्राणसखो महेशः ।
वर्णाश्रमातीत इति व्यतानीत्
कर्णोत्सवं काहलिकानिनादः ॥ ५ ॥

अथाजगामाऽऽस्तरयन्मुनीन्द्र-
स्त्रिलोचनास्थानविदग्धगोष्ठीः ।
मनोज्ञमौर्वीरवमञ्जुलेन
विपञ्चिकापञ्चमनिःस्वनेन ॥ ६ ॥

मुनेर्विपञ्चीसुहृदो मुखेन्दौ
कल्याणगीतामृतकौमुदीके ।
निधाय नेत्राणि तदा त्रिनेत्रः
कृतावधानः क्षणमात्रमासीत् ॥ ७ ॥

कल्लोले

गानावसाने प्रतिगृह्य पूजां
श्लाघामयीं शम्भुवचोनियुक्तः ।
जगाद भूमौ स विलोकितानि
स्थानानि तत्रोदित[1]मप्युदन्तम् ॥ ८ ॥

देशं समुत्सृज्य [2]तदल्पभक्तिं
प्रविश्य कर्णाटमहीविभागम् ।
तत्रापि दृष्ट्वा शिवभक्तिदूरान्
तत्रास चेतस्तरसा मदीयम् ॥ ९ ॥

पुनः पुनर्दुर्मतदर्शनानि
भवेयुरित्येव विशङ्कमानः ।
महीतलालोकनमन्दहर्षः
सभामिमां साम्प्रतमागतोऽस्मि ॥ १० ॥

उदूढनानाविधभूम्युदन्तं
तपोधनोक्तं तरुणेन्दुचूडः ।
निशम्य देवं वृषभं समीक्ष्य
समाजुहावाननसंज्ञयैव ॥ ११ ॥

द्वितीयशम्भुः स वृषेश्वरोऽपि
बद्धाञ्जलिर्बोधमयो महात्मा ।
स्थित्वा पुरः किं करणीयमाज्ञा
विधीयतामित्यवदद्विधिज्ञः ॥ १२ ॥

आज्ञापयामास तमम्बिकायाः
पतिस्त्वया शासनमस्मदीयम् ।
प्रकाशनीयं प्रकटापदानै-
र्विजित्य भूमौ विमतानशेषान् ॥ १३ ॥

महीसुरः कश्चन माधवाख्यो
महीतले मां प्रति पुत्रकाङ्क्षी ।
तपस्यते तद्गतमस्य पत्नी
तनोति च त्वद्गतचित्तवृत्तिः ॥ १४ ॥

[1] मित्युदन्तम्—क. [2] तमल्प—क. ग.

पुत्रत्वमासाद्य तयोः पृथिव्यां
श्रीवीरमाहेश्वरतन्त्रदार्ढ्यम् ।
विधेहि विद्वन् विविधैर्विहारैः
प्रहृत्य पाषण्डमतप्रवृत्तान् ॥ १५ ॥

वीरेश्वराद्याः प्रमथेश्वराश्च
क्षितौ क्रमेणैव कृतावताराः ।
प्रत्यक्षसिद्धैरतुलप्रभावैः
स्थिरीकरिष्यन्ति सदा ममाज्ञाम् ॥ १६ ॥

किंचासुरः कश्चन कण्टकाख्य-
स्तपोभिरुग्रैः परितोष्य किञ्चित् ।
स्वप्ने समाकल्पितसंविधानो
स्वर्गाधिपत्यं स्वयमाचकाङ्क्षे ॥ १७ ॥

भूतान्यनेकान्यवधीस्त्वमादा-
वकारणात्तद्भुवि भूमिपालः ।
भूत्वा यदाऽभुक्तकरायुधेन
हतस्तदा तत्पदसिद्धिरस्तु ॥ १८ ॥

आदिष्ट इत्येव मयाऽसुरोऽय-
मासाद्य पृथ्वीमधिकर्द्धिरास्ते ।
प्रवर्तयन्वेदविरोधितन्त्रं
[1] प्राकाशयद्भक्तियुतेषु वैरम् ॥ १९ ॥

पापेन धर्मस्तमसा प्रकाश-
श्छायाऽऽतपेनाप्यसता सदेवम् ।
प्रयाति शुद्धः समयः प्रसिद्धिं
दुरात्मना तत्पददूषकेन ॥ २० ॥

तस्यास्ति राज्ञो बलदेवनामा
दयानिधिः कश्चन दण्डनाथः ।
मामेव देवं मनसा विदित्वा
मद्भक्तमेवाऽऽकलयत्कुलीनम् ॥ २१ ॥

---

[1] प्रकाशयन् भक्तजनेषु—क. ग.

मत्प्रीतये दानशतं विधाय
कन्यां प्रदातुं किल काङ्क्षमाणः ।
मां प्रार्थयत्यद्य मदीयभक्त-
हस्ते मदावासंतया प्रशस्ते ॥ २२ ॥

भूत्वाऽऽत्मजा भक्तवरस्य तस्य
मनोरथापूरणमारचय्य ।
गङ्गेयमागच्छति जङ्गमार्चा-
विधायिनस्ते सहचारिणीति ॥ २३ ॥

गङ्गाऽवदद्देव भवत्पदाब्ज-
[1] सेवासुखासक्तिमती तथाहम् ।
कथं त्वदीयप्रमथस्य सेवा-
विधिं विधास्ये विविधोपचारैः ॥ २४ ॥

गिरं तदुक्तां गिरिशो निशम्य
किंचिद्विहस्याद्भुतमाबभाषे ।
शेषानशेषान्प्रमथानवेहि
मामेव मन्यस्व महावृषेन्द्रम् ॥ २५ ॥

इत्यद्भुतामीश्वरवाचमार्या
श्रुत्वाऽथ बद्धाञ्जलिराचचक्षे ।
भक्तप्रियत्वात्परमार्थतो वा
प्रभाषसे देववदेव सम्यक् ॥ २६ ॥

देवोऽप्यशंसच्छृणु देवि लोका-
नुत्पाद्य तेषामवलम्बनाय ।
धर्माभिधानः प्रथमो मदंशः
संस्थापितः सज्जनमानसेषु ॥ २७ ॥

एकावशेषे प्रलये पुनर्मां
भेजे वृषाकारगतो मदंशः ।
आलम्बभूतावयवोऽखिलाना-
माम्नायतीर्थागमपद्धतीनाम् ॥ २८ ॥

---

[1] सेवासुहेवाकवती तदाहम्—क. ग.

मया ततोऽभ्येत्य यदीप्सितं त-
द्वृणु त्वमित्युक्तमसौ निशम्य।
अचञ्चलां मत्पदभक्तिमेव
वव्रेऽथ नम्रो वशिनां पुरोगः ॥ २९ ॥

वैकुण्ठपद्मासनवासवाद्यैः
शिरोभिरभ्यर्चितशासनेन।
गाणाधिपत्येन स योजितोऽभू-
त्तदा प्रभृत्येव मया महात्मा ॥ ३० ॥

शिवागमानां च परं रहस्य-
महं यथा वेद्मि तथैव वेत्ति।
तस्मादमुष्यापि ममापि देवि!
भेदस्तु नाम्ना न महामहिम्ना ॥ ३१ ॥

[1] आद्यावतारे वृषभस्य नाम
भूयादमुष्मिन्वसवः किलेति।
यस्याननाब्जे वसवेति शब्दः
प्रवर्तते तत्र वसामि गौरि! ॥ ३२ ॥

किञ्चाहमस्यानुसरन्नशेष-
मात्मीकरिष्याम्यनुबन्धवस्तु।
लिङ्गात्मकोऽसून्वसुजङ्गमात्मा
देहं पुनर्देशिकरूपगूढः ॥ ३३ ॥

कल्पे सखा सर्गविधौ सहायो
गणाग्रणीर्वेत्रभृदग्रयायी।
असावधिष्ठानमनेकवृत्त्या
करोति सेवां मम कामरूपः ॥ ३४ ॥

सोऽयं मदंशः सुमुखस्त्वयाऽपि
सम्भावनीयः किमुतेतरेण।
[2] कुर्यात्ततस्तामपहाय गङ्के
शङ्कामिमां [3] शङ्करराजसेवाम् ॥ ३५ ॥

---

[1] अथावतारो—क. [2] कुर्यास्तत—ग. [3] शाङ्कर—क. शार्वर—ग.

इत्थं प्रशंसन्वृषभेशमीशः
प्रयुज्य तां प्रस्तुतकार्यसिद्ध्यै ।
विलोकयन्ती वृषभं विशेषात्
सभामवैक्षिष्ट सुधांशुमौलिः ॥ ३६ ॥

अथ झडिति शिवाज्ञां कर्तुमत्युच्चनीचे-
ष्वपि जननमवापुः शम्भुभृत्याः कुलेषु ।
मणय इव महार्घा रोहणाम्भोधिशुक्ति-
ष्वपहृतपरिपन्थिध्वान्तवृन्दा महोभिः ॥ ३७ ॥

स्वयमपि वृषभेन्द्रश्चारुसौभाग्यसान्द्रः
प्रकटितनिजतन्त्रः शम्भुना दत्तसत्त्वः ।
मधुरसुदरभागं मान्यमालम्ब्य योगं ।
व्रतवृतपृथुकायाः प्राप मादाम्बिकायाः ॥ ३९ ॥

अथ मादाम्बिका गर्भचिह्नमा[1]नन्दमन्थरा ।
पत्युर्मनोरथफलप्राप्तिकर्णेजपं दधौ ॥ ४० ॥

एवमन्तर्गतानन्दविभ्रमादिवबहिर्मुखः ।
निनायाब्दत्रयं तस्या जठरे जगदीश्वरः ॥ ४१ ॥

तद्गर्भभारमुद्वोढुमशक्ता शङ्करालयम् ।
गत्वा वृषभदेवस्य स्थिताग्रे सा व्यजिज्ञपत् ॥ ४२ ॥

भाग्यवत्यो युवतयो धृत्वा गर्भमनामयम् ।
नवमे मासि सुवते दशमे वात्मजं विभो ! ॥ ४३ ॥

त्वत्सेवासक्तचित्तायामप्यगाद्वत्सरत्रयम् ।
एतद्भारापनयनं कुरु मे मास्तु सन्ततिः ॥ ४४ ॥

अस्मिन्नवसरेऽन्योन्यजल्पनासमयान्तरे ।
अचिरादेव ते कार्यसिद्धिरस्त्विति वागभूत् ॥ ४५ ॥

---

[1] नन्दनिर्भरा—क. ग.

पुष्पगुच्छस्तदैवाशु वृषशृङ्गान्तरार्पितः।
पपात षट्पदारावैस्तथास्त्विति वदन्निव ॥ ४६ ॥

प्रसादं प्राग्रहीत्प्राज्ञा प्रमोदाश्रुमती सती।
दत्ता वृषभदेवेनेत्युपश्रुतिसमक्षणम् ॥ ४७ ॥

सखीजनावृता गेहं गत्वा माधवगेहिनी।
प्रसादमवदच्छम्भोर्भर्त्रे सा सोऽपि पिप्रिये ॥ ४८ ॥

कालेनाल्पीयसैवाथ बभूव प्रसवोन्मुखी।
अथाष्टवर्षदेशीयः कश्चिद्दृष्टस्तया पुरः ॥ ४९ ॥

विष्टम्भयन्निव दिशः श्लिष्टेनाष्टौ स्वतेजसा।
प्रत्यग्रविद्रुमलताविटपारुणकान्तिभिः ॥ ५० ॥

रुद्राक्षग्रथिताग्राभिर्जटाभिः पञ्चभिर्वृतः।
त्रिपुण्ड्रच्छद्मसंप्राप्तत्रिस्रोतःकान्तिबन्धुना ॥ ५१ ॥

कौमुदीगुच्छधौतेन भस्मना भासुरालिकः।
विकस्वरललाटाक्षिच्छायासच्छायकान्तिना ॥ ५२ ॥

हरिचन्दनक्लृप्तेन [1] तिलकेनापि राजितः।
रुद्राक्षषट्कसम्बद्धताम्रकुण्डलशोभिना ॥ ५३ ॥

कर्णभूषाद्वयेनोच्चैर्वर्णनीयमुखाम्बुजः।
अष्टोत्तरेणैकवक्त्ररुद्राक्षाणां शतेन च ॥ ५४ ॥

द्वात्रिंशता च घटितस्फुटोरःकण्ठमालिकः।
व्याघ्रकृत्तिकृतोड्याणपट्टिकाश्लिष्टमध्यकः ॥ ५५ ॥

कराम्बुरुहनालश्रीवहवेत्रलताकरः।
विभूतिकुण्डिकारूढभुजाशिखरभासुरः ॥ ५६ ॥

अधोमुखाम्भोरुहान्तर्गतहंसोपमाश्रिते।
स्फाटिके पादुकाद्वन्द्वे प्रतिष्ठितपदाम्बुजः ॥ ५७ ॥

---

[1] तिलकेनातिशोभितः—क. ग.

कङ्कीले

कृपातरङ्गितालोको दाक्षिण्यललिताननः ।
अनुल्बणोज्ज्वलाकारः सौजन्यमिव चाक्षुषम् ॥ ५८ ॥

अदृष्टपूर्वमतिथिं दृष्ट्वा तं दीप्ततेजसम् ।
शरणार्थिन्यस्मि देवेत्यलसा प्रणनाम सा ॥ ५९ ॥

वत्से ! वत्सवती भूया इत्याशीर्वादपूर्वकम् ।
विभूतिमलिके दत्वा व्याचचक्षे विचक्षणः ॥ ६० ॥

भद्रेऽस्ति हि महाक्षेत्रं नाम्ना [1] कूडलिसङ्गमम् ।
यत्रास्ते रजताद्रिं च विस्मृत्य विषमेक्षणः ॥ ६१ ॥

पवित्रे यत्र गात्राणि त्यजतां किल देहिनाम् ।
कर्णेषु तारकं ब्रह्म व्याहरन्नम्बिकापतिः ॥ ६२ ॥

पल्वलान्यपि तीर्थानि पामरा अपि तापसाः ।
द्रुमाः कल्पद्रुमा यत्र धेनवः सुरधेनवः ॥ ६३ ॥

तत्राहं कल्पितावासो भिक्षुः कश्चन शोभने ! ।
त्वत्पुत्रानुग्रहं कर्तुं कृपया समुपागतः ॥ ६४ ॥

इत्येवं वदतस्तस्य वाक्यमाकर्ण्य तादृशम् ।
सुतं दृष्ट्वा स्वशय्यायां भ्राजमानं ननन्द सा ॥ ६५ ॥

प्रणमन्तमिवाचार्यं शिरोविरचिताञ्जलिम् ।
अर्धोदये तस्य कण्ठे बध्वा लिङ्गात्मकं शिवम् ॥ ६६ ॥

अयं बसवराजाख्यो भक्तिभाण्डगृहं भवेत् ।
अप्रसादीकृतं चास्मै न प्रदेयं कदाचन ॥ ६७ ॥

इत्युक्त्वाऽन्तरधाद्देवः सर्वान्विस्मापयन् जनान् ।

वृषेन्द्रे संजाते बसव इति नाम्ना शिवकथा
सुधासान्द्रे चन्द्रे मधुरमधुरैः स्वैर्गुणगणैः ।
पपातोर्व्यां कल्पद्रुमकुसुमवृष्टिः परिणता
प्रसादं प्रापाशावलयमपि चित्तैः सह सताम् ॥ ६८ ॥

---

[1] कूडल—क.

तस्योपनययोग्ये तु काले समुपसेदुषि ।
जनको माधवाचार्यो मादाम्बाख्या जनन्यपि ॥ ६९ ॥

उपनेतुमसुं पुत्रमयतेतां महोत्सवैः ।
तदायं पितरौ दृष्ट्वाचचक्षे तादृशोद्यमौ ॥ ७० ॥

श्रृणुतां पितरौ ! प्रेम्णा सङ्गमेशो गुरुर्मम ।
लिङ्गस्य धारणं वीरशैवदीक्षां च कारयन् ॥ ७१ ॥

अन्वगृह्णात्ततो नार्हं ममोपनयनादिकम् ।
इत्यनन्तरमुन्मुच्य तत्क्षणात्पूर्वमाश्रमम् ॥ ७२ ॥

निर्जगामाग्रजा तस्य नागाम्बा सह निर्ययौ ।
मातुलो [1] बलदेवोऽस्य मन्त्री बिज्जलभूपतेः ॥ ७३ ॥

नागाम्बया सहायान्तमश्रृणोद्बसवेश्वरम् ।
अभिगम्य निजं गेहमानीय मुदितान्तरः ॥ ७४ ॥

ततश्च पुत्रीं गङ्गाख्यां तस्मै स प्रत्यपादयत् ।
उद्वाहमङ्गलं प्राप्य सङ्गमेश्वरनामकम् ॥ ७५ ॥

अध्युवास महाक्षेत्रं पवित्रमतिचित्रकृत् ।
अथ याति कियत्काले बलदेवः स्वयं ततः ॥ ७६ ॥

जामातुर्बसवेशस्य सादृश्यं वृषभेश्वरे ।
विलोकितुमिव प्रायः शिवसन्निधिमभ्यगात् ॥ ७७ ॥

ततो बिज्जलभूपालः स्वीयस्य गुणशालिनः ।
जामातरममात्यस्य शुश्राव बसवेश्वरम् ॥ ७८ ॥

तमानेतुं यियासन् स सामाजिकमुखान्नृपः ।
आगमं वेदयामास सोऽपि तं प्रति निर्ययौ ॥ ७९ ॥

तावुभौ मिलितौ मध्यमार्गे परमहर्षितौ ।
राजा तस्मै बहुविधानुपहारानकल्पयत् ॥ ८० ॥

---

[1] बलदेवस्य—क. ग.

कल्लोले

तौर्यत्रिकरवाकीर्णाः सर्वा मुखरयन्दिशः ।
सपौरवर्गः सबलः सामात्यः सपरिच्छदः ॥ ८१ ॥

बसवेश्वरमानीय निनाय भवनं प्रति ।
सर्वाधिपत्यं दत्त्वा तं निजमन्त्रिपदे न्यधात् ॥ ८२ ॥

वासरेषु प्रयातेषु ततः कतिपयेषु तु ।
बिज्जलाख्यो महीपालः पिशुनोक्तिवशंवदः ॥ ८३ ॥

ततान वितथाक्षेपान्प्रतीपानेव भूरिशः ।
तेऽप्यस्य महिमोत्कर्षप्रकाशायाभवन्परम् ॥ ८४ ॥

प्रकाशयेयुः सङ्घर्षा मुहुः श्रीखण्डसौरभम् ।
सर्वदा गुरुलिङ्गश्रीजङ्गमानामभीप्सितम् ॥ ८५ ॥

अर्पयित्वैव सकलांस्तर्पयामास तान्मुहुः ।
मित्राणां दर्शितानेकचित्राणां सहवर्तिनाम् ॥ ८६ ॥

प्रमथानां वीरशैवमतानुगुणतां गताम् ।
प्रकाश्य षट्स्थलीविद्यां नर्मशिक्षितदुर्मतः ॥ ८७ ॥

संस्थापयन्नशेषेण शिवधर्मान् क्षिताविह ।
चतुर्विंशतिवर्षाणि भक्तिसाम्राज्यमन्वभूत् ॥ ८८ ॥

अयं नृपश्शिवद्रोहमग्रे विरचयिष्यति ।
जगद्देवब्रह्मदेवनामानौ तस्य निग्रहे ॥ ८९ ॥

बद्धोद्यमौ ममावासः कालेऽस्मिन्नोचितो भवेत् ।
मित्रस्य बिज्जलक्षोणीपतेर्नैक्ष्या विपन्मया ॥ ९० ॥

इत्यालोच्य निजं स्थानं गन्तुमिच्छां चकार सः ।
ततः कतिपयैरेव निजस्थानं गणैः सह ॥ ९१ ॥

प्रतिष्ठमानमप्राक्षुः परिशिष्टा गणेश्वराः ।
देशः को वाऽस्मदावासयोग्यः स्यात्तं वदस्व नः ॥ ९२ ॥

इति पृष्टो गणानेवं जगाद बसवेश्वरः ।
अग्रे धर्मा धूसरत्वं प्रयास्यन्ति समन्ततः ॥ ९३ ॥

उत्पाताश्च भविष्यन्ति जनानां लयसूचकाः ।
विरूपाक्षप्रसादस्य महिम्ना भुवि विश्रुतम् ॥ ९४ ॥

सिंहासनं नरपतेरुद्भविष्यति किञ्चन ।
तद्भक्तिव्यत्ययादेव क्रमात्संकोचमेष्यति ॥ ९५ ॥

अनन्तरं मल्लराष्ट्रे मन्नाम्ना ख्यातिमेयिवान् ।
ममानुग्रहपात्रं च भक्तः कश्चिदुदेष्यति ॥ ९६ ॥

रामेश्वरप्रसादेन तद्वंश्याश्च प्रतिक्षणम् ।
ऐधेरन्बहुराज्यश्रीबलकीर्तिपराक्रमैः ॥ ९७ ॥

वीरशैवमताचारानाचरिष्यन्ति दीक्षिताः ।
वत्स्यन्ति गुरुलिङ्गश्रीजङ्गमेष्वतिभक्तयः ॥ ९८ ॥

तेषां राष्ट्रे कृतयुगधर्मश्च स्थितिमेष्यति ।
तत्र दुर्भिक्षवार्तां च नैव श्रोष्यति कश्चन ॥ ९९ ॥

तत्र गत्वा वीरशैवनिष्ठामालम्ब्य खेलत ।
इत्येवमुपदिश्यैतान्निजं स्थानमपद्यत ॥ १०० ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले बसवेश्वरवृत्तान्तनिरूपणं नाम नवमस्तरङ्गः

———

## अथ दशमस्तरङ्गः

संप्रोक्तं बसवेशस्य स्वेच्छाविर्भावखेलनम् ।
तत्कृतानुग्रहस्यापि क्रमः स्वामिन्! निरूपितः ॥ १ ॥

आकर्ण्यैतत्प्रमुदितोऽभवं सर्वकलार्णव! ।
यदवादि पुरो धर्मो धूसरत्वं समेष्यति ॥ २ ॥

उत्पाताश्च भविष्यन्ति [1]समन्ताद्योजनद्वयम् ।
एतद्द्वयं श्रोतुमिच्छा मम सम्प्रति वर्तते ॥ ३ ॥

---

[1] समन्तादिति च द्वयम्—क. ग.

कल्लोले

सप्रपञ्चमतिप्राज्ञ ! तद्‌द्वयं मे निरूपय।
कुमारानन्यसामान्या गुणास्ते हर्षयन्ति नः।
यद्‌न्वयुज्यतैतर्हि ब्रूमस्तत्रोत्तरं शृणु ॥ ४ ॥

कलिधर्मकथनम्

कलेः स्थितिं प्रवक्ष्यामि शृणुष्व सुसमाहितः।
धर्मः कलियुगे प्राप्ते त्रिपादोनः प्रवर्तते।
तामसं युगमासाद्य हरिः कृष्णत्वमेति च ॥ ५ ॥

यः कश्चिदत्र धर्मात्मा क्रियायोगरतो भवेत्।
नरं धर्मपरं दृष्ट्वा सर्वेऽसूयां प्रकुर्वते ॥ ६ ॥

व्रताचाराः प्रणश्यन्ति ध्यानयज्ञादयस्तथा।
उपद्रवा भविष्यन्ति ह्यधर्मस्य प्रवर्तनात् ॥ ७ ॥

असूयानिरताः सर्वे दम्भाचारपरायणाः।
प्रजाश्चाल्पायुषः सर्वा भविष्यन्ति कलौ युगे ॥ ८ ॥

युगधर्माः समाख्याताः स्थूलाः सङ्क्षेपतो मुने।
सर्वे धर्माः प्रणश्यन्ति कृष्णे कृष्णत्वमागते ॥ ९ ॥

तस्मात्कलिर्महाघोरः सर्वपापस्य साधकः।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मपराङ्मुखाः ॥ १० ॥

घोरे कलियुगे प्राप्ते द्विजा वेदपराङ्मुखाः।
व्याजधर्मपराः सर्वे वृथाहंकारदूषिताः ॥ ११ ॥

सर्वमाक्षिप्यते नित्यं नरैः पण्डितमानिभिः।
अहमेवाधिक इति सर्व एव वदन्ति हि ॥ १२ ॥

अधर्मलोलुपाः सर्वे तथा चैव [1]द्विजोत्तमाः।
अतस्त्वल्पायुषः सर्वे भविष्यन्ति कलौ युगे ॥ १३ ॥

---

[1] द्विजातयः—क. ग.

अल्पायुष्ट्वान्मनुष्याणां न विद्याग्रहणं नृप।
विद्याग्रहणशून्यत्वादधर्मः सम्प्रवर्तते ॥ १४ ॥

व्युत्क्रमेण प्रजाः सर्वा म्रियन्ते पापतत्पराः।
ब्राह्मणाद्यास्तथा वर्णाः संकीर्यन्ते परस्परम् ॥ १५ ॥

कामक्रोधपरा मूढा वृथाहंकार[1]पूरिताः।
बद्धवैरा भविष्यन्ति परस्परवधेप्सवः ॥ १६ ॥

जनाः सर्वे दयाहीना दाक्षिण्यपरिवर्जिताः।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः ॥ १७ ॥

उत्तमा नीचतां यान्ति नीचाश्चोत्तमतां गताः।
राजानो द्रव्यनिरताः सदा लोभपरायणाः ॥ १८ ॥

धर्मकञ्चुकसंवीता धर्मविध्वंसकारिणः।
यो योऽश्वरथनागाढ्यः स स राजा भविष्यति ॥ १९ ॥

किङ्कराश्च भविष्यन्ति शूद्राणां च द्विजातयः।
धर्मस्त्रीष्वपि यच्छन्ति पतयो जारलक्षणम् ॥ २० ॥

द्विषन्ति पितरं पुत्रा गुरुं शिष्या द्विषन्ति च।
पतिं च वनिता द्वेष्टि कृष्णे कृष्णत्वमागते ॥ २१ ॥

लोभाभिभूतमनसः सर्वे दुष्कर्मशीलिनः।
परान्नलोलुपा नित्यं भविष्यन्ति द्विजातयः ॥ २२ ॥

परस्त्रीनिरताः सर्वे परद्रव्यपरायणाः।
मत्स्यामिषेण जीवन्ति दुहन्तश्चाप्यजाविकाः ॥ २३ ॥

सरित्तीरेषु कुद्दालै रोपयिष्यन्ति चौषधीः।
अत्यल्पानि फलान्यासां भविष्यन्ति कलौ युगे ॥ २४ ॥

वंध्या लावण्यशीलेषु स्पृहां कुर्वन्ति योषितः।
धर्मविघ्ना भविष्यन्ति स्त्रियश्च पुरुषेषु च ॥ २५ ॥

---

[1] पीडिताः—क. ग.

प्रायशः कृपणानां च बन्धूनां च तथा द्विजाः ।
साधूनां विधवानां च वित्तान्यपहरन्ति च ॥ २६ ॥

न यक्ष्यन्ति न होष्यन्ति हेतुवादैर्विघूर्णिताः ।
अपात्रेष्वेव दानानि कुर्वन्ति च तथा नराः ॥ २७ ॥

क्षीरोपाधिनिमित्तेन गोषु प्रीतिं प्रकुर्वते ।
न कुर्वन्ति तथा विप्राः स्नानशौचादिकाः क्रियाः ॥ २८ ॥

अकालकर्मनिरताः कूटयुक्तिविशारदाः ।
देवनिन्दापराश्चैव विप्रनिन्दापरास्तथा ॥ २९ ॥

न कस्यचिच्चापि मनो विष्णुभक्तिपरं तथा ।
देवपूजापरं [1]दृष्ट्वाऽपहासं सम्प्रकुर्वते ॥ ३० ॥

[2]निर्बध्नन्ति द्विजानेव धनार्थं राजकिङ्कराः ।
नाद्रियन्ते च विप्रेन्द्रान् कृष्णे कृष्णत्वमागते ॥ ३१ ॥

दानयज्ञजपादीनां विक्रीणन्ति फलं द्विजाः ।
प्रतिग्रहं प्रकुर्वन्ति चण्डालादेरपि द्विजाः ॥ ३२ ॥

शूद्रस्त्रीसङ्गनिरता विधवासङ्गलोलुपाः ।
शूद्रान्नपाननिरता भविष्यन्ति कलौ नराः ॥ ३३ ॥

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ ३४ ॥

कुहकाश्च जनास्तत्र हेतुवादविशारदाः ।
पाषण्डिनो भविष्यन्ति चतुराश्रमनिन्दकाः ॥ ३५ ॥

न च द्विजातिशुश्रूषां सर्वधर्मप्रवर्तिनीम् ।
करिष्यन्ति तथा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः ॥ ३६ ॥

काषायपरिवीताश्च जटिला भस्मधूसराः ।
अशौचा वक्रमतयः परपाकान्नजीविनः ॥ ३७ ॥

---

[1] दृष्ट्वा ह्युपहासं प्रकुर्वते–क. ग.     [2] बध्नन्ति च द्विजानेव–क. ग

भविष्यन्ति दुरात्मानः शूद्राः प्रव्रजितास्तथा ।
उत्कोचजीविनस्तत्र महापापरतास्तथा ॥ ३८ ॥

भविष्यन्त्यथ पाषण्डाः कापाला भिक्षवोऽधमाः ।
धर्मविध्वंसशीलानां द्विजानां राजवल्लभाः ॥ ३९ ॥

शूद्रा धर्मान्प्रवक्ष्यन्ति प्रव्रज्यालिङ्गिनोऽधमाः ।
गीतवाद्यपरा विप्रा वेदवादपराङ्मुखाः ॥ ४० ॥

भविष्यन्ति कलौ प्राप्ते शूद्रमार्गप्रवर्तिनः ।
हर्तारो न च दातारो भविष्यन्ति कलौ युगे ॥ ४१ ॥

विश्वासहीनाः पिशुना वेददेवद्विजातिषु ।
असंस्कृतोक्तिवक्तारो रागद्वेषपरास्तथा ॥ ४२ ॥

परमायुश्च भविता तदा वर्षाणि षोडश ।
पञ्चमे वाथ षष्ठे वा वर्षे कन्या प्रसूयते ॥ ४३ ॥

सप्तवर्षाष्टवर्षाश्च प्रसूयन्ते तथा नराः ।
स्वकर्मत्यागिनः सर्वे कृतघ्ना भिन्नवृत्तयः ॥ ४४ ॥

याचकाः पिशुनाश्चैव भविष्यन्ति कलौ युगे ।
परावमाननिरता आत्मस्तुतिपरायणाः ॥ ४५ ॥

परस्वहरणोपायचिन्तकाः सर्वदा जनाः ।
निन्दां कुर्वन्ति सततं पितृमातृकुलेषु च ॥ ४६ ॥

वदन्ति वाचा धर्मांश्च चेतसा पापलोलुपाः ।
छादयन्ति प्रयत्नेन स्वदोषं पापकर्मजम् ॥ ४७ ॥

अपापे दुष्कृतं सम्यग्निवृण्वन्ति नराधमाः ।
धर्ममार्गप्रणेतारं तिरस्कुर्वन्ति पापिनः ॥ ४८ ॥

भविष्यन्ति कलौ प्राप्ते राजानो म्लेच्छजातयः ।
द्विजाश्च क्षत्रिया वैश्याः शूद्राश्चान्याश्च जातयः ॥ ४९ ॥

अत्यन्तकामिनः सर्वे संकीर्यन्ते परस्परम् ।
न शिष्यो न गुरुः कश्चिन्न पुत्रो न पिता तथा ॥ ५० ॥

न भार्या न पतिश्चैव भविता तत्र सङ्करः ।
कलौ च ते भविष्यन्ति धनाढ्या अपि याचकाः ॥ ५१ ॥

रसविक्रयिणश्चापि भविष्यन्ति कलौ युगे ।
अनावृष्टिभयात्प्रायो गगनासक्तदृष्टयः ॥ ५२ ॥

भविष्यन्ति जनाः सर्वे सदा क्षुद्भयकातराः ।
कलौ युगे भविष्यन्ति स्वल्पभाग्या बहुप्रजाः ॥ ५३ ॥

पतिवाक्यमनादृत्य सदान्यगृहतत्पराः ।
दुश्शीला दुष्टशीलेषु करिष्यन्त्यः सदा स्पृहाम् ॥ ५४ ॥

परुषानृतभाषिण्यो देहसंस्कारवर्जिताः ।
वाचालाश्च भविष्यन्ति कलौ प्राप्ते तु योषितः ॥ ५५ ॥

नगरेषु च ग्रामेषु प्राकाराट्टादिकान् जनाः ।
चोरादिभयभीताश्च काष्ठयन्त्राणि कुर्वते ॥ ५६ ॥

दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः ।
गोधूमान्नयवान्नाढ्यान् देशान् प्राप्स्यन्ति दुःखिताः ॥ ५७ ॥

स्वकार्यसिद्धिपर्यन्तं बन्धुत्वं कुर्वते जनाः ।
भिक्षवश्चापि मित्रादिस्नेहसम्बन्धयन्त्रिताः ॥ ५८ ॥

अन्नोपाधिनिमित्तेन शिष्यान् गृह्णन्ति भिक्षवः ।
उभाभ्यामथ हस्ताभ्यां शिरः कण्डूयनं स्त्रियः ॥ ५९ ॥

कुर्वन्त्यो गुरुभर्तॄणामाज्ञां भेत्स्यन्त्यनादृताः ।
पाषण्डालापनिरताः पाषण्डजनसङ्गिनः ॥ ६० ॥

यदा द्विजा भविष्यन्ति तदा वृद्धिं गतः कलिः ।
अल्पोदकास्तदा मेघा अल्पसस्या च मेदिनी ॥ ६१ ॥

अल्पक्षीरास्तथा गावः क्षीरात्सर्पिर्न जायते ।
एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव तु ॥ ६२ ॥

नास्ति वर्णान्तरं तत्र लयं यास्यन्ति ताः प्रजाः ।

सीदन्ति सन्तो विलसन्त्यसन्तः
परेषु मैत्री स्वजनेषु वैरम्।
पुत्रा म्रियन्ते जनकश्चिरायुः
पश्यन्ति लोकाः कलिकौतुकानि ॥ ६३ ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ ६४ ॥

त्यक्ष्यन्ति हि प्रियान्प्राणान् हनिष्यन्ति स्वकानपि।
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ ६५ ॥

चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु।
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ ६६ ॥

गृहप्रायेष्वाश्रमेषु योगिप्रायेषु बन्धुषु।
ततश्चानुदिनं धर्मः सत्यं शौचं दया क्षमा ॥ ६७ ॥

कालेन बलिना राजन्! नश्यन्त्यायुर्बलं स्मृतिः।
वित्तमेव कलौ नृणां जन्माचारगुणोदयाः ॥ ६८ ॥

दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यवहारके।
धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ ६९ ॥

स्त्रीत्वमेवोपभोगे स्याद्विप्रत्वे सूत्रमेव हि।
लिङ्गमेवाश्रमख्यातावन्यायो वृत्तिकारणम् ॥ ७० ॥

अवृत्तौ चापि दौर्बल्यं पाण्डित्ये चपलं वचः।
स्वीकार एव चोद्वाहे शुद्धत्वे स्नानमेव हि ॥ ७१ ॥

उदरम्भरिता स्वार्थे सत्यत्वे धार्ष्ट्यमेव हि।
दाक्ष्ये कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ॥ ७२ ॥

एवमाद्याः कलियुगे भविष्यन्ति क्रमेण हि।
यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् ॥ ७३ ॥

शोको मोहो भयं दैन्यं सकलिस्तामसः स्मृतः।
एवं कलियुगे धर्माः सर्वे साम्प्रतमीरिताः ॥ ७४ ॥

शिवपूजापरा ये च शिवनामपरायणाः।
त एव शिवतुल्याश्च न हि तान्बाधते कलिः ॥ ७५ ॥

न्यूनातिरेकिता सिद्धा कलौ वेदोक्तकर्मणाम् ।
हरस्मरणमेवात्र सम्पूर्णफलदायकम् ॥ ७६ ॥

शिव शङ्कर रुद्रेति नीलकण्ठ त्रिलोचन ।
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः ॥ ७७ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले कलिधर्मवर्णनं
नाम दशमस्तरङ्गः

---

## अथैकादशस्तरङ्गः

एवमेव कलेर्धर्माः सङ्क्षेपेण निरूपिताः ।
नानाविधांस्तथोत्पातान् कलिदोषसमुद्भवान् ॥ १ ॥

कथयामि समासेन तान्कुमार! निशामय ।

उत्पातकथनम्

देशाधिपे महाराजे दोषबुद्धिमनुव्रते ॥ २ ॥

अपचारो महानत्र प्रजासु क्षामपीडया ।
व्याधिभिर्वाथ बहुभिरथवा राजपीडया ॥ ३ ॥

उत्पाताः सम्भविष्यन्ति पुरे ग्रामे वनेऽथवा ।
काको मैथुनयुक्तश्चेच्छ्वेतो वा यदि दृश्यते ॥ ४ ॥

राजा वा म्रियते तत्र तदा देशो विनश्यति ।
उलूको वाशते यत्र निपतेद्वा तथा गृहे ॥ ५ ॥

ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ।
प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ॥ ६ ॥

अनिमित्तं तु पतनं दृढानां राजमृत्यवे ।
रजसा वा सधूमेन दिशो यत्र समाकुलाः ॥ ७ ॥

विवर्णा यत्र दृश्यन्ते ब्राह्मणाश्च विकर्षिणः ।
कृतवस्तु विपर्यस्ता नरो वा पूज्यपूजकः ॥ ८ ॥

नक्षत्रयोगव्यत्यासस्ते सर्वे भयसूचकाः ।
अग्निर्यत्र न दृश्येत हूयमानेषु शान्तिषु ॥ ९ ॥

पूर्णकुम्भाः स्रवन्ते वा वह्निर्वा विप्रलुप्यते ।
माङ्गल्याः स्वामिनो यत्र न श्रूयन्ते रवास्तथा ॥ १० ॥

वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः ।
अचलाः प्रचलन्त्येव प्रचला न चलन्ति च ॥ ११ ॥

प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः ।
अरण्यं यान्ति वै ग्राम्याः स्थलं यान्ति जलोद्भवाः ॥ १२ ॥

स्थलजा वा जलं यान्ति घोरं नाशं विनिर्दिशेत् ।
राजद्वारे पुरद्वारे शिवा यान्त्यशुभप्रदाः ॥ १३ ॥

दिवा रात्रिश्चरा यान्ति रात्रौ यान्ति दिवाचराः ।
ग्राम्यास्त्यजन्ति ग्रामं वा तच्चोत्पातस्य लक्षणम् ॥ १४ ॥

सन्ध्यासु दीप्तं शान्तं वा शिवा वाशन्ति विस्वरम् ।
मण्डलानि प्रकुर्वन्तस्ते वै मृतिफलप्रदाः ॥ १५ ॥

प्रदोषे कुक्कुटो वाशेद्धेमन्ते वापि कोकिलः ।
अर्कोदयेऽर्काभिमुखस्तदा मृत्युभयं भवेत् ॥ १६ ॥

गृहं कपोतः प्रविशेत् क्रव्यादो वा विलीयते ।
मधु वा मक्षिकाः कुर्युर्मृत्युर्गृहपतेर्भवेत् ॥ १७ ॥

प्राकारद्वारगेहेषु तोरणापणवीथिषु ।
केतुच्छत्रायुधाद्येषु क्रव्यादो निपतेद्यदि ॥ १८ ॥

जायते वाथ वल्मीको मधु वा दृश्यते यदि ।
स देशो नाशमायाति स्वामी वा म्रियते तदा ॥ १९ ॥

मूषकाः शलभा दृष्टाः प्रभूतं क्षुद्भयं भवेत् ।
नरापचारान्नियममपरज्यन्ति देवताः ॥ २० ॥
नानापराधाद्देवानामुपसर्गः प्रजायते ।

उत्पातत्रैविध्यम्

दिव्यान्तरिक्षभौमाश्च त्रिविधाः परिकीर्तिताः ॥ २१ ॥

ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ।
उल्कापातो दिशां दाहः परिवेषस्तथैव च ॥ २२ ॥

गन्धर्वनगरं चैव वृष्टिश्च विकृता च या ।
एवमादीनि लोकेऽस्मिन्नान्तरिक्षाणि निर्दिशेत् ॥ २३ ॥

चरं स्थिरं च लोकेऽस्मिन् भूकम्पमपि भूमिजम् ।
जलाशयानां विकृतं भौममेतद्धि निर्दिशेत् ॥ २४ ॥

भौमे चाथ फलं ज्ञेयं चिरेणैव विपच्यते ।
उभयं मध्यमफलं मध्यकालफलप्रदम् ॥ २५ ॥

अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ।
सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं भवेत् ॥ २६ ॥

[1]अद्भुतश्च विनष्टश्चेद्विना शान्त्या प्रदृश्यते ।
त्रिभिर्वर्षैस्तु तद्भव्यं सुमहद्भयकारणम् ॥ २७ ॥

राज्ञः शरीरे लोके च पुरे [2]दारे पुरोहिते ।
पाकमायाति पुत्रे च तथा वै कोशवाहने ॥ २८ ॥

ऋतुस्वभावाद्राजेन्द्रा भवन्त्यद्भुतसंज्ञिताः ।
शुभावहाश्च विज्ञेयास्तांश्च मद्वदतः शृणु ॥ २९ ॥

वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः ।
परिवेषरजोधूमा रक्तास्तार्कमयोदयाः ॥ ३० ॥

---

[1] अद्भुतस्य विनाशः—क. ग.  [2] द्वारे—मु. पा.

द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ ३१ ॥

तारोल्कपातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनस्फोटधूमरेण्वनिलाहतम् ॥ ३२ ॥

रक्तपद्मारुणा सन्ध्या नभः क्षुब्धार्णवोपमम् ।
सरितां चाप्सु संशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ ३३ ॥

शक्रायुधपरीवेषविद्युच्छुष्मविरोहणम् ।
चलनं चाद्रिगेहानां वर्षासु न भयावहम् ॥ ३४ ॥

दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनं च दिवाम्बरे ॥ ३५ ॥

गीतवादित्रनिर्घोषो वनपर्वतसानुषु ।
सस्यवृद्धिरपाण्डुत्वमग्रेऽपां शारदाः शुभाः ॥ ३६ ॥

शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥ ३७ ॥

दिशो धूमान्धकाराढ्याः सनभोवनपर्वताः ।
उच्चैः सूर्योदयास्ते च हेमन्ते शोभनाः स्मृताः ॥ ३८ ॥

हिमवातानिलोत्पातविरूपाद्भुतदर्शनम् ।
कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥ ३९ ॥

चित्रगर्भोद्भवाः स्त्रीषु गजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः ॥ ४० ॥

ऋतुस्वभावेन विनाद्भुतस्य
जातस्य दृष्टस्य तु शीघ्रमेव ।
कृत्वागमं शान्तिरनन्तरं तु
कार्या यथोक्ता वसुधाधिपेन ॥ ४१ ॥

लिङ्गवैकृतम्

देवतार्चाः [1] प्रणश्यन्ति वर्षन्ते प्रज्वलन्ति वा ।
आधावन्ति च रोदन्ति प्रस्विद्यन्ति हसन्ति च ॥ ४२ ॥

उत्तिष्ठन्ति निषीदन्ति दहन्ति शमयन्ति च ।
अधोमुखाश्च तिष्ठन्ति स्थानात्स्थानं व्रजन्ति हि ॥ ४३ ॥

वमन्त्यग्निं च वा धूमं स्नेहं रक्तं वसां तथा ।
एवमाद्याश्च दृश्यन्ते विकाराः सहसोत्थिताः ॥ ४४ ॥

देवायतनचैत्येषु [2] नरो वासं न रोचयेत् ।
राज्ञो वा निधनं तत्र स च देशो विनश्यति ॥ ४५ ॥

देवस्थानेषु चोत्पातान् दृष्ट्वा देशभयं वदेत् ।
पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम् ॥ ४६ ॥

ज्ञेयं सेनापतीनां च भयं स्कन्दगणेशजम् ।
लोकानां विष्णुवाय्विन्द्रमृत्युकर्मसमुद्भवम् ॥ ४७ ॥

विनायकोद्भवं ज्ञेयं गणानां चैव नायके ।
देवदेवे नृपालस्य देवस्त्रीषु नृपस्त्रियाः ॥ ४८ ॥

वास्तुदेवेषु विज्ञेयं गृहाणामेव नान्यथा ।
देवतार्चाविकारेषु श्रुतिवेत्ता पुरोहितः ॥ ४९ ॥

देवतार्चां तु गत्वा वै स्नातामाच्छाद्य धूपयेत् ।
पूजयेत्तां महाभाग ! गन्धमाल्यान्नसम्पदा ॥ ५० ॥

मधुपर्केण विधिवदुपतिष्ठेदनन्तरम् ।
तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ।
पुरोधा जुहुयादग्नौ सप्तरात्रमतन्द्रितः ॥ ५१ ॥

विप्रांश्च पूज्या मधुरान्नपानैः
सदक्षिणैः सप्तदिनं नरेन्द्र ! ।
अथाष्टमेऽह्नि क्षितिगोप्रदानैः
सकाञ्चनैः शान्तिमुपैति यावत् ॥ ५२ ॥

[1] प्रनृत्यन्ति वेपन्ते. [2] तत्र वासं-क.

अग्निवैकृतम्

अनग्निर्दीप्यते राष्ट्रे भृशमग्निरविस्वरः ।
न दीप्यते चेधमानः सराष्ट्रः पीड्यते नृपः ॥ ५३ ॥

प्रज्वलेदम्बु मांसं वा तदहः स्वामिनो वधः ।
प्रासादे तोरणे चैव वापीवेश्मपुरादिषु ॥ ५४ ॥

एतानि यत्र दृश्यन्ते तत्र राजभयं वदेत् ।
विद्युतो वा विदाह्यन्ते तत्रापि नृपतेर्भयम् ॥ ५५ ॥

धूमश्चानग्निजो यत्र तत्र विन्द्यान्महद्भयम् ।
तटिद्विनाभ्रं गगने भयं स्याद्वृष्टिवर्जनात् ॥ ५६ ॥

दिवा सतारे गगने तथैव भयमादिशेत् ।
विकारः स्वायुधानां स्यात्तत्र सङ्ग्राममादिशेत् ॥ ५७ ॥

त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः ।
समिद्भिः क्षीरवृक्षाणां सहस्रेण घृतेन च ॥ ५८ ॥

दद्यात्सुवर्णं च तथा द्विजेभ्यो
गां चैव वस्त्राणि तथाऽभयं च ।
एवं कृते पापमुपैति नाशं
यदग्निवैकल्यभयं नरेन्द्र ॥ ५९ ॥

वृक्षवैकृतम्

पुरेषु येषु दृश्यन्ते पादपा दैवचोदिताः ।
रुदन्तो वा हसन्तो वा स्रवन्तो वा रसं बहु ॥ ६० ॥

अरोगा वा विना वातं शाखा मुञ्चन्त्यसंक्रमम् ।
फलं पुष्पं तथा काले दर्शयन्ति त्रिहायनाः ॥ ६१ ॥

क्षीरं स्नेहं सुरां रक्तं मधु तोयं स्रवन्ति च ।
शुष्यन्त्यरोगाः सहसा शुष्का रोहन्ति वा पुनः ॥ ६२ ॥

उत्तिष्ठन्तीह पतिताः पतन्ति च तथोत्थिताः ।
तत्र वक्ष्यामि ते राजन् विपाकं फलमेव च ॥ ६३ ॥

रोदने व्याधिरभ्येति हसने देशविभ्रमः ।
शाखाप्रपतनं कुर्यात्सङ्ग्रामे योधपातनम् ॥ ६४ ॥

बालानां पतनं स्यात्तु बालानां फलपुष्पतः ।
स्वराष्ट्र[1]भेदं कुरुते [2]फलपुष्पं निरन्तरम् ॥ ६५ ॥

क्षयं सर्वत्र च क्षीरं स्नेहं दुर्भिक्षलक्षणम् ।
वाहनाशकरं मद्यं रक्तं सङ्ग्राममादिशेत् ॥ ६६ ॥

मधुस्रावे तथा व्याधिर्जलस्रावे न वर्षति ।
अरोगशोषणं ज्ञेयं भयदुर्भिक्षलक्षणम् ॥ ६७ ॥

शुष्केषु संप्ररूढेषु वीर्यमन्नं न रोहति ।
उत्थानं पतितानां च भयभेदकरं भवेत् ॥ ६८ ॥

स्थानात् स्थानस्य गमने देशभङ्गं तथादिशेत् ।
जल्पत्स्वपि च वृक्षेषु रुदत्स्वपि वनक्षयम् ॥ ६९ ॥

पुष्पैः फलैर्वा विकृतै राज्ञां मृत्युं तथादिशेत् ।
अन्येषु चैवं वृक्षेषु वृक्षोत्पाते त्वतन्द्रितः ॥ ७० ॥

आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् ।
वृक्षोपरि तथा छत्रं कुर्यात्कोपप्रशान्तये ॥ ७१ ॥

शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् ।
मूले चास्य षडावृत्त्या रुद्रं चैव जपेत्ततः ॥ ७२ ॥

मध्वाज्ययुक्तेन तु पायसेन
संपूज्य विप्रांश्च भुवं च दद्यात् ।
गीतेन नृत्तेन तथार्चयेत्तं
देवं परं पापविनाशहेतोः ॥ ७३ ॥

### वृष्टिवैकृतम्

अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयप्रदा ।
अनृतौ विकृता व्यक्तं वृष्टिर्व्याधिभयाय तु ॥ ७४ ॥

---

[1] खेदं—क.  [2] फलपुष्पमनार्तवम्.

शीतोष्णानां विपर्यासे ऋतूनां रिपुजं भयम् ।
शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ॥ ७५ ॥

अङ्गारपांसुवर्षे तु नगरं तद्विनश्यति ।
मज्जास्थि[1]स्नेहमांसानां जनमारभयं भवेत् ॥ ७६ ॥

पुष्पं फलं तथाप्यन्नं हिरण्यानि भयानि च ।
पांसुजन्तुफलानां च वर्षणे रोगसंभवः ॥ ७७ ॥

छिद्रं चातिप्रवर्षाय सस्यानामीतिवर्धनम् ।
विरजस्के रवौ व्यभ्रे यथा स्थानं न दृश्यते ॥ ७८ ॥

निरभ्रायां तथा रात्रौ तथा याम्योत्तरेण च ।
इन्द्रायुधं तथा दृष्ट्वा उल्कापातं तथैव च ॥ ७९ ॥

दिग्दाहपरिवेषौ च गन्धर्वनगरं तथा ।
परचक्रभयं कुर्याद्दिशोपस्करमेव च ॥ ८० ॥

सूर्येन्दुपर्जन्यसमीरणानां
यागस्तु कार्यो विधिवद्द्विजेन्द्रैः ।
धनानि गोकाञ्चनदक्षिणाश्च
देया द्विजानामघनाशहेतोः ॥ ८१ ॥

### जलवैकृतम्

नगरादपसर्पन्ते समीपमुपयान्ति च ।
नद्यो नदप्रस्रवणा विरसा हि भवन्ति च ॥ ८२ ॥

विवर्णं कलुषं तत्र फेनवर्जं तु संकुलम् ।
क्षीरस्नेहसुरासक्तं वहन्ते चाकुलोदकाः ॥ ८३ ॥

षण्मासाभ्यन्तरे तत्र परचक्रभयं भवेत् ।
जलाशया नदन्ते च प्रज्वलन्ति कथंचन ॥ ८४ ॥

प्रचलत्यम्बुजिह्वा च ज्वाला धूमं सृजन्ति च ।
सङ्गीतशब्दाः श्रूयन्ते जनमारोऽत्र संभवेत् ॥ ८५ ॥

जप्तव्या वारुणा मन्त्रास्तैस्तु होमो जपो भवेत् ।

---

[1] स्नायु-मु.

मध्वाज्ययुक्तं परमान्नमत्र
देयं द्विजानां नृप भोजनार्थम् ।
गावश्च देयाः सितवस्त्रयुक्ता-
स्तथोदकुम्भाः सकलाघशान्त्यै ॥ ८६ ॥

प्रसववैकृतम्

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
अमानुषा अखण्डाश्च अजातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥ ८७ ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ ८८ ॥

विवासयेत्ता नृपतिः स्वराष्ट्रात्
स्त्रियश्च पूज्याश्च तथा द्विजेन्द्राः ।
दानैस्तथा ब्राह्मणतर्पणैश्च
लोके ततः शान्तिमुपैति पापम् ॥ ८९ ॥

एवं विधानि राजेन्द्र ह्यद्भुतानि भवन्ति हि ।
अन्यान्यपि च लोकानामनिष्टव्यञ्जनानि च ॥ ९० ॥

अमी गणेभ्यो बसवेश्वरेण
धर्माः कलेरद्भुतसंभवाश्च ।
प्ररूपिताः प्राग्भवते प्रदिष्टाः
संक्षेपतोऽमी भुवने विचित्राः ॥ ९१ ॥

इति श्रीशिवतत्त्वरत्नाकरे चतुर्थकल्लोले कल्युत्पातनिरूपणं नामैकादशस्तरङ्गः

---

## अथ द्वादशस्तरङ्गः

### नरपतिसिंहासनवृत्तान्तनिरूपणम्

उत्पाताः कलिधर्माश्च सङ्क्षेपात्ते निरूपिताः ।
प्राग्ये गणेभ्यो बसवेश्वरेण परिकीर्तिताः ॥ १ ॥

सिंहासनं नरपतेर्भवेदिति यदीरितम् ।
तत्र मे महती स्वामिन् ! शुश्रूषा वर्तते हृदि ॥ २ ॥

तद्वृत्तान्तं विशेषेण मह्यमाख्याहि सर्ववित् ।
पुत्र! सर्वं ब्रुवे तुभ्यं समाहितमनाः शृणु ॥ ३ ॥

साकेतनगरे नष्टे विद्यारण्यमुनीश्वरैः ।
निर्मितं चक्रनगरं भूपं हरिहरं प्रति ॥ ४ ॥

तस्मिन् पुरवरे रम्ये श्रीदेवी चक्रनायिका ।
सान्निध्यमकरोत्तत्र शतं वर्षसहस्रकम् ॥ ५ ॥

विद्यारण्यवृत्तान्तः

विद्यारण्यमुनीन्द्रस्य वृत्तान्तमधुना ब्रुवे ।
येन व्यधायि नगरी विद्यानगरसंज्ञिता ॥ ६ ॥

पूर्वं विप्रवरः कश्चिच्छिवधर्म इति श्रुतः ।
गृहस्थभावमालम्ब्य तस्थौ शीलसमन्वितः ॥ ७ ॥

स च स्त्रीपुत्रपौत्राद्यैर्दारिद्र्येण महीयसा ।
दूयमानमना नित्यं चिन्तयन् समवर्तत ॥ ८ ॥

ततः स रेवणासिद्धसंप्रदायप्रवर्तिनाम् ।
शङ्कराचार्यवर्याणां पारम्पर्यक्रमागतम् ॥ ९ ॥

संन्यासिनमुपाश्रित्य विनयावनतोऽधिकम् ।
वृत्तान्तमखिलं तस्मै यतये संव्यजिज्ञपत् ॥ १० ॥

स यतिर्विप्रवर्याय श्रीविद्यां षोडशाक्षरीम् ।
इह सौख्यप्रदामन्ते मुक्तिदां समुपादिशत् ॥ ११ ॥

तस्मै श्रीचक्रराजस्य पूजाविधिमपि क्रमात् ।
तस्याभ्यनुज्ञामासाद्य द्विजः सद्भक्तिपूर्वकम् ॥ १२ ॥

आचचार पुनश्चर्यां स चैकादशसङ्ख्यया ।
अथापि देवीमर्चाभिरप्रसन्नां विलोक्य सः ॥ १३ ॥

खिन्नचेता बलाद्दग्धुं श्रीचक्रमुपचक्रमे ।
तदा [1]सा वृद्धमातङ्गीरूपमास्थाय देवता ॥ १४ ॥

---

[1] श्रीवृ—क.

कड्डोले

विप्र! भो कीदृशं कर्म यतसे कर्तुमीरय।
इति पृष्टे तया विप्रे निजोदन्तनिवेदिनि ॥ १५ ॥

स्मित्वा तस्यां तु भो विप्र! त्वमालोकय पार्श्वतः।
एवं वाचं ब्रुवाणायामुदैक्षत स पार्श्वतः ॥ १६ ॥

एकादशगिरींस्तत्र दृश्यमानान् विलोकयन्।
किमेतदिति तां विप्रः प्रोवाचैषा च तं प्रति ॥ १७ ॥

एतांसि यानि वृत्तानि प्रागेकादशजन्मसु।
तानि पर्वतरूपाणि दृश्यन्ते पुरतस्तव ॥ १८ ॥

भाविजन्मन्यभीष्टं ते सिद्ध्येदित्यभिधाय सा।
अन्तर्हिताभवत्तस्मिन् समये तदनन्तरम् ॥ १९ ॥

स्वव्यापाराद्उपरतो गुरोरभ्यर्णमभ्यगात्।
अवोचदप्युदन्तं स्वं ध्यात्वा च गुरुराह तम् ॥ २० ॥

अन्यजन्मकृते भूया[1]त्सन्न्यासे भवतो द्विज।
यत्र प्रसादश्चक्रेऽस्या भवेदिति समीरितम् ॥ २१ ॥

इत्युक्तेनार्थितस्तेन स सन्न्यासमुपादिशत्।
विद्यारण्य इति प्रादादाख्यां तस्मै ततः परम् ॥ २२ ॥

रेवणासिद्धसंप्राप्तं चन्द्रमौलीशमप्यदात्।
आख्यच्चानेन लिङ्गेन तवाभीष्टाप्तिरित्यपि ॥ २३ ॥

अयासीच्च ततो वयं बदर्याश्रममप्यसौ।
शृङ्गिणा सहितस्तत्र व्यासानुग्रहवैभवात् ॥ २४ ॥

त्रिकालज्ञानसंपत्तिं प्राप विद्याश्च सर्वशः।
ततो निर्गत्य पम्पाख्यं क्रमात् क्षेत्रं समाश्रयन् ॥ २५ ॥

विरूपाक्षस्य भजनं कुर्वंस्तत्र स्थितोऽभवत्।
विद्यारण्ये विरूपाक्षदेवालयमुपाश्रिते ॥ २६ ॥

चन्द्रमौलीशितुः पूजां समाचरति सर्वदा।
[2]जातः स्वप्ने शिवस्तस्मै जगादैवमनायकम् ॥ २७ ॥

---

[1] त्सन्न्यासो–मु. [2] जातः स्वप्नो शिवस्तस्मिन्–मु.

भूमण्डलमिदं म्लेच्छकिराताद्यैरुपद्रुतम् ।
आयास्यतो महान्तौ द्वौ ताभ्यामारचयन् पुरीम् ॥ २८ ॥

विधाय पट्टबन्धं च तत्र स्थापय तावितिं ।
अपरेद्युर्यथापूर्वं विरूपाक्षालयस्थिते ॥ २९ ॥

नियमं कुर्वति स्वीयं विद्यारण्ययतीश्वरे ।
उज्जयिन्यां हरिहरबुक्कनामाङ्किताबुभौ ॥ ३० ॥

वीररुद्रमहीभर्तुः कोशगेहाधिकारिणौ ।
तस्यात्यये विषादेन तीर्थयात्राविधायिनौ ॥ ३१ ॥

योजनादूषतुर्दूरे विरूपाक्षदिदृक्षया ।
यदा स्वप्ने तदा तस्यां रात्रावाचष्ट शङ्करः ॥ ३२ ॥

शृणुतं भो युवां यातं विरूपाक्षस्य सन्निधिम् ।
अध्यास्ते सुमहान् भिक्षुर्लोकानुग्रहकाङ्क्षया ॥ ३३ ॥

निर्माणं नगरस्यापि कृत्वा वां स्थापयेदिति ।
तत्परेद्यवि मध्याह्ने तयोः स्वं वन्दमानयोः ॥ ३४ ॥

ब्रुवतोः स्वमुदन्तं च स्वप्नसंभाषणादिकम् ।
भावं बुध्वा निजोदन्तं श्रावयित्वा च ताबुभौ ॥ ३५ ॥

संवादात्स्वप्नयोर्मत्वा कार्यस्यावश्यभाविताम् ।
त्रयस्ते नगरारम्भे यावच्चिन्तां वितेनिरे ॥ ३६ ॥

तावत्कश्चिन्मेषपालः शङ्करानुग्रहेरितः ।
विदित्वा हृदयं तेषामिदमूचे परं वचः ॥ ३७ ॥

तीरे तु तुङ्गभद्राया दक्षिणे पर्वते स्थिता ।
महालक्ष्मीरभीष्टं वः शंसेत्किंच ममाभिधा ॥ ३८ ॥

न ग्राह्यानेन चार्थोऽयं समुदीरित इत्यपि ।
निवेदनीयं नो देव्या इत्यस्यानन्तरं त्रयः ॥ ३९ ॥

तल्लक्ष्मीभवनं प्राप्य रचयामासुरर्चनाम् ।
देवी साप्यशरीरोत्थवाचा मेषपतौ कृते ॥ ४० ॥

उपहारे वदेयं व इति तान् प्रत्यवोचत ।
मेषपालसमक्षं तेष्वागतेषु पुनस्ततः ॥ ४१ ॥

सोपहारीकृतेर्वार्तां परोक्षामपि च स्वतः ।
तेभ्यः प्रागेव तत्रत्यां स्वमाहात्म्येन शंसति ॥ ४२ ॥

स्वपरोक्षार्थविज्ञाता महानित्यवधार्य तम् ।
तस्योपहारीकृतये सान्त्वयत्सु तदा पुनः ॥ ४३ ॥

तेन चैवं समाचख्ये देवानामिष्टसिद्धये ।
अदादसून् दधीचिः प्राग्युष्माकं कार्यसिद्धये ॥ ४४ ॥

वितरेयं शरीरं वो ममैकं कुरुतेप्सितम् ।
त्रयोदश त्वया सार्कं ये च स्युर्भाविनो नृपाः ॥ ४५ ॥

ते मदीयाभिधानाङ्कां यूयं विख्यातिमाप्नुत ।
इत्युदीर्याथ सविधं देव्याः प्राप तिरोहितः ॥ ४६ ॥

तस्यामन्तर्भवन्नेष न बहिः काप्यलक्ष्यत ।
देव्यथाज्ञापयामास विद्यारण्ययतीश्वरम् ॥ ४७ ॥

त्वया श्रीचक्ररूपेण नगरे निर्मिते सति ।
तत्पुराभ्यन्तरेऽदृष्टा हेमवृष्टिर्भविष्यति ॥ ४८ ॥

सत्रिपादत्रिघटिकापर्यन्तमिति सोऽप्यथ ।
अकल्पयत्पुरं रम्यं यथा देव्या समीरितम् ॥ ४९ ॥

ततो हरिहरस्यादौ पट्टबन्धमकारयत् ।
अशिषत्सोऽपि वसुधामनाकलितशात्रवाम् ॥ ५० ॥

शिष्टानां पालने पूर्वं दुष्टानां निग्रहे परम् ।
भागं स्वनामधेयस्य सार्थकं स विनिर्ममे ॥ ५१ ॥

विद्यारण्याय बिरुदान्यात्मीयानि च दत्तवान् ।
सम्पदं च [1] तदुत्पन्नां तस्मै पाद्यमिवाब्धये ॥ ५२ ॥

तमारभ्य महीपाला मेषपालोपनामकाः ।
त्रयोदश महीमेनामरक्षन्नीतिसंयुतम् ॥ ५३ ॥

---

[1] समुत्पन्नां—क.

हरिहरबुक्कादि त्रयोदशमहीपालाः

आदौ हरिहरो बुक्कस्ततो हरिहरस्तथा ।
विरूपाक्षस्ततो बुक्कस्ततो देवस्ततः परम् ॥ ५४ ॥

रामराजस्ततः पश्चाद्विरूपाक्षस्ततः परम् ।
देवस्ततो विरूपाक्षस्ततो मारपनामकः ॥ ५५ ॥

ततो रामो विरूपाक्षस्ततो भूपास्त्रयोदश ।
द्वात्रिंशदुत्तरानेते द्विशताब्दान् क्षितौ स्थिताः ॥ ५६ ॥

त्रयोदश नृपालेभ्यः पश्चात्सप्त नृपा इमे ।

तदनन्तरभाविनः सप्तनृपतयस्तेषां वत्सराणि च

प्रौढो द्वादशवर्षाणि दश वीरनृसिंहराट् ॥ ५७ ॥

ततः साल्वनृसिंहाख्यो द्वादश त्रीनथाच्युतः ।
चत्वारिंशत्ततः कृष्णस्ततो द्वे तु सदाशिवः ॥ ५८ ॥

चतुर्विंशतिवर्षाणि रामराजो महीपतिः ।
एवं सप्त महीपालास्ततः क्षितिमपालयन् ॥ ५९ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदंम्बरशक्तिसमन्वित-
परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचिते
वेदागमान्तर्गतविविधविद्यातन्त्रसारभूते शिवतत्त्वरत्नाकरे चतुर्थकल्लोले
नरपतिसिंहासनवृत्तान्तवर्णनं नाम द्वादशस्तरङ्गः समाप्तः

———

द्विचत्वारिंशदधिकशतोत्तरसहस्रकम् ।
ग्रन्था रचितरङ्गाढ्ये कल्लोलेऽस्मिंश्चतुर्थके ॥

पुराणस्मृतिसिद्धान्तानितिहासविमिश्रितान् ।
विद्यारण्यकृतिं चैव पितामहसुसंहिताम् ॥

विलोक्यायं विरचितः कल्लोलोऽभूच्चतुर्थकः ।

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचेन्नवीरकरसञ्जातेन विद्याब्धिना ।
गौरीनाथपदाब्जभृङ्गबसवक्षोणीभृता निर्मिते
कल्लोलः परिपूरितः कृतिवरे तस्मिंश्चतुर्थोऽभवत् ॥

———

## पञ्चमः कल्लोलः

### प्रथमस्तरङ्गः

सङ्गेऽवसदम्बिकेति हि रुषा [1] प्राप्ता जडत्वी शिर-
स्त्वस्थानेन जटाभवच्छिरसिजा वैरूप्यमक्ष्णामपि ।
अस्थ्यङ्गे परिदृश्यते मलिनता कण्ठेऽपि गोप्ता न मे
तातस्येति वदन्तमीक्ष्य तनुजं शम्भुर्हसन् पातु [2] वः ॥ १ ॥

विद्यानगरनिर्माणं तत्र सिंहासनोद्भवः ।
तत्र राज्ञां सार्वभौमपदवीसंभवक्रमः ॥ २ ॥

तेषां च सङ्ख्या वर्षाणि श्रुत्वाऽत्यानन्दितोऽभवम् ॥
दिशो गणानां वासार्हो बसवेश्वरकीर्तितः ॥ ३ ॥

यश्च मन्नामको भक्तस्तत्र स्यादित्युदीरितः ।
मल्लदेशः स को वा स्याद्भक्तस्तन्नामकश्च कः ॥ ४ ॥

तद्वंशस्य क्रमः को वा सर्वमेतन्निरूपय ।
कुमार ! वर्णये सर्वं सावधानमनाः शृणु ॥ ५ ॥

#### मल्लदेशवर्णनम्

रम्यं वनवसादेशकुटजाद्र्योर्यदन्तरम् ।
मल्लदेश इति ख्यातो देशः सोऽयं समृद्धिमान् ॥ ६ ॥

यत्राश्चर्यकरानेकमण्योषधिसमावृतः ।
वर्तते कुटजाख्योऽद्रिः सिद्धसङ्घनिषेवितः ॥ ७ ॥

अस्मिन्नर्थेऽस्ति संबादः शिवगौर्योः स कथ्यते ।

---

[1] प्राप्तं जडत्वं-मु. पा.    [2] नः-क.

मलदेशविषये शिवगौरीसंवादः
(कुटजाद्रिवर्णनम्)

यथा काशी त्रिलोकेषु गीयते मत्समाश्रिता ॥ ८ ॥

तथैव सिद्धर्षिगणैर्गीयते तदुपत्यका ।
परितः सरितो यस्य तीर्थायुतशतानि च ॥ ९ ॥

यदङ्गे मुख्यतीर्थानि निवसन्ति वरानने ! ।
तेषां नामानि वक्ष्येऽहं शृणु देवि ! समासतः ॥ १० ॥

तावत्तदङ्गविस्तार औन्नत्यं च मयोच्यते ।
पूर्वपश्चिमतो देवि ! सार्धयोजनमायतः ॥ ११ ॥

दक्षिणोत्तरमाने तु सार्धाद्विक्रोशसम्मितः ।
गजेन्द्राकारवद्भाति मुखतः पृष्ठतः प्रिये ! ॥ १२ ॥

पश्चिमाभिमुखत्वाच्च पूर्वभागे तु निम्नता ।
शिखरस्योन्नतत्वं तु पञ्चक्रोशमितं प्रिये ! ॥ १३ ॥

पृष्ठतः पूर्वभागे तु सार्धक्रोशस्ततस्ततः ।
यन्मुखे वह्नितीर्थं तु नेत्रयोरत्रिभास्करौ ॥ १४ ॥

यत्पार्श्वयोर्वृषं चक्रं तत्कुक्षौ नैव गण्यते ।

कुटजाद्रौ विद्यमानानि तीर्थानि

ईशान्यां चक्रतीर्थं तु आग्नेय्यां नाहुषं ततः ॥ १५ ॥

रजताश्माह्वयं दक्षे नैर्ऋत्यां तु विनायकम् ।
वायव्यां व्याघ्रतीर्थं तु उत्तरे च कमण्डलुः ॥ १६ ॥

यदङ्गाद्विशतैर्हस्तादत्रितीर्थं ततस्त्वधः ।
किंचित्पश्चिमभागे तु शतबिन्दुं विदुः प्रिये ! ॥ १७ ॥

तदधः पञ्चपञ्चाशद्धस्तमाने सहस्रकम् ।
रौप्याश्मतीर्थं चक्राह्वमत्री व्याघ्रः कमण्डलुः ॥ १८ ॥

शतबिन्दुसहस्राह्वमृषभं वह्निसंज्ञितम् ।
एतानि नव मुख्यानि सर्वसिद्धिकराणि च ॥ १९ ॥

ऋषिभिः सिद्धसाध्याद्यैरेषु तीर्थेष्वतन्द्रितैः ।
सिद्धयोऽनेकशो लब्धा देवदानवदुर्लभाः ॥ २० ॥

अत्रिश्च वृषभो योगी नागार्जुनविनायकौ ।
वह्निव्याघ्रौ तथा ब्रह्मा हरिर्नहुषभूपतिः ॥ २१ ॥

ऐश्वर्यार्थं च सिद्ध्यर्थं सुरा अपि महत्तरम् ।
तपस्तेपुः सुबहुलं कालं कमललोचने ! ॥ २२ ॥

वायुर्व्याघ्रस्वरूपेण हरिश्चक्रात्मना स्वयम् ।
नागोऽन्तकस्वरूपेण तपस्तेपुः सुसिद्धये ! ॥ २३ ॥

अन्तर्नगरवासी यो हरो गङ्गाधरः क्वचित् ।
ताण्डवाय प्रवृत्तोऽभूदम्बिकायाः पुरः पुरा ॥ २४ ॥

मूर्ध्नि गङ्गाप्रवाहस्तु जटाताडनतः प्रिये ! ।
शतधा शतबिन्दुः स्यात्सहस्रं च सहस्रधा ॥ २५ ॥

लोकं पुनीतस्तौ देवि ! दिव्यसिद्धिप्रदौ नृणाम् ।
अन्ये च तीर्थप्रवराः सर्वसिद्धिप्रदायकाः ॥ २६ ॥

बहुनात्र किमुक्तेन मया तत्रैव गम्यते ।
तत्र स्थितानां सिद्धानां यथाभिलषितं ददत् ॥ २७ ॥

निवसिष्यामि देवेशि ! तवानुमतिरस्ति चेत् ।
त्वमपि त्रिषु लोकेषु मातेति बहुधोच्यसे ॥ २८ ॥

संहृत्य मूकनामानं दानवं बहुदर्पितम् ।
इहैव वस मूकाम्बेत्याख्यां प्राप्नुवती सती ॥ २९ ॥

इत्युक्त्वान्तर्दधे देवः शङ्करो लोकशङ्करः ।
तथा विधाय तन्नाम्ना ख्याताऽवर्तत तत्र सा ॥ ३० ॥

### वयस्स्तम्भनादिसिद्धयः

वयसस्स्तम्भनं कालवञ्चनं मृतजीवनी ।
पादुकायास्तथा सिद्धिरदृश्यकरणं तथा ॥ ३१ ॥

परकायप्रवेशश्च सिद्धिस्तद्धन्मणेरपि ।
मन्त्रसिद्धिस्तन्त्रसिद्धिरौषधस्येति सिद्धयः ॥ ३२ ॥

इत्येवमादिकाः सिद्धीर्मूकाम्बायाः प्रसादतः ।
संप्राप्य तत्र तिष्ठन्ति योगिनो मोक्षकाङ्क्षिणः ॥ ३३ ॥

तासां सिद्धीनां स्वरूपाणि

ब्रुवे तासां च सिद्धीनां स्वरूपाणि शृणु क्रमात् ।
कृष्णपक्षे [1] चतुर्दश्यां संध्यायां शाल्मलिद्रुमम् ॥ ३४ ॥

बलिपूजादिकं कृत्वा रक्तसूत्रेण वेष्टयेत् ।
ॐ ह्रां ततोऽमृतस्यन्दिन्यमृतं स्रव तत्परम् ॥ ३५ ॥

स्वाहेत्यनेन मन्त्रेण सप्तवारं तु शाल्मलिम् ।
अभिमन्त्र्य कुठारेण निहन्याद्बहुशः सुधीः ॥ ३६ ॥

तस्य निर्यासमादाय प्रभाते भास्करोदये ।
प्राच्यां भृङ्गशतावर्या गुळूच्याः स्वरसैः पृथक् ॥ ३७ ॥

सप्तवारं प्रतिरसं तेन भावनामाचरेत् ।
संपिष्योलूखले कुर्याद्गुटिका बदरैः समाः ॥ ३८ ॥

प्रतिवासरमेकैकां धारयेद्गुटिकां ततः ।
अब्दां द्विसप्तके याते दन्तकेशनखं पतेत् ॥ ३९ ॥

पुनर्द्विसप्तके याते नूतना रदना नखाः ।
संभवन्ति ततः केशा भृङ्गपक्षसमत्विषः ॥ ४० ॥

द्व्यष्टवर्षाकृतिर्दृश्यो बलवीर्यसमन्वितः ।
समासहस्रजीवी स्यान्नात्र कार्या विचारणा ॥ ४१ ॥

मूलत्वक्पत्रपुष्पाणि फलमित्यङ्गपञ्चकम् ।
आहृत्य शाल्मलितरोः सूक्ष्मचूर्णं तु कारयेत् ॥ ४२ ॥

---

[1] त्रयोदश्यां—क.

मधुना सर्पिषा युक्तं बिडालपदमात्रकम् ।
तल्लिहेत्प्रातरुत्थाय मासमेकं मिताशनः ॥ ४३ ॥

मासेन जायते मर्त्यो वलीपलितवर्जितः ।
मासमेतत्प्रयोगेण मत्तेभसदृशो भवेत् ॥ ४४ ॥

जीवत्यब्दसहस्राणि तेजस्वी तरुणाकृतिः ।
नीरोगी वीर्यसंपन्नो जायते नात्र संशयः ॥ ४५ ॥

सितां रक्तां च पीतां च कृष्णां मुण्डीं चतुर्विधाम् ।
पञ्चम्यां कृष्णपक्षस्य पौर्णमास्यां तु वा निशि ॥ ४६ ॥

रोहिण्यां श्रवणे पुष्ये रेवत्यां वा समुद्धरेत् ।
पञ्चाङ्गानि समाहृत्य छायायां परिशोषयेत् ॥ ४७ ॥

सर्पिषा मधुना सार्धं बिडालपदमात्रकम् ।
तच्चूर्णमुपयुञ्जीत क्षीरपिष्टकभोजनः ॥ ४८ ॥

एकविंशे दिने याते दिव्यदेहो भवेन्नरः ।
मासत्रयप्रयोगेण लोके प्राप्नोत्यदृश्यताम् ॥ ४९ ॥

पञ्चमासप्रयोगेण मोदते विबुधैः सह ।
मासषट्कप्रयोगेण चिरायुः खेचरो भवेत् ॥ ५० ॥

अमरीं पुष्यनक्षत्रे समूलां पल्लवान्विताम् ।
आदाय शोषयित्वा च सुश्लक्ष्णं तच्च चूर्णयेत् ॥ ५१ ॥

सर्पिषा मधुना सार्धं भक्षयेत्कर्षमात्रकम् ।
गव्यक्षीरसमायुक्तं कुर्यात्स्वल्पान्नभोजनम् ॥ ५२ ॥

सप्ताहे प्रथमे याते विनश्यन्ति रुजः स्फुटम् ।
प्राप्ते द्वितीयसप्ताहे दिव्यदेहो भवेन्नरः ॥ ५३ ॥

तृतीये भूतलस्थानि निधानान्यपि पश्यति ।
चतुर्थे षट्पदानीला जायन्तेऽस्य शिरोरुहाः ॥ ५४ ॥

समासहस्रत्रितयं जीवेत्तारुण्यसंयुतः ।
गन्धर्वत्वं पञ्चमे स्याद्गन्धवाहसमागतिः ॥ ५५ ॥

षष्ठे वाचस्पतिप्रख्यः प्रज्ञावान् जायते नरः ।
सप्तमे पूर्णचन्द्राभः सर्वाह्लादकारो भवेत् ॥ ५६ ॥

अष्टमे सर्वसत्वानां पीयूषं वितरत्यसौ ।
सप्तद्वीपाधिपत्यं च नवमे सप्तके भवेत् ॥ ५७ ॥

भूतं भव्यं भविष्यच्च दशमे वेत्ति सप्तके ।
अश्रुतान्यपि शास्त्राणि जानात्येकादशे नरः ॥ ५८ ॥

द्वादशे सप्तके प्राप्ते द्वितीय इव मन्मथः ।
वशीकरोति सर्वाणि नरनारीमनांस्यपि ॥ ५९ ॥

संवत्सरोपयोगेन समा लक्षत्रयं सुखी ।
जरापलितमुक्ताङ्गो जीवत्येव न संशयः ॥ ६० ॥

एवं रसायनं प्रोक्तमव्यापत्तिकरं नृणाम् ।
इति प्रोक्तो वयस्तम्भः कालवञ्चनमुच्यते ॥ ६१ ॥

### कालवञ्चनम्

पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ ६२ ॥

### रिष्टशब्दार्थः

रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ।
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ॥ ६३ ॥

विकृतिर्या समासेन रिष्टं तदिह लक्ष्यते ।

### मरणचिह्नानि

उत्तराभिमुखस्थो यो यद्विजानाति दक्षिणम् ॥ ६४ ॥
विमुखः स तु विज्ञेयः सप्तमासान्न जीवति ।
शुद्धं निर्मलमादित्यं विरश्मिं यदि पश्यति ॥ ६५ ॥

द्विवर्षान्ते क्षयं याति नान्यथा भैरवोदितम् ।
सितं हरितरक्तं वा सशून्यं भानुमण्डलम् ॥ ६६ ॥

यः पश्यति सदा सोऽयं वर्षादूर्ध्वं न जीवति।
रविबिम्बे जले दृष्टे संपूर्णे न मृतः क्वचित् ॥ ६७ ॥

खण्डे दिक्षु क्रमान्मृत्युः षट्द्वित्र्येकमासतः।
मध्यछिद्रे दशाहेन तद्दिने धूमसङ्कुले ॥ ६८ ॥

अरुन्दतीं ध्रुवं सोमं छायां वापि महापथम्।
यो न पश्यति निस्तेजा वर्षान्ते म्रियते ध्रुवम् ॥ ६९ ॥

सच्छिद्रो दृश्यते चन्द्रस्तथा वा दर्पणे रविः।
दृश्यते निष्प्रभो वापि यस्यासौ म्रियते ततः ॥ ७० ॥

संपूर्णो वहते सूर्यः सोमश्चैव न दृश्यते।
पक्षान्ते जायते मृत्युः कालज्ञाने शिवोदितम् ॥ ७१ ॥

यस्य वा स्नातमात्रस्य हृत्पद्मं परिशुष्यति।
धूमो वा मस्तके चास्ति सप्तमासान्न जीवति ॥ ७२ ॥

कृष्णरक्तानि वस्त्राणि रक्तमाल्यानुलेपनम्।
स्वप्ने च लभतेऽकस्मात् षण्मासान्ते न जीवति ॥ ७३ ॥

भक्तिशीलगुणत्यागो बुद्धिर्बलमहेतुकम्।
यस्यैतानि निवर्तन्ते षण्मासान्ते न जीवति ॥ ७४ ॥

अशिरस्कां यदा पश्येदात्मच्छायामथापि वा।
न कृष्णतारकां पश्येत् षण्मासान्ते न जीवति ॥ ७५ ॥

राक्षसैर्भूतवेतालैः श्वानसूकरगर्दभैः।
गृध्रैः काकैरुलूकैर्वा महिषैश्च क्रमेलकैः ॥ ७६ ॥

स्वप्ने वेष्टितमात्मानं पश्येदब्दं न जीवति।
स्वप्ने देहं स्वकं स्थूलं तैलाक्तं वाऽथ पश्यति ॥ ७७ ॥

भीतः क्रुद्धोऽथवा नित्यं मासादूर्ध्वं न जीवति।
निशि चापं दिवा चोल्काममेघाशनिसंभवाम् ॥ ७८ ॥

यः पश्येन्म्रियते सोऽपि षण्मासाच्छङ्करोदितम।
शङ्खावर्ते भ्रुवोर्मध्ये गुल्भयोर्मर्मसन्धिषु ॥ ७९ ॥

स्पन्दनं यस्य नैवास्ति मासादूर्ध्वं न जीवति ।
चक्षुषी स्रवतो नित्यं न शृणोत्यपि निश्चितम् ॥ ८० ॥

दीपगन्धं न जानाति मासार्धं न स जीवति ।
[1] विना शाखाद्रुमं प्रेतं पिशाचं दिव्यपातनम् ॥ ८१ ॥

यदि पश्यति च स्वप्ने दशमासान्न जीवति ।
ओष्ठयोर्धूसरत्वं च तालुदेशस्य शुष्कता ॥ ८२ ॥

स्कन्धौ वा भुग्नमायातौ षण्मासं न स जीवति ।
भजन्ते यच्छिरो नित्यं यूका वा मक्षिकादयः ॥ ८३ ॥

त्यजन्ति वाऽथ नैराश्यात् षण्मासं न स जीवति ।
कालज्ञानमिदं ज्ञात्वा तस्य कुर्वीत वञ्चनम् ॥ ८४ ॥

कालवञ्चनम्

योगाभ्यासेन मन्त्रैर्वा ध्यानैर्वाथ रसायनैः ।
वर्षाण्येकादश ब्रह्मा शरीरे व्याप्य तिष्ठति ॥ ८५ ॥

तथा विष्णुस्तथा रुद्रो देहमावर्तते पुनः ।
ब्रह्मकाले नाभिपद्मे विष्णुकाले हृदम्बुजे ॥ ८६ ॥

कण्ठाब्जे रुद्रकाले तु ध्येयं कालस्य वञ्चनम् ।
कालसंकर्षिणीं विद्यामतिरूपां जपेत्ततः ॥ ८७ ॥

कालो विमुखतो याति लक्षजापे कृते सति ।

कालसङ्कर्षिणीमन्त्रः

मन्त्रः—ह्रीं स्रं प्रें क्ष्रां द्रीं द्रां क्रों संमोहिनि चण्डे कालसङ्कर्षणि नमः ।

मन्त्रेणानेन जुहुयात्स्वाहान्तेन तथाहुतिम् ॥ ८८ ॥

कुब्जिकासमयां चाथ जपेद्वाथ नवार्णकाम् ।
एतच्चाम्नायशास्त्रेषु कथितं कालवञ्चनम् ॥ ८९ ॥

---

[1] विनाशाख्यद्रुमं—क.

कल्लोले

नाभितो ब्रह्मरन्ध्रान्तं सर्पाभां चातिरूपिणीम् ।
प्रोल्लसन्तीं जपेन्नित्यं मायां कालस्य वञ्चनीम् ॥ ९० ॥
कालवञ्चनमित्युक्तं पादुकासिद्धिरुच्यते ।

पादुकासिद्धिः

अश्वलालाङ्कुलीतैलैः पेषयेच्छ्वेतसर्षपम् ॥ ९१ ॥

तल्लिप्तहस्तपादस्तु योजनानां शतं व्रजेत् ।
अङ्कोलतैलसंपिष्टश्वेतसर्षपलेपिताम् ॥ ९२ ॥

पादुकामुष्ट्रचर्मोत्थां समारुह्य शतं व्रजेत् ।
काकजङ्घासिरा ग्राह्या गृध्रस्य च वसा तथा ॥ ९३ ॥

अश्वकर्णीसमायुक्तामुष्ट्रीक्षीरेण भावयेत् ।
अनेन लिप्तपादस्तु योजनानां शतं व्रजेत् ॥ ९४ ॥

पादुकासिद्धिमन्त्राः

मन्त्रः—ॐ नमो भगवते रुद्राय भूतवेतालग्रासनाय शङ्खचक्रगदा-
धराय हलहल महते चन्द्रवेतालाय ॐ फट् स्वाहा ।

अनेन पादलेपार्थं द्रव्यं समभिमन्त्रयेत् ।
श्वानमार्जारनकुलपित्तं ग्राह्यं समं समम् ॥ ९५ ॥

काकमांसवसाजङ्घां पिष्ट्वा पादौ प्रलेपयेत् ।
योजनानां शतं गत्वा पुनरायाति तत्क्षणात् ॥ ९६ ॥

मन्त्रः—ॐ नमो भगवते रुद्राय नमो ब्रह्मणे नमः सूर्याय
नमश्चन्द्राय गदाधराय हलिहालि स्वाहा ।

शिखिनीकाञ्चनीमूलामजामूलीं च चण्डिकाम् ।
दरदं पारदं चैतदुष्ट्रीक्षीरेण पेषयेत् ॥ ९७ ॥

अनेन पादलेपेन श्वानरूपधरो नरः ।
योजनानां सहस्रं तु गत्वा प्रतिनिवर्तते ॥ ९८ ॥

आतुण्डस्य तु मूलानि तिलतैलेन पाचयेत् ।
पादं च जानुपर्यन्तं लिप्त्वा दूराध्वगो भवेत् ॥ ९९ ॥

मन्त्रः—ॐ नमश्चण्डिकायै गगने गमय गमय चालय चालय वेगवाहिनि वेगवाहिनि ह्रीं स्वाहा ।

पूर्वोक्तस्य तु योगस्य मन्त्रोऽयं समुदीरितः ।
निर्गुण्डीमूलमादाय मलं पारावतोद्भवम् ॥ १०० ॥

पलाशबीजसंयुक्तं रक्तपाठाफलानि च ।
उलूकहृदयं चैव पेषयेच्छीतवारिणा ॥ १०१ ॥

अनेन पादलेपेन योजनानां शतं व्रजेत् ।

अत्र मन्त्रः—ॐ ह्रीं ह्रीं प्लं ह्रः फट् नमः ।

जपेल्लक्षत्रयं मन्त्रे ध्यात्वा तां रक्तवर्णिकाम् ॥ १०२ ॥

कदम्बवनमध्ये तु मधुपर्णीं त्रिलोचनाम् ।
कुण्डलैर्मणिभिर्दिव्यवस्त्रालङ्कारभूषिताम् ॥ १०३ ॥

अमृतं कलशं बामे दक्षिणे मणिहारकम् ।
दधतीं चिन्तयेद्दीप्तां रक्तपद्मोपरिस्थिताम् ॥ १०४ ॥

प्रहसन्तीं चित्रलेखां प्रसन्नां नवयौवनाम् ।
ईदृशीं पूजयेन्नित्यं जपान्ते होमयेत्ततः ॥ १०५ ॥

शर्करा छागमांसं च गोक्षीरं मधुसंयुतम् ।
दशांशेन ततस्तुष्टा खेचरत्वं प्रयच्छति ॥ १०६ ॥

विमानं खेचरत्वं च ददात्यमृतभोजनम् ।
आयुर्लक्ष्मीं जयं चैव हारकेयूरकुण्डलम् ॥ १०७ ॥

नानालोकगतिं चैव यतो मन्त्री सुखी भवेत् ।

अत्रायं मन्त्रः—ॐ ह्रीं चित्रलेखे आगच्छ आगच्छ तुरु तुरु ह्रीं स्वाहा ।

इत्येवं पादुकासिद्धेर्योगः साधु निरूपितः ॥ १०८ ॥

मृतसंजीविनीं विद्यां प्रवक्ष्यामि समासतः ।

मृतसञ्जीविनीविद्या

लिङ्गमङ्कोल उत्पाद्य स्थापयित्वा प्रपूजयेत् ॥ १०९ ॥

नवं घटं च तत्रैव स्थापयेल्लिङ्गसन्निधौ ।
वृक्षं लिङ्गं घटं चैव सूत्रेणैकेन वेष्टयेत् ॥ ११० ॥

चरुभिः साधनैर्नित्यं प्रतियामं क्रमेण तु ।
एवं दिवानिशं कार्यमघोरेण समर्चनम् ॥ १११ ॥

पुष्पादि फलपाकान्तं साधनं कारयेत्सुधीः ।
फलानि पक्वान्यादाय पूर्ववत्पूजयेद्धटम् ॥ ११२ ॥

शुक्लपक्षे ततः कृत्वा बीजानां घर्षणं मुखे ।
तन्मुखे टङ्कणं चूर्णं किंचित्किंचित्प्रलेपयेत् ॥ ११३ ॥

विस्तीर्णमुखभाण्डे तु कुम्भकारकरोद्धृताम् ।
मृत्तिकां लेपयेत्तत्र तानि बीजानि पूरयेत् ॥ ११४ ॥

कुण्डल्याकारयोगेन यत्नादूर्ध्वमुखानि वै ।
तच्छुष्कं ताम्रपात्राधो भाण्डं देयमधोमुखम् ॥ ११५ ॥

आतपे धारयेत्तैलं ग्राहयेत्तच्च रक्षयेत् ।
माषार्धं चैव तत्तैलं माषार्धं तिलतैलकम् ॥ ११६ ॥

नस्यं देयं मृतस्यैतत् सम्यक्तस्य हिताय तु ।
तत्क्षणाज्जीवति नरो गतो वापि यमालयम् ॥ ११७ ॥

रोगापमृत्युसर्पादिमृतो जीवति निश्चयः ।
पुंशुक्रं पारदं तुल्यं तेन तैलेन मर्दयेत् ॥ ११८ ॥

नस्यं देयं मृतस्यैतत्कालदष्टस्य तत्क्षणात् ।
जीव आयाति तच्चित्रं महादेवेन भाषितम् ॥ ११९ ॥

पुष्यभास्करयोगे तु गुडूचीमूलमाहरेत् ।
पिष्टमुष्णजलैः पीतमपमृत्युहरं भवेत् ॥ १२० ॥

अत्रायं मन्त्रः—अघोरेभ्योऽथ+रुद्ररूपेभ्य इत्यन्तः ।

मृतसञ्जीविनीमुक्त्वाऽथादृश्यकरणं ब्रुवे ।

अदृश्यकरणीविद्या

लक्षमेकं जपेन्मन्त्रं राजद्वारे शुचिः स्थितः ॥ १२१ ॥

सक्षीरैर्मालतीपुष्पैर्हुतैः सिद्ध्यति यक्षिणी ।
ददाति घुटिकां सा तु मुखस्थादृश्यकारिणी ॥ १२२ ॥

अत्रायं मन्त्रः—ॐ मोदते मोदनविडम्बने आत्मीयसहाने हिम देहि स्वाहा ।

चतुर्लक्षमिमं मन्त्रं श्मशाने प्रजपेच्छुचिः ।
नग्नो व्रती ततस्तुष्टा पटं यच्छति यक्षिणी ॥ १२३ ॥

तेनावृतो नरोऽदृश्यो विचरेद्वसुधातले ।
निधिं पश्यति गृह्णाति न विघ्नैः परिभूयते ॥ १२४ ॥

अत्रायं मन्त्रः—ॐ ह्रीं द्रीं स्फीं स्फें श्मशानवासिनि प्रसीद स्वाहा ।

नग्नश्चरन्निशि ध्यात्वा जप्त्वा वामेन पाणिना ।
अदृश्यकरणीं विद्यां लक्षजापेन चाप्नुयात् ॥ १२५ ॥

अत्रायं मन्त्रः—ॐ नमो निशाचर महामहेश्वर ममोपर्यादतः सर्वलोकलोचनानि बंध बंध देव्याज्ञापयति स्वाहा ।

रात्रौ कृष्णचतुर्दश्यां श्मशाने वा शिवालये ।
अलिबल्युपहारेण कुर्यादर्चनमुत्तमम् ॥ १२६ ॥

ततो दीपोऽङ्कोलीतैलैर्वर्ती स्यादब्जतन्तुभिः ।
प्रज्वाल्य नृकपाले तु तत्पात्रोद्धृतकज्जलम् ॥ १२७ ॥

अञ्जयेन्नेत्रयुगलं देवैरपि न दृश्यते ।

अत्रायं मन्त्रः—ॐ हुं फट् कालि महाकालि मांसशोणितभोजने ।
रक्तकृष्णमुखे देवि मा मा पश्यतु मानुषः ॥
हुं फट् स्वाहा ।

एतन्मन्त्रायुतजपात्सिद्धिर्भवति निश्चिता ॥ १२८ ॥

खञ्जरीटं सजीवं तु गृहीत्वा फाल्गुने क्षिपेत् ।
पञ्जरे रक्षयेत्तावद्यावद्भाद्रपदावधि ॥ १२९ ॥

तदा स पञ्जरोऽदृश्यो जायते नात्र संशयः ।
खञ्जरीटशिखा ग्राह्या हस्तस्थाऽदृश्यकारिणी ॥ १३० ॥
त्रिलोहवेष्टितां रक्षेद्धारयेन्मूर्ध्नि सर्वदा ।

त्रिलोहस्वरूपम्

दश हेम द्विषट्ताम्रं तार्प्यं षोडशभागिकम् ॥ १३१ ॥
एषा संख्या त्रिलोहस्य ज्ञातव्या सर्वकर्मसु ।
क्रमेण वेष्टयेद्यत्नाद्गुटिकानामयं क्रमः ॥ १३२ ॥

अत्रायं मन्त्रः—ॐ नमो भगवते वड्डामरेश्वराय नमो रुद्राय विलि
विलि व्याघ्रचर्मपरिधानाय मरुळ मरुळ कुरुळ
कुरुळ चण्ड प्रचण्ड किलि किलि स्वाहा ।

कृष्णमृत्पूरिते वाऽथ कृष्णगुञ्जानृमुण्डके ।
रात्रौ कृष्णचतुर्दश्यां बलिवल्युपहारकैः ॥ १३३ ॥

नित्यं कुर्याद्बलिं पूजां जलैः सिञ्चेत्सदा निशि ।
यावत्फलति सा गुञ्जा ततः कृष्णमजं बलिम् ॥ १३४ ॥

कृत्वा योगीश्वराणां च भोजयेद्भक्तिपूर्वकम् ।
ततश्चाष्टोत्तरशतं ग्राह्यं गुञ्जाफलं क्रमात् ॥ १३५ ॥

सूच्या तु प्रोतयेत्सूत्रे सा मालाऽदृश्यकारिणी ।
धारयेन्मूर्ध्नि कण्ठे वा स द्रष्टुं केन शक्यते ॥ १३६ ॥

अत्रायं मन्त्रः—इलापिङ्गलायै स्वाहा ।

अदृश्यकरणे चैवं रचितं दिक्प्रदर्शनम् ।
सिद्धिष्वेतासु सिद्धानि सन्ति योगान्तराण्यपि ॥ १३७ ॥

परकायप्रवेशनम्

स्वदेहादन्यदेहान्तर्योगाभ्यसनवैभवात् ।
प्रवेशनं यदेतत्स्यात्परकायप्रवेशनम् ॥ १३८ ॥

मणिमन्त्रौषधिसिद्धिस्वरूपकथनम्

देवतानुग्रहप्राप्तमणिना सिद्धिरस्ति या ।
मन्त्राणां विविधानां च जपात्सिद्धिस्तु या भवेत् ॥ १३९ ॥

कालयोगविशेषेण सिद्धिरौषधिभिस्तु या ।
मणिमन्त्रौषधीसंज्ञा एतास्तिस्रस्तु सिद्धयः ॥ १४० ॥

एताश्चान्याश्च विविधा मूकाम्नायाः प्रसादतः ।
सिद्धीः संप्राप्य कुटजगिरौ तिष्ठन्ति योगिनः ॥ १४१ ॥

कुटजाद्रेरुत्तरेऽस्ति देशो वनवसाह्वयः ।
तस्मिन् देशे च नगरं वर्तते मधुनामकम् ॥ १४२ ॥

तत्र तिष्ठति लिङ्गं च मधुकेश्वरनामकम् ।
वरदातटिनीतीरे देवैर्यक्षैश्च चारणैः ॥ १४३ ॥

गरुडैः पन्नगैः सिद्धैरभीष्टाप्तयै निषेवितम् ।
इत्येवं शिवशक्त्याख्यक्षेत्रयोर्मध्यतः स्थितः ॥ १४४ ॥

मल्लनामाङ्कदेशोऽयं यत्र मत्पूर्वजा नृपाः ।
धर्मतेजोयशोभाजो धरणीमन्वपालयन् ॥ १४५ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले कुटजाद्रिवर्णनवयस्तम्भकालवञ्चनमृतसञ्जीविनी पादुकागत्यदृश्यकरणपरकायप्रवेशादिनिरूपणं नाम प्रथमस्तरङ्गः

---

## द्वितीयस्तरङ्गः

क्षेत्रद्वितयमध्यस्थो मल्लदेशो य ईरितः ।
स च कीदृग्वंशवृद्धोऽस्माकं प्राथमिकश्च कः ॥ १ ॥

प्रावर्तत कथं तस्मादेतद्वंशपरंपरा ।
वृत्तानि कीदृशान्यासन्नेतत्सन्ततिजन्मनाम् ॥ २ ॥

एतत्सर्वं समाख्याहि गुरो ! विख्यातविक्रम ! ।
विस्तृतं तद्ब्रुवे तुभ्यं सर्वाश्चर्यकरं सुत !॥ ३ ॥

### विस्तरेण मल्लदेशवर्णनम्

तुङ्गभद्रादयो यत्र परितः सरितः शुभाः ।
स्वपयोबिन्दुसम्बन्धनिर्धूताखिलपातकाः ॥ ४ ॥

स्वयं व्यक्तिमवाप्तानि शिवलिङ्गानि भूरिशः ।
रामेश्वरादीनीष्टार्थान्[1] दिशन्ति स्वैकचेतसाम् ॥ ५ ॥

यत्र सर्वेऽपि मनुजा शिवलिङ्गार्चनापराः ।
तन्नामासक्तरसनास्तद्ध्यानामीलितेक्षणाः ॥ ६ ॥

विभूतिरेखाविलसल्ललाटफलकान्तराः ।
रुद्राक्षमालिकोद्भासिहृदो यत्राखिला नराः ॥ ७ ॥

आश्रमा यत्र विविधा विनिर्धूतातिथिश्रमाः ।
रुद्रैकादशिनीशैवागमपाठरवाङ्किताः ॥ ८ ॥

यत्राग्रहारा बहवो भूसुरेभ्यः समर्पिताः ।
क्षोणीरमण्या रुचिरा हारा इव विभान्ति ये ॥ ९ ॥

यत्र प्रतिपदं सत्राण्यासते तत्र भूसुराः ।
पात्रार्पितपदार्थानां श्राम्यन्ति कबलीकृतौ ॥ १० ॥

यन्मठेष्वेव नासङ्ख्या किंतु भोक्तृजनेष्वपि ।
तेषां निवासदिवसेष्वपीयं परिदृश्यते ॥ ११ ॥

यत्र देशे प्रवर्तन्ते सर्वतो दर्शनान्यपि ।
तन्मतानुगतानां च मठभेदाः सहस्रशः ॥ १२ ॥

कुम्भसम्भवभी[2]त्यक्ताः स्वस्थानाः संभृतामृताः ।
सागरा इव कासरा यत्र राजन्ति भूरिशः ॥ १३ ॥

हंसा यत्र सरस्तीरे विभूतिविशदश्रियः ।
आत्मचिन्तापरा एव क्षपयन्ति दिवानिशम् ॥ १४ ॥

यत्र शालिवनी व्याप्ता परितो हरितप्रभा ।
महिष्या भूपतेः क्षोण्याः प्रतिसीरेव दृश्यते ॥ १५ ॥

दृश्यन्ते बहुशो यत्र क्रमुकारामवीथयः ।
भर्तृसाम्यधृता भूमेः हरिद्ध्वजपटा इव ॥ १६ ॥

---

[1] दिशन्त्येकप्रचेतसाम्–मु.   [2] त्यक्तस्वस्थानाः -मु.

यत्र ताम्बूलवल्लीभिराश्लिष्टाः पूगशाखिनः ।
आरामे कामिनां भूयः सूचयन्त्युपगूहनम् ॥ १७ ॥

जातुदघ्नप्रसूनोद्यद्रजोनिवहसंभृते ।
पटवासो यदुद्याने वर्तते सर्वसुग्रहः ॥ १८ ॥

शुकचञ्चूमुखदलत्पुण्ड्रेक्षूद्यद्रसापगाः ।
क्षेत्राणामतिमाधुर्यमावहन्त्यो वहन्ति याः ॥ १९ ॥

द्रुमाः फलभरानम्रा यत्र पल्लवपाणिभिः ।
चलितैराह्वयन्तीव छायां प्रत्यध्वयायिनः ॥ २० ॥

तरूणामालवालाम्बुसेको विफलतां गतः ।
पुष्परेणुभरैर्यत्र मकरन्दद्रवैरपि ॥ २१ ॥

त्रिक्रोडदष्टकेरळुफलाम्भःपङ्किले तले ।
तत्फलेषु पदं न्यस्य सञ्चरन्त्यध्वयायिनः ॥ २२ ॥

यद्ग्रामे धान्यराश्यग्रमषीमुद्राङ्कितान्तरः ।
निशाकरः स्वैरचारी कलङ्कित्वमवाप्तवान् ॥ २३ ॥

बन्धः काव्ये शशिन्यङ्को मदो यत्र मतङ्गजे ।
छत्रे कनकदण्डश्च शास्त्रे चिन्ता न चान्यथा ॥ २४ ॥

कम्पा ध्वजेषु वर्णानां संकरश्चित्रकर्मसु ।
मधुपानमलिव्राते दूतसंप्रेषणं रतौ ॥ २५ ॥

अधोगतिर्द्रुमूलेषु तारकोद्धरणं गुहे ।
रामायणे स्त्रीवधश्च भारते द्यूतखेलनम् ॥ २६ ॥

मृणालेषु गुणच्छेदो भङ्गः स्रोतस्सु नान्यथा ।

केळदिराजपरंपरापीठिका

देशेऽस्मिन् केळदीनाम्नि पुरे गार्हस्थ्यमाश्रितः ॥ २७ ॥

गुरुभक्तिपरस्तस्थौ शैवो बसवनामकः ।
सनाम्नया कान्तया युक्तः शिवया स यथा शिवः ॥ २८ ॥

तस्य पर्याप्तवसनाशनसौख्यस्य जज्ञिरे ।
क्रमात्कुमाराश्चत्वारः पुमर्था इव धीमतः ॥ २९ ॥

कालक्रमेण सविधं शिवस्य समुपेयुषि ।
तस्मिन्नथानुगतयोस्तं द्वयोः सुतयोरपि ॥ ३० ॥

अवर्धेतां चौडभद्रनामानौ द्वौ कुमारकौ ।
ताभ्यां माता बभौ भानुचन्द्राभ्यां द्यौरिवोन्नता ॥ ३१ ॥

उद्वाहमङ्गलमपि कारयामास सा तयोः ।
अनन्तरं च सुखिनोस्तिष्ठतोरेकदा तयोः ॥ ३२ ॥

चौडनाम्नः कथा

स्वकारितां कृषिं द्रष्टुं चौडनामा विनिर्गतः ।
कृकलासाः पक्षिणश्च तस्य श्रेयांस्यसूचयन् ॥ ३३ ॥

तानालोक्य पुरो हृष्यन्मानसे चलितेऽग्रतः ।
सपल्लवलसच्छायं रसालतलमाश्रिते ॥ ३४ ॥

शयाने कश्चन फणी मन्दं मन्दमुपागतः ।
प्रसार्य फणमुन्नम्रमुपर्युपरि मस्तकम् ॥ ३५ ॥

आतन्वानोऽवसत्स्वैरविहारी तावदम्बिका ।
अन्वेषयन्त्युपागच्छदपश्यच्चापि निद्रितम् ॥ ३६ ॥

ऊर्ध्वं प्रसारितं मूर्ध्नः फणिनः फणमण्डलम् ।
आलोक्य शङ्कितमनाश्चिन्तयामास भूरिशः ॥ ३७ ॥

तस्मिन्नवसरे सोऽपि फणी तस्मादपासरत् ।
सा च प्रबोध्य पुत्राय जगादोदन्तमीदृशम् ॥ ३८ ॥

रणे वने जले शैले सुप्तं मत्तं च देहिनम् ।
पुराकृतानि पुण्यानि रक्षन्तीति न वाङ्मृषा ॥ ३९ ॥

इति संभाषमाणौ तौ मातापुत्रौ गृहं गतौ ।
ततोऽस्य कपिला धेनुरेका भवनवर्तिनी ॥ ४० ॥

वनं प्रतिदिनं गत्वा सायमायाति तद्गृहम् ।
पयो न कियदप्येषा दोग्धीत्यालोच्य चेतसि ॥ ४१ ॥

न क्षीरमूधसि स्वल्पमपि वा दृश्यते कुतः ।
त्वमेतां दुग्धवान् धेनुमिति वाचा प्रतर्जितः ॥ ४२ ॥

गोपालस्तामनु व्यग्रो जाग्रदेव परेद्यवि ।
ययौ प्रतीक्षमाणो गौरारामावसरे तु सा ॥ ४३ ॥

कंचिद्गुल्मं प्रविश्य स्वं क्षीरं तस्मिन् ददाविति ।
दृष्ट्वोदन्तममुं गोपः स्वामिनेऽथ न्यवेदयत् ॥ ४४ ॥

परेद्युरद्भुतं चैतद्दिदृक्षुः स्वजनैः सह ।
गत्वा संछेद्य तद्गुल्मं भृत्यैस्तन्मध्यगं परम् ॥ ४५ ॥

चौडप्पनाम्नो गुहायां रामेश्वराभिधलिङ्गदर्शनम्

लिङ्गमेकं ददर्शान्यत्किमस्तीति दिदृक्षया ।
खातायां शासनशिलाफलको भुव्यदृश्यत ॥ ४६ ॥

वाचिते निरधार्यस्मिन् लिङ्गं रामेश्वराभिधम् ।
पूजयामास तं नित्यमुपचारैस्तदेकधीः ॥ ४७ ॥

स्वेच्छया सृजतो लोकान् तेषां प्रेरयतो धियम् ।
अन्यथा कुर्वतोऽप्येतान् दुष्करं किं महेशितुः ॥ ४८ ॥

तत्प्रसादमहिम्नाऽस्य कदाचित्स्वपतो निशि ।
स्वप्नो जातस्त्रियामान्ते निधिसंप्राप्तिसूचकः ॥ ४९ ॥

ततः प्रातः समुत्थाय तत्फलं च विमृश्य सः ।
निधानं लब्धवान् पश्चात् बहुद्रविणपूरितम् ॥ ५० ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले देशवर्णनचौडप्पनायकरामेश्वरानुग्रहवर्णनं नाम द्वितीयस्तरङ्गः

———

# तृतीयस्तरङ्गः

गुरो! स्वप्नान्निधिप्राप्तिसूचकादवधारयम् ।
तस्य स्थानं च तच्चिह्नैः निधिं प्रायेति कीर्तितम् ॥ १ ॥

स्वप्नाश्च कीदृशास्तेषु के पुनः कस्य सूचकाः ।
निधिस्थानं तु कैश्चिह्नैः केन वा ज्ञायते वद ॥ २ ॥

ब्रुवे फलानि स्वप्नानां निधिचिह्नाञ्जनानि च ।

## स्वप्नभेदाः

दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥ ३ ॥

भाविको दोषजश्चेति स्वप्नः सप्तविधः स्मृतः ।
तेष्वाद्या निष्फलाः पञ्च यथा स्वप्रकृतिर्दिवा ॥ ४ ॥

विस्मृतो दीर्घदृत्स्थो हि पूर्वरात्रे चिरात्फलम् ।

## सुस्वप्नफलानि

रात्रौ पूर्वादियामेषु स्वप्नो दृष्टः क्रमात्फलम् ॥ ५ ॥

करोति वर्षाद्वर्षार्धात्त्रिमासात्पक्षतस्तथा ।
अरुणोदयवेलायां द्वादशाहात्फलप्रदः ॥ ६ ॥

गवां दोहनकाले तु त्रिरात्रेण फलप्रदः ।
गोविसर्जनवेलायां तदहस्तु फलप्रदः ॥ ७ ॥

अशुभः प्राक् शुभः पश्चाच्छुभः प्राक् च ततोऽशुभः ।
पाश्चात्यः फलदः स्वप्नस्तत्र पूर्वस्तु निष्फलः ॥ ८ ॥

यत्किंचिदशुभं दृष्ट्वा तत्क्षयाय पुनः स्वपेत् ।
सुस्वप्नं कीर्तयेत्सद्यो दुःस्वप्नं नैव कीर्तयेत् ॥ ९ ॥

धातुप्रकोपजनितं चिन्तितं चापि वर्जयेत् ।

## वातजः स्वप्नः

वातप्रकोपवान् रात्रावाकाशगमनादिकम् ॥ १० ॥
यत्पश्यति पुनः स्वप्ने तद्वातजमुदाहृतम् ।

पित्तजः स्वप्नः

स्वप्ने तु पश्यति सुवर्णदिनेशदीप-
दावाग्निकिंशुकजपामणिकर्णिकारान् ।
रक्ताब्जषण्डरुधिरौघतटित्समूहान्
पित्तप्रकोपसहितः स तु पित्तजः स्यात् ॥ ११ ॥

कफजः स्वप्नः

सुप्तस्तु पश्यति समुद्रनदीसरांसि
मुक्ताफलप्रकरहंससिताब्जशङ्खान् ।
नक्षत्रकुन्दकुमुदेन्दुतुषारपातान्
श्लेष्माधिको यदि नरः कफजः स तु स्यात् ॥ १२ ॥

चिन्तितस्वप्नः

यद्यच्च ध्यायति दिवा नरः कार्यसमाकुलः ।
तत्पश्यति पुनः स्वप्ने तच्चिन्तितमुदाहृतम् ॥ १३ ॥

फलासाधकाः स्वप्नाः

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना ।
कामार्तेनातिधूर्तेन दृष्टः स्वप्नो न सिद्ध्यति ॥ १४ ॥
मलमूत्रादिपीडोत्थः स्वप्नः सर्वो निरर्थकः ।

सत्यफलप्रदाः स्वप्नाः

अदृष्टहेतुकाः स्वप्नाः सर्वे सत्यफलप्रदाः ॥ १५ ॥

स्वप्ने तु यो नरः पश्येद्राजानं कुञ्जरं हयम् ।
सुवर्णं वृषभं गां च कुटुम्बं तस्य वर्धते ॥ १६ ॥

आरोहणं गोवृषकुञ्जराणां
प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितं मृतिश्च
स्वप्नेष्वगम्यागमनं च धन्यम् ॥ १७ ॥

क्षीरिणं फलिनं वृक्षमेकाकी योऽधिरोहति ।
तत्रस्थश्च विबुध्येत धनं शीघ्रमवाप्नुयात् ॥ १८ ॥

आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि सप्रभम् ।
पश्येद्रोगाद्विमुच्येत महतीं श्रियमाप्नुयात् ॥ १९ ॥

आदित्यमण्डलं वापि चन्द्रमण्डलमेव वा ।
स्वप्ने गृह्णाति हस्ताभ्यां राज्यं संप्राप्नुयान्नरः ॥ २० ॥

सफलं च महावृक्षं वनं च सफलं महत् ।
पर्वतं वा सकान्तारं स्वप्ने दृष्ट्वा श्रियं भजेत् ॥ २१ ॥

आरोहणे वा चैतेषां श्रियमाप्नोत्यनुत्तमाम् ।
द्रुमानारुह्य च फलं गृह्णंच्छ्रियमवाप्नुयात् ॥ २२ ॥

यत्किंचिदुच्चमारुह्य स्वप्ने वृद्धिमवाप्नुयात् ।
पिबेत्सागर[1]मक्षोभ्यं सजलां सरितं पिबेत् ॥ २३ ॥

तृष्णया यो विबुध्येत स राज्यं लभते ध्रुवम् ।
सागरं सरितो वापि तीर्णो यस्तु प्रबुध्यते ॥ २४ ॥

तीर्णं भयं विजानीयात् स्वप्नान्ते तु ध्रुवं नरः ।
पूर्णं तु सागरं क्षुब्धं सर्वाश्च सरितस्तथा ॥ २५ ॥

दृष्ट्वा श्रियमवाप्नोति महद्राज्यं ततो [2]भवेत् ।
मातरं पितरं पुत्रान् द्विजान् बन्धून् सुहृज्जनान् ॥ २६ ॥

यदि पश्येन्नरः स्वप्ने विपुलां श्रियमाप्नुयात् ।
सुरां पिबति यः स्वप्ने अगम्यां वापि गच्छति ॥ २७ ॥

अचिरेणैव कालेन कल्याणं तस्य निर्दिशेत् ।
उत्तमं रूपसंपन्नं पुरुषं शुक्लवाससम् ॥ २८ ॥

स्त्रियं वा तादृशीं स्वप्ने यदि पश्येद्धनागमः ।
मानुष्यकाकमत्स्यानां शवमांसं स्पृशेद्यदि ॥ २९ ॥

---

[1] मक्षिभ्यां–क. [2] लभेत्–मु.

रक्तां वाराङ्गनां चापि महद्धनमवाप्नुयात् ।
कन्यां सपद्महस्तां च गौरीं चापि तथाविधाम् ॥ ३० ॥

स्वप्ने दृष्ट्वा नरः शीघ्रं लक्ष्मीं संप्राप्नुयाद्ध्रुवम् ।
बलाकान् कुक्कुटांश्चैव मृगांश्च श्वेतपादपान् ॥ ३१ ॥

सुवर्णपक्षिणश्चैव दृष्ट्वा तु लभते श्रियम् ।
गृहधिष्ण्यादिकरणं कुलगोत्रविचारणा ॥ ३२ ॥

वृक्षारामादिकरणं स्थितिप्रदमिहोच्यते ।
उत्पलं कमलं शुक्लमालामाभरणानि च ॥ ३३ ॥

अगरुं चापि यः स्वप्ने लभते स सुखी भवेत् ।
गोऽश्वयुक्तं रथं स्वप्ने एकाकी योऽधिरोहति ॥ ३४ ॥

तत्रस्थो यदि बुध्येत ऐश्वर्यं लभते नरः ।
आसने शयने याने शरीरे चापि वाहने ॥ ३५ ॥

ज्वलमानो विबुध्येत लभते महतीं श्रियम् ।
दीपं मूलं फलं स्वप्ने कन्यां छत्रं तथा ध्वजम् ॥ ३६ ॥

गोशकृच्च तथा दृष्ट्वा चिन्तितं लभते ध्रुवम् ।
आमं मानुषमांसं तु स्वप्नान्ते यस्तु खादति ॥ ३७ ॥

पादभक्षी शतप्राप्तिः सहस्रं बाहुभक्षणे ।
राज्यं शतसहस्रं वा लभते शीर्षभक्षणे ॥ ३८ ॥

यस्तु श्वेतेन सर्पेण दश्यते दक्षिणे भुजे ।
सहस्रं लभते क्षिप्रमपूर्णे त्वष्टमीदिने ॥ ३९ ॥

क्षीरं वा बहु पीत्वा तु स्वप्नान्ते यः प्रबुध्यते ।
विपुलार्थागमस्तस्य भवतीह न संशयः ॥ ४० ॥

सर्पैः श्वभिर्वा दष्टस्य भवेद्यस्य न शोणितम् ।
उत्थितस्यैव जानीयात्सम्पदस्तस्य वै ध्रुवम् ॥ ४१ ॥

तरुणं जीर्णमात्मानं स्वप्ने यस्तु प्रपश्यति ।
वृद्धिं चास्य विजानीयादायुषामिति निश्चयः ॥ ४२ ॥

जातरूपमयं छत्रं श्वेतमाल्यविभूषितम् ।
आकाशात्तु समीपस्थं दृष्ट्वा निधिमवाप्नुयात् ॥ ४३ ॥

देवालये च प्रतिमां शुक्लमाल्यविभूषिताम् ।
दृष्ट्वाप्नोति श्रियं सम्यक्केषामेवाभिभाषितम् ॥ ४४ ॥

विप्राणां शुक्लवस्त्राणां शुक्लानां च गवामपि ।
दर्शनं त्वसकृत्स्वप्ने कार्यसिद्धेस्तु लक्षणम् ॥ ४५ ॥

स्वर्णं रौप्यं सिताम्भोजं शस्त्रमाभरणं तथा ।
यः पश्येच्छ्रियमाप्नोति निधिं चापि समश्नुते ॥ ४६ ॥

पूर्णं च विपुलं धान्यं ग्रहमग्निवृतं तथा ।
राजानं चोन्नतागारं कांस्यं दृष्ट्वा श्रियं लभेत् ॥ ४७ ॥

सौवर्णैः क्रिमिभिर्गात्रं स्वप्ने यस्य विशीर्यते ।
धनधान्यमवाप्नोति आरोग्यं च भजेन्नरः ॥ ४८ ॥

सुवर्णमिव चात्मानं स्वप्नान्ते यस्तु पश्यति ।
वृद्धिं तस्य विजानीयादायुष्मानप्यसौ भवेत् ॥ ४९ ॥

बीजानामङ्कुरं चापि दृष्ट्वा सन्तानमाप्नुयात् ।
शङ्खचक्रध्वजादीनि तालवृन्तं च चामरम् ॥ ५० ॥

रक्तकुम्भं च संपूर्णं पश्यन्निधिमवाप्नुयात् ।
घृतं च पायसं सक्तून् क्षीरं वा शर्करा दधि ॥ ५१ ॥

[1] (आम्रादिकं फलं वापि भक्षयन् सुखमाप्नुयात् ।
वेदादिपुण्यशब्दानां श्रवणे च धनागमः) ॥ ५२ ॥

देवद्विजगुरुस्त्रीभिर्भाषणं च शुभं विदुः ।
आत्मनश्चाभिषेकः स्यात् क्षीराद्यैर्द्रविणप्रदः ॥ ५३ ॥

शकटं च गजं चैव प्रासादं शिबिकां तथा ।
फलकं च रथं चापि धिष्ण्यं चारोहयेद्यदि ॥ ५४ ॥

---

[1] मुद्रिते नास्ति.

धनं प्राप्नोति विपुलं शुभं वृक्षादिकं तथा ।
आत्मनो बन्धनं चैव आरोग्यप्रदमुच्यते ॥ ५५ ॥

सुस्वप्ना इति संप्रोक्ताः सङ्ग्रहेण मयाधुना ।
अथात्रावसरे [1] दृष्टे दुःस्वप्ने फलमुच्यते ॥ ५६ ॥

दुःस्वप्नफलानि

शुनः सृगालान्गृध्रांश्च पिशाचान् कृष्णकीटकान् ।
स्वप्ने तु यदि वीक्षेत नरः शोकमवाप्नुयात् ॥ ५७ ॥

काकं गृध्रं वटे श्येनं पिशाचं वाऽथ राक्षसम् ।
पतन्तं पतितं वापि दृष्ट्वा व्यसनमाप्नुयात् ॥ ५८ ॥

कृष्णकीटं च गां कृष्णां पश्यन् भयमवाप्नुयात् ।
आरोहणं तथा तेषां स्पर्शश्चातिभयप्रदः ॥ ५९ ॥

अश्वमुष्ट्रं खरं वापि महिषं श्वानमेव च ।
कृष्णस्त्रियश्च यः स्वप्ने पश्येच्छोकमवाप्नुयात् ॥ ६० ॥

देवता यत्र नृत्यन्ति हसन्ति च रुदन्ति च ।
आस्फोटयन्ति धावन्ति स देशस्तु विनश्यति ॥ ६१ ॥

रक्ताम्बरधरा नारी रक्तगन्धानुलेपना ।
उपगूहति यं स्वप्ने सा रात्रिस्तस्य पश्चिमा ॥ ६२ ॥

रक्तमाल्याम्बरधरो यो गच्छेद्दक्षिणां दिशम् ।
कृष्णां स्त्रियं करे गृह्णन्मरणं तस्य निर्दिशेत् ॥ ६३ ॥

कपिलामूर्ध्वकेशीं च स्वप्नान्ते यस्तु पश्यति ।
शरीरपतनं तस्य प्रधानपुरुषस्य वा ॥ ६४ ॥

चण्डालान् पतितान्म्लेच्छान् दुर्वर्णान् भीषणानपि ।
श्वापदान् कृष्णसर्पांश्च दृष्ट्वा मरणमाप्नुयात् ॥ ६५ ॥

---

[1] दृष्टे दुःस्वप्नफल—क.

मधुना वाथ वाज्येन तैलेनान्येन वा यदि ।
अभ्यज्य यो विबुध्येत रोगं तस्य विनिर्दिशेत् ॥ ६६ ॥

अभिद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा ।
वानरो वा वराहो वा तस्य स्याद्व्यसनं महत् ॥ ६७ ॥

पूर्णकुम्भविनाशं च पश्यञ्छोकमवाप्नुयात् ।
आदित्यं वाथ चन्द्रं वा विगतद्युतिकं यदि ॥ ६८ ॥

निपतच्चापि नक्षत्रं तारकाश्चापि वा यदि ।
वीक्षेत मानवः स्वप्ने मरणं शोकमाप्नुयात् ॥ ६९ ॥

नदीं शुष्कां समुद्रं वा शुष्कां पुष्करिणीं तथा ।
यश्चक्षुषा नरः पश्येत्स्वप्ने तस्य धनक्षयः ॥ ७० ॥

केशा यस्य विशीर्यन्ते दन्ता यस्य पतन्ति वा ।
सन्तापं बन्धुनाशं च व्यसनं च विनिर्दिशेत् ॥ ७१ ॥

एवमादिकदुःस्वप्नदर्शने तु प्रतिक्रिया ।
अकीर्तनं पुनः स्वापः श्रवणे गोश्च कीर्तनम् ॥ ७२ ॥

एवं सुस्वप्नदुःस्वप्नफलान्युक्तानि ते मया ।

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले शुभाशुभस्वप्नफलनिरूपणं नाम तृतीयस्तरङ्गः

---

## चतुर्थस्तरङ्गः

पूर्वं स्वप्नाः समाख्याताः शुभाशुभफलप्रदाः ।
लक्षणान्यथ वक्ष्यामि निधीनां प्रतिपत्तये ॥ १ ॥

### निधिलक्षणानि

वर्षासु शीतकाले च यत्र गोधा निरन्तरम् ।
वृश्चिकः पन्नगो वास्ते तत्र भूमौ भवेन्निधिः ॥ २ ॥

दृश्यते वज्रकीटानां संभोगो यत्र भूतले ।
निरिन्धनो भवेद्वह्निर्ध्रुवं तत्र भवेन्निधिः ॥ ३ ॥

आवर्तो दृश्यते यत्र विना हेतुं जलाशये ।
पङ्कजानि द्विशीर्षाणि तत्र तोये भवेन्निधिः ॥ ४ ॥

दृष्ट्वार्कं भुवमाघ्राय वृषभो यत्र नर्दति ।
वारं वारं प्रहृष्टात्मा तत्र भूमौ भवेन्निधिः ॥ ५ ॥

[1] (हस्तद्वयसमुत्सेधो बाष्पो यत्रानिमित्तकः ।
रूढिर्वा लौकिकी यत्र ध्रुवं तत्र भवेन्निधिः) ॥ ६ ॥

निधिलम्भने सहायाः

सहायाः शोभनाः कार्याः सप्त पञ्च त्रयोऽथ वा ।
असहायैर्न कर्तव्यं विद्वद्भिर्निधिसाधनम् ॥ ७ ॥
अत्रादौ लक्षणं वच्मि सहायानां समासतः ।

निधिलम्भनसहायलक्षणम्

ग्राह्याग्राह्यविभागेन श्रीमच्छङ्करभाषितम् ॥ ८ ॥

सर्वभूतहिताः शान्ता मदमात्सर्यवर्जिताः ।
मानिनः पद्मपत्राक्षाः कीर्तिमन्तोऽपि [2] सात्त्विकाः ॥ ९ ॥

[3] धार्मिकाः शीलसंपन्नाः [4] कुलीना विभवान्विताः ।
बलवन्तः शिवे भक्ता ब्राह्मणाः क्षत्रिया विशः ॥ १० ॥

प्रपाप्रासादकर्तारः प्राज्ञा विद्याबलान्विताः ।
सहायाः शोभना एते कथ्यन्ते निधिसाधने ॥ ११ ॥

निधिदर्शने निन्द्याः

सत्त्वहीना दुराचारा नास्तिकाः शास्त्रदूषकाः ।
डाम्भिका विषयासक्ताः क्रूराहङ्कारिणः शठाः ॥ १२ ॥

---

[1] क. पुस्तके नास्ति. [2] धार्मिकाः–क. [3] कुलीनाः–क. [4] साधवो विभवान्विताः–क.

कल्लोले

शीघ्राभिलाषिणश्चोरा अगम्यागमने रताः ।
देवद्विजगुरुस्त्रीणां निन्दका धर्मवर्जिताः ॥ १३ ॥

एते निन्द्याः समाख्याताः सहाया निधिदर्शने ।

बलिसाधने योग्याः

बलिष्ठाः सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ॥ १४ ॥
भूतत्रासनमन्त्रज्ञा योग्यास्ते बलिसाधने ।

भैषज्यकरणयोग्याः

तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः ॥ १५ ॥
नानाविषयभाषाज्ञास्ते मता भेषजाहृतौ ।

निधिदर्शनाञ्जनम्

रोचनं कुङ्कुमं शङ्खं वालमोटी तु चन्दनम् ॥ १६ ॥

राजावर्तं कुमारीं च सौवीराञ्जनपारदौ ।
षट्पलं काञ्चनं चैव श्वेतपद्मस्य केसरम् ॥ १७ ॥

असितायाश्च गोः क्षीरं समभागं तु पेषयेत् ।
तद्वर्तिं घृतसंयुक्तां ज्वाल्य कज्जलमाहरेत् ॥ १८ ॥

सर्वाञ्जनमिदं ख्यातं पातालनिधिदर्शनम् ।

अञ्जनान्तरम्

शरत्काले तु संगृह्य भूतलारक्त[1]वर्णकाम् ॥ १९ ॥

सिन्दूरपूरितां कृत्वा रवितूले निवेशयेत् ।
अतिकृष्णतिलात्तैलं ग्राहये[2]द्रक्षयेत्सुधीः ॥ २० ॥

तैले वर्त्याः प्रयोगेण कज्जलं चोत्तरायणे ।
ग्राहयित्वाञ्जयेच्चक्षुर्निधिं पश्यति पूर्ववत् ॥ २१ ॥

---

[1] द्रक्तवर्णिकाम्—क.  [2] द्रक्षयन् सुधीः—क.

अञ्जनान्तरम्

अतिकृष्णस्य काकस्य जिह्वाह्नासमाहरेत् ।
वेष्टयेद्भवितूलेन वर्तिं तेनैव कारयेत् ॥ २२ ॥

अजाघृतेन दीपं च प्रज्वाल्यादाय कज्जलम् ।
अञ्जिताक्षो नरस्तेन निधिं पश्यति निश्चयम् ॥ २३ ॥

सर्वाञ्जनम्

सप्तधा पद्मसूत्राणि भावयेदिक्षुजै रसैः ।
तद्वर्त्या ज्वालयेद्दीपमङ्कोलीतैलसंयुतम् ॥ २४ ॥

ग्राह्यं पुष्यत्रयोदश्यां कज्जलं निधिदर्शनम् ।
सर्वाञ्जनमिति ख्यातं शम्भुना परिकीर्तितम् ॥ २५ ॥

दीपकज्जलपात्रम्

दीपकज्जलयोः पात्रं कर्तव्यं नरमुण्डकम् ।
सर्वेषामञ्जनानां तु शास्त्रं स्याच्छम्भुनोदितम् ॥ २६ ॥

स्रोतोऽञ्जनम्

स्रोतोञ्जनमुलूकस्य भावयेदश्रुवारिणा ।
तस्यैवाण्डे विनिक्षिप्य एतत्सप्तदिनावधि ॥ २७ ॥
अनेनाञ्जितनेत्रस्तु निर्विघ्नं प्रेक्षते निधिम् ।

स्रोतोञ्जनान्तरम्

स्रोतोञ्जनमुलूकाण्डे तस्य बीजान्वितं क्षिपेत् ॥ २८ ॥
सप्ताहान्ते समुद्धृत्य अञ्जनादीक्षते निधिम् ।

सर्वाञ्जनान्तरम्

उलूकचक्षुरादाय कुङ्कुमं रोचनं शशी ॥ २९ ॥
समांशं मधुना पिष्टं ख्यातं सर्वाञ्जनं परम् ।

निधिदर्शने मन्त्रजपावश्यकत्वम्

अञ्जनानां तु सर्वेषां मन्त्रोऽघोरस्तु साधकः ॥ ३० ॥

कल्लोले

विनाऽघोरेण विघ्नौघाः प्रभवन्ति पदे पदे ।
दक्षिणामूर्तिमाश्रित्य जपेदष्टसहस्रकम् ॥ ३१ ॥

निधिद्रष्टुर्नेत्रबन्धनम्

अञ्जयित्वाञ्जनं पश्चात्सप्त चाश्वत्थपर्णकान् ।
बन्धयेत्प्रतिनेत्रं तु अच्छिद्रांस्तु महीमुखान् ॥ ३२ ॥

तस्योपरि सितं वस्त्रं पट्टकं वाथ बन्धयेत् ।

निधिदर्शने वर्ज्यावर्ज्यास्तत्र नियमश्च

न चाञ्जयेत हीनाङ्गान् श्वदष्टानग्निदग्धकान् ॥ ३३ ॥

संपूर्णाङ्गं शुचिं स्नातं द्विदिनं तक्रभोजिनम् ।
क्षीरशाल्यन्नभोक्तारं द्विदिनं तु ततोऽञ्जयेत् ॥ ३४ ॥

दक्षिणामूर्तिमाश्रित्य उदयास्तमयं जपेत् ।
ततश्चानन्तरं कुर्याच्छिखाबन्धं शिवोदितम् ॥ ३५ ॥

इति चिह्नान्यञ्जनानि निधेरुक्तानि साधने ।
ईश्वरानुग्रहेणैव [1] किंचिदेतदपेक्षितम् ॥ ३६ ॥

संप्राप्तनिधेश्चौडभूपस्यानन्तरवृत्तान्तः

[2] तदुत्तरं प्रवृत्तस्तु वृत्तान्तश्चौडभूपतेः ।
उदीर्यते विस्मयकृत्क्रमादवहितः शृणु ॥ ३७ ॥

ईश्वरानुग्रहादेवं निधिं संप्राप्य तद्बलात् ।
ग्रामाधिपत्यमासाद्योत्तरोत्तरसमृद्धया ॥ ३८ ॥

प्रासादयत्पूजया तमीश्वरं लिङ्गरूपिणम् ।
ततः परिमितां सेनां संगृह्णाति परानपि ॥ ३९ ॥

तस्मिन्नि(न्सं)गृह्णति श्रुत्वा सार्वभौमः प्रहर्षितः ।
आनाय्य तं क्रमादेनमुदन्तं तन्मुखोक्तितः ॥ ४० ॥

श्रुत्वायं सुमहान् शौर्यसंपन्न इति नन्दितः ।

---

[1] नैव किंचिदपेक्षितम्—क. [2] एतदादि 'नीतिं चोपादिशत्तस्मै' (४८) इतिपर्यन्तो भागः क. पुस्तके नास्ति.

चौडप्पनायकाय केळदीदेशदानम्

मल्लदेशं वशं तस्य विधाय तदनन्तरम् ॥ ४१ ॥

नामादात् "केळदी चोडप्पनायक" इति स्वयम् ।
लब्ध्वा नाम च देशं चानुज्ञया तस्य निर्गतः ॥ ४२ ॥

केळदीस्थलमासाद्य तत्र रामेश्वरस्य सः ।
आलयं गुरु निर्माय भुवं भूयो वितीर्य च ॥ ४३ ॥

उपचाराय पर्याप्तां समहर्षयदीश्वरम् ।
दुष्टानां निग्रहं स्वैरं शिष्टानां परिपालनम् ॥ ४४ ॥

कुर्वन् स्वबाहुशौर्येण सम्पदा चाभ्यवर्तत ।

चौडप्पनायकस्य पुत्रोत्पत्तिः

सुतौ तस्मादजायेतां यथाब्धेरिन्दुकौस्तुभौ ॥ ४५ ॥

तौ सदाशिवभद्राख्यौ प्रख्यातिं प्रापुतां ततः ।
शस्त्रविद्याब्धिपारीणौ निपुणौ किंच नीतिषु ॥ ४६ ॥

वाहनारोहणाभिज्ञावुद्गूढसदृशक्रियौ ।
विधाय च तयोर्मध्ये श्रीसदाशिवनायके ॥ ४७ ॥

उद्वोढुमक्षम इव सर्वां (वं) राज्यधुरं न्यधात् ।

सदाशिवनायकमुद्दिश्य राजनीत्युपदेशः

नीतिं चोपादिशत्तस्मै भूमिपालजनोचिताम् ॥ ४८ ॥

सद्भिः सङ्गं प्रकुर्वीत वर्जयेद्दुष्टसङ्गतिम् ।
असत्यं च परद्रोहमगम्यागमनं तथा ॥ ४९ ॥

असूयामन्यविद्वेषमात्मनश्च स्तुतिं त्यजेत् ।
दानानि बहुधा दद्यात् ब्रूयाद्वाक्यं मनोहरम् ॥ ५० ॥

पूर्तानि कारयेच्चैव विप्रानपि च मानयेत् ।
दीनानाथार्तबन्धूनां भृत्यानां चापि पोषणम् ॥ ५१ ॥

शरणागतरक्षा च कर्तव्या सर्वदा नृपैः ।
एते धर्मा नृपालानां कर्तव्यत्वेन कीर्तिताः ॥ ५२ ॥

सत्पुरुषलक्षणम्

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ ५३ ॥

सद्गुणाः

दया क्षमानसूया च सत्यं सद्वृत्तमस्पृहा ।
एते स्युः सद्गुणा यत्र पुत्र तत्सङ्गतिं कुरु ॥ ५४ ॥

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च हन्ति सङ्गो महात्मनाम् ॥ ५५ ॥

दुर्वृत्तसङ्गतेस्त्याज्यत्वम्

शीलं पापभयं लज्जा दाक्षिण्यं धर्मशीलता ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तेन सङ्गतिम् ॥ ५६ ॥

दुर्वृत्तसङ्गतिरनर्थपरंपराया
हेतुर्भवेदिति किमत्र विचारणीयम् ।
लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धनविधिं खलु सिन्धुराजः ॥ ५७ ॥

असत्यम्

कामात्क्रोधाद्भयाल्लोभात्साक्षिभावे तथैव च ।
मिथ्या वदति यद्वाक्यं तदसत्यं प्रकीर्तितम् ॥ ५८ ॥

देवतासन्निधौ यच्च ब्रूते शपथपूर्वकम् ।
तद्यो लङ्घयते मोहात्तदसत्यं प्रकीर्तितम् ॥ ५९ ॥

अस्वर्ग्यमयशस्यं च लोकद्विष्टं जुगुप्सितम् ।
अनृतं सुतरां पापं तस्मात्तत्परिवर्जयेत् ॥ ६० ॥

परद्रोहः

पैशुन्यं परिवादश्च मर्मोद्घाटनमेव च ।
गृहदारपशुक्षेत्रवसुधान्यधनस्य च ॥ ६१ ॥

अपहारोऽन्यदीयस्य परद्रोहः स उच्यते ।
यस्मात्परभयं द्रोहः स्वस्यातीव सुदुःसहः ॥ ६२ ॥
तस्मान्नरकदो घोरः परद्रोहः स उच्यते ।

अगम्याः स्त्रियः

पुष्पिता पतिता कन्या लिङ्गिनी श्रेष्ठजातिजा ॥ ६३ ॥
परस्त्री विधवा श्वश्रूः स्वसा च दुहिता तथा ।
गुरुब्राह्मणभार्या च पुत्रमित्रनृपस्त्रियः ॥ ६४ ॥
पत्न्यश्च भृत्यबन्धूनामगम्याः परिकीर्तिताः ।
अनायुष्यकरं तासां गमनं परिकीर्तितम् ॥ ६५ ॥
परलोके च भयदं तस्मात्तत्परिवर्जयेत् ।

असहिष्णुत्वम्

समृद्धिं वीक्ष्य चान्यस्य रूपौदार्यमुदारताम् ॥ ६६ ॥
कलाकुशलतां शीलं सौभाग्यगुणसम्पदः ।
असहिष्णुर्भवेद्यस्तु स याति यममन्दिरम् ॥ ६७ ॥
लोके च निन्द्यतां याति नासहिष्णुर्भवेदतः ।

पतितादिसङ्गफलम्

महापातकदुष्टानां लिङ्गिनां विधिलोपिनाम् ॥ ६८ ॥
चण्डालान्त्यजजातीनां संसर्गी पतितो भवेत् ।

क्रोधस्य वर्जनीयत्वम्

क्रोधो नाशयते बुद्धिमात्मानं च कुलं धनम् ॥ ६९ ॥
यशोनाशो भवेत्कोपात्तस्मात्तं परिवर्जयेत् ।
क्रोधमूलो मनस्तापः क्रोधः संसारबन्धनः ॥ ७० ॥
धर्मक्षयकरः क्रोधः तस्मात्तं परिवर्जयेत् ।

लोभस्य त्याज्यत्वम्

लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते ॥ ७१ ॥
द्रोहेण नरकं याति तस्माल्लोभं परित्यजेत् ।

आत्मश्लाघाया अकर्तव्यत्वम्

आत्मानं च स्तुवन्मोहाज्जीवन्नपि मृतो हि सः ॥ ७२ ॥

परत्र यातनां याति तस्मात्तां परिवर्जयेत् ।
न सुखं न च सौभाग्यं स्वयं स्वगुणकीर्तनम् ॥ ७३ ॥

यथैव हि पुरन्ध्रीणां स्वयं स्वकुचमर्दनम् ।

प्रतिग्रहार्हता

श्रोत्रियाय दरिद्राय शीलाचारयुताय च ॥ ७४ ॥

पुराणवेदविदुषे दानं देयं कुटुम्बिने ।
महापातकघातीनि महापुण्यकराणि च ॥ ७५ ॥

महादानानि देयानि महादेवस्य तुष्टये ।

सत्यवदनस्य फलम्

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ॥ ७६ ॥

प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ।
एवं वदति यो नित्यं स लोके पूज्यते बुधैः ॥ ७७ ॥

पूर्तानि

वापीकूपतटाकादि देवतायतनानि च ।
अन्नप्रदानमारामान् पूर्तमार्याः प्रचक्षते ॥ ७८ ॥

कूपादिस्वरूपकथनम्

द्वारहीनो भवेत्कूपो द्वारेणैकेन वापिका ।
नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका ॥ ७९ ॥

कुल्याविधूततोयश्च तटाकः परिकीर्तितः ।
एतेषां खननं कार्यं नृपैर्धर्मपरायणैः ॥ ८० ॥

द्विजस्यावश्यपोष्यत्वम्

दानेन प्रियवाक्येन सन्मानेन द्विजोत्तमम् ।
पोषयेत्सर्वभावेन तेनाप्नोति परं पदम् ॥ ८१ ॥

दीनलक्षणम्

देहीति याचते यस्तु काङ्क्षया कृपणं गिरा।
दारिद्र्याद्दैन्यमापन्नः स दीनः परिकीर्तितः ॥ ८२ ॥
तस्मै ददति दीनाय वाञ्छितं द्रविणादिकम्।

अनाथलक्षणम्

मातापितृविहीनस्तु रहितो मित्रबान्धवैः ॥ ८३ ॥
विगतस्वामिसंबन्धादनाथः परिकीर्तितः।
अनाथः सर्वथा रक्ष्यः पार्थिवेन यशोऽर्थिना ॥ ८४ ॥
व्याधिभिर्बाधिता ये स्युर्विषाग्न्यादिप्रपीडिताः।
तेषां च पोषणं कार्यं पानान्नशयनासनैः ॥ ८५ ॥

बन्धुलक्षणम्

मातृपक्षसमुद्भूताः पितृपक्षसमुद्भवाः।
आत्मसंबन्धिनो ये च बान्धवास्ते प्रकीर्तिताः ॥ ८६ ॥
बन्धूनां मधुरं वाक्यं यथायोग्यं च माननम्।
संविभागश्च कर्तव्यः सुवर्णाम्बरभूषणैः ॥ ८७ ॥

शरणागतलक्षणम्

व्याघ्रसिंहगजैश्चोरैः शत्रुभिश्चापि विद्रुतः।
भयाच्छरणमायातः शरणागत उच्यते ॥ ८८ ॥
रक्षेच्छरणमायान्तं प्राणैरपि धनैरपि।
स यशो महदाप्नोति जनैः सर्वैः प्रशस्यते ॥ ८९ ॥
क्रतवो विधिसंयुक्ता भीतसत्त्वस्य रक्षणम्।
तुलायां तोलिते तत्र प्राणत्राणं विशिष्यते ॥ ९० ॥
वृत्तिच्छेदविधौ द्विजस्वहरणे मित्रापदां वारणे
संप्राप्ते शरणे कलत्रहरणे स्वामिग्रहे गोग्रहे।
ये शक्ताः पुरुषाः परार्थघटने कुर्वन्त्युदासीनतां
तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥९१॥

धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्धनं
धर्मेणैव भवन्ति निर्मलयशोविद्यामहीसम्पदः ।
कान्तारेषु महाभयेषु सततं धर्मः परित्रायते
धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ९२ ॥

यन्नागा मदवारिभिन्नकरटास्तिष्ठन्ति निद्रालवो
द्वारे हेमविभूषिताश्च तुरगा ह्रेषन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपणवैः सुप्तश्च यद्बोध्यते
तत्सर्वं सुरलोकराज्यसदृशं धर्मस्य विस्फूर्जितम् ॥ ९३ ।

साधु नीतिमुदीर्यैवं सप्रपञ्चं सुताय सः ।
केलदीस्थितरामेशप्रसादात्प्राप्तवान्निधिम् ॥ ९४ ॥

[1] चौडनायकनामाङ्को नृपः कैलासवासिनः ।
सन्निधिं दुर्लभं लब्धुमिव कैलासमासदत् ॥ ९५ ॥

ततस्तस्य सुतः श्रीमान् सदाशिवमहीपतिः ।
शशास सकलं राज्यं धर्मेणैव यशोनिधिः ॥ ९६ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले निधिचिह्नाञ्जनसाधारण-
राजनीतिवर्णनं नाम चतुर्थस्तरङ्गः

———

## पञ्चमस्तरङ्गः

ततः सदाशिवनृपे बहुधा राज्यशासिनि ।
महीसुराः सुराश्चापि बहुधा राज्यहर्षिताः ॥ १ ॥

दोड्डसङ्कण्णचिक्कसङ्कण्णनायकयोर्जननादि

ज्येष्ठायामस्य भार्यायां दोड्डसङ्कण्णनायकः ।
कनिष्ठायां तु संजातश्चिक्कसङ्कण्णनायकः ॥ २ ॥

---

[1] इत आरभ्य पञ्चमतरङ्गे 'दुर्बलानामसाध्यत्वं' (श्लो. ३०) इति श्लोकपर्यन्तो ग्रन्थः क. पुस्तके नास्ति.

तावेधेतां सुता राज्ञो जनरागोदयाविव ।
उभयोरनयोर्विद्याभ्यासं स्वयमकारयत् ॥ ३ ॥

वाहनारोहदक्षाभ्यां ताभ्यां लोकमहर्षयत् ।
क्रमादुद्वाहितावाप्तयौवनौ तावकल्पयत् ॥ ४ ॥

नीत्या राज्यमवत्यस्मिन्नीतिर्न क्वाप्यदृश्यत ।
पुष्टाभ्यां देशकोशाभ्यां चतुरङ्गबलेन च ॥ ५ ॥

अशात्रवां महीं कुर्वन् गोपायति यदा तदा ।
विद्यानगरवर्ती यो रामराजः क्रमागतः ॥ ६ ॥

कल्याणकलुबुरिगिवर्तिना विग्रहेच्छया ।
अनाययदमुं स्वीयैः पुरं साहाय्यकाय सः ॥ ७ ॥

सहैतेन बलं स्वीयं चतुरङ्गं न्ययोजयत् ।
बलेनानेन सहितस्त्वमग्रे यानमाचर ॥ ८ ॥

इत्याज्ञप्ते पुरो याति श्रीसदाशिवनायके ।
श्रुत्वास्य पुरतो यानं विजयाख्यपुरेश्वरः ॥ ९ ॥

तेषां सहायकोद्युक्तो जेतुमेनं पुरः स्थितम् ।
प्राहिणोद्बलिनो योद्धुं प्रमुखान् म्लेच्छनायकान् ॥ १० ॥

न्यरुन्धन्नस्य ते मार्गं सन्नद्धा युद्धकर्मणि ।
जितेन लभ्यते लक्ष्मीर्मृते वापि सुराङ्गना ॥ ११ ॥

क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ।
इति युद्धाय सन्नद्धः परान् पर्यभवत् क्षणात् ॥ १२ ॥

अन्धकारानिव रविर्मेघानिव च मारुतः ।
पलायितानां तेषां तु सर्वस्वं स्वैरहारयत् ॥ १३ ॥

सङ्गतेन तदा रामराजेनाह्लादिचेतसा ।
सहैव निर्ययावग्रे कल्याणवरणं प्रति ॥ १४ ॥

गच्छन् स च कियद्दूरं तं सन्निहितमैक्षत ।
सार्वभौमस्तमालोक्य कौतुकेन करस्थितम् ॥ १५ ॥

यमदंष्ट्रायुधं स्वीयं प्राकारस्यान्तराक्षिपत् ।
अथ राजा प्रतीतान् स्वानादिशच्चापि यूथपान् ॥ १६ ॥

वरणाक्रमणं कश्चिद्युष्मासु रचयत्विति ।
सर्वेषु तूष्णीं भूतेषु सदाशिवनृपः स्वयम् ॥ १७ ॥

ततस्तस्याभ्यन्तरं च प्रविश्य यमदंष्ट्रिकाम् ।
गृहीत्वा तां ततः सार्वभौमायाकुरुतोपदाम् ॥ १८ ॥

सहायो यन्त्रकीलेन द्वारोद्घाटनकारिणा ।
सार्वभौमो ददौ तस्मै कोटिकोलाहलाभिधाम् ॥ १९ ॥

विरुदानि महार्घाणि वसनाभरणानि च ।
देशांस्त्रीन् गुत्तिबार्कूरुपुङ्गल्रुपदाङ्कितान् ॥ २० ॥

रायनायकनामापि निधायास्य महीपतेः ।
बहुधा मानयामास श्रीसदाशिवनायकम् ॥ २१ ॥

सोऽप्याख्यया तदा भूरि प्रख्यातिमपि लब्धवान् ।
अनन्तरं कतिपयदिनेषु क्षपितेष्वसौ ॥ २२ ॥

चन्द्रकुत्तिस्थितैर्दस्युनायकैर्भूर्युपद्रुतः ।
सार्वभौमो निग्रहार्थं तेषामेनं समादिशत् ॥ २३ ॥

अयं च रचयामास तेषां निग्रहणं ततः ।
पुनः कियद्दिनादूर्ध्वं दूतैरानाय्य तेन सः ॥ २४ ॥

बरीदपातुशाहस्य विजयाय प्रचोदितः ।
विजितं तं करे कृत्वा सह सप्ताङ्गसम्पदा ॥ २५ ॥

उपहारं समकरोत्तस्मै सोऽयं यदा तदा ।
संतुष्टस्तु ददौ शत्रुसप्ताङ्गहरणाभिधाम् ॥ २६ ॥

किं चारुणध्वजपतिं दुन्दुभिं वाद्यपञ्चकम् ।
मनोज्ञानि च वासांसि विरुदाभरणानि च ॥ २७ ॥

ततो याति कियत्काले साळ्वतिम्माभिधानवान् ।
तदनुज्ञां समासाद्य निगृह्णान्निजतेजसा ॥ २८ ॥

अनन्तरं सार्वभौमः सदाशिवनृपं प्रति ।
मायोपायेषु चतुरान् स्वासाध्यान् केरलाधिपान् ॥ २९ ॥

तौलवांश्च तथा जेतुमादिदेश महीपतिः ।
[1] दुर्बलानामसाध्यत्वं यैरुपायैरवाप्यते ॥ ३० ॥

तान् ब्रुवे मायिकोपायान् कुमार शृणु सादरम् ।

दुर्बलेन बलिष्ठेषु प्रयोज्या दण्डाः

बलशक्तिविहीनेन नृपेण रिपुघातने ॥ ३१ ॥

प्रयोज्यास्तु त्रयो दण्डा विषघाताभिचारजाः ।

विषभेदाः

विषं हालाहलं शृङ्गि कालकूटं भयावहम् ॥ ३२ ॥

वत्सनाभिश्चतुर्धा तु स्थावरं परिकीर्तितम् ।
सर्पदंष्ट्राभिसंजातं विषं तज्जङ्गमं स्मृतम् ॥ ३३ ॥

विरुद्धद्रव्यमिलितं कृत्रिमं विषमुच्यते ।

विषदण्डप्रयोगः

तटाककूपवापीषु तथा लघुसरस्सु च ॥ ३४ ॥

विषं [2] द्विषे प्रयोक्तव्यं द्विषतां तु विघातनम् ।
अन्ने पाने च ताम्बूले फले पुष्पे विभूषणे ॥ ३५ ॥

वस्त्रे विलेपने धूपे शय्यायामासनेऽपि च ।
पादुकायां पदाभ्यङ्गे तैले स्नानोदके तथा ॥ ३६ ॥

क्रीडापुष्करिणीमध्ये प्रयुञ्जीत विषं द्विषाम् ।
कुमारसचिवामात्यमन्त्रिसेनाधिपेषु च ॥ ३७ ॥

महावारणमुख्येषु तुरगेषूत्तमेषु च ।
एवं विषप्रयोगस्तु विषदण्डः स उच्यते ॥ ३८ ॥

---

[1] दुर्लभाना—क. [2] विषे—क.

घातदण्डप्रयोगः

द्यूतवाद्यप्रसक्तेषु स्वैरक्रीडारतेषु च ।
मृगयासक्तचित्तेषु देवयात्राप्रसङ्गिषु ॥ ३९ ॥

अङ्कमल्लविनोदेषु भोजनस्थानवर्तिषु ।
व्यग्रेष्वन्येषु कार्येषु कुर्याद्वैरिप्रघातनम् ॥ ४० ॥

अयमेव च शत्रूणां घातदण्डः प्रकीर्तितः ।

आभिचारदण्डप्रयोगः

अथर्वविधितत्त्वज्ञैर्ब्राह्मणैर्विजितेन्द्रियैः ॥ ४१ ॥

तन्त्रमन्त्रविधानज्ञैर्दूरादुन्मूलयेद्रिपून् ।
आभिचारिकहोमैस्तु मन्त्रषट्कर्मसाधनैः ॥ ४२ ॥

यन्त्रलेखनकैरुग्रैरुपांशुजपनादिभिः ।
मन्त्रयन्त्रसुसिद्धैश्च काहलीपटहादिभिः ॥ ४३ ॥

[1]पातनानिकरैर्धूपैस्तथा मायूरपिञ्छकैः ।
बाणैर्मन्त्रप्रयुक्तैश्च सिद्धार्थकयुताक्षरैः ॥ ४४ ॥

मोहयेत् स्तम्भयेच्छत्रून् स्थानादुच्चाटयेत्ततः ।
विद्वेषयेच्च मित्राणि वशीकुर्याच्च विद्विषः ॥ ४५ ॥

नराकृतिं लिखेदादौ तालपत्रे सुबुद्धिमान् ।
कपोले विलिखेद्बीजं वह्न्याख्यत्रितयं तथा ॥ ४६ ॥

हस्तद्वये पादयुगे पञ्च पञ्च यथाक्रमम् ।
स्तब्धमायां लिखेद्देवीमग्निबीजं हृदि न्यसेत् ॥ ४७ ॥

तन्मध्ये [2]साध्यनामापि तद्वन्नाभौ च संलिखेत् ।
गृहद्वारे रोगकरं नदीवेगे च रोगदम् ॥ ४८ ॥

दहनं दीपशिखया भूतज्वरकरं परम् ।
श्मशाने निखनेद्यन्त्रं मारणं मासमात्रतः ॥ ४९ ॥

---

[1] पताकनिकरैः—क. [2] मासनामापि—क.

चुल्ल्यधोभागतः स्थाप्यं बुद्धिभ्रंशोऽभिजायते ।
वज्रार्कक्षीरलेपेन पाण्डुरोगो भवेद्ध्रुवम् ॥ ५० ॥

तद्यन्त्रे गरलेपेन श्लेष्मरोगी भवेद्रिपुः ।
[1]पातालविधिनानेन त्रिदिनं दहनात्प्रिये ॥ ५१ ॥

स्फोटनेन मृतिं यायान्मार्कण्डेयसमोऽप्यरिः ।

नरयन्त्रम्

पुनरेकं प्रवक्ष्यामि नरयन्त्रं सुपावनम् ॥ ५२ ॥

अनायासेन फलदमादिनाथसुखोद्गतम् ।
नराकृतिं लिखेदादौ कपाले कुलसुन्दरि ॥ ५३ ॥

वह्निगर्भितनामापि वेष्टयेद्वह्निबीजतः ।
ग्लौंकारपञ्चकं वामे दक्षहस्ते तथैव च ॥ ५४ ॥

वामदक्षिणपादे च वाराहं बीजमालिखेत् ।
अग्निबीजान्यङ्गुलीषु विंशतिः कुलसुन्दरि ! ॥ ५५ ॥

एवं यन्त्रं लिखित्वा तु तालपत्रे सुशोभने ।
निर्दहेद्दीपशिखया सप्तरात्रमनुक्रमात् ॥ ५६ ॥

करपादविदाहेन स नरो [2]ज्वरितो भवेत् ।
नरशल्ये लिखेद्यन्त्रं लोहसूच्या ह्यतन्द्रितः ॥ ५७ ॥

जिह्वास्तम्भनमाप्नोति स्थापनाद्वृक्षकोटरे ।
उच्चाटे निम्बकुहरे विषतिन्दुकयोस्तथा ॥ ५८ ॥

अन्नद्वेषो भवेद्देवि मासमात्रान्मृतो भवेत् ।
शवदाहस्थले चैव लिखित्वा स्थापनात्प्रिये ! ॥ ५९ ॥

पश्चान्मरणमाप्नोति नात्र कार्या विचारणा ।
चुल्ल्यधोभागतः स्थाप्य तद्वन्मासे मृतो भवेत् ॥ ६० ॥

एवं शत्रोर्मारणं यत्स्यात् स दण्डोऽभिचारजः ।

[1] पालाश–क. [2] ज्वलितो–क.

कह्लोले

शत्रुमारणे काहलीशब्दप्रयोगः

त्रपुहेमायसै रौप्यैरेकैकपलमात्रकम् ॥ ६१ ॥

द्वादशांशेन ताम्रेण कारयेज्जयकारणम् ।
काहलीं रससंलिप्तां वादयेत्तां रणाङ्गणे ॥ ६२ ॥

श्रुत्वा नादं प्रणश्यन्ति बलिष्ठा अपि शत्रवः ।

ढक्कानादप्रयोगः

ताम्रकस्य विधानं तु ढक्कायामपि कारयेत् ॥ ६३ ॥

तथैव फलमप्युक्तं समराङ्गणभूमिषु ।
तुम्बुरा चित्रिकी दन्ती कृष्णोन्मत्तरसान्विता ॥ ६४ ॥

मार्जयेन्मौरजं चर्म सप्तवारं पुटद्वयम् ।

भस्मकूटप्रयोगः

अग्निहोत्रश्मशानान्त्यजातिगेहे समुद्भवम् ॥ ६५ ॥

भस्मत्रितयमादाय कर्तव्यं भस्मकूटकम् ।

अत्र मन्त्रः—[1]कालन कुकुरु नलुहुमुद्रु यत्तनुवित्तनूभं मणुलालि-
करं तु नुकिआयुविहिकें पुंचिच हि मपिमलद्व-
उद्भूतिद ।

क्षिप्यते च रिपोः सैन्ये भङ्गमायाति तत्क्षणात् ॥ ६७ ॥

मायार्गलयन्त्रम् (मोहनम्)

मारणे मोहने स्तम्भे विद्वेषोच्चाटने वशे ।
एकं मायार्गलं यन्त्रं भेदेन बहुधा स्थितम् ॥ ६८ ॥

द्वादशारं लिखेच्चक्रं वृत्तत्रयविभूषितम् ।
दृष्टिमन्त्रं च तद्बाह्ये यमश्लोकं च मध्यतः ॥ ६९ ॥

---

[1] कालनकुकुरु नुवुहु मुद्रूयत्रसुवित्त न्नुभं मणुलालिकरं तु नुकि आ इहि किच्छिप-हिमपिमलद्वउद्भूतिः–क.

दष्ट्रि विकृतदंष्ट्राग्नं नेत्रं फट् ।
इति मन्त्रं जपेद्विद्वानयुतं विधिपूर्वकम् ॥ ७० ॥

रोचनां कुङ्कुमं चन्द्रं कृष्णोन्मत्तरसान्वितम् ।
रोहितोद्भवलेखिन्या भूर्जे यन्त्रं लिखेदिदम् ॥ ७१ ॥

साध्यनाम च तद्गर्भे बाह्ये चैकाररञ्जिकाम् ।
वह्निमण्डलगं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥ ७२ ॥

सिक्थेनावृतकं कुर्यान्मधु कुम्भे विनिक्षिपेत् ।
पूजयेद्रक्तपुष्पैश्च सप्ताहान्मोहयेद्रिपून् ॥ ७३ ॥

स्तम्भनम्

[1]शिलातलहरिद्रा च मेषसूत्रसमन्विता ।
कोकिलाक्ष्या च लेखिन्या नीलरक्तपटे लिखेत् ॥ ७४ ॥

साध्यनामयुतं मध्ये रञ्जिकां च निवेशयेत् ।
पर्वताकृति यन्त्रं तु शिलाजलनिवेशितम् ॥ ७५ ॥

पूजयेत्पीतपुष्पैस्तु कुम्भकेन च वायुना ।
स्तम्भनं देहमनसोः सप्ताहाज्जायते रिपोः ॥ ७६ ॥

विद्वेषणम्

जत्वक्षचित्रकैस्तुल्यैर्महिष्या रुधिरान्वितैः ।
पीतवस्त्रे च लेखिन्या लिखेद्यन्त्रमिदं वरम् ॥ ७७ ॥

व्यतिक्रमाक्षरं चापि यन्त्रमध्ये निवेशयेत् ।
रञ्जिकाफट्समायुक्तं महिषाकृतिमेव च ॥ ७८ ॥

निम्बवृक्षतले न्यस्तं सप्ताहाद्द्वेषकारकम् ।

उच्चाटनयन्त्रम्

काकविद्वेषिरक्तेन शवजङ्घायुते शुभे ॥ ७९ ॥

---

[1] शिताताल—मु.

कल्लोले

काकपिञ्छस्य लेखिन्या लिखेद्यन्त्रं स्वरोदये ।
साध्यनाम लिखेत्तत्र चतुष्कोणेषु मध्यगम् ॥ ८० ॥

सविसर्गं छ्कारेण त्रकारेण च रञ्जिकाम् ।
[1] उष्ट्रारूढं कृतं यन्त्रं बध्वा काकगले ततः ॥ ८१ ॥

सयन्त्रे वायसे मुक्ते ततस्तूच्चाटनं भवेत् ।
इत्याद्याः कुहनोपाया वर्तन्तेऽन्ये सहस्रधा ॥ ८२ ॥

दुर्बलेन विधातव्या बलिष्ठेषु जयार्थिना ।
एवं स्वशक्तिराहित्यात्कुहनोपायतत्परान् ॥ ८३ ॥

तानीश्वरप्रसादेन पौरुषेण च भूयसा ।
सदाशिवमहीपालः केरलादीन् पराभवत् ॥ ८४ ॥

भिन्दन्ति शैलानुदधीन् पिबन्ति
व्यत्यासयन्ति क्षितिमन्तरिक्षम् ।
तृणीकृतब्रह्मपुरन्दराणां
किं दुष्करं शङ्करकिङ्कराणाम् ॥ ८५ ॥

एवं केरलभूपादीन् सार्वभौमाभ्यनुज्ञया ।
सबलान् परिभूयाथ गृहीत्वापि बलिं ततः ॥ ८६ ॥

संस्थाप्य स्वजयस्तम्भं तद्देशाभ्यन्तरे क्वचित् ।
सकलान् सार्वभौमः स प्रापयामास तान् नृपान् ॥ ८७ ॥

[2] अनन्तरं जालिहाळुदेशाधीशौ विरोधिनौ ।
यदवश्च मुरारिश्चेत्युभौ बहुपराक्रमौ ॥ ८८ ॥

निग्रहीतुं परासाध्यौ स्वयं यातुं चिकीर्षति ।
सार्वभौमे तं निवृत्य स्वयं गत्वा समं बलैः ॥ ८९ ॥

तद्दुर्गवरणं सद्यः प्रविश्यानु च तावुभौ ।
निजग्राह यथा रामः कुम्भकर्णदशाननौ ॥ ९० ॥

---

[1] उष्ट्रूरूपं कृतं—क. [2] इत आरभ्य यावत्तरङ्गसमाप्ति क. पुस्तके नास्ति.

प्रसाध्य दुर्ग्रहं दुर्गं जित्वा दुर्निग्रहौ च तौ ।
आनीय दर्शयामास राज्ञे सोऽयं तदा ततः ॥ ९१ ॥

लब्ध्वा [1] यदवमुरारिकोटेकोलाहलाभिधाम् ।
ततः सदाशिवनृपः स्वदेशं समुपेयिवान् ॥ ९२ ॥

रामेश्वरस्य पूजार्थं ददौ क्षेत्राणि भूरिशः ।
नगरं कारयामास स सदाशिवसागरम् ॥ ९३ ॥

ततः कुशावतीतीरे सदाशिवपुराह्वयम् ।
अग्रहारं स्वनाम्नैव व्यतनोदीशतुष्टये ॥ ९४ ॥

विप्रैर्विमलसद्वृत्तैः सद्वंशजनितैरपि ।
अग्रहारः कृतो भूमेर्मुक्ताहार इवाबभौ ॥ ९५ ॥

सदाशिवेश्वरं तत्र प्रत्यस्थापयदादृतः ।
स्वनाम्नैव यथा रामः पुरा रामेश्वराभिधम् ॥ ९६ ॥

अथावरणदेवांस्तं परितोऽस्थापयत्ततः ।
तन्नित्यपूजापर्याप्तं क्षेत्रं तेभ्योऽपि सोऽमुचत् ॥ ९७ ॥

महादानोदितैः कीर्तिखण्डैः षोडशभिर्व्यधात् ।
सर्वेश्वरशिरःश्लाघ्यं स्वयशःशशिमण्डलम् ॥ ९८ ॥

ततः कदाचित्सम्राजि दर्पितं जेतुमिच्छति ।
स मादरसनामानं वङ्कापुरनिवासिनम् ॥ ९९ ॥

निगृह्य तं गृहीत्वाथ निनाय नृपसन्निधिम् ।
अथानुजे समायाते काश्या भद्रप्पनायके ॥ १०० ॥

तेन साकमयं निन्ये कंचित्कालमवन्महीम् ।
तस्य दत्वेम्मडिसदाशिवनायकनाम च ॥ १०१ ॥

पट्टाभिषेकमकरोद्गन्तुकामस्तपोवनम् ।
स राज्येऽवस्थितान् बाह्यान्निगृह्य श्रेयसे रिपून् ॥ १०२ ॥

---

[1] यदमूरारिकोटे–मु.

कल्लोले

आन्तरानपि तान् जेतुमाश्रमं [1] स्वयमाश्रयत् ।
ततः सदाशिवनृपः काले कियति निर्गते ॥ १०३ ॥

मुञ्चन्नपि [2] वपुर्नैव सदाशिवपदं जहौ ।
ततो महीं भद्रभूपः कंचित्कालं शशास सः ॥ १०४ ॥

ज्यायसः सुतयोः शस्त्रशास्त्रविद्याप्रवीणयोः ।
स्वराज्यभारं निदधौ दोड्डसङ्कण्णनायके ॥ १०५ ॥

यौवराज्यं कनिष्ठेऽस्य चिक्कसङ्कण्णनायके ।
ताभ्यां राज्यस्थिरीभावसाधनत्वमुपेयुषीम् ॥ १०६ ॥

उपादिशद्राजनीतिं प्रेम्णा भद्रप्पनायकः ।
अनन्तरं च सङ्कण्णनायको राज्यमन्वशात् ॥ १०७ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले सदाशिवनृपचरित्रमायोपायवर्णनं नाम पञ्चमस्तरङ्गः

---

## अथ षष्ठस्तरङ्गः

राज्यस्य या स्थिरीभावे साधिकेति समीरिता ।
सा राजनीतिरधुना गुरो! प्रेम्णा निरूप्यताम् ॥ १ ॥

या त्वया साम्प्रतं पृष्टा शृणु नन्दन! तां ब्रुवे ।

राज्यस्थिरीभावः

नृपाणां च नराणां च केवलं तुल्यमूर्तिता ॥ २ ॥

आधिक्यं तु क्षमा धैर्यमाज्ञा दानं पराक्रमः ।
सदानुरक्तप्रकृतिः प्रजापालनतत्परः ॥ ३ ॥

विनीतात्मा हि नृपतिर्भूयसीं श्रियमाप्नुयात् ।
प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ॥ ४ ॥

---

[1] स्वयमाविशत्–मु.  [2] पुनर्नैव–क.

अजागलस्तनस्येव तस्य जन्म निरर्थकम् ।
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ॥ ५ ॥

राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ।
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिवर्धितः ॥ ६ ॥

फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ।
हिरण्यधान्यरत्नानि गजेन्द्राश्चापि वाजिनः ॥ ७ ॥

तथान्यदपि यत्किञ्चित्प्रजया स्युर्महीपतेः ।

उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून्वर्धयन्
अत्युच्चान्नमयन् पृथूंश्च लघयन् विश्लेषयन् संहतान् ।
वक्रान् कण्टकिनो बहिर्नियमयन् स्वारोपितान् पालयन्
मालाकार इव प्रयोगकुशलो राजा चिरं जीवति ॥ ८ ॥

नृपस्य सप्त गुणाः

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।
चन्द्रस्य च पृथिव्याश्च नृपः सप्तगुणो भवेत् ॥ ९ ॥

इन्द्रवृत्तम्

यथेन्द्रश्चतुरो मासान्वार्षिकानभिवर्षति ।
एवं राष्ट्रं परीहारैरभिवर्षेज्जनाधिपः ॥ १० ॥

अर्कवृत्तम्

अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ।
एवं राष्ट्रात्करान् राजा हरेदादित्यसन्निभः ॥ ११ ॥

वायुवृत्तम्

प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
चारैरेव चरेद्राजा वृत्तमेतत्तु मारुतम् ॥ १२ ॥

वैवस्वतवृत्तम्

यथा प्रियं वा द्वेष्यं वा प्राप्तकालं नियच्छति ।
तथार्हं दण्डयेद्राजा वृत्तं वैवस्वतं हि तत् ॥ १३ ॥

वरुणवृत्तम्

यथा[1] धावन्ति नद्यस्तु सिन्धुमाकाङ्क्षया विना ।
तथा नाकाङ्क्षते राजा वृत्तमेतत्तु वारुणम् ॥ १४ ॥

चन्द्रवृत्तम्

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
एवं प्रकृतयो नित्यं हृष्यन्ति नृपतेर्गुणैः ॥ १५ ॥

धरावृत्तम्

यथा सर्वाणि भूतानि धरा धारयते समम् ।
पौरजानपदान् सर्वांस्तथा राजापि धारयेत् ॥ १६ ॥

सिंहादिभ्यो राज्ञो ग्राह्यांशाः

सिंहादेकं बकादेकं विन्द्याच्चत्वारि कुकुटात् ।
वायसात्पञ्च शिक्षेच्च शुनः षट् त्रीणि गर्दभात् ॥ १७ ॥

सिंहस्यैकोंऽशः

अल्पं कार्यमनल्पं वा यो नरः कर्तुमिच्छति ।
सर्वोद्योगेन तत्कुर्यात्सिंहादेकं प्रकीर्तितम् ॥ १८ ॥

बकस्यैकोंऽशः

इन्द्रियाणि च संयम्य बकवत्पण्डितो जनः ।
देशकालोपपन्नानि सर्वकार्याणि साधयेत् ॥ १९ ॥

कुकुटाच्चत्वारोंऽशाः

प्रागुत्थानं च युद्धं च संविभागश्च बन्धुषु ।
स्त्रियमाक्रम्य भोगश्च विन्द्याच्चत्वारि कुक्कुटात् ॥ २० ॥

वायसात्पञ्चांशाः

गूढमैथुनदूराक्षे काले चालयसङ्ग्रहः ।
अप्रमादोऽप्यनालस्यं पञ्च शिक्षेच्च वायसात् ॥ २१ ॥

---

[1] वहन्ति—क.

शुनः षडंशाः

बह्वाशी चाल्पसन्तोषी सुनिद्रः सुप्रबोधकः ।
स्वामिभक्तश्च शूरश्च षडेते च शुनो गुणाः ॥ २२ ॥

गर्दभस्य त्रयोंऽशाः

सुश्रान्तोऽपि वहेद्भारं शीतोष्णे च न विन्दति ।
सन्तुष्टश्च भवेन्नित्यं खरस्यैते त्रयो गुणाः ॥ २३ ॥

एतांश्च विंशतिगुणान्यस्तु प्राप्नोति पण्डितः ।
लभते सर्वतः कीर्तिं सौख्यं सौभाग्यमेव च ॥ २४ ॥

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥ २५ ॥

जिघांसिनः पराक्रामाः परस्वादायिनः शठाः ।
रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥ २६ ॥

हस्तो हस्तं परिमुषेद्भिद्येरन् सर्वसेतवः ।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥ २७ ॥

ऊधश्छिनत्ति यो धेन्वाः क्षीरार्थी नाप्नुयात्फलम् ।
एवं राष्ट्रमयोगेन पीडयन्नाभिवर्धते ॥ २८ ॥

उत्तमराजलक्षणम्

कालप्राप्तानुपादद्यान्नार्थान्राजावशेषयेत् ।
अहन्यहनि सन्दुह्यान्महीं गामिव बुद्धिमान् ॥ २९ ॥

पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ ३० ॥

[1] (यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदाः सर्वे स राजा राजसत्तमः ॥ )

---

[1] मुद्रितपुस्तकपाठः.

राज्ञा अनुष्ठेयाः पञ्च यज्ञाः

दुष्टस्य दण्डः सुजनस्य रक्षा
न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ ३१ ॥

तपो रक्षेच्च विघ्नेभ्यः तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमान्वर्णान्रक्षन्राजा षडंशभाक् ॥ ३२ ॥

राज्ये न्यायविचारस्थानकल्पना

एकग्रामप्रभुः कार्यो दशग्रामप्रभुस्तथा ।
ग्रामाणां विंशतेः कार्यः प्रभुः शतसहस्रयोः ॥ ३३ ॥

ग्रामदोषं समुत्पन्नमशक्तः शासितुं यदि ।
दशग्रामेशितुः शंसेत्तत्सर्वं विंशतीश्वरे ॥ ३४ ॥

विंशतीशः शतीशाय तत्सर्वं विनिवेदयेत् ।
ब्रूयाद्ग्रामशतस्वामी सहस्रस्वामिनेऽखिलम् ॥ ३५ ॥

उत्पन्नांस्तु तथा दोषान् ग्रामाधीशनिवेदितान् ।
ज्ञात्वा [1] तत्र स्थिताः सर्वे कुर्युस्तेषां प्रतिक्रियाम् ॥ ३६ ॥

पञ्चाशत्तम आदेयो भागः पशुहिरण्ययोः ।
अष्टमो द्वादशो वापि षष्ठो वा धान्यतो नृपः ॥ ३७ ॥

फलक्षेत्रानुरूपेण गृह्णीयात्तत्करं नृपः ।

अनादेयकरनिर्देशनम्

रसगन्धौषधीनां च मूलपुष्पफलस्य च ॥ ३८ ॥

तृणानां शाकपत्राणां फलानां चर्मणामपि ।
उपस्थितान्याददीत श्रोत्रियाच्च करं नृपः ॥ ३९ ॥

---

[1] ग्रामस्थिताः—क.

भूप्रदेशमकृष्टं तु गवां चाराय कल्पयेत् ।
देवोद्यानं सुप्रतिष्ठं मुनिभ्यो वितरेन्नृपः ॥ ४० ॥

मृगसङ्घात[1]सम्पन्नं क्रूरसत्त्वैर्विवर्जितम् ।
वनमात्मविहारार्थं पालयेत्पुरपार्श्वगम् ॥ ४१ ॥

प्रत्यन्तदेशसंभूतं वनं गिरिदरीयुतम् ।
सर्वेषां गोपनार्थं तु पार्थिवः [2]परिपालयेत् ॥ ४२ ॥

फलैर्मूलैस्तृणैः काष्ठैः शाकैस्तत्रोद्भवैर्नराः ।
जीवन्ति ये ततो ग्राह्यो दशमो भाग ईरितः ॥ ४३ ॥

राष्ट्रादागतवित्तस्य भागशो विनियोगः

राष्ट्रादायातवित्तस्य चतुर्भागान् प्रकल्पयेत् ।
धर्मार्थकामसिद्ध्यर्थं कुर्याद्भागत्रयं व्ययम् ॥ ४४ ॥

कोशदुर्गसंचयस्यावश्यकत्वम्

भागेनैकेन चावश्यं कार्यः कोशस्य संचयः ।
कोशात्सुखमवाप्नोति कोशहीनस्तु सीदति ॥ ४५ ॥

विषहीनो यथा नागो मदहीनो यथा गजः ।
सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः ॥ ४६ ॥

दुर्गभेदाः

जलदुर्गं गिरिदुर्गं गिरिपाषाणनिर्मितम् ।
इष्टकाभिः कृतं दुर्गं दुर्गं स्यान्मृत्तिकामयम् ॥ ४७ ॥

वनदुर्गं मरुदुर्गं दुर्गं स्याद्दारुनिर्मितम् ।
नरदुर्गं च नवमं तेषां वक्ष्यामि लक्षणम् ॥ ४८ ॥

जलादिदुर्गाणां लक्षणानि

अगाधेनाथ तोयेन वेष्टितं जलजं भवेत् ।
दुरारोहं च शैलाग्रमुदकेन समन्वितम् ॥ ४९ ॥

---

[1] मापन्नं—क. [2] प्रतिपालयेत्—क.

कल्लोले

गिरिदुर्गं समाख्यातं नयशास्त्रविशारदैः ।
पाषाणघटितं दुर्गमश्मदुर्गं प्रकीर्तितम् ॥ ५० ॥

इष्टकाभिः कृतं सम्यक्सुधालिप्तं सुनिर्मलम् ।
इष्टकादुर्गमाख्यातं परिघावेष्टितं महत् ॥ ५१ ॥

मृदा विरचितं यत्तु तद्दुर्गं मृत्तिकामयम् ।
वनदुर्गं समाख्यातं घनकण्टकशाखिभिः ॥ ५२ ॥

अन्तस्थैः संचितं तोयं बहिष्ठानां तु दुर्लभम् ।
मरुदुर्गं समाख्यातं मरुदेशेन संयुतम् ॥ ५३ ॥

दारुभिर्वेणुभिः क्लृप्तं दुर्गं दारुमयं स्मृतम् ।
शस्त्रहस्तैर्महायोधैर्निर्मितं नरदुर्गकम् ॥ ५४ ॥

एतेषामुत्तमं दुर्गं गिरिजं जलजं तथा ।
मध्यमानीतराण्याहुः कनिष्ठे नरदारुके ॥ ५५ ॥

दुर्गसंचेयाः पदार्थाः

दुर्गयन्त्राणि कार्याणि नानाप्रहरणानि च ।
दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभुजाम् ॥ ५६ ॥

संचयं चात्र सर्वेषामायुधानां प्रकल्पयेत् ।
अश्मनां च प्रभूतानां सिकतानां तथैव च ॥ ५७ ॥

सर्वेषां शिल्पभाण्डानां तत्र संचय इष्यते ।
औषधानां च सर्वेषां वादित्राणां तथैव च ॥ ५८ ॥

यवसानां प्रभूतानामिन्धनानां च संचयम् ।
गुडस्य सर्वतैलानां घृतस्य मधुनस्तथा ॥ ५९ ॥

तथा च सर्वधान्यानां पांसुगोमययोस्तथा ।
अन्यानि सर्ववस्तूनि दुर्गे संचिनुयान्नृपः ॥ ६० ॥

बलभेदः, तल्लक्षणं, उत्तमाधमभावश्च

मौल्यं भृतं तथा मैत्रं श्रैणमाटविकं बलम् ।
अमैत्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥ ६१ ॥

वंशक्रमागतं मौल्यं भृतं द्रविणदानतः ।
मैत्रीकरणतो मैत्रं श्रेष्ठमेतद्बलत्रयम् ॥ ६२ ॥

संबद्धं जन्मकर्मभ्यां निश्चितं समयैश्च यत् ।
तद्बलं श्रैणमाख्यातं तच्च मध्यममिष्यते ॥ ६३ ॥

पर्वतोपान्तसंवासिनिषादम्लेच्छजातिजम् ।
अधमं तत्समाख्यातं बलमाटविकं बुधैः ॥ ६४ ॥

शत्रवो ये भयाक्रान्ता दासभावमुपागताः ।
तेषां बलं तु विज्ञेयममित्रजबलं बुधैः ॥ ६५ ॥

सन्निधौ न च तत्कार्यं विश्वसेन्न कदाचन ।
युद्धेषु पुरतः कार्यं नृपैर्युद्धविशारदैः ॥ ६६ ॥

लोहचर्मविनिर्माणाः कार्पासरचिता अपि ।
अयःकङ्कटकाः कार्याः सन्नाहः सुदृढः सदा ॥ ६७ ॥

बाहुत्राणैः शिरस्त्राणैरङ्गत्राणैश्च संवृतम् ।
पताकादिध्वजस्तम्भैः शोभमानं भवेद्बलम् ॥ ६८ ॥

वेत्रैर्वंशैश्च काष्ठैश्च चर्मभिश्चाङ्कबन्धनैः ।
वर्तुलानि विधेयानि चर्माणि बलगुप्तये ॥ ६९ ॥

व्याघ्रचर्मपिधानानि शातकुम्भमयानि च ।
फलकानि विचित्राणि कारयेच्च बले तथा ॥ ७० ॥

मौल्ये बले च ये मुख्यास्तेषां कुर्वीत माननम् ।
रत्नैर्विभूषणैर्वस्त्रैः प्रियवाक्यैर्मनोहरैः ॥ ७१ ॥

वृत्तिं तेषां प्रकुर्वीत यथायोग्यं सुपुष्कलाम् ।
भृत्यानां वेतनं दद्याद्यथाकालमतन्द्रितः ॥ ७२ ॥

प्रत्यहं प्रतिमासं वा मासत्रयमथापि वा ।
चतुर्मासोचितं वापि मासषट्कमथापि वा ॥ ७३ ॥

संवत्सरमितं वापि कार्यापेक्षितया नृपः ।
प्रत्यहं वीक्षणं कार्यमलुब्धैराप्तपूरुषैः ॥ ७४ ॥

पक्षे पक्षे स्वयं पश्येद्दिने तैर्वीक्षितो भवेत् ।
जितश्रमाणां शूराणां सायुधानां नरेश्वरः ॥ ७५ ॥

दद्यात्प्रसादं भृत्यानां सोत्साहं वेतनं ततः ।
अलसानायुधैर्हीनान् दण्डयेत्तान्महीपतिः ॥ ७६ ॥

सिन्धुजैर्यवनोद्भूतैः काम्भोजप्रभवैरपि ।
शिक्षितैर्बहुभिर्वाहैश्चालनैर्विविधैरपि ॥ ७७ ॥

साध्यन्ते तुरगैरेव दूरस्था अपि वैरिणः ।
लभ्यते तुरगैः कीर्तिर्यस्याश्वास्तस्य भूस्स्थिरा ॥ ७८ ॥

शिक्षिताः पोषिताः सम्यग्वाहाः कार्या महीभुजा ।
यद्वद्वनमसालं तु यद्वद्राष्ट्रमपार्थिवम् ॥ ७९ ॥

यद्वत्कार्यमशास्त्रं तु तद्वत्सैन्यमकुञ्जरम् ।
अनेकायुधसंकीर्णाः पताकाध्वजरञ्जिताः ॥ ८० ॥

चतुर्भिस्तुरगैर्युक्ता दृढसारथिनोदिताः ।
महारथैः [1] सहाक्रान्ता बहवः स्यन्दना नृपैः ॥ ८१ ॥

चतुरङ्गबले कार्या रणे समरकाङ्क्षिणा ।
एवं चतुर्विधं विद्वान्बलं सन्नद्धमारचेत् ॥ ८२ ॥

शक्तित्रयसमायुक्तो नृपतिर्जयकाङ्क्षया ।

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले राजगुणकरादानदुर्गलक्षणबलानुवर्णनं नाम षष्ठस्तरङ्गः

---

## अथ सप्तमस्तरङ्गः

शक्तित्रययुतो राजा जयेच्छत्रूनितीरितम् ।
किं तच्छक्तित्रयं मह्यं तद्ब्रूहि दयया गुरो ! ॥ १ ॥

पुत्र ! ते यदभीष्टं तद्ब्रवीमि शृणु सादरम् ।

---

[1] समाक्रान्ताः—क.

मित्रलक्षणम्

कुलीनं च सुशीलं च सुखे दुःखे च [1] संगतम् ॥ २ ॥

अमायं दृढचित्तं च धनैः प्राणैरवञ्चकम् ।
नीतिज्ञं शौर्यसंपन्नं व्यसनेष्वपराङ्मुखम् ॥ ३ ॥

कुर्वीत नृपतिर्मित्रं धर्मार्थसुखसिद्धये ।

राज्ञस्त्रैविध्यम्

आत्मायत्तो द्व्यायत्तः सचिवायत्त इत्यपि ॥ ४ ॥

राज्ञामेवं त्रयो भेदा नीतिशास्त्रेषु कीर्तिताः ।
आत्मायत्तो नृपः श्रेष्ठो द्व्यायत्तस्तु मध्यमः ॥ ५ ॥

कनिष्ठः सचिवायत्त इति नीतिविदो विदुः ।
[2] तत्तत्कर्तृकराज्यानि कीर्त्यन्ते तदभिख्यया ॥ ६ ॥

सचिवायत्तराज्यम्

ममाधीनमिदं राज्यं राजा च वशगो मम ।
मया यत्क्रियते कार्यं तत्कार्यं केन लभ्यते ॥ ७ ॥

इत्यात्मगर्वेणाध्मातः सचिवो यत्र जल्पति ।
कनिष्ठं तस्य तद्राज्यं सचिवायत्तमुच्यते ॥ ८ ॥

उभयायत्तराज्यम्

विज्ञप्तं यन्मया कार्यमवश्यं मन्यते प्रभुः ।
इत्यारोप्य स्वयं साम्यं सचिवो यत्र भाषते ॥ ९ ॥

सुखासुखप्रदं चैतदुभयाधीनसिद्धिकम् ।
तद्राज्यमुभयायत्तं मध्यमं परिकीर्तितम् ॥ १० ॥

आत्मायत्तराज्यम्

प्रभोराज्ञां विना नाहं समर्थः कार्यसिद्धये ।
इति प्रीत्या नृपे भक्त्या सचिवो यत्र भाषते ॥ ११ ॥

---

[1] सम्मतम्—क. [2] तत्तत्कर्मैक—क.

कल्लोले

एतद्राज्यं भयापेतं शुभदं राज्यसिद्धिदम् ।
श्रेष्ठं स्थिरतरं सम्यगात्मायत्तं प्रकीर्तितम् ॥ १२ ॥

प्रभुलक्षणम्

अनुग्रहे निग्रहे च दाने चादानकर्मणि ।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा ॥ १३ ॥

स्वयं समर्थो वै राजा स्वाज्ञा चैव निरर्गला ।
निजशक्त्या समायुक्तः स प्रभुः प्रभुरुच्यते ॥ १४ ॥

प्रभुशक्तिः

आज्ञारूपेण या शक्तिः सर्वेषां मूर्धनि स्थिता ।
प्रभुशक्तिर्हि सा ज्ञेया प्रभावमहितोदया ॥ १५ ॥

पञ्चाङ्गानि

सहायः साधनोपायो विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिर्मन्त्रेऽङ्गपञ्चकम् ॥ १६ ॥

गुरुशुक्रमतेऽप्येते चाणक्यादिमते तथा ।
पश्चात्तापविहीनश्च सानुबन्धः सुखोदयः ॥ १७ ॥

अभीष्टश्चाविलम्बश्च पञ्चाङ्गो मन्त्र इष्यते ।
बहुभिर्भिद्यते मन्त्रो द्वाभ्यां मन्त्रो विनश्यति ॥ १८ ॥

आत्मना विहितो मन्त्रो ब्रह्मणापि न भिद्यते ।
फलैर्मेघाः सदारम्भाः पुण्यं पूर्वार्जितं यथा ॥ १९ ॥

मन्त्रकाले परिहरणीयाः

बन्धुमूक[1]जडान्धस्त्रीवृद्धबालशुकादिकान् ।
श्रुतिगोचरतो देशात्तथा लोचनगोचरात् ॥ २० ॥

चालयेत्परतो यत्नान्मन्त्रकाले नरेश्वरः ।

[1] जडार्तस्त्री—क.

मन्त्रालोचनोचितदेशकालौ

आरुह्य चोन्नतं स्थानं प्रासादं वा रहःस्थितम् ॥ २१ ॥
अरण्ये विजने वापि मन्त्रं कुर्यादलक्षितः ।
मध्याह्नकाले मन्त्रज्ञः कृताहारो गतक्लमः ॥ २२ ॥
रात्रावपरभागे वा गतनिद्रः सुखोत्थितः ।

मन्त्रयितव्यविषयाः

धर्ममर्थं च कामं च कृत्याकृत्यं बलाबलम् ॥ २३ ॥
रिपूणां निग्रहोद्योगमर्थानामार्जनोद्यमम् ।
भृत्यानां भरणं चैव प्रत्यूहानां प्रतिक्रियाम् ॥ २४ ॥
सन्मानं चैव मित्राणां पुत्राणां नयशिक्षणम् ।
शुद्धान्तवनितारक्षां शिक्षां च गजवाजिनाम् ॥ २५ ॥
मन्त्रिणां मन्त्रितं तद्वदमात्यानां विचेष्टितम् ।
रक्षणं च कुमाराणां सामन्तानां च शासनम् ॥ २६ ॥
रागारागौ च लोकानामात्मनश्च गुणागुणौ ।
आयं व्ययं च वित्तानां कोशस्यापि विवर्धनम् ॥ २७ ॥
दुष्टानां शमनं चैव शिष्टानां परिपालनम् ।
पूजनं सुरविप्राणां वर्णाश्रमविचारणम् ॥ २८ ॥
देवालयतटाकाग्र्यकूपारामादिरक्षणम् ।
स्वदेहरक्षणार्थाय ग्रहाणां च बलाबलम् ॥ २९ ॥
दुर्गाणां रक्षणं सम्यक्परभूपालचेष्टितम् ।
वारणं तस्करादीनामात्मरक्षाविधिक्रमः ॥ ३० ॥
प्रकृतीनां च सद्भावं धान्यादीनां समार्घताम् ।
शान्तिकं पौष्टिकं कर्म नित्यं नैमित्तिकं तथा ॥ ३१ ॥
माननं बुद्धिवृद्धानां देशकालविमर्शनम् ।
चिन्तयेन्मन्त्रिभिः सार्धं स्वयं वा वसुधाधिपः ॥ ३२ ॥

कल्लोले

आहूय मन्त्रिणः सर्वान् मन्त्रयेत पृथक्पृथक् ।
अभिप्रायं विदित्वैषां गुणदोषौ विचारयन् ॥ ३३ ॥

मन्त्रिभिर्मन्त्रिते मन्त्रे गुणदोषौ विचार्य च ।
किं कृतं करणीयं किं क्रियमाणं च किं मया ॥ ३४ ॥

किमु धार्यमधार्यं मे संचिन्त्यैवं मुहुर्मुहुः ।
बहुलाभं सुधन्यं च धर्मकीर्तिविवर्धनम् ॥ ३५ ॥

कार्यं विचार्य कर्तव्यं भूभुजा सुखमिच्छता ।
सममायव्ययौ यत्र व्ययो यत्राधिको भवेत् ॥ ३६ ॥

असाध्यं च सुखोपायैः कथंचित्तन्न मन्त्रयेत् ।
अधर्म्यं चायशस्यं च पश्चात्तापकरं च यत् ॥ ३७ ॥

दुर्लभं क्लेशबहुलं दुर्मन्त्रं तन्निवारयेत् ।

मन्त्रशक्तिः

कामात्क्रोधाद्भयादन्यैर्लोभ्यमानो न मुह्यति ॥ ३८ ॥
यया शक्त्या युतः [1] कार्ये मन्त्रशक्तिस्तु सा स्मृता ।

उत्साहशक्तिः

यस्य स्यादुद्यमे युक्तं चित्तमुत्साहसंयुतम् ॥ ३९ ॥
उत्साहशक्तिः सा ज्ञेया नृपाणां शक्तिमिच्छताम् ।

नीतेरनेकरूपत्वम्

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४० ॥

---

[1] कार्यैर्मन्त्र—क.

जितेन्द्रियत्वस्य सम्पद्धेतुत्वम्

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ ४१ ॥

एवं भद्रमहीपालो ज्येष्ठभ्रातृतनूभुवे ।
राज्ञामावश्यकीं तावद्राजनीतिमुपादिशत् ॥ ४२ ॥

ततः स्वल्पैरहोभिः प्राग्दृष्टवान् काशिकापतिम् ।
शिवं कैलासधामानं दिदृक्षुरिव निर्ययौ ॥ ४३ ॥

ततो राज्यं समासाद्य दोड्डसङ्कण्णनायकः ।
अनन्दयत्कुवलयं राजा रम्यकलानिधिः ॥ ४४ ॥

दोड्डसंकण्णनायकस्य जम्बूरदेशाधिपजयः

जातु जम्बूरदेशेशो विरुप्पण्णाभिधानवान् ।
प्रख्यातः सार्वभौमाय दातव्यां च करोपदाम् ॥ ४५ ॥

अदिशन्प्रतिकूलत्वमाचचारातिदर्पितः ।
तं निगृह्य बलाद्धृत्वा हस्तेनैवानयत्प्रभोः ॥ ४६ ॥

सविधं सोऽपि संतुष्यन्नेवं वचनमब्रवीत् ।
एतादृक्छौर्यसंपन्नस्त्वमस्मत्सविधे वस ॥ ४७ ॥

निधेहि राज्यमनुजेऽप्यानायय कुटुम्बकम् ।
इत्याज्ञप्ते सविधगे याते कियदनेहसि ॥ ४८ ॥

तस्योदभवतां श्रेष्ठौ महिष्यां क्रमशः सुतौ ।

रामराजवेङ्कटप्पनायकयोर्जननम्

एकस्य रामराजाख्या रचिताऽसीत्परस्य तु ॥ ४९ ॥

विनिर्मिता वेङ्कटप्पनायकाख्या तयोर्द्वयोः ।
सार्वभौमस्तदा स्वीयनामाङ्कनमवेक्ष्य सः ॥ ५० ॥

कल्लोले

होळेहोन्नूरु मासूरु बेलीमल्लूरुदेशकान् ।
दत्त्वोपभोग्यानथ तं प्राहिणोत्स्वपुरं प्रति ॥ ५१ ॥

स च प्राप्यानुजाभ्याशं तेन साकमवर्तत ।
अनन्तरं पराङ्गेषु सार्वभौमविरोधिषु ॥ ५२ ॥

पुनरेवं समानाय्य मेलयित्वाऽनुजेन तम् ।
नाम्ना विठ्ठलराजेन यापयामास तान् प्रति ॥ ५३ ॥

ततस्तान् वैरिणो राजा गोवादेशनिवासिनः ।
पराभवत्सार्वभौमोऽनुजेन सह संगतः ॥ ५४ ॥

ततो गोवापुराधीशं स्वस्मै जित्वाऽर्पयत्यपि ।
अस्मिन् प्रमुदितः प्रादान्महादेवपुरस्थलम् ॥ ५५ ॥

अनन्तरं प्राप्य राज्यं यातो निजपुरीं प्रति ।
अनुजेन समं कञ्चित्कालं सुखमवर्तत ॥ ५६ ॥

सङ्कण्णनायकतीर्थयात्रा

ततः कदाचित्पुण्यानां क्षेत्राणां तत्र वर्तिनाम् ।
लिङ्गानामपि तीर्थानामवलोकनकाङ्क्षया ॥ ५७ ॥

शकुनानि पुरस्कृत्य ततः शुभफलानि सः ।
प्रययौ प्रथमं तावत्ककुभं सेतुचिह्निताम् ॥ ५८ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले शक्तित्रयदोड्डसङ्कण्णनायक-
वृत्तान्तवर्णनं नाम सप्तमस्तरङ्गः

---

## अथाष्टमस्तरङ्गः

शकुनानि समालोच्य स्वयं सङ्कण्णनायकः ।
निर्ययौ तीर्थयात्रार्थमिति स्वामिन्निरूपितम् ॥ १ ॥

शकुनानि पुनः कानि कानि तेषु फलान्यपि ।
एतन्मह्यं समाचक्ष्व सर्वविद्याविशारद ! ॥ २ ॥

शृणु नन्दन ! यत्पृष्टं संक्षिप्य विवृणोमि तत् ।

शुभाशुभशकुनानि

शुभाशुभानां कार्याणामासन्नानां भविष्यताम् ॥ ३ ॥

सूचकान्येव सर्वाणि शकुनानि विदुर्बुधाः ।
आकारगोचराण्येषां शकुनानां तु कानिचित् ॥ ४ ॥

रुतानि कानिचित्तानि कीर्त्यन्तेऽत्र यथातथा ।

वातफलम्

अनुलोमो वहन् वायुः सुगन्धिः शीतलो मृदुः ॥ ५ ॥
सिद्धये यास्यतः प्रोक्तो विलोमोऽनिष्टदः स्मृतः ।

पादाङ्गुलिस्खलनफलम्

स्खलनाद्दक्षिणस्याङ्घ्रेर्ज्येष्ठाद्यङ्गुलिभिः क्रमात् ॥ ६ ॥
वसु वस्त्रं विरोधं च कलहं हानिमश्नुते ।
वामस्य तद्वन्नैष्फल्यं कलहं मैत्रमीप्सितम् ॥ ७ ॥

सौख्यं च लभते मर्त्यो यात्रायां नात्र संशयः ।

सृगाल-क्षुत-गौलिकानां फलम्

* तैलजामरसंभूय, भूपतिर्गजमारथ ॥ ८ ॥

सभापतिर्गजो मूर्ख, पतंगदमरासभाः ।
दाशीरथोभयत्यागी, रथभूकांतगर्दभ ॥ ९ ॥

गजमूर्खसभायाति, भानुवारादिषु क्रमात् ।
मृत्युर्वधः श्रियश्चैव सुवार्ता विजयः शुभम् ॥ १० ॥

संतापः कलहश्चैव सृगालक्षुतगौलिकाः ।

*भान्वादिवासरेषु क्रमशः सृगाल-क्षुत-गौलिकानां फलानि मृत्युवधादीनि तैलाद्यक्षरेषु कटपयादिसंख्यां, तया च दिशं लक्षयित्वा पूर्वादिक्रमेण ज्ञेयानि ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| भानुवासरे .... | तै ६ वायव्या | ल ३ दक्षिणा | जा ८ ऐशानी | म ५ पश्चिमा | र २ आग्नेयी | सं ७ उत्तरा | भू ४ नैर्ऋत्या | य १ पूर्वा |
| सोमवासरे .... | भू ४ नैर्ऋत्या | प १ पूर्वा | ति ६ वायव्या | गैं ३ दक्षिणा | ज ८ ऐशानी | मा ५ पश्चिमा | र २ आग्नेयी | थ ७ उत्तरा |
| मङ्गलवासरे .... | स ७ उत्तरा | भा ४ नैर्ऋत्या | प १ पूर्वा | ति ६ वायव्या | गैं ३ दक्षिणा | जो ८ ऐशानी | मू ५ पश्चिमा | खं २ आग्नेयी |
| बुधवासरे .... | प १ पूर्वा | तं ६ वायव्या | ग ३ दक्षिणा | द ८ ऐशानी | म ५ पश्चिमा | रा २ आग्नेयी | स ७ उत्तरा | भा ४ नैर्ऋत्या |
| गुरुवासरे .... | दा ८ ऐशानी | शी ५ पश्चिमा | र २ आग्नेयी | थो ७ उत्तरा | भ ४ नैर्ऋत्या | य १ पूर्वा | त्या ६ वायव्या | गी ३ दक्षिणा |
| शुक्रवासरे .... | र २ आग्नेयी | थ ७ उत्तरा | भू ४ नैर्ऋत्या | का १ पूर्वा | न्त ६ वायव्या | ग ३ दक्षिणा | दं ८ ऐशानी | म ५ पश्चिमा |
| शनिवासरे .... | ग ३ दक्षिणा | ज ८ ऐशानी | मू ५ पश्चिमा | खं २ आग्नेयी | स ७ उत्तरा | भा ४ नैर्ऋत्या | या १ पूर्वा | ति ६ वायव्या |
| फलानि .... | मृत्युः | वधः | श्रीः | सुवार्ता | विजयः | शुभं | सन्तापः | कलहः |

प्रकारान्तरेण सृगालादीनां फलम्

प्रागाद्यास्तु विदिग्भेदाद्दिशः सर्वास्तु षोडश ॥ ११ ॥

एकैकदिशि यामार्धं दिवारात्रं चरेद्रविः ।
रव्यादिक्षुतपर्यन्तं प्रादक्षिण्यक्रमेण तु ॥ १२ ॥

भीतिर्मरणवार्ता च शत्रोरभ्यागमस्तथा ।
स्त्रीप्राप्तिः कलहश्चैव उपायनसमागमम् ॥ १३ ॥

चोराभ्यागमनं पुष्पं ताम्बूलं चित्तविभ्रमः ।
पत्रिका सुन्दरीप्राप्तिः इष्टाप्तिः सौख्यभोजनम् ॥ १४ ॥

सर्पदंशं च संतोषं सृगालक्षुतगौलिकाः ।

क्षुतफलम्

अशोभनं क्षुतं विन्द्यान्मृतयोगोऽभ्युदीरितम् ॥ १५ ॥

बलात्तु निष्फलं बालवृद्धपीनसिकैरपि ।
निरर्थकं पुरः प्रोक्तमनर्थं दक्षिणे तथा ॥ १६ ॥

पृष्ठतः कार्यलाभाय क्षुतं क्षेमाय वामतः ।
भेषजे वाहनारोहे आसने शयनेऽशने ॥ १७ ॥

विद्यारम्भे बीजवापे क्षुतं शुभकरं मतम् ।

गौलीस्वरफलम्

अचिंतायां वदेद्गौल्याः फलानि स्वरसङ्ख्यया ॥ १८ ॥

(सि? वृ)द्धिर्लाभश्च दुःखं च भयलाभा(धि? भि)वृद्धयः ।
मरणं राजसन्मानो बन्धूनां दर्शनं तथा ॥ १९ ॥

इष्टसिद्धिरनिष्टाप्तिः फलानि द्वादश स्वरे ।
यात्रायामुदये पुण्ये पुण्यारूढे तथैव च ॥ २० ॥

प्रथमे दक्षिणा पश्चात्सव्या शोभनमादिशेत् ।
पापोदये तथारूढे दक्षिणा पूर्वमुत्तरा ॥ २१ ॥

सव्या निष्फलतां ब्रूते गतिः स्याद्गतिमात्रताम् ।
उदयारूढयोर्गौली पुण्यतां याति सर्वदा ॥ २२ ॥

शुभदा पापसंयोगादशुभं यातुरादिशेत् ।
यात्रार्थं गौलिका पृष्ठा शुभारूढे शुभोदये ॥ २३ ॥

दक्षिणा शुभदा यात्रा ते तत्स्यादिति ध्रुवम् ।
सर्वस्य पापयोगेन यातुः स्यात्तद्विपर्ययः ॥ २४ ॥

सव्या च शुभदा गौली शुभारूढे शुभोदये ।
सपापे यदि सव्यास्था ब्रूते यानं ततोऽधिकम् ॥ २५ ॥

विमाने गोपुरद्वारे विप्रराजगृहेषु च ।
वृक्षे क्षीरिणि वा पुष्पैः फलैर्वा पल्लवैर्युते ॥ २६ ॥

सभायां वा स्थिता गौली सद्यः शुभफलप्रदा ।
वृक्षे च कण्टकैर्युक्ते चाक्षवृक्षे विषद्रुमे ॥ २७ ॥

शुष्के जग्धोदरे वापि करञ्जे खदिरेऽपि वा ।
यदि वक्ति स्थिता गौली चिरेणाल्पफलप्रदा ॥ २८ ॥

श्वानागमनादिफलम्

श्वेतरक्तापीतनीलाः श्वानश्चित्रा अपि क्रमात् ।
ब्रह्मक्षत्रियविट्छूद्रसर्वसङ्करजातिजाः ॥ २९ ॥

योषिद्व्याधितवृद्धेषु बालक्लीबालसेषु च ।
निष्फलं श्वसु निर्दिष्टं व्यङ्गेषु फलमन्यतः ॥ ३० ॥

प्रयाणकालमुद्दिश्य विप्रश्वा सव्यतो व्रजेत् ।
चिन्त्यमाना तु या सिद्धिः दीर्घकालेन सा भवेत् ॥ ३१ ॥

यत्कार्यं मनसा ध्यायेद्वणिक्श्वा सव्यतो व्रजेत् ।
सद्य एव तु तत्कार्यं प्रसिध्येन्नात्र संशयः ॥ ३२ ॥

यत्कार्यं मनसा ध्यायेच्छूद्रश्वा सव्यतो व्रजेत् ।
चिन्त्यमानं तु तत्कार्यमविघ्नाज्जायते ध्रुवम् ॥ ३३ ॥

यदि गच्छन् दिशं वीक्ष्य पादेन धरणीं लिखेत् ।
कर्णस्फोटं तथा कुर्यात्सर्वकार्यविनाशनम् ॥ ३४ ॥

पृष्ठतो विरुतं कृत्वा लाङ्गूलं खादते पुनः ।
त्वरितं पुरतः शेते कलहं तत्र निर्दिशेत् ॥ ३५ ॥

तृणेषु चैव काष्ठेषु यदि मूत्रं स्रवन् स्पृशेत् ।
यात्रायां प्राप्यते शीघ्रमर्थहानिस्तथैव च ॥ ३६ ॥

रज्जुचर्म तृणं गृह्णन् द्रावितो यदि दक्षिणम् ।
वामपादे स्पृशेद्भूमिं पाददुःखं भवेत्तदा ॥ ३७ ॥

संमार्जनीं च कार्पासं शणकं शूर्पकं कशाम् ।
गृहीत्वा सम्मुखोऽभ्येति तद्गृहं पूर्यते धनैः ॥ ३८ ॥

वसुन्धरायाः कमपि प्रदेशं
मूर्ध्ना स्पृशेद्यद्यवलोकते च ।
ध्रुवं तथा तत्र महानिधान-
मस्तीति सिद्धैः कथितं रहस्यम् ॥ ३९ ॥

ज्वलितादि दिग्दर्शनफलम्

अष्टदिशो रवियोगाज्ज्वलिता धूमान्विता च्छाया ।
सजला कर्दमधात्र्या भस्मितदग्धे परिज्ञेयाः ॥ ४० ॥

[1] प्रत्येकमेकः सततं सुमेरोः
प्रदक्षिणाभ्यागमनक्रमेण ।
दिवारजन्योः प्रहराष्टकेन
प्रतापयत्युष्णकरो दिशोऽष्टौ ॥ ४१ ॥

दिशि ज्वलन्त्यां मरणं प्रदिष्टं
धूमान्वितायां सकलार्थनाशः ।
छायाजलाकर्दमितासु दिक्षु
जयो धरित्र्यां कथितोऽर्थलाभः ॥ ४२ ॥

---

[1] प्रत्येकमेकः पतनं सुमेरोः—क.

स्याद्धस्मितायां न भयं न हानि-
रङ्गारितायां स्वजनक्षयः स्यात् ।

शिवारुतफलम्

रात्रौ शिवायाः स्वरजप्रभावो
यथा भवेदह्नयपि तद्विधः स्यात् ॥ ४३ ॥

अतीव सौख्यशुभदा याम्यां निशि भवेच्छिवा ।
पूर्वस्यां तत्पुरोऽध्यक्षमन्यं कुर्यादहर्मुखे ॥ ४४ ॥

आस्ते शिवा पश्चिमायां परचक्रभयाय सा ।
शुभा कुबेरदिश्यास्ते ग्रामान्ते शून्यकारिणी ॥ ४५ ॥

अश्वमध्ये कृतरवा शिवा युद्धप्रपञ्चकृत् ।
शिवा सप्तस्वरा ग्राह्या बहुशब्दा तु निष्फला ॥ ४६ ॥

धनं मित्रं प्रियं भोगं सुखं राज्यं जयं क्रमात् ।
एकादौ सप्तपर्यन्ते शब्दे शान्तदिशाफलम् ॥ ४७ ॥

रुजं शोकं भयं हानिं चौर्यं वह्निं मृतिं क्रमात् ।
कुर्वन्त्येकादिसप्तान्ता दीप्तदिक्षु शिवारवाः ॥ ४८ ॥

दिवा त्रीनथ वा पञ्च सप्त वा कुरुते स्वरान् ।
फेफे हुहु भूभूश्चैव हावुहावु हहस्तथा ॥ ४९ ॥

एतान् पञ्च स्वरान् ब्रूते सर्वदिक्सङ्गता शिवा ।
फेफे नगरनाशाय हुहुसर्वशुभप्रदा ॥ ५० ॥

भूभूश्च विपदं ब्रूते हावुहावु महाभयम् ।
हहश्च नृपनाशाय मिश्रे मिश्रफलं भवेत् ॥ ५१ ॥

पुरासन्ने स्वरे शीघ्रं फलं दूरे चिरेण च ।
एवं शिवारुतफलं क्रमेण परिकीर्तयेत् ॥ ५२ ॥

काकरुतफलम्

पृष्ठे पुरो वा नवगोमयस्थो
वटादिषु क्षीरतरुष्वपीह ।

स्थितो रुवन् भोजनपानमिष्टं
विष्ठां प्रकुर्वन् वितरत्यवश्यम् ॥ ५३ ॥

अन्नादिवर्चः फलपुष्पमांस-
मत्स्यादिभिः पूर्णमुखस्तथैव ।
[1] स्वदृष्टमात्रोऽभिमतार्थसिध्यै
मृष्टान्नभोज्याय सदैव काकः ॥ ५४ ॥

गोपृष्ठदग्धद्रुमगोमयेषु
तुण्डं निघर्षन्नवलोकितश्चेत् ।
स्वाहारमन्यस्य मुखे ददानो
ददाति भोज्यं बलिभुग्विचित्रम् ॥ ५५ ॥

क्रांक्रामिति क्षेमविधौ विरावः
कीं कीमितीष्टाशनपानहेतुः ।
करोति कुंकूमिति चार्थलाभं
कें केंध्वनिः काञ्चनलाभमाह ॥ ५६ ॥

यत्कायकायेति पुरः प्रदिष्टं
शब्दद्वयं स्यान्महते फलाय ।
कामित्ययं वाहनमासनं च
ददाति हर्षं परमं विरावः ॥ ५७ ॥

गोपुच्छवल्मीककृतास्पदश्च
काको भवेत्सर्पभयस्य हेतुः ।
वल्लीवरत्राकचशुष्ककाष्ठ-
चर्मास्थिजीर्णाम्बरवल्कलानि ॥ ५८ ॥

अङ्गाररक्षोल्मुकखर्पराणि
दशन्मुखेनातिभयाय काकः ।
अत्रस्ता निजपक्षैस्तुण्डविघातैर्जनानभिभवन्तः ।
कुर्वन्ति शत्रुवृद्धिं निशि विरुवन्तः समस्तजननाशम् ॥ ५९ ॥

---

[1] स्यादृष्ट–मु.

शीर्षे नरस्योपविष्टः काको मृत्याद्यनर्थदः।
स्थितो जनापवादं वा शोकं वा कुरुते स्त्रियः॥ ६०॥

क्रीं क्रीमितीष्टार्थविनाशनाय
ज्वलज्वलेत्यग्निभयाय शब्दः।
क्रौंक्रोमितीदं शुभलाभकारि
कुंकुंनिनादः प्रियसङ्गमाय॥ ६१॥

स्यात्कलिः करकरध्वनौ नृणां
जायते कणकणध्वनौ ज्वरः।
आव्रजेत्कुलुकुलुध्वनौ प्रियं
स्वोदनं [1]कुटुकुटुध्वनौ भवेत्॥ ६२॥

यः स्नाति [2]धूल्याम्बु विलोक्य रौति
वृष्टिं सदा शंसति वायसोऽसौ।
[3]जलस्थलस्थानविपर्ययेण
वर्षासु वृष्टेर्भयमन्यथा तु॥ ६३॥

काकस्य वचनं श्रुत्वा पादच्छायां प्रकल्पयेत्।
त्रयोदशसमायुक्तं षड्भिर्भागं समाहरेत्॥ ६४॥

रोगं लाभं तथाऽध्वानं भोजनं च धनागमम्।
[4]निश्शेषं मरणं यान्ति सत्यमाह पराशरः॥ ६५॥

घूकशब्दफलम्

रात्रौ गृहस्योपरि भाषमाणो
दुःखाय घूकः सुतमृत्यवे च।
गृहस्थनाशाय च सप्तरात्रं
नाशाय राज्ञो द्विगुणानुबन्धी॥ ६६॥

---

[1] कटकटध्वनौ—क. [2] धूल्यां भुवि लोक्य—क. [3] जलस्थले स्थान—क.
[4] निश्शेषे मरणं प्रोक्तं—क.

त्र्यहं गृहद्वारि [1] रुदत्युलूके
हरन्ति चोरा द्रविणं प्रसह्य ।
तस्मिन् प्रदेशे निशि माषयुक्त-
स्तद्दोषनाशाय बलिः प्रदेयः ॥ ६७ ॥

सन्ध्याकाले रुदन् भूमौ [2] प्रवेशे वेश्मनोऽथ वा ।
दृष्टो रोगप्रदो घूकः सोऽप्यार्तानां भयावहः ॥ ६८ ॥

घूघूशब्दः सदा शान्तो गुरुग्लुंग्लुश्च तादृशः ।
अन्ये शब्दास्तु घूकानां निन्दिताः सर्वदाऽशुभाः ॥ ६९ ॥

शान्तायां दिशि वृक्षेषु ग्रामाद्दूरेषु शब्दतः ।
घूकः स्यात्सर्वलोकानामृद्धिसिद्धिसुखार्थकृत् ॥ ७० ॥

अङ्गस्पन्दफलम्

शिरसः स्पन्दने राज्यं स्थानलाभो ललाटके ।
भ्रूमध्ये धनलाभश्च भ्रुवः स्पन्देऽङ्गनागमः ॥ ७१ ॥

नासिकायां सुगन्धाप्तिर्दक्षाक्ष्यादौ सुदर्शनम् ।
मध्योपरि सुखावाप्तिर्नेत्रान्ते दुःखसंक्षयः ॥ ७२ ॥

नेत्रांन्तेऽप्यधरे हानिर्मध्ये दृशि तु रोदनम् ।
नेत्रादावधरे युद्धं वामनेत्रादिके भयम् ॥ ७३ ॥

वाममध्योपरि भयं वामान्ते धनसम्पदः ।
अधोभागे रोदनं च अधोमध्ये दुरिष्टकृत् ॥ ७४ ॥

वामाधरादौ सर्वार्थहानिः स्त्रीणां विपर्ययः ।
उत्तरोष्ठे चातिभूमिरधरोष्ठे च बाधनम् ॥ ७५ ॥

मङ्गलश्रवणं दक्षकर्णस्पन्दे सदा नृणाम् ।
वामे च दुष्टवार्ता च कण्ठे विभवविच्युतिः ॥ ७६ ॥

बहिर्ग्रीवास्पन्दने तु निधनं नृपतेर्भयम् ।
भुजयोर्दक्षिणस्पन्दे [3] पुत्रालिङ्गनशोभनम् ॥ ७७ ॥

---

[1] रवत्युलूको–क. [2] प्रदेशे–क. [3] पित्रालिङ्गन–क.

मणिबन्धस्पन्दने तु भूषणं सुपराक्रमः ।
दक्षहस्ततलेऽर्थाप्तिरङ्गुल्यामतिशोभनम् ॥ ७८ ॥

वामाङ्गस्पन्दने रोगो दुःखालिङ्गन[1]कुक्कुजे ।
मणिबन्धे सर्वहानिस्तापो हस्ततलेऽपि च ॥ ७९ ॥

दक्षहस्तस्पन्दनेऽपि जघनेऽपि सुवासनम् ।
कटिस्पन्दे स्वर्णरौप्यपुत्रप्राप्तिसुखोद्भवः ॥ ८० ॥

वामपार्श्वेऽङ्गनाप्राप्तिर्जघने शिशुसंक्षयः ।
जङ्घोरुस्पन्दने डोलावाहनछत्रसम्पदः ॥ ८१ ॥

कुक्षिस्पन्दे धान्यलब्धिर्नाभिस्पन्दे सुभोजनम् ।
स्तनस्पन्दे सन्ततिश्च हृदः स्पन्दे महोन्नतिः ॥ ८२ ॥

गुह्यस्पन्दे महाभोगो गुदस्पन्देऽङ्गनामृतिः ।
जानूरुजघनस्पन्दे कृषिधान्यपरिक्षयः ॥ ८३ ॥

वामगुल्फे वातरोगो व्रणरोगोऽथ वा भवेत् ।
पादस्पन्दे महाध्वा च पृष्ठस्पन्दे युधि क्षतिः ॥ ८४ ॥

रोगी चैव भवेत् स्त्रीणां दर्शने भोजने तथा ।
अङ्गानां स्पन्दनं यत्तन्निष्फलं परिकीर्तितम् ॥ ८५ ॥

दक्षिणाङ्गेषु यत्पुंसां फलं तावत्प्रकीर्तितम् ।
वामाङ्गस्पन्दने स्त्रीणां तत्फलं प्रवदेत्सुधीः ॥ ८६ ॥

### सृगालादि दर्शनफलम्

सृगालनकुलव्याघ्रचकोरोलूकपक्षिणाम् ।
दक्षिणे दर्शनं श्रेष्ठं प्रस्थाने वामतोऽन्यथा ॥ ८७ ॥

खमृगाजखरध्वांक्षरुरूणां गवयस्य च ।
वामे चालोकनं शस्तं प्रयाणे दक्षिणेऽन्यथा ॥ ८८ ॥

---

[1] कुक्कुवेव—क.

प्रस्थाने दक्षिणे लाभं लाभं वामे च वञ्जुलः ।
प्रवेशे व्यत्ययाद्ब्रूते मयूरश्चेदतोऽन्यथा ॥ ८९ ॥

सामान्यतस्तत्तत्पक्षिरुतश्रवणफलम्

मार्गस्योभयतः स्थित्वा रुवतः पक्षिणौ यदा ।
तोरणस्थौ विजानीयान्माङ्गल्यफलसूचकौ ॥ ९० ॥

प्रदक्षिणं परिक्रम्य फलवृक्षं समाश्रितः ।
लाभं ब्रूतेऽन्यथा हानिं वञ्जुलो वायसोऽपि वा ॥ ९१ ॥

आश्रित्य कण्टकतरुं प्रत्यर्कमवलोकयन् ।
क्रूरं [1] रुवन भयं ब्रूते स्वर्णचञ्चुश्च वायसः ॥ ९२ ॥

वेश्म सेनासमूहं वा लङ्घयन् वञ्जुलो रुवन् ।
कलहं वा मृतिं भ्रान्तिं तत्रावेदयति स्फुटम् ॥ ९३ ॥

पूर्वाह्णे चर्वफरडौ सिद्धिं वामेन शंसतः ।
दक्षिणेनापराह्णे तु व्यत्यासेनाशुभं तथा ॥ ९४ ॥

लाभाय पिङ्गलो रौति दक्षिणेन न संशयः ।
सव्येन चान्यथा नित्यं वदेच्छकुनकोविदः ॥ ९५ ॥

कृकलासहारीतपतनफलम्

कृकलासः पुरो यस्य भूमौ पतति विह्वलः ।
तन्नामाक्षरमासेषु तस्य हानिं मृतिं वदेत् ॥ ९६ ॥

यस्यां हरिति हारीतः प्रस्थाने दृश्यते पुरः ।
षण्मासाभ्यन्तरे नाशं तत्र तस्या दिशो विदुः ॥ ९७ ॥

विप्रादिदर्शनफलम्

सुशीलं श्रोत्रियं शान्तं प्रसन्नं प्रियदर्शनम् ।
सर्वज्ञं सुहृदं चापि बान्धवं वा धनुर्धरम् ॥ ९८ ॥

---

[1] रुदन्-क.

प्रजावतीं तथा रम्यां दर्शनीयां पतिव्रताम् ।
भूषितां वीरसूं वेश्यां कन्यामन्नं च तण्डुलम् ॥ ९९ ॥

पुष्पं फलं वृषं धेनुं चन्दनं समिधः कुशान् ।
दूर्वां च चामरं सर्पिः शवं तूर्याणि दर्पणम् ॥ १०० ॥

पूर्णकुम्भं ध्वजं छत्रं मत्स्यं मांसं सुरां दधि ।
पिष्टातं मूलजातं च पावकं ज्वलितं गजम् ॥ १०१ ॥

राजानं तुरगं शङ्खं चक्रवाकं च सारसम् ।
हंसं शिखण्डिनं मुक्तां ताम्रमाभरणानि च ॥ १०२ ॥

वर्णकं शयनं मालां रूप्यं रत्नानि काञ्चनम् ।
धान्यानि चेति प्रस्थाने पुरस्तात्पश्यतः शुभम् ॥ १०३ ॥

क्लीबं मूकं च बधिरं व्रतिनं विकृताकृतिम् ।
ब्रह्मद्विषं परिव्राजं जाल्मं जालोपजीविनम् ॥ १०४ ॥

जातिभ्रष्टं व्रतभ्रष्टं बर्बरं ब्रह्मचारिणम् ।
कुणिनं सौनिकं क्रूरं विकलं व्याधिपीडितम् ॥ १०५ ॥

दण्डिनं मुण्डिनं वापि मुक्तकेशान् दिगम्बरान् ।
विधवां पुष्पितां वन्ध्यां विरक्तां भिक्षुकीं तथा ॥ १०६ ॥

क्षीणां क्षीणस्तनीं मत्तां मातङ्गीं छिन्ननासिकाम् ।
तैलं मधु पयः पक्वं पिण्याकं फाणितं कुथम् ॥ १०७ ॥

कन्थां निचोलमुद्गारं लोहं च क्षतजं वसाम् ।
कांस्यं कार्षापणं सीसमयस्तक्रं च काञ्जिकम् ॥ १०८ ॥

मार्जारं मार्जनीं रज्जुमङ्गारभसिते तुषम् ।
केशास्थिचर्मकार्पासशूर्पकूर्पासखर्परान् ॥ १०९ ॥

उलूकं महिषं गृध्रं श्वानं शाखामृगं बकम् ।
रूक्षं खरं तरक्षुं च गर्दभं मेषमेलकम् ॥ ११० ॥

गोधां च जम्बुकं काष्ठमूषरं खञ्जरीटकम् ।
विष्ठां कुष्ठं च पाषाणं पुलाकं मलिनाम्बरम् ॥ १११ ॥

रिक्तान्यपि च पात्राणि प्रस्थाने कुर्वतेऽशुभम् ।
शुभाशुभेष्वनुक्तं यन्निमित्तेष्विह लक्षणैः ॥ ११२ ॥

साधारणमिति ज्ञेयं निमित्तं तत्त्वदर्शिभिः ।
एवं शुभाशुभफलप्रदानि शकुनानि तु ॥ ११३ ॥

अङ्गचेष्टितशब्दाभ्यामुक्तानि बहुधाऽधुना ।
एतेषु शुभदायीनि शकुनानि विलोकयन् ॥ ११४ ॥

सङ्कर्षणनायको ज्यायान् ककुभं सेतुचिह्निताम् ।
उद्दिश्य प्रथमं यानमकरोदतिसादरः ॥ ११५ ॥

तत्रत्यतीर्थक्षेत्राणां देवानां च दिदृक्षया ।

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले शकुनफलकथनं नाम अष्टमस्तरङ्गः

---

## अथ नवमस्तरङ्गः

गत्वाऽसौ नृपतिः कुत्र किं किं रचितवानिदम् ।
मह्यं ब्रूहि गुरो ! तस्य श्रवणे कौतुकं महत् ॥ १ ॥

पुत्र ! ते तत्समासेन वर्णयाम्यद्भुतं शृणु ।
यस्य संश्रवणे नृणां हृदयं विस्मयास्पदम् ॥ २ ॥

रामेश्वरादिलिङ्गानि नानाक्षेत्राणि तत्र च ।
दृष्ट्वा स्नात्वा च तीर्थेषु तत्रत्येषु च सादरम् ॥ ३ ॥

दक्षिणां दिशमुन्मुच्य जगाहे दिशमुत्तराम् ।
दृष्ट्वा तत्रापि लिङ्गानि क्षेत्रतीर्थानि भूरिशः ॥ ४ ॥

क्रमात्समासदत्काशीं भवाशीविषबर्हिणीम् ।
गङ्गां निजपयोबिन्दुसङ्गापहृतदुष्कृताम् ॥ ५ ॥

विश्वेशं चापि विश्वेशं यतः प्रापुः सुरासुराः ।
प्राप्यावगाह्य बहुधा संपूज्यापि क्रमेण तान् ॥ ६ ॥

निर्गत्य च ततो नीलकण्ठनेपालमाश्रितः ।
केदारेशं ततो दृष्ट्वा प्राप्तः काश्मीरमण्डलम् ॥ ७ ॥

कुरुक्षेत्रं ततोऽपश्यत्क्रमेणैव ततः परम् ।

सङ्कणनायकस्य डिल्लीगमनम्

डिल्लीनामकमेतर्हि प्रागिन्द्रप्रस्थसंज्ञिकम् ॥ ८ ॥

नगरं प्रेक्ष्य तस्यान्तः प्रवेशाय कृतस्पृहः ।
व्रजन्नसिं द्वारि बद्धमद्राक्षीदेकमग्रतः ॥ ९ ॥

अपृच्छच्च प्रतीहारान् किमेतदिति कौतुकी ।
अयमङ्कुशखानेन शस्त्राशस्त्रिविधौ पटुः ॥ १० ॥

मया समं योद्धुकामो गृह्णात्विति निवेशितः ।
श्रुत्वेति वचनं तेषां स्मृत्वा पूर्वतनीं कथाम् ॥ ११ ॥

कौरवप्रेरितो मात्स्यनगरे मल्लतल्लजः ।
बुद्ध्वा द्वारि गदां योद्धुं भीमेनासीन्निषूदितः ॥ १२ ॥

मया निषूदनीयोऽयमिति निर्धारयन् हृदि ।
असिमानाययामास बद्धं तमनुयायिना ॥ १३ ॥

श्रुत्वा सोऽङ्कुशखानोऽपि प्रतिहारमुखोक्तितः ।
तत्र प्रवृत्तं वृत्तान्तं सर्वमेवं न्यवेदयत् ॥ १४ ॥

डिल्लीश्वराय सोऽप्येनमाकार्य नृपमादिशत् ।
शस्त्राशस्त्रिरणं कर्तुं सह तेनासिमप्यदात् ॥ १५ ॥

अथ स्वभुजशक्त्याऽसीन् दत्तान्नव दशापि च ।
क्रमात्कम्पेन संछिन्नान् दृष्ट्वा विस्मितमानसे ॥ १६ ॥

डिल्लीश्वरे निजं रामेश्वरलिङ्गप्रसादतः ।
संप्राप्तं लक्षणैर्युक्तं खड्गं हस्तेन सोऽग्रहीत् ॥ १७ ॥

ततो बहुप्रकाराणि मण्डलानि प्रदर्शयन् ।
असौ वीरः प्रवीराणां दर्शयन् हस्तलाघवम् ॥ १८ ॥

निखायोरस्याचकर्ष कृपाणं प्रतियोधिनः ।
कृपाणस्यातितैक्ष्ण्येन लाघवेन करस्य च ॥ १९ ॥

खण्डितोऽपि द्विधा तिष्ठन् यथापूर्वमदृश्यत ।
सुलक्षणत्वात्खड्गस्य तस्य तत्र श्रमादपि ॥ २० ॥

विजितस्तेन वीरेण प्रतियोधी दुरासदः ।

खड्गलक्षणानि

लक्षणानि पुनः कानि गुरो ! तानि निरूपय ॥ २१ ॥

यैर्लभ्यते रणाग्रेषु जयलक्ष्मीरनर्गला ।
नन्दनाकर्णय स्वैरं कथयामि तवेप्सितम् ॥ २२ ॥

प्रमाणदोषरेखाश्च जातिं देशांश्च देवताः ।
ज्ञात्वैव खड्गमादद्यादायुःसौभाग्यवृद्धये ॥ २३ ॥

पञ्चाशदङ्गुलं श्रेष्ठं चत्वारिंशच्च मध्यमम् ।
षट्त्रिंशद्भिः कनिष्ठं स्यात्वाङ्गुष्ठोदरनामकम् ॥ २४ ॥

खड्गदोषास्तत्फलं च

स्फुटितं पिटकं विद्धं भग्नरेखं [1]त्वचोत्थितम् ।
जलमार्गं जलद्रावि सिध्मलं वक्रधारकम् ॥ २५ ॥

इति दोषाः समाख्याताः फलं तेषां क्रमाद्ब्रुवे ।
स्फुटितेन भवेन्मृत्युः पिटको गोत्रघातकः ॥ २६ ॥

विद्धाद्दारिद्र्यमाप्नोति भग्नात्कीर्तिर्विनश्यति ।
जलमार्गाद्भवेद्भङ्गो जलद्रावी भयावहः ॥ २७ ॥

सिध्मले कुष्ठदारिद्र्यं वक्रधारो द्युतिं हरेत् ।

खड्गस्य शुभचिह्नानि तत्फलानि च

प्राकारशङ्खचक्राणि तोरणं चामरं ध्वजम् ॥ २८ ॥

---

[1] अस्य फलं नोक्तम् .

मत्स्यकूर्मादिमालाङ्कं शोभनं खड्गमीदृशम् ।
लिङ्गं सपीठं दृश्येत यस्मिन् खड्गे सुनिर्मले ॥ २९ ॥

तं खड्गं धारयेद्राजा आयुरारोग्यकारकम् ।
प्राकारो दृश्यते यत्र गरुडश्च सुनिर्मलः ॥ ३० ॥

तं खड्गं धारयेद्राजा विषवज्रभयापहम् ।
हंससारसमेरुण्डचक्रवाककपिञ्जलाः ॥ ३१ ॥

दृश्यन्ते यस्य खड्गे तु तस्य श्रीर्विजयोभवेत् ।

खड्गलोहभेदाः

एरण्डबीजसच्छायः पिशाचलिपिसन्निभः ॥ ३२ ॥

केतकीफलसङ्काशः [1] शम्भुप्राकार ईदृशः ।
तरुणीकेशसङ्काशं प्राकारैर्दृश्यसूक्ष्मकैः ॥ ३३ ॥

पञ्जरं नाम तल्लोहं जाङ्गले तु समुद्भवम् ।
लिङ्गं सपीठं दृश्येत प्राकारो दृश्यसूक्ष्मकः ॥ ३४ ॥

स्थूलदीर्घश्च मध्ये तु बहुवर्णतिलांशकैः ।
अनूपदेशजं लोहं सुकृष्णं कृष्णपञ्जरम् ॥ ३५ ॥

प्राकारैः कुण्डलाकारैर्यद्वा खण्डेन्दुसन्निभैः ।
हलकोदण्डसङ्काशैर्लोहं साधारणोद्भवम् ॥ ३६ ॥

प्राकारैर्वर्तुलैर्दीर्घैः प्रियङ्गुच्छाययान्वितैः ।
सुवर्णपञ्जरं नाम लोहं कालिङ्गसंभवम् ॥ ३७ ॥

भुजङ्गगतिसङ्काशैस्तैलबिन्दुसमन्वितैः ।
प्राकारैर्दृश्यते यत्तु लोहं काम्भोजकोद्भवम् ॥ ३८ ॥

प्राकारैर्नीलवर्णैश्च दीर्घसूक्ष्ममनोहरैः ।
नीरसारं तु तल्लोहं नीलपर्वतसन्निभम् ॥ ३९ ॥

तैलबिन्दुसमाकारैर्लतामण्डलसन्निभैः ।
[2] कृष्टसारं तु तल्लोहं गूर्जरेषु समुद्भवम् ॥ ४० ॥

---

[1] शुभं प्राकारः–क. शुभप्राकारः–मु. [2] कृष्णसारं–मु.

सुपाण्डुरैस्तु सुस्निग्धैः प्राकारैः सूक्ष्मदीर्घकैः ।
श्वेतसारं तु तल्लोहं महाराष्ट्रसमुद्भवम् ॥ ४१ ॥

प्राकारैर्वर्तुलैः सूक्ष्मैः पाण्डुच्छायैः सुनिर्मलैः ।
मेदिकं नाम तल्लोहं कर्नाटेषु समुद्भवम् ॥ ४२ ॥

शस्त्रमानलक्षणम्

अथातः संप्रवक्ष्यामि शस्त्राणां मानलक्षणम् ।
नरस्य मध्यमं पर्व मध्यमाङ्गुलिसंभवम् ॥ ४३ ॥

मानाङ्गुलमिदं श्रेष्ठं द्वितीयं पर्व मध्यमम् ।
तन्मानं द्विगुणीकृत्य अष्टभागाहृतौ पुनः ॥ ४४ ॥

अष्टावाया ध्वजाद्यास्तु क्रमशः संभवन्त्यपि ।

ध्वजाद्यायफलम्

ध्वजेऽर्थसिद्धिर्मरणं च धूमे
सिंहे जयः स्यात् शुनके च रोगः ।
वृषे च सौख्यं च खरे तु दुःखं
गजे सुखं निष्फलता च काके ॥ ४५ ॥

पूर्वगुण्यं चतुःषष्ट्या नामाक्षरसमन्वितम् ।
अष्टभिस्तु हरेद्भागं शिष्टं शस्त्राधिदैवतम् ॥ ४६ ॥

शस्त्राधिदेवताः

महालक्ष्मीप्रभृतयस्तत्र चाष्टाधिदैवताः ॥ ४७ ॥

महालक्ष्मीः सदा भाग्यं कीर्तिमृद्धिं महेश्वरी ।
वैष्णवी धनधान्याप्तिं पीडनं खड्गधारिणी ॥ ४८ ॥

अम्बिका राज्यसौभाग्यं वाराही शस्त्रपीडनम् ।
कलहं शूलिनी चैव मृत्युं दिशति चण्डिका ॥ ४९ ॥

आदिमारभ्य चाग्रान्तं सूत्रं निक्षिप्य मानतः ।
तत्सूत्रं द्विगुणीकृत्य प्रथमान्मध्यमावधि ॥ ५० ॥

पुनर्निक्षिप्य तस्यार्धं गृहीत्वाऽयुधविस्तृतैः।
मानेन मित्वा तत्सूत्रमादाय शकलानि च ॥ ५१ ॥

पूर्वादिक्रमतश्चैतान्यष्टदिक्षु च विन्यसेत्।
पुनरेवं विधाने तु शिष्टैर्दिक्पालजातयः ॥ ५२ ॥

दिक्पालजातिविवेकः

इन्द्रो वैश्यो मेषपालो वह्निः शूद्रोऽर्कनन्दनः।
अम्बष्ठो निर्ऋतिश्चैव वरुणो राजपुत्रकः ॥ ५३ ॥

वायुश्चण्डाल एव स्यात्कुबेरो ब्राह्मणस्तथा।
ईशानश्च मतङ्गः स्यादिति दिक्पालजातयः ॥ ५४ ॥

दिक्पालफलम्

वैश्ये धनं मेषपाले दरिद्रत्वं च शूद्रके।
सुखं बन्धनमम्बष्ठे चैश्वर्यं राजनन्दने ॥ ५५ ॥

चण्डाले स्त्रीविनाशश्च ब्राह्मणे जय एव च।
मतङ्गे कलहश्चैव क्रमादेषां फलं भवेत् ॥ ५६ ॥

खड्गे ताराबलज्ञानोपायः

असिमानं सप्तहतं त्रिघनेनावशेषितम्।
अश्विन्याद्यं तु नक्षत्रं जन्मभाच्च पुनः पुनः ॥ ५७ ॥

तारादीनां बलं पश्येदेतन्नक्षत्रयोगतः।
क्वणितं मरणायोक्तं पराजयाय प्रवर्तनं कोषात् ॥ ५८ ॥

स्वयमुद्धूर्णे युद्धे ज्वलिते विजयो भवेत् खड्गे।

खड्गे वर्ज्यानि कार्याणि

नाकारणं विवृणुयान्न विघट्टयेच्च
पश्येन्न तत्र वदनं न वदेच्च मूल्यम्।
देशं न चास्य कथयेत्प्रतिमानयेच्च
नैव स्पृशेन्नृपतिरप्रयतोऽसियष्टिम् ॥ ५९ ॥

सुष्टिच्छेदे म्रियेत्स्वामी अग्रे तस्यापि मातरः ॥ ६० ॥

तस्मान्न च्छेदयेत् खड्गमात्मनः शुभदं यतः ।
प्रमाणसंयुतं किंतु कुर्यान्निकषघर्षणैः ॥ ६१ ॥

खड्गस्य दार्ढ्यसम्पादनम्

क्षीरे कदल्या [1] भसितेन युक्ते
दिनोषितं पायितमायसं यत् ।
सम्यक् शितं चाश्मनि नैति भङ्गं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥ ६२ ॥

एवं प्रोक्तानि खड्गस्य स्वरूपाणि समासतः ।
ततश्च नृपतिः खड्गं सर्वलक्षणसंयुतम् ॥ ६३ ॥

हस्तेनादाय पुरतो विरोधिनमपातयत् ।
शौर्यमस्येदृशं दृष्ट्वा हृष्टो डिल्लीपुराधिपः ॥ ६४ ॥

[2] एतद्भृत्यान् प्रत्यपृच्छत्कुतुकी विस्मितान्तरः ।
अयं कः कुत्र वसति स्वामी युष्माकमित्यपि ॥ ६५ ॥

ततस्तं प्रति वृत्तान्तं स्वामिनस्तेऽप्यवादिषुः ।
सङ्कण्णनायको नाम पश्चिमस्यां नृपो दिशि ॥ ६६ ॥

तीर्थयात्राऽपदेशेन स्वयमासीदुपागतः ।
इत्याकर्ण्य वचस्तेषां तस्मै चात्यन्तविस्मितः ॥ ६७ ॥

दिल्लीश्वरेण सङ्कण्णनायकाय बिरुदादिदानम्

बिरुदं हरितच्छायपटाङ्कं केतनं ददौ ।
बहुद्रविणदं देशं स्वदेशाभ्यन्तरेऽप्यदात् ॥ ६८ ॥

वासांसि च विचित्राणि नूत्नान्याभरणानि च ।
वितीर्य तेन तं देशं काश्यामीश्वरतुष्टये ॥ ६९ ॥

---

[1] मथितेन -बृ. सं. मथितेन तक्रेण सहिते क्षारे इत्यर्थः. [2] इत आरभ्यैतत्तरङ्ग-समाप्तिपर्यन्तो ग्रन्थः क. पुस्तके नास्ति.

मठदेवालयारामधर्मार्थं [1]विन्ययुङ्क्त ।
ततः स्वदेशमागच्छन् देशात्तस्मात्क्रमेण सः ॥ ७० ॥

मासूरुदेशमासाद्य वटवल्लीति विश्रुते ।
ग्रामेऽवसन्निशि स्वप्ने कंचिद्योगिनमैक्षत ॥ ७१ ॥

वीरभद्रेण सङ्कण्णनायकस्य स्वप्ने स्वालयनिर्माणकथनम्

अब्रवीद्योगिनं तं च को भवानिति भूपतिः ।
स चाप्येनं प्रत्यवादीद्योगी सङ्कण्णनायकम् ॥ ७२ ॥

योगिरूपेण नृपते ! वीरभद्रोऽहमागतः ।
ग्रामात्पुरः स्थिते रम्ये तटाके [2]सुमहत्तरे ॥ ७३ ॥

अहं वसामि मां नीत्वा त्वद्देशाभ्यन्तरे नृप ! ।
स्थापयानेन ते भूयः श्रेयांसि स्युः पदे पदे ॥ ७४ ॥

एवं प्रसेदुषो वीरभद्रस्याकर्णयन् वचः ।
समुत्तस्थौ ततः प्राप्ते प्रभाते परिशोचयन् ॥ ७५ ॥

महातटाकं तस्यान्तर्वीरभद्रमथाग्रहीत् ।
तत उद्धृत्य कासाराद्वाहयन्नपि सेवकैः ॥ ७६ ॥

स्वं प्राप्य देशं केळदीरामेशागारसन्निधौ ।
निर्माप्य भवनं वीरभद्रमस्थापयत्ततः ॥ ७७ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले सङ्कण्णनायकयात्रावृत्तान्तखड्गलक्षणकथनं नाम नवमस्तरङ्गः

---

[1] विन्ययुङ्क्त तम्–मु.  [2] सुमनोहरे–मु.

## अथ दशमस्तरङ्गः

स्थापनं वीरभद्रस्य कृतमित्युपवर्णितम् ।
कस्मिन् काले तु तत्कार्यं देवतास्थापनं प्रभो! ॥ १ ॥

कथं वा कुत्र वा देवस्थापनं शास्त्रवर्णितम् ।
मह्यं निरूप्यतामेतन्मयि कारुण्यगौरवात् ॥ २ ॥

पुत्र! ते कथयाम्येतद्यच्छ्रोतुमभिकाङ्क्षसे ।
सर्वेषामपि लोकानां हिताय च शुभाय च ॥ ३ ॥

### वीरभद्रस्येतरदेवानां च प्रतिष्ठायोग्यदेशकालादिकथनम्

नक्रक्रियानिमिषगोमिथुनाधिरूढे
पद्माकरप्रणयिनि प्रबले शशाङ्के ।
शुक्रे नभस्यमरमन्त्रिणि दैत्यपूज्ये
स्फूर्जत्यभूदभिहिता त्रिदशप्रतिष्ठा ॥ ४ ॥

उत्तरायणगे सूर्ये प्रतिष्ठा शोभना भवेत् ।
पुष्ये धनविवृद्धिः स्यान्माघमासेऽतिसम्पदः ॥ ५ ॥

फाल्गुने द्रव्यलाभाय चैत्रे मासे शुभावहा ।
अतीव सौख्यं वैशाखे ज्येष्ठमासे शुभावहा ॥ ६ ॥

कुम्भे मासि न शस्तं स्यात्कुम्भं यदि न पश्यति ।
जीवः पश्यति चेच्छस्तं प्रतिष्ठायां रवौ घटे ॥ ७ ॥

आषाढे स्थापितो देवो यजमानविनाशकृत् ।
सौरमानेन विज्ञेयः श्रावणे राजराष्ट्रहा ॥ ८ ॥

[1]भाद्रपादे महानाशमाश्वयुज्यपि राजहा ।
कार्तिके शत्रुवृद्धिः स्यान्मार्गशीर्षे तथैव च ॥ ९ ॥

दिनेषु यस्य देवस्य या तिथिस्तस्य तत्र च ।
शुक्लपक्षे च पूर्वाह्णे कृष्णेऽप्यापञ्चमीदिनात् ॥ १० ॥

---

[1] प्रोष्ठपद्यां विपत्तिः स्यादाश्वयुग्राजहा भवेत्–मु.

चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ।
तिथयः शुभदाः प्रोक्ता गुरुशुक्रबुधेन्दवः ॥ ११ ॥

वाराः स्युः शुभदाश्चान्ये शुभयोगे शुभप्रदाः ।
अश्विनी रोहिणी हस्ता श्रवणं रेवती तथा ॥ १२ ॥

पुष्यः पुनर्वसुश्चापि धनिष्ठा चोत्तरा त्रयम् ।
ऋक्षाण्येतानि शस्तानि शुभयोगे पराण्यपि ॥ १३ ॥

बवादिवणिजान्तानि करणानि शुभानि षट् ।
लग्नग्रहबलं ज्ञेयं ज्योतिःशास्त्रात्तदर्थिभिः ॥ १४ ॥

प्रीतिः सौभाग्यमायुष्यं सुकर्मा शोभनं धृतिः ।
वृद्धिः सिद्धिर्ध्रुवो हर्षो वरीयान् सिद्धिरेव च ॥ १५ ॥

ब्राह्मैन्द्रे च शिवश्चेति योगाः शुभफलप्रदाः ।
शैववैष्णवशाक्तादिप्रतिष्ठासु विनायके ॥ १६ ॥

इन्द्रभैरवसौरादिवीरभद्रादिकेष्वपि ।
आरार्कसौरिराह्विन्दुष्वेको लग्नगतो यदि ॥ १७ ॥

ग्रामतत्पतिभूपांश्च यजमानं च नाशयेत् ।
पापा लग्नद्वितीयस्था धननाशकरास्तथा ॥ १८ ॥

तृतीये तु शुभाः सर्वे पापास्तत्र शुभाः परे ।
चतुर्थे तु शुभाः पुण्याः पापाः स्थानविनाशकाः ॥ १९ ॥

पञ्चमे तु शनिर्लग्नात्सुतनाशकरस्तथा ।
पत्नीनाशकरौ कर्तुः षष्ठे चन्द्रबृहस्पती ॥ २० ॥

भार्गवे कुलनाशः स्यात्सप्तमस्थानसंस्थिते ।
वापीकूपतटाकादिदेवग्रामप्रतिष्ठयोः ॥ २१ ॥

अष्टमस्था ग्रहा नेष्टाः शुभाश्चैवाशुभास्तथा ।
नवमे भूमिजो हन्ति पशूंश्चैव चतुष्पदान् ॥ २२ ॥

दशमे त्वशुभाः सर्वे विशेषेण रविं त्यजेत् ।
अशुभाश्च शुभाश्चैव लाभस्थाने शुभप्रदाः ॥ २३ ॥

द्वादशस्था ग्रहा नेष्टाः शुभाश्चैवाशुभास्तथा ।
[1]न ग्रहो न च नक्षत्रं न तिथिर्न च चन्द्रमाः ॥ २४ ॥

सर्वमेव शुभं कार्यं केन्द्रस्थाने बृहस्पतौ ।
दिवा सूर्ये निशा चन्द्रे लग्नस्यैकादशस्थिते ॥ २५ ॥

कोटिदोषा विनश्यन्ति गार्ग्यस्य वचनं यथा ।
गुरुः सितो वा केन्द्रस्थः प्रबलः सर्वदोषहा ॥ २६ ॥

ग्रामस्य पश्चिमे भागे विष्णुं संस्थापयेत्तथा ।
ग्रामस्योत्तरपूर्वार्धे शिवं पूर्वमुखं न्यसेत् ॥ २७ ॥

आचार्यः शिवमन्दिरं सुकुसुमैः संप्रार्थितः कारयेत्
कर्ता शिल्पिभिरादरेण विधिवच्छास्त्रोक्तमार्गान्वितम् ।
पूर्वं तत्र परीक्ष्य भूमिमसकृत्कृष्णां ततः शोधयेत्
संक्षेपेण वदामि लक्षणमिदं भूमेश्च शास्त्रोदितम् ॥ २८ ॥

देवप्रतिष्ठायोग्यभूमिलक्षणम्

स्निग्धा रन्ध्रैर्विहीना बहुफलकुसुमा भूरिपांसुप्रयुक्ता
न्यायेनैवार्जिता या समतलसहिता क्षीरवृक्षैरुपेता ।
गावो यस्यां रमन्ते रमयति मधुदानादलीन् सर्वतो या
भूमिः सा सुप्रशस्ता शिवनिलयविधौ क्षिप्रबीजप्ररोहा ॥२९॥

शूलाकारा भुजगकुटिला मत्स्य[2]पृष्ठा षडश्रा
शूर्पाकारा पशुमुखनिभा नाग[3]पृष्ठत्रिकोणा ।
मध्ये निम्ना यमपिशितभुग्वह्निदिक्षु स्वभावा-
न्निम्ना भूमिः शिवगृहविधौ निन्दिता शर्कराढ्या ॥ ३० ॥

वामावर्तजलास्थिभस्मसहिता वल्मीकजालान्विता
दुर्गन्धा कटुकण्टकद्रुमवृता संक्लेदिनी कर्दमा ।
शुष्का सूकरगृध्रपिङ्गलयुता वातातपैः सङ्गता
भूमिः शुक्लजला शिवालयविधौ कीटाकुला निन्दिता ॥३१॥

---

[1] न गृहः इति युक्तः, लग्नमित्यर्थः. [2] पुष्टा–मु. [3] पुष्ट–मु.

श्वेताज्यगन्धा मधुरा कषाया
रक्तास्रगन्धौदनमूत्रगन्धा ।
पीता च तिक्ता कटुका च कृष्णा
मद्याम्बुगन्धेति मही चतुर्था ॥ ३२ ॥

आसिच्य गव्यं घृतमामपात्रे
वर्तीश्चतस्रो विनिधाय दिक्षु ।
संकल्प्य विप्रप्रमुखांश्च वर्णान्
प्रज्वाल्य वर्तीः सहिताश्चतस्रः ॥ ३३ ॥

वर्तिश्च यस्यां दिशि संप्रदीप्ता
सा तस्य वर्णस्य मही प्रशस्ता ।
सर्वाश्च ताः प्रज्वलिता यदि स्युः
संकीर्णका नाम मही प्रशस्ता ॥ ३४ ॥

सर्वेषु वर्णेषु शुभप्रदा सा
निर्वापिता स्युर्यदि चाप्रशस्ता ।
वर्ज्या मही सा तु समस्तवर्णैः
क्लेशं च कर्तुर्विदधाति नित्यम् ॥ ३५ ॥

एवं परीक्ष्य बहुधा सकलैर्विहीनां
दोषैर्गुणैरुपचितां वसुधामवेक्ष्य ।
देवालयं विरचयेद्विधिवन्मनीषी

लिङ्गार्थशिलालक्षणम्

लिङ्गार्थमत्र कथयामि शिलास्वरूपम् ॥ ३६ ॥

आचार्योऽसौ शुक्लपक्षे मुहूर्ते
शुद्धे विप्रान् भोजयित्वा यतात्मा ।
शस्त्राण्यादौ पूजयित्वाऽथ गच्छेत्
लिङ्गस्यार्थे सच्छिलां सङ्ग्रहीतुम् ॥ ३७ ॥

ततश्च पूर्वाभिमुखः शकुनानि विलोकयन् ।
उच्चारयेदिमं मन्त्रं शिलान्वेषणतत्परः ॥ ३८ ॥

त्रिनेत्राय च रुद्राय भूतानां पतये नमः ।
शिलां दर्शय देवेश! प्रसन्नो वृषभध्वज ॥ ३९ ॥

शिलाग्रहणार्हपर्वताः

येष्वद्रिषु शिला ग्राह्या तानद्रीन्द्रान्वदाम्यहम् ।

कैलासाचलगन्धमादनगिरी श्रीशैलनीलाचलौ
शेषोर्वीधरनामधेय[1]विषयौ गौरीकुमाराचलौ ।
विख्यातो भुवि हेमकूट इति यो मेरुस्त्रिकूटाचलो
दुष्प्रापाः सकलैश्च जन्तुभिरिमे वक्ष्ये ततोऽन्यान् गिरीन् ॥

सह्यश्च विन्ध्यो मलयः कुमारो वेदाचलः प्रोन्नतपारियात्रः ।
भूयो महेन्द्रो यदि दुर्लभाश्चेत्तत्रापि [2]भूमौ च शिला प्रशस्ता ॥

नद्यास्तीरे शिला मुख्या यदि ग्राह्या महीतले ।
यासां च सरितां तीरे नदीस्ताः प्रवदाम्यहम् ॥ ४२ ॥

लिङ्गार्हशिलागर्भतीरयुतनदीनामानि

कावेरी सरयूश्च जह्नुतनया गोदावरी नर्मदा
सिन्धुः शोणसरस्वती [3]सुयमुना या तुङ्गभद्रा नदी ।
विख्याता भुवि गोमतीति विदिता या चन्द्रभागाह्वया
याश्च स्युः सरितः [4]पयोष्ण्यपि भुवि ख्याताश्च ताः कीर्तिताः॥

आसां च तीरे यदि दुर्लभाः स्युरुद्यानतीर्थोपवनेषु शस्ताः ।
पुण्येषु तत्रापि शिला न चेत्स्यादन्येषु देशेषु मनोरमेषु ॥४४॥

भूमेश्चातुर्विध्यं तल्लक्षणं च

भूमिश्चतुर्विधा ज्ञेया माहेन्द्री वारुणी तथा ।
आग्नेयी वायवी चैव तासां वक्ष्यामि लक्षणम् ॥ ४५ ॥

---

[1] निषधौ—क. मु. [2] भूमिस्थशि—मु. [3] च यमुना तुङ्गा च भद्रा नदी—मु.
[4] 'पयोष्ण्य इति च ख्याताः' इति भावितव्यम्.

तोयं यस्याश्चोत्तरे संस्थितं स्या-
द्व्रीहिक्षेत्रं दक्षिणाशाश्रितं च ।
वारुण्याशासंस्थिताः क्षीरवृक्षाः
माहेन्द्री सा भूमिरस्यां शिला च ॥ ४६ ॥

तोयावृता कोमलशालिसंयुता
पुष्पद्रुमैश्चापि समन्ततो वृता ।
या स्यात्तृणाढ्या पशुभिश्च सेविता
सा वारुणी भूमिरतीव शोभना ॥ ४७ ॥

श्येनाश्च गृध्राः परितो वराहाः यस्यां च भूमौ सततं भ्रमन्ति ।
अन्तर्गतं तोयमतीव मन्दं सेयं मही वह्निगुणोपपन्ना ॥ ४८ ॥

श्लेष्मातकैः पीलुविभीतकैश्च
या वा प्रपूर्णा मृगतृष्णिकाढ्या ।
गोमायुवृन्दैश्च निषेविता स्या-
त्सा वायवी नष्टजला धरित्री ॥ ४९ ॥

आग्नेयीं वायवीं हित्वा शिले चान्ये शुभे मते ।

वल्मीकचैत्य[1]शबलोषितचत्वरस्था
क्षाराम्बुसिक्तशिबिसूर्यहता [2] क्षितिस्था ।
[3] रेखान्विता [4] विनिहिता च विवर्णरूपा
निन्द्या शिलात्र बहुवर्णसमन्विता च ॥ ५० ॥

शिलाभेदास्तत्स्वरूपं च

बालां च वृद्धां परिनिन्दिताङ्गीं
चण्डालजातिं परिवर्जयेच्च ।
शस्त्रासहा कर्दमपिच्छिला च
मृद्वी च बाला तरुपल्लवाभा ॥ ५१ ॥

---

[1] शवरोपितचत्वरस्था—शिल्प. [2] विदिक्स्था—शिल्प. [3] रेखान्विताग्न्यविनियुक्तविवर्णरूक्षा—शिल्प. [4] विधिहता—मु.

भुजङ्गनिर्मोकनिभाऽतिरूक्षा
वृद्धा शिला या जरसा स्थिता स्यात् ।
नानावर्ण[1]स्थूलरेखातिरूक्षा
धूम्रच्छाया नीलवर्णा शिला च ॥ ५२ ॥

चण्डाली सा सर्वतो वर्जनीया
शस्तां भूयः कीर्तयिष्ये शिलां तु ।

प्रशस्तशिलाः

पुण्योद्यानक्षेत्रतीर्थह्रदस्था
वृक्षच्छायाशीतला श्लिष्टकाया ॥ ५३ ॥

स्निग्धा घण्टानिस्वनाप्याज्यगन्धा
विस्तीर्णा सा लिङ्गकार्ये प्रशस्ता ।

शिलासु ब्राह्मणादिजातिभेदः

श्वेता पङ्कजसन्निभा द्विजशिला तस्याः शशी देवता
राजा रक्तनिभा कुलुत्थसदृशी शक्रः पुनर्देवता ।
पीता वैश्यशिला तथैव हरिता तस्या भगो देवता
कृष्णा शूद्रशिला च मुद्गसदृशी तत्राश्विनौ देवते ॥ ५४ ॥

एवं परीक्ष्य च शिलां समवेक्ष्य शस्तां
प्रक्षाल्य वारिभिरथ प्रविलिप्य गन्धैः ।
तस्यां च सम्यगभिपूज्य शिवं सबीज-
मुख्यं च तीक्ष्णविशदक्षुरिकासमेतम् ॥ ५५ ॥

मृत्युंजयेन सहितं च शिवाङ्गपञ्च-
युक्तं च दिक्पतिवृतं सह शस्त्रवृन्दैः ।

(शैव) प्रतिमानिर्माणक्रमः

तस्यां तथा ककुभि वारिपतेः शिलायां
होतव्यमाज्यमथ पाशुपतेन वह्नौ ॥ ५६ ॥

---

[1] स्थूलरोमातिरक्ता—क.

अष्टोत्तरं शतमनेन शिला समस्तै-
दोंषैर्विमुक्तमहिता भवति क्रियार्हा ।
तीक्ष्णं च शस्त्रमभिपूज्य निधाय पार्श्वे
शस्त्रेण दिक्षु विकिरेच्च बलिं गणेभ्यः ॥ ५७ ॥

दर्भशय्यासमारूढः शिलायाः पश्चिमे गुरुः ।
स्वप्नमाणवकं जप्त्वा स्वपेदेकाग्रमानसः ॥ ५८ ॥

नमः शंभो ! त्रिणेत्राय रुद्राय वरदाय च ।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ५९ ॥

आचक्ष्व देवदेवेश ! प्रपन्नोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्याणि हृदयस्थानि यानि वै ॥ ६० ॥

पश्येच्च देवतारूढामुज्वलन्तीं शिलां यदि ।
[1] अन्यद्वा शोभनं शस्ता सा शिला [2] लिङ्गकर्मणि ॥ ६१ ॥

दृष्ट्वा शुभं स्वप्नमथ प्रभाते
स्नात्वा समभ्यर्च्य महेश्वरं च ।
चिह्नं शिलायाः परिकल्पयेत
वक्त्रं च पृष्ठं च शिरश्च मूलम् ॥ ६२ ॥

उद्धृत्य संस्थिता तत्र यां दिशं वीक्षते शिला ।
तामेव प्रतिमां गेहे पश्यन्तीं स्थापयेद्दिशम् ॥ ६३ ॥

ध्वनिर्घण्टानिभा यत्र स्फुलिङ्गाश्छेदने तथा ।
दृश्यन्ते तच्छिरस्तस्यास्तत्र चिह्नं प्रकल्पयेत् ॥ ६४ ॥

एवं कृत्वा समारोप्य रथे नीत्वा शिवालयम् ।
कौबेर्यां दिशि संस्थाप्य लिङ्गं सम्यक्प्रकल्पयेत् ॥ ६५ ॥

पुंसा लिङ्गमथ प्रकल्प्य विधिवत्पीठं स्त्रिया कल्पयेद्
भूयः पादशिलां नपुंसकशिलाक्लृप्तां क्रमात्कल्पयेत् ।

---

[1] एवमेव पाठो दृश्यते. [2] लिङ्गनिर्मितौ–मु.

शिलासु स्त्रीपुंनपुंसकादिभेदाः

गम्भीरध्वनिनान्विता च सुदृढा गुर्वी च लोहोपमा
पृथ्वी पिप्पलपत्रसन्निभतला शिष्टा शिला सा पुमान् ॥ ६६ ॥

रम्भादलेन सदृशी मृदुनिस्वना स्त्री
नष्टस्वना च शिथिला द्विगुणप्रयुक्ता ।
प्रोक्ता नपुंसकशिला परिकल्पयेच्च
गर्भं शिलागमगतं प्रवदामि तं च ॥ ६७ ॥

शिलागर्भचिह्नानि

छेदने दृश्यते यत्र मण्डलं तत्र निर्दिशेत् ।
गर्भं च यादृशो यः स्यान्मण्डलं तं वदाम्यहम् ॥ ६८ ॥

मञ्जिष्ठाभे दर्दुरः पीतवर्णे
गोधा कृष्णे मण्डले साङ्गजङ्गः ।
निस्त्रिंशाभे स्वच्छवर्णे च तोयं
खद्योतं स्यान्माक्षिकाभे प्रदिष्टः ॥ ६९ ॥

कपोतवर्णे गृहगोधिका स्या-
दाखुश्च गर्भे कपिले प्रदिष्टः ।
रक्ते प्रदिष्टः कृकलासगर्भः
पाषाणगर्भो गुडसन्निभे च ॥ ७० ॥

गर्भे कुलीरो हरितालवर्णे
स्याच्चम्पकाभे शबले क्रिमिश्च ।
गर्भे च रूक्षे सिकता प्रदिष्टा
वर्णे विचित्रे सति वृश्चिकश्च ॥ ७१ ॥

रक्ते विचित्रे [1] शफरश्च गर्भः
पीते विचित्रे पतगः प्रदिष्टः ।
गर्भः कुसुम्भप्रतिमे षडङ्घ्रिः
भस्मोपमाने सुषिरं भवेच्च ॥ ७२ ॥

---

[1] शफरः स गर्भः—क.

स्यान्मण्डले किंशुकपुष्पवर्णे
वृत्रारिगोपश्च पिपीलिका वा ।
तत्रातसीपुष्पसमानवर्णे
नीले च वर्णे सति मक्षिकाः स्युः ॥ ७३ ॥

एवंविधैः ख्यापितलक्षणैश्च
गर्भे शिलायां विधिवत्परीक्ष्य ।
बाह्येऽत्र दृष्टे सति लक्षणेऽस्मिन्
लेपं विदध्यात्प्रवदामि तं च ॥ ७४ ॥

शिलागर्भलेपः

ब्रह्माणीं चक्रपाणिं कुसुमशररिपुं वैष्णवं पेषयित्वा
क्षीरेणाज्येन सम्यक्समघृतमधुना लेपयेत्तां शिलां च ।
लिप्ता क्लिन्ना समन्ताद्भवति यदि शिला प्रोषिता चैकरात्रं
जानीयात्तत्र गर्भे फणिपतिमथ वा वृश्चिकं वाथ गोधाम् ॥

कासीसचोरौ च गवां पयोभिः
पिष्ट्वा शिलां तां परिलिप्य सम्यक् ।
सा चेत्त्रिरात्रेण शिलारुणा स्यात्
कूर्मोऽथ वा तत्र तु दर्दुरः स्यात् ॥ ७६ ॥

विप्रं च धात्रीमपि शूलिनं च
मेषीपयोभिः प्रविलेपयेच्च ।
पिष्टा शिला सा यदि नैकवर्णा
स्यातां च तस्यां कृकलासमीनौ ॥ ७७ ॥

[1] मांसोशीरहयारिवारिजदलैः सार्धं पलानां त्रयं
पिष्ट्वा वामविलोचनास्तनभुवा क्षीरेण संलेपयेत् ।
लिप्ता सा च शिला यदि त्रिदिवसैर्वर्णान्तरत्वं व्रजे-
त्तत्र स्याद्विषमाशुनाशजनकं हस्तेन तां न स्पृशेत् ॥ ७८ ॥

---

[1] मांसीरोगहयारिवारिदजलैः—शिल्परत्ने, मांस्योशीर—क. मु.

शिलागर्भफलानि

तोये भीतिं दर्दुरः संविधत्ते
गोधा राज्ञां नाशनं गोक्षयं च ।
कर्तुर्वंशं नाशयेन्नागगर्भो
मारीं तस्मिन् संविधत्ते स देशे ॥ ७९ ॥

कर्तुर्मृतिं गर्भविनाशनं च
स्त्रीणां विधत्ते सलिलाख्यगर्भः ।
खद्योतगर्भस्तु भयं च वह्नेः
दौर्विध्यमुग्रं गृहगोधिका च ॥ ८० ॥

आखुर्भयं तस्करजं विधत्ते
दुर्भिक्षमुग्रं कृकलासगर्भः ।
नाशं च वृष्टेरुपलाख्यगर्भः
सस्यप्रणाशं च कुलीरगर्भः ॥ ८१ ॥

कुष्ठं विधत्ते कृमयश्च कर्तु-
श्चौर्यं च [1] कर्तुः सिकताः समन्तात् ।
शूलं विदध्यादथ वृश्चिकश्च
द्रव्यस्य नाशं शफरो विधत्ते ॥ ८२ ॥

[2] स्थाने च तस्मिन् कुरुते पतङ्गो
व्याधिं षडङ्घ्रिस्तु बहूंश्च रोगान् ।
तद्वच्च कुर्यात्सुषिरं च रोगा-
न्नाशं धनानामथ शक्रगोपः ॥ ८३ ॥

चिन्तां विधत्ते च पिपीलिका तु
कर्तुः प्रवासं त्वथ मक्षिका च ।
कूर्मोऽथ रोगाद्भयमत्युदग्रं
वृष्टेर्विनाशं कुरुते विषं च ॥ ८४ ॥

अन्ये तु गर्भा बहवः प्रदिष्टाः
दोषावहा लिङ्गविधौ शिलायाम्

---

[1] कुर्युः—क. [2] स्थानस्य नाशं—क.

शिलायां रेखाभेदाः

रेखाः प्रवक्ष्यामि शुभावहाश्च
दोषावहाश्चाकृतिवर्णभिन्नाः ॥ ८५ ॥

रेखा यस्यामुत्तमा स्याच्छिलायां
हीनायां सा संप्रशस्ता शिला च ।
रेखा यस्यामुत्तमायां शिलायां
हीना चेत्स्याद्वर्जनीया शिला सा ॥ ८६ ॥

विप्रादीनां वर्णभेदात्तु रेखा
श्वेता रक्ता [1]पीतकृष्णा प्रदिष्टा ।
रेखा यस्यां देवराजायुधाभा
ग्राह्या सा स्यात्सर्ववर्णैः शिला च ॥ ८७ ॥

यस्यां च रेखास्तु समानवर्णाः
कर्तुर्भवेदन्वयवर्धनी सा ।
रेखा च यस्यां बहुवर्णभिन्ना
वर्ज्या शिला सा नृपतिं निहन्ति ॥ ८८ ॥

विच्छिन्नाभिर्वर्जनीया शिला सा
रेखाभिर्वा संश्रिता सर्ववर्णैः ।
वक्राः स्थूलाश्चातिरूक्षाः कृशाश्च
रेखा यस्यां वर्जनीया शिला सा ॥ ८९ ॥

नन्द्यावर्तवसुन्धराघननिभाः श्रीवत्सकूर्मोपमाः
शङ्खस्वस्तिकपद्मगोवृषनिभाश्चक्रेन्दुसूर्योपमाः ।
छत्रस्रग्ध्वजलिङ्गतोरणमृगप्रासादशूलोपमा
वज्राभाः शफरोपमाश्च शुभदाः रेखाः कपर्दोपमाः ॥ ९० ॥

वह्नेश्च बीजं पवनस्य बीजं
[2]भूयात्स्वराण्यत्र न पुंसकानि ।
हित्वा प्रशस्ताः शुभदाः समस्ता
रेखाश्च वर्णाकृतिभिन्नरूपाः ॥ ९१ ॥

---

[1] पीतवर्णा–शिल्परत्ने. [2] भूयः स्वराण्यत्र–क.

काकश्येनवृकोष्ट्रवानरनिभा मार्जारगृध्रोपमाः
सर्पोलूकसृगालकीटसदृशाः श्वानोपमावर्जिताः ।
रेखास्तिर्यगवस्थिताश्च सकलाः श्येनाश्च दोषावहाः
संत्यज्य प्रतिगृह्य शोभनशिला लिङ्गं पुनः कल्पयेत् ॥ ९२ ॥

देवतायाः स्थाननिर्णयः

स्थानं यद्देवतायाश्च यस्याः शास्त्रे विधीयते ।
सम्यग्विभज्य तत्स्थानं संक्षेपेण वदाम्यहम् ॥ ९३ ॥

मध्ये ब्रह्मगृहं पुरादिषु भवेद्द्वारे च लक्ष्मीगृहं
तस्मिन्वैश्रवणे च भास्करगृहं पूर्वे च कृष्णालयम् ।
वह्नौ वह्निगृहं च मातृभवनं याम्ये यमस्यालयं
नैर्ऋत्ये पितृशास्तृधाम विहितं तत्रैव कालीगृहम् ॥ ९४ ॥

पाश्चात्यं वरुणालयं निजदिशि ख्यातं च वायोर्गृहं
तस्मिन् विन्ध्यनिवासिनीनिलयनं शस्तं पुनश्चोत्तरे ।
दैत्यानामपि षण्मुखस्य भवनं तस्मिन् पिशाचालयं
सोमस्यापि गृहं शिवालयमभूदीशानदिक्संस्थितम् ॥ ९५ ॥

देवालयप्रासादभेदाः

प्रासादभेदाः प्रमथेश्वरस्य
मेरोः स्थिता मूर्धनि पञ्च भिन्नाः ।
वैराजनामा चतुरश्रसंस्थः
स्यात्पुष्पकाख्यः चतुरश्रदीर्घः ॥ ९६ ॥

कैलासकश्च समवृत्तविनिर्मिताङ्गो
वृत्तायतश्च मणिको नयनाभिरामः ।
अन्यस्त्रिविष्टप इति प्रथितोष्टकोणो
भिन्नाः पुनः पृथगिमे नवधा प्रदिष्टाः ॥ ९७ ॥

चत्वारिंशत्पञ्चयुक्ताः प्रभेदाः
प्रासादानां कीर्तिताः स्युः क्रमेण ।
नामान्येषां शैवतन्त्रोदितानि
व्याख्यास्येहं संविभज्य क्रमेण ॥ ९८ ॥

प्रासादनामानि

मेरुर्वै मन्दरश्चापि विमानो भद्र एव च ।
सर्वतोभद्ररुचकौ नन्दनो नन्दिवर्धनः ॥ ९९ ॥

श्रीवत्सश्चेति वैराजो वलभीगृहराजकः ।
शालागृहो मन्दिरश्च विमानो ब्रह्ममन्दिरौ ॥ १०० ॥

[1] भूवनप्रभवौ चापि शिविकश्चेति [2] पौष्टिकाः ।
वलयो दुन्दुभिः पद्मो महाब्जमुकुलस्ततः ॥ १०१ ॥

उष्णीषः शङ्खकलशौ श्रीवृक्षश्चेति वृत्तजाः ।
गजश्च वृषभो हंसो गरुडाक्षौ च भूषणः ॥ १०२ ॥

भूधरः श्रीधरश्चापि नवमः पृथिवीजयः ।
वज्रचक्रस्वस्तिकश्च वज्रस्वस्तिक एव च ॥ १०३ ॥

चक्रस्वस्तिकखड्गौ च गदः श्रीकण्ठ एव च ।
विजयश्चेति संप्रोक्तास्त्रिविष्टपसमुद्भवाः ॥ १०४ ॥

षट्त्रिंशद्धस्तमारभ्य चतुश्चतुरुपायतः ।
चतुष्करान्ताः प्रासादा नवैकैकसमुद्भवाः ॥ १०५ ॥

एतेषामायता ये तु तत्पादेन च संयुताः ।
नवाद्येककरान्तानि लिङ्गान्येषां क्रमाद्विदुः ॥ १०६ ॥

अल्पोत्साहा वित्तहीना मनुष्याः
कर्तुं नैतान्यत्र लोके समर्थाः ।
तस्मादेषां वर्तनां नात्र वक्ष्ये
प्रासादानां ग्रन्थबाहुल्यभीरुः ॥ १०७ ॥

सिद्धक्षेत्रादिषु विद्यमानस्य अनर्चितस्याप्रतिष्ठितस्य वा लिङ्गस्य पुनः स्थापनं तत्र नियमाश्च

सिद्धक्षेत्रे महानद्यां पर्वते वनगह्वरे ।
प्रतिष्ठितं चिरानर्चमप्रतिष्ठितमेव वा ॥ १०८ ॥

---

[1] भुवन—क. [2] पौष्पिका;—क,

आनयेत् स्थापनार्थाय लिङ्गं श्लक्ष्णं च वर्तुलम् ।
स्थापयेत्तत्र चागारे प्रासादाद्यं न शोधयेत् ॥ १०९ ॥

नवीकरणपक्षे तु प्रासादाद्यं विचारयेत् ।
कर्तुश्चन्द्रानुकूलेऽह्नि गुरुशुक्रास्तवर्जिते ॥ ११० ॥

वास्तुं संपूज्य विधिवत्कृत्वा होमं बलिं हरेत् ।
जलान्तं वा शिलान्तं वा खात्वा भूमिं विशोधयेत् ॥ १११ ॥

आधारे शक्तिपीठं च [1] न्यस्य होमं समाचरेत् ।
संस्थाप्य कूर्मपीठं च प्रार्थयेदिति मन्त्रतः ॥ ११२ ॥

नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे ।
करिष्यमाणप्रासादनिमित्तं स्थातुमर्हसि ॥ ११३ ॥

अनन्ताकारपीठं च दिग्गजान् दिक्षु विन्यसेत् ।
पद्माकारं न्यसेत्पीठं पञ्चधा परिकीर्तितम् ॥ ११४ ॥

पातालादिकमारभ्य न्यसेत्सप्त शिलास्ततः ।
पद्मयोरन्तरे चैव ब्रह्मनालं प्रकल्पयेत् ॥ ११५ ॥

स्वर्णेन रजतेनापि नालं ताम्रेण वा भवेत् ।
नालोर्ध्वे पद्मपीठं च ततः पीठत्रयात्मकम् ॥ ११६ ॥

### लिङ्गोन्मानादि

नवाष्टसप्तहस्तोच्चलिङ्गं स्यादुत्तमं त्रिधा ।
षट्पञ्चवेदहस्तोच्चलिङ्गं तन्मध्यमं त्रिधा ॥ ११७ ॥

त्रिद्व्येकहस्तमानं च लिङ्गं स्यादधमं त्रिधा ।
एवं नवविधं लिङ्गमुत्तमादि विभेदतः ॥ ११८ ॥

ब्रह्मविष्णुकपर्दीशैश्चतुरश्राष्टवर्तुलैः ।
पीठत्रयं कारयित्वा पञ्चसूत्रसमन्वितम् ॥ ११९ ॥

लिङ्गं पीठं तथा नालं लिङ्गाग्रात्पादमेव च ।
लिङ्गाग्रमुखपर्यन्तं पञ्चसूत्रमुदाहृतम् ॥ १२० ॥

लिङ्गलक्षणमित्युक्तं गर्भलक्षणमुच्यते ।

---

[1] न्यासहोमं—क.

गर्भगृहलक्षणम्

पीठान्नवगुणं प्रोक्तमुत्तमं गर्भलक्षणम् ॥ १२१ ॥

पीठस्य पञ्चगुणितं मध्यमं गर्भलक्षणम् ।
पीठस्य त्रिगुणं गर्भमधमं परिकीर्तितम् ॥ १२२ ॥

एवं च त्रिविधं गर्भं गर्भार्धं च तदन्तरम् ।

रङ्गमण्टपम्

द्वारद्वयसमायुक्तं तत्प्रमाणं च मण्टपम् ॥ १२३ ॥

चतुर्द्वारसमायुक्तं षोडशस्तम्भसंयुतम् ।
दर्पणोदरसंकाशं नानामूर्तिसमन्वितम् ॥ १२४ ॥

रङ्गमण्टपमित्युक्तं गर्भार्धं वाहनालयम् ।

वाहनालयः

द्वादशस्तम्भसंयुक्तं चतुस्तम्भमथापि वा ॥ १२५ ॥

चतुर्दिक्षु चतुर्द्वारं पञ्चान्तरसमन्वितम् ।
तदूर्ध्वे गोपुराकारं तदग्रे कलशं न्यसेत् ॥ १२६ ॥

स्थापयेच्च महानन्दि फालनेत्रसमन्वितम् ।

प्राकारादिकम्

गर्भस्य त्रिगुणं कुर्यात्प्राकारं परितस्ततः ॥ १२७ ॥

प्राकाराग्रे न्यसेद्द्वारं गेहद्वारादिकं पुनः ।
गर्भस्य पञ्चगुणितं बहिः प्राकारविस्तरम् ॥ १२८ ॥

पुरद्वाराधिकं कुर्याद्बहिर्द्वारं विचक्षणः ।
गेहार्धशिखरं वत्स ! तदग्रे कलशं न्यसेत् ॥ १२९ ॥

तन्मितं सार्धहस्तं स्यात्स्वर्णरौप्यादिभेदतः ।
पूर्वे तु वृषभः प्रोक्त आग्नेय्यां षण्मुखस्तथा ॥ १३० ॥

दक्षिणे गणनाथः स्याद्वीरभद्रस्तु नैर्ऋते ।
पश्चिमे विष्णुमूर्तिश्च वायुपुत्रश्च वायवे? ॥ १३१ ॥

उत्तरे पार्वती स्थाप्या ईशान्यां भैरवस्तथा ।
एवं शिवालयः प्रोक्तो मूर्तिगेहमथोच्यते ॥ १३२ ॥

मूर्तिगृहनिर्माणम्

मूर्त्यर्धविस्तरं पीठं पीठार्धं नालमुच्यते ।
नालमानं मूर्तिकीलं नालार्धं कीलविस्तरः ॥ १३३ ॥

पीठस्य त्रिगुणं गर्भं गर्भार्धं च तदन्तरम् ।
द्वारद्वयसमायुक्तं तत्समं तु जयालयम् ॥ १३४ ॥

द्वारमेकं तु तस्योक्तं गेहार्धं वाहनालयम् ।
एवं निर्माप्य भवनं यथाशास्त्रं च शिल्पिना ॥ १३५ ॥

शिल्पिहस्ताद्गृहयाचनम्

संतोष्य शिल्पिनं गेहं तस्य हस्तात्प्रभूत्तमः ।
प्रार्थ्य संगृह्य विधिवच्छोदयेत्तं विचक्षणः ॥ १३६ ॥

शिलाभिर्निर्मितं गेहं दृढं सौम्य! त्वया कृतम् ।
देहि मे शिल्पिराजेन्द्र! स्थापनार्थं शिवस्य मे ॥ १३७ ॥

त्वया सम्पादितं पुण्यं दशांशं देहि मे विभो! ।
तद्गृहीत्वा मुदा गेहं प्रदास्यामि नरोत्तम! ॥ १३८ ॥

शंभोः संस्थापनात्पुण्यं न दास्यामि कदाचन ।
त्वयेप्सितं धनं रत्नं गृहणालयकारक! ॥ १३९ ॥

शिल्पिना गृहदानम्

मया कृतमिदं गेहं दृढं सौम्य! शिलामयम् ।
गृहाणाहं प्रदास्यामि प्रतिष्ठायै शिवस्य च ॥ १४० ॥

इत्युक्त्वा कारुको भक्त्या दद्याद्गेहं प्रहर्षितः ।
गेहं लब्ध्वा ततो लिङ्गं तत्र संस्थापयेच्छुभम् ॥ १४१ ॥

प्राणप्रतिष्ठां मन्त्रेण तत्र कुर्वीत मन्त्रवित् ।

प्राणप्रतिष्ठा

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य, ब्रह्मविष्णुरुद्रा ऋषयः। ऋग्यजुस्सामाथर्वाणि छन्दांसि। अशेषचैतन्यात्मकप्राणशक्तिर्देवता। आं बीजम्। ह्रीं शक्तिः। क्रों कीलकम्। प्राणप्रतिष्ठासिध्यर्थे विनियोगः। आं ह्रीं क्रों अं कं खं गं घं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः। आं ह्रीं क्रों इं चं छं जं झं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः। आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्रणात्मने ऊं मध्यमाभ्यां नमः। ॐ आं ह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः। ॐ आं ह्रीं क्रों ॐ पं फं बं भं मं प्राणापानव्यानोदानसमानात्मने औं कनिष्ठिकाभ्यां नमः। ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्धिचित्ताहंकारविज्ञानानन्दात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिषडङ्गन्यासं कृत्वा ध्यायेत्।

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान्।
बिभ्राणासृक्कपालं त्रिणयनसहिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥१४२॥

इति ध्यानम्।

मूलमन्त्रः—ॐ आं ह्रीं क्रों यरलवशषसहों हंसः। देवस्य प्राणा इह प्राणाः। देवस्य जीव इह स्थितः। देवस्य सर्वेन्द्रियाणि मनोबुद्धिचित्ताहङ्कारपृथिव्यप्तेजोवाय्वाकाशशब्दस्पर्शरूपरसगन्ध--श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्था इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा—इति मन्त्रमुच्चार्य, प्राणशक्तिं जीवात्मनि प्रतिष्ठापयेत्॥

पश्चात्प्राणप्रतिष्ठातस्तत्र चावाहयेत्कलाः।

चतुर्नवतिकलाः

आग्नेया दश सूर्यजा द्विसहिताः सोमोद्भवाः षड्युताः
[1] पश्चादोमभवाः क्रमाद्दश दश प्रोक्ताश्चतस्रः कलाः।
बिन्दोर्नादभवाश्च षोडश [2] महाब्राह्म्यथादयो मातृकाः
एवं षड्गदिता[3]श्चतुर्नवतिकाः सम्यक्समाहृत्य ताः॥ १४३॥

धूम्रार्चिरूष्मा ज्वलिनीसमन्विता
सज्वालिनी स्यादथ विष्फुलिङ्गिनी।
सुश्रीः सुरूपा कपिला वहन्तिका
हव्या च कव्याग्निकलाः सयादिकाः॥ १४४॥

तपिनी च तापिनी स्याद्धूम्राख्याना मरीचिश्च।
ज्वालिन्यपि रुचिसंज्ञा सुषुम्ना भोगदा विश्वा॥ १४५॥

बोधिनी तदनु धारिणी क्षमा
भास्करस्य सहिताः कलाः क्रमात्।
बोधिवृक्षसुरसादिभिः शिखा-
प्लक्षकावधिभिरक्षरद्वयैः॥ १४६॥

---

[1] पश्चादों प्रभवाः—मु. [2] महाब्रह्माणवो मातृकेत्येवं—क. [3] इत्थं तत्र विभागः—

| | | | |
|---|---|---|---|
| आग्नेयाः धूम्राद्याः डादिफान्ताः कलाः .... | | .... | १० |
| सूर्यजास्तपिन्याद्याः कादिठान्ताः कलाः .... | | .... | १२ |
| सोमजा अमृताद्याः स्वराः कलाः | .... | .... | १६ |
| ब्रह्मजाः (अकारात्) सृष्ट्याद्याः कादिञान्ताः कलाः | | .... | १० |
| विष्णुजाः (उकारात्) जराद्याः टादिनान्ताः कलाः | | .... | १० |
| रुद्रजाः (मकारात्) तीक्ष्णाद्याः पादिशान्ताः कलाः | | .... | १० |
| ईशोद्भवा (बिन्दोः) पीताद्याः षादिक्षान्ताः कलाः | | .... | ४ |
| सदाशिवजाः (नादात्) निवृत्याद्याः (स्वराः) कलाः | | .... | १६ |
| ब्राह्म्यादयः (ब्रह्माणवः) | .... | .... | ६ |
| | आहत्य कलाः | ... | ९४ |

वाचस्पत्ये ककारः

प्रालेयांशोः कलास्ता इति पुनरमृता मानदाख्या सपूषा
तुष्ट्याख्या पुष्टिसंज्ञा रतिधृतिशशिनीचन्द्रिकाकान्तिसंज्ञा ।
पश्चाज्ज्योत्स्नाऽभिधा श्रीस्तदनु निगदिताः प्रीतिसंज्ञाङ्गदाख्या
पूर्णा पूर्णामृताख्या लवपरिलसितैरक्षरैश्चन्दनाढ्यैः ॥१४७॥

सृष्टिऋद्धी स्मृतिश्चापि मेधाह्वया
कान्तिलक्ष्म्यौ धृतिः स्यात् स्थिराख्या स्थितिः ।
सिद्धिरित्यक्षरैः पिप्पलाद्यैः
क्रमाद्रोचनाद्यैर्युतास्ता अकारोद्भवाः ॥ १४८ ॥

जरा पालिनी शान्तिसंज्ञेश्वरी स्या-
द्रतिः कामिकाख्या वराद्या ततोदा ।
तथा ह्लादिनी प्रीति[1]दीर्घैः चटाद्यैः
समेता दशोकारजाता इमाः स्युः ॥ १४९ ॥

तीक्ष्णा रौद्रा स्याद्भयाख्या च निद्रा
तन्द्री क्षुत्स्यात्क्रोधिनी च क्रिया च ।
उत्कार्याख्या मृत्युसंज्ञा च पाद्यै-
र्णैर्युक्तास्ता मकारोद्भवाः स्युः ॥ १५० ॥

पीता श्वेतारुणा पश्चादसितेति कला मताः ।
दूर्वा देवी सहालक्ष्मीः समेता बिन्दुसंभवाः ॥ १५१ ॥

निवृत्तिः प्रतिष्ठा च विद्या च शान्ति-
स्तथा चेन्धिदा दीपिका रेचिका च ।
ततो मोचिकाख्या पराख्या च सूक्ष्मा-
मृता ज्ञानपूर्णा(च पूर्णा)मृता च ॥ १५२ ॥

आप्यायिनी व्यापिनी च व्योमरूपाप्यनन्तरम् ।
अनन्ताद्युदितानादिकलास्ताः स्वरसंयुताः ॥ १५३ ॥

प्रणवभुवननायिकाशिवाद्यैः
सहितकलापदशक्तिङेनमोऽन्तैः ।

---

[1] दीर्घै चटाद्यैः—क.

यजतु शितमतिः कलाः समस्ता
निजनिजनामभिरेव शङ्करतोये ॥ १५४ ॥

आग्नेयीनां त्रिष्टुबकोंद्भवानां
गायत्री स्यादिन्दुजानामनुष्टुप् ।
सद्याद्याः स्युर्हादिजानां कलाना-
मेवं प्रोक्तास्ता रुचोऽत्र क्रमेण ॥ १५५ ॥

अघोरपीठशक्तयः

सुप्रभा मेघदूती च विजया [1]भास्करा यमा ।
गन्धर्वा शकटा शूर्पा मालिनी च वसुन्धरा ॥ १५६ ॥

हुंकारा राक्षसी रम्भा त्रिणेत्रा नेत्रभूषिणी ।
अञ्जना मित्रपीठा च भद्रा स्वस्ति करालिका ॥ १५७ ॥

काळी बलवती शूरा रोगघ्नी कामदायिनी ।
दूतिनी शाकिनी हंसी माया वागीश्वरी तथा ॥ १५८ ॥

वनमाली गवाक्षी च द्वात्रिंशच्छक्तिदेवताः ।
एकवक्त्रास्त्रिणेत्राश्च षड्भुजाः शिखिवाहनाः ॥ १५९ ॥

खड्गखट्वाङ्गसंयुक्ता धनुर्बाणकराः स्मृताः ।
[2]वराभयधरा नीला अघोरे पीठशक्तयः ॥ १६० ॥

अघोरे नवशक्तयः

सुप्रभा विजया चैव काळी चैव कराळिका ।
विकाराळी सुप्रभा च मेघदूती मनस्विनी ॥ १६१ ॥

अघोरा नवमी प्रोक्ता अघोरे नवशक्तयः ।
अघोरशक्तयस्त्वेता विकराळीति संज्ञिताः ॥ १६२ ॥

भुजाष्टकसमायुक्ता ध्यायेत्ताघोररूपिणीः ।
वरं च फलकं चैव टङ्कं पाशं तथाङ्कुशम् ॥ १६३ ॥

---

[1] भास्करा च मा—क. [2] वरदाभयपाण्यश्च द्वात्रिंशत्पीठशक्तयः—क.

गदां त्रिशूलकं चैव [1]दधानाः क्रमशोऽसिताः ।
द्वात्रिंशद्धस्तमूर्तैस्तु शक्तयश्च प्रकीर्तिताः ॥ १६४ ॥

अघोरध्यानम्

एकवक्त्रं सदानन्दं द्वात्रिंशद्भुजसंयुतम् ।
जटामकुटसंयुक्तं त्रिणेत्रं चन्द्रशेखरम् ॥ १६५ ॥

अभयं खड्गशूले च चक्रं डमरुकं तथा ।
दधानमस्थिबाणौ च गदां [2] पद्मं कपालकम् ॥ १६६ ॥

ज्ञानमुद्रां कुन्तहस्तं [3]अंकुशं चाक्षमालिकाम् ।
खट्वाङ्गं परशुं चैव दधानं दक्षिणैर्भुजैः ॥ १६७ ॥

वरं च फलकं चैव टङ्कं [4]पाशं च मुद्गरम् ।
नागमग्निं मृगं घण्टां धनुश्च कटिहस्तकम् ॥ १६८ ॥

रत्नं च कुमुदं कुम्भं खेटकं पुस्तकं तथा ।
[5]अघोरमूर्तिं नीलाभं रुण्डमालाविभूषितम् ॥ १६९ ॥

कालमुण्डस्य शिरसि स्थितं सर्वाभयप्रदम् ।

वामे यस्तु बिभर्ति चापफलकौ दक्षेऽसिबाणौ तथा
हस्ताभ्यां स चतुर्भुजस्त्रिणयनः श्रीभद्रकाळीयुतः ।
धत्ते ब्रह्मकपालदाम हृदये यः पादुकान्यस्तपा-
दीशक्रोधसमुद्भवः स भवतु श्रीवीरभद्रः श्रिये ॥ १७० ॥

एवं शास्त्रानुसारेण श्रीमान् सङ्कण्णनायकः ।
केळदीनाम्नि नगरे तथेक्केरीपुरान्तरे ॥ १७१ ॥

कारयित्वा शुभं गेहं तत्र स्थापितवान् क्रमात् ।
वीरभद्रेश्वरं तद्वदघोरेश्वरमेव च ॥ १७२ ॥

---

1 पद्मं चैव यथाक्रमं—क 2 फालं च पद्मकम्—क. 3 असिं चैवाक्षमालिकाम्—क. 4 पाशाङ्कुशं तथा—क. 5 एतदायुधसंयुक्तं रुण्ड—क.

आगमोक्तविधानेन स्थानयोरनयोर्द्वयोः ।
पट्टाभिषेकमकरोत्पश्चान्निजकनीयसः ॥ १७३ ॥

अनुजाय विनीताय राज्ञामावश्यकीं नृपः ।
नीतिं चोपादिशत्तस्मै शत्रुनिग्रहसाधिकाम् ॥ १७४ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले देवताप्रतिष्ठाकालगृहनिर्माणादिनिरूपणं नाम दशमस्तरङ्गः

---

## अथैकादशस्तरङ्गः

कृत्वाभिषेचनं नीतेरुपदेशः कृतोऽभवत् ।
इत्याख्यातं तत्र को वा ? विधिः पट्टाभिषेचने ॥ १ ॥

शत्रुनिग्राहिणी का वा ? नीतिरेतन्निरूप्यताम् ।
कुमार ! कथयाम्येतद्यच्छ्रोतुमभिकाङ्क्षसे ॥ २ ॥

अथातः संप्रवक्ष्यामि भूपानामभिषेचनम् ।

### पट्टाभिषेकविधिः

आधानजन्मेशदशाधिनाथरवीन्दुभौमेज्यसितैर्बलिष्ठैः ।
उत्पातदोषादिविवर्जितेषु धराधिपानामभिषेक इष्टः ॥ ३ ॥

मूलत्रिकोणस्वगृहोच्चमित्र-
गृहस्थितैर्वापि तदंशसंस्थैः ।
शुभे विलग्ने सततं ग्रहेन्द्रा
दिशन्ति लक्ष्मीं विपुलां च कीर्तिम् ॥ ४ ॥

शीर्षोदये चोपचये ग्रहे वा
स्वजन्मलग्नादथ लग्नगे वा ।
शुभग्रहैर्युक्त[1]निरीक्षितैर्वा
राज्यं स्थिरं स्यात्सततं च राज्ञाम् ॥ ५ ॥

---

[1] निरीक्षिते वा-क.

पापग्रहैः स्वान्त्यगतैश्च निःस्वो
रोगी विलग्नोपगतैर्भवेत्सः ।
पदच्युतिः सप्तचतुर्थगस्तैः
पुत्रस्थितैश्चापि सुखैर्विहीनः ॥ ६ ॥

भ्रष्टोच्चकैः कर्मगतैरनायु-
र्मृत्युस्थितैर्वीर्ययुतैश्च पापैः ।
नूनं व्ययाष्टारिगतः क्षितीशं
निहन्ति सद्यश्च तदा बली चेत् ॥ ७ ॥

त्रिकोणकेन्द्रत्रिधनायसंस्थै-
स्त्रिषष्ठलाभायगतैश्च पापैः ।
षष्ठाष्टलग्नव्ययवर्जितेन
चन्द्रेण राज्ञां शुभदोऽभिषेकः ॥ ८ ॥

प्राग्भागे मन्दिरस्याथ गोमयेन तु कारयेत् ।
मण्डलं चतुरश्रं तु वर्णकैः समलङ्कृतम् ॥ ९ ॥

तत्र भद्रासनं सम्यगर्चयेत्सुमनोहरम् ।
गङ्गातोयेन संपूर्णस्वर्णकुम्भैरनेकशः ॥ १० ॥

दिग्विदिक्षु स्थितैः शुक्लगन्धमाल्याम्बरार्चितैः ।
शतौषधीमूलहेमरत्नसोद्भिज्जपल्लवैः ॥ ११ ॥

अभिषेककुम्भे क्षेपणीयानि मङ्गलद्रव्याणि

मृत्तिका वृषशृङ्गे च गजदन्ते च रोचनम् ।
उत्पलं पद्मकं गन्धं [1]मुरारेणुश्च कुङ्कुमम् ॥ १२ ॥

राजसर्षपमुस्ते च देवदारुसमन्विते ।
एतानि मङ्गलद्रव्याण्युदकुम्भेषु निक्षिपेत् ॥ १३ ॥

'देवस्य त्वे'ति मन्त्रेण आयुःपुष्टियशस्करैः ।
अब्लिङ्गैर्वेदमन्त्रैश्च शुभलग्ने शुभान्विते ॥ १४ ॥

---

[1] मुस्ता–मु.

भद्रासनस्थनृपतेरभिषेकं च कारयेत् ।
नीराजनं च कर्तव्यं शङ्खवादित्रनिःस्वनैः ॥ १५ ॥

आशिषो वाचनं कृत्वा पूजयेच्च सुरेश्वरान् ।
आयुधानि च संपूज्य विप्रान् गन्धादिनार्चयेत् ॥ १६ ॥

शुक्लमाल्याम्बरधृतः प्राङ्मुखस्य महीपतेः ।
पट्टं शिरसि बध्नीयात्सिंहासनगतस्य च ॥ १७ ॥

विप्रेभ्यो दक्षिणां दद्यादनेनमन्त्रपूर्वकम् ।
ब्रूयात्प्रत्यङ्मुखो राजा नमामि त्वां धरेति च ॥ १८ ॥

प्राच्यां मामभिषिञ्चन्तु वसवस्तेजसे श्रियै ।
याम्यायामभिषिञ्चन्तु मां रुद्रा विजयाय च ॥ १९ ॥

आदित्यास्त्वभिषिञ्चन्तु प्रतीच्यां दिशि वृद्धये ।
विश्वेदेवास्तथोदीच्यामभिषिञ्चन्तु पुष्टये ॥ २० ॥

दिगीशास्त्वभिषिञ्चन्तु मां सदा विजयाय च ।
'साम्राज्य'मिति मन्त्रेण राजानं सम्यगर्चयेत् ॥ २१ ॥

व्याघ्रचर्मण्यथासीनं नवालङ्कारभूषितम् ।
छत्रचामरसंयुक्तं राज्यचिह्नसमन्वितम् ॥ २२ ॥

पुरोहितश्च जुहुयात्साविञ्याग्नौ प्रयत्नतः ।
उदुम्बरसमिद्भिश्च आज्येनाष्टोत्तरं शतम् ॥ २३ ॥

विद्वत्पुरोहितामात्यवृद्धबन्धुसमन्वितः ।
तदा संचिन्त्य सप्ताङ्गं प्रजा धर्मेण पालयेत् ॥ २४ ॥

एवं यः कुरुते सम्यक् स राजा वर्धते स्वयम् ।
अनेन विधिना राज्ञां कुर्यात्पट्टाभिषेचनम् ॥ २५ ॥

### राजनीतिः

अथ नीतिं प्रवक्ष्यामि शत्रुनिग्रहसाधिकाम् ।

श्रीमान् कुलीनोऽव्यसनोऽतिशूरः
श्रुतिस्मृतिज्ञः स्मृतिमान् सुदक्षः ।

धर्मस्वरूपी स्वगतस्त्वलुब्धः
शुचिस्स्मितो नीतिपरः सुरूपः ॥ २६ ॥

तथ्याभिभाषी निपुणः कलासु
वक्ता सुवेषः प्रियवाक्कृतज्ञः ।
वृद्धोपसेवी गुणवान् गुणज्ञः
स्वरन्ध्रगोप्ता पररन्ध्रवेत्ता ॥ २७ ॥

दाता सहिष्णुर्विजितेन्द्रियश्च
मानी च सप्ताङ्गयुतो विनीतः ।
उत्साहमन्त्रप्रभुशक्तियुक्तः
चतुर्विधोपाययुतस्त्वभीतः ॥ २८ ॥

पञ्चाङ्गमन्त्रे कुशलः प्रगल्भः
षाड्गुण्यवृन्दे विजयी नृपः स्यात् ।

सन्धिः

सन्धिश्चतुर्विधः प्रोक्तो मैत्रीसंबन्धमिच्छताम् ।
प्रथमो मित्रसन्धिः स्यात् सन्धिजश्च द्वितीयकः ॥ २९ ॥
परस्परोपकाराख्य उपहारस्तथैव च ।

मित्रसन्धिः

सुजनोऽयमिति ज्ञात्वा स्वयं षड्गुणवान्नृपः ॥ ३० ॥
करोत्यलोभतः सन्धिं मित्रसन्धिः स उच्यते ।

सन्धिजसन्धिः

कन्यादानेन यः कुर्यात्सन्धिं कार्यवशान्नृपः ॥ ३१ ॥
स सन्धिजस्तु विज्ञेयः सन्धिः सन्धिविचारकैः ।

परस्परोपकाराख्यः

अन्योन्यस्योपकारार्थं यत्र सन्धीयते नृपैः ॥ ३२ ॥
परस्परोपकाराख्यः स सन्धिः प्रोच्यते बुधैः ।

उपहारसन्धिः

[1]गजानश्वांस्तथा रत्नं सुवर्णं भूमिमेव च ॥ ३३ ॥
दत्वा यः क्रियते सन्धिरुपहारः स उच्यते ।

विग्रहस्तद्भेदाश्च

शूरत्वेन सहायेन सामर्थ्येन बलेन च ॥ ३४ ॥
मन्त्रहीनेन भूपालः सार्धं कुर्वीत विग्रहम् ।
कामजो लोभजश्चैव भूभवो मानसंभवः ॥ ३५ ॥
अभयाख्यः समाख्यात इच्छाजोऽथ मदोत्थितः ।
अर्थशास्त्रे परिख्यात एकद्रव्याभिलाषकः ॥ ३६ ॥
इत्यष्टौ विग्रहाः प्रोक्ताः नवमो नोपलभ्यते ।

कामजाद्यष्टविग्रहाणां लक्षणम्

स्त्रीनिमित्तं हि यो जातो विग्रहः काम उच्यते ॥ ३७ ॥
द्रव्यापहारजनितो विग्रहो लोभजस्तथा ।
भूम्यर्थमुत्थितो यस्तु भूभवो विग्रहो महान् ॥ ३८ ॥
विरुद्धार्थकृतो यस्तु विग्रहो मानसंभवः ।
शरणागतरक्षार्थं यो भवेत्कलहो महान् ॥ ३९ ॥
अभयाख्यः स कथितो विग्रहो नीतिवेदिभिः ।
मित्रार्थे बन्धुभृत्यार्थे विग्रहं यः समाचरेत् ॥ ४० ॥
इच्छाजः स तु निर्दिष्टो नीतिशास्त्रार्थवेदिभिः ।
मदिरोत्थमदेनापि विद्याधनमदेन च ॥ ४१ ॥
एतैर्नृणां समुत्पन्नो मतिभ्रंशकरो महान् ।
अविवेकसमुत्पन्नः स भवेच्च मदोत्थितः ॥ ४२ ॥
एकमर्थं समुद्दिश्य यो भवेद्विग्रहो मिथः ।
स प्रोक्तः शास्त्रतत्त्वज्ञैरेकद्रव्याभिलाषकः ॥ ४३ ॥

---

[1]गजानस्त्रांस्तथा—क.

यानम्

दैवेनोपहतो यस्तु व्याधिना पीडितोऽपि वा ।
बलकोशविहीनो वा यो मित्रैर्विनियोजितः ॥ ४४ ॥

तस्य भूयो नृपो यायाज्जिगीषुर्जयसिद्धये ।
शरत्काले वसन्ते च रिपोर्नाश उपस्थिते ॥ ४५ ॥

निमित्तं शकुनं लब्ध्वा यात्रां कुर्वीत भूपतिः ।

यानभेदाः

सन्धानजा पार्ष्णिरोधा मित्रविग्रहिणी तथा ॥ ४६ ॥

द्वन्द्वनिर्व्याजगा कुल्या सप्तमी चापि शीघ्रगा ।

सन्धानजयानम्

पार्ष्णिग्राहेण सन्धाय पश्चाद्गच्छेच्च भूपतिः ॥ ४७ ॥

सन्धानयात्रा विज्ञेया नृपाणां हितकारिणी ।

पार्ष्णिरोधयानम्

पार्ष्णिग्राहस्य रोधार्थं नियोज्यात्मबलं महत् ॥ ४८ ॥

गमनं वा भवेद्यत्र पार्ष्णिरोधः शुभावहः ।

मित्रविग्रहिणीयानम्

शत्रोः सार्धं स्वमित्रेण कारयित्वा स्वविग्रहम् ॥ ४९ ॥

गच्छतां सा भवेद्यात्रा मित्रविग्रहिणी परा ।

द्वन्द्वजयानम्

यस्योपरि स्वयं यायादानयेत्तदरींस्तदा ॥ ५० ॥

सा यात्रा द्वन्द्वजा प्रोक्ता रिपुसंहारकारिणी ।

निर्व्याजयानम्

सर्वतः स्वस्थचित्तस्य बलमुख्याविघातिनः ॥ ५१ ॥

भवेद्या नृपतेर्यात्रा निर्व्याजा परिकीर्तिता ।

कुल्यायानम्

रिपुवंश्येन सार्धं यो गच्छेत्परविनाशने ॥ ५२ ॥
सा तु यात्रा भवेत्कुल्या द्विषतां भयकारिणी ।

शीघ्रगामिनीयानम्

द्विषतो वधमुद्दिश्य त्यक्त्वा चान्यत्क्रमादिकम् ॥ ५३ ॥
सहसा क्रियते यात्रा सा भवेच्छीघ्रगामिनी ।
देशं कालं तथा वित्तं निमित्तं बलमात्मनः ॥ ५४ ॥
विचार्य कुर्वतो नित्यं यात्रा भवति सिद्धिदा ।

याने प्रशस्तास्तिथिवारनक्षत्रादयः

यात्रां विदध्याच्छुभगोचरेषु
भानौ कुलीरालिझषैर्विमुक्ते ।
शुक्रेन्दुपुत्रावनिजेष्ववामे-
ष्वनस्तगेष्वप्रतिलोमगेषु ॥ ५५ ॥

अतिपातिषु कार्येषु ग्रहान् संपूज्य यत्नतः ।
यात्रां कुर्वीत नृपतिः कार्यसिद्धिकरीं सदा ॥ ५६ ॥

स्वपुरपरपुराद्वा कर्कटे मासि विद्वान्
गमनमिह न कुर्यात्तत्र तावच्छुभार्थी ।
प्रचलति यदि सम्यक्सप्त वर्षाणि भूयो
भवति सकलदुःखैः सार्धमायुःक्षयाय ॥ ५७ ॥

पृष्ठगं दक्षिणं वापि भृगुं कृत्वा विशेत्तदा ।
पुरतो वामभागं वा शुक्रं कृत्वा न चाविशेत् ॥ ५८ ॥

रोहिणी श्रवणा चित्रा सोमवारे शुभावहा ।
अहिर्बुध्न्यं च पौष्णं च भौमवारे तु शस्यते ॥ ५९ ॥

पुनर्वसुर्गुरोर्वारे भाग्यं च श्रवणं सिते ।
हरिदैवं द्विदैवं च वह्निदैवं शनेर्दिने ॥ ६० ॥

धिष्ण्यान्येतानि शस्तानि वारेष्वेतेषु सर्वदा ।
चरलग्ने प्रयातव्यं द्विस्वभावोऽतिनिन्दितः ॥ ६१ ॥

लग्ने स्थिरे न गन्तव्यं यात्रायां क्षेमकाङ्क्षिभिः ।
चन्द्रमा दशमे यस्य स यात्रायां जयी भवेत् ॥ ६२ ॥

बुधजीवसितानां च यदि चन्द्रस्त्रिकोणगः ।
एको भवेद्ग्रहो यस्य तस्य यात्रा शुभावहा ॥ ६३ ॥

अतियोगयोगातियोगौ

द्वौ चेत्केन्द्रत्रिकोणस्थावतियोगः स कथ्यते ।
योगातियोगः कथितस्त्रिभिः केन्द्रत्रिकोणगैः ॥ ६४ ॥

वारदोषपरिहारकथनम्

ऐन्द्रे दधि यमे तैलं वारुणे गुडमेव च ।
कौबेरे क्षीरमादद्याद्वारदोषो न विद्यते ॥ ६५ ॥

क्रमात्सूर्यादिवारेषु घृतं क्षीरं गुडं तथा ।
तिलं दधि यवान्माषान् भुक्त्वा यायान्नराधिपः ॥ ६६ ॥

अर्कोदये व्रजेदैन्द्रीं दिशं भुक्त्वा तु शर्कराम् ।
खस्थेऽर्के घृतभुक्प्राचीमस्तगे दक्षिणां तिलान् ॥ ६७ ॥

सुखस्थेऽर्के पयः पीत्वा पश्चिमां दिशमाव्रजेत् ।
लग्नाज्जन्मर्क्षतो वापि चन्द्रेऽनुपचयं गते ॥ ६८ ॥

क्षीणी च शुभदा यात्रा पूर्णेऽप्युपचये शुभा ।

यानकाले जप्यान्यर्जुननामानि

अर्जुनः फल्गुनः पार्थः किरीटी श्वेतवाहनः ॥ ६९ ॥

बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ।
एतानि दश नामानि अर्जुनस्य महात्मनः ॥ ७० ॥

यात्राकाले स्मरेद्यश्च तस्य शत्रुजयो भवेत् ।

यानकाले दिग्भेदेन वाहनभेदः

ऐन्द्रीं यायाद्गजारूढो रथेनैव तु दक्षिणाम् ॥ ७१ ॥

हयेन वारुणीं यायान्नृयानेनोत्तरां दिशम् ।
शत्रुजन्मादिराशीनामष्टमर्क्षे गतो नृपः ॥ ७२ ॥

तत्र ध्वजस्तु संसिद्धो यथावदुदितः क्रमात् ।
तमुद्धृत्य पुरो यायादाहवे शात्रवीं दिशम् ॥ ७३ ॥

ध्वजं कृत्वा तु दण्डेन वेणुवैकङ्कतेन च ।
पालाशेनाथवा वध्वा घण्टाकिङ्किणिशोभितम् ॥ ७४ ॥

वैनतेयं स्वस्तिकं च कुलिशं च लिखेत्पटे ।
संपूज्य विधिवन्मन्त्रैर्गन्धपुष्पाक्षतादिभिः ॥ ७५ ॥

हुत्वा च हविषाज्येन पलाशसमिदादिभिः ।
'यत इन्द्रे' तिमन्त्रेण त्रिष्टुभानुष्टुभान्यतः ॥ ७६ ॥

नित्यं संपूज्य यानेन युद्धे नित्यं पुरो वहेत् ।
एवं दक्षिणतो वामे पृष्ठतश्च वहेद्ध्वजान् ॥ ७७ ॥

धनुः शतार्धात्पुरतः शुभेऽहनि वसेन्नृपः ।
वेश्यागारे वणिग्गेहे भूसुराणां गृहेषु च ॥ ७८ ॥

निर्गमान् प्रक्षिपेद्यत्र तत्र वामे विनिक्षिपेत् ।
स्वयमेकदिनं प्रोक्तं भार्या चैकं दशाम्बरम् ॥ ७९ ॥

त्रिर्मन्त्री वाहनं सप्त स्वर्णं मासो द्विरायुधम् ।

मेषाद्ये युधि दारभृत्यवचनं वह्निप्रदीप्ताङ्गना
आगच्छेदिह मध्यमे खलु तथा दीप्तातिदीप्ताङ्गना ।
अन्ते विप्रयुगागमो निगदितस्ताम्रध्वनिर्वा तथा
द्रेक्काणोदितलक्षणं निगदितं तत्कालभागैः क्रमात् ॥ ८० ॥

वृषभाद्येकमृगगोपागमनं चण्डालजोऽथवा शब्दः ।
मध्ये मङ्गलनादो विप्रागमनं तथा वाच्यम् ॥ ८१ ॥

अन्त्ये च पुष्पधारी आगच्छेदार्द्रवसनविप्रो वा ।

अजशब्दो मिथुनाद्ये मङ्गलनादोऽथवा भवति ।
शकुनिनिनादो मध्ये चण्डालानां ध्वनिर्वा स्यात् ॥ ८२ ॥

अन्त्ये तु गजाक्रोशस्तुरगागमनस्य शसनं वाच्यम् ।
आदौ कुक्कुटशब्दः केकारावोऽथ वा कुलीरे स्यात्
मध्ये चरणनिनादः काष्ठनिनादोऽथ वा भवति ॥ ८३ ॥

अन्त्ये शङ्खध्वानो द्वौ विप्रौ पुष्पधारिणी योषा ।
आद्ये च मृगागमनं दीपो वा दृश्यते तु सिंहस्य ॥ ८४ ॥

मध्ये शोभनशब्दो मांसागमनं तदीयवार्ता वा ।
अन्ते दुष्टा नारी आगच्छेदार्द्रवसनविप्रो वा ॥ ८५ ॥

कन्याद्ये ताम्ररवो दूतागमनं तथा स्नेहः ।
मध्ये वृषगोपानामागमनं कुम्भधारिणी चान्ते ॥ ८६ ॥

तुलाद्ये तु वणिग्देवयोषा पुष्पवती तथा ।
विप्रद्वयागमश्चैव तुलामध्य उदाहृतः ॥ ८७ ॥

तदन्ते रोषशब्दश्च मृगनादोऽथ वा भवेत् ।
वृश्चिकाद्ये पात्रशब्दो द्विजाक्रोशोऽथ वा भवेत् ॥ ८८ ॥

तन्मध्ये योषितः शब्दो दीपस्तम्भागमोऽथ वा ।
वृश्चिकान्ते वेदशब्दो वैदिकागमनं तथा ॥ ८९ ॥

गजागमो वा नृपतेर्हयाङ्कस्यादिभागके ।
मध्ये मङ्गलशब्दः स्यादन्त्ये रम्यातपत्रकः ॥ ९० ॥

पश्वागमो वा युवतेरागमो वा मृगादिके ।
मध्ये शस्त्राम्बुनो वार्ता तदन्ते वायसध्वनिः ॥ ९१ ॥

कुम्भाद्ये बालशब्दो वा हरिवार्ता भवेत्तथा ।
छत्रधारागमो मध्ये भृतकस्य जनस्य वा ॥ ९२ ॥

आक्रोशः स्यात्तदन्ते तु नासिकोत्थध्वनिस्तथा ।
अन्धस्यागमनं वाच्यं मीनाद्ये बधिरागमः ॥ ९३ ॥

अन्यथाध्वनिरस्यैव वसुशब्दोऽथ मध्यमे ।
भेरीशङ्खनिनादः स्यान्मीनान्ते तत्त्रिभागके ॥ ९४ ॥

गुरौ केन्द्रत्रिकोणस्थे वायसो दक्षिणं व्रजेत् ।
लग्नस्थे भार्गवे वापि पयः पक्षी च वामतः ॥ ९५ ॥

त्रिषडायगते भौमे खे श्येनस्तत्र वामतः ।
कृष्णपक्षे भरद्वाजः प्रदक्षिणमगाद्ध्रुवम् ॥ ९६ ॥

केन्द्रत्रिकोणगे जीवे दर्शनं छागविप्रयोः ।
त्रिषडायगते चार्के भरद्वाजो यथा पुरा ॥ ९७ ॥

आयस्थे वाक्पतौ लग्ने ब्राह्मणौ समुपस्थितौ ।
बुधशुक्रौ च केन्द्रस्थौ सवत्सां गां पयस्विनीम् ॥ ९८ ॥

चतुर्थस्थे चन्द्रमसि दशमस्थे यदा तदा ।
दीपदर्शनसाम्मुख्यं रजके धौतवस्त्रकम् ॥ ९९ ॥

सुतस्थाने यदा सौम्यो वृषभः सम्मुखो भवेत् ।
गुरुचन्द्रौ च नवमे दक्षिणे वाथ वायसः ॥ १०० ॥

सप्तषष्ठाष्टमे लग्ने जीवज्ञौ यदि संस्थितौ ।
आदर्शपुष्पमांसानां मद्यस्यालोकनं शुभम् ॥ १०१ ॥

राहुकेत्वष्टमे लग्नात्सर्पदर्शनमीरितम् ।
आदित्यराहू सौरिश्च सहजस्था यदा तदा ॥
प्रजायुक्ताः सुवासिन्यो दृष्टाः स्युः सर्वकामदाः ॥ १०२ ॥

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले पट्टाभिषेकविधिसन्धिविग्रहयानस्वरूपवर्णनं नामैकादशस्तरङ्गः

---

## अथ द्वादशस्तरङ्गः

सन्धिविग्रहयानानां भेदान् श्रुत्वास्मि हर्षितः ।
ब्रूहि त्वमासनं द्वैधमाश्रयं च क्रमाद्गुरो ! ॥ १ ॥

कुमाराकर्णय स्वैरं सारमेतद्ब्रवीमि ते ।

आसनम्

अवृष्ट्या तोयरहिते दुर्भिक्षेण शुचान्विते ॥ २ ॥

परेषां दुःस्थिते देशे नैव यायात्कथंचन ।
परस्परविरोधेन क्षीयमाणेषु शत्रुषु ॥ ३ ॥

तद्विनाशो भवेद्यावत्तावत्तिष्ठेच्च बुद्धिमान् ।

दश आसनभेदाः

स्वस्थासनमुपेक्षाख्यं मार्गरोधासनं तथा ॥ ४ ॥

दुर्गसाध्यासनं चैव राष्ट्रस्वीकरणासनम् ।
रमणीयासनं चान्यत्तथा च निकटासनम् ॥ ५ ॥

क्रूरमार्गासनं चैव प्रलोभासनमेव च ।
पराधीनासनं चेति दशासनमुदाहृतम् ॥ ६ ॥

इतोऽधिकं न दृश्येत नीतिज्ञैरन्यदासनम् ।

स्वस्थासनम्

निष्कण्टके तथा राज्ये शासिते वैरिमण्डले ॥ ७ ॥

स्वस्थाने या स्थिती राज्ये स्वस्थासनमिति स्मृतम् ।

उपेक्षासनम्

यदस्माभिरनुष्ठेयं दैवेन क्रियते हि तत् ॥ ८ ॥

उग्रदण्डप्रयोगाच्च व्यसनाद्भूत्यकर्शनात् ।
उपेक्ष्य यदवस्थानमुपेक्षासनमुच्यते ॥ ९ ॥

मार्गरोधासनम्

नद्याः पूर्वं प्रवाहेण गमनं रोधितं यदि ।
तेन रोधेन यत्स्थानं मार्गरोधासनं मतम् ॥ १० ॥

दुर्गसाध्यासनम्

दुर्गं गृहीतुमुद्युक्तो वारणार्थं विरोधिनः ।
तत्रैव निवसेदुक्तं दुर्गस्थाध्यासनं हि तत् ॥ ११ ॥

राष्ट्रस्वीकरणासनम्

बलादुपार्जिते राष्ट्रे वशार्थं यत्र तिष्ठति ।
तत्स्थानं कथितं राज्ञो राज्यस्वीकरणासनम् ॥ १२ ॥

रमणीयासनम्

विजिगीषुर्नृपो[1] गत्वा रिपून् हत्वा रणाङ्गणे ।
रम्यां वसतिमालोक्य यत्र तिष्ठति सानुगः ॥ १३ ॥

यवसेन्धनभूयिष्ठे जलधान्यसमन्विते ।
यत्स्थानं नीतितत्त्वज्ञैः रमणीयासनं हि तत् ॥ १४ ॥

निकटासनम्

दूरस्थस्य रिपो राजा विनाशाय समुद्यतः ।
समीपे यत्स्थितिं कुर्यात्तद्भवेन्निकटासनम् ॥ १५ ॥

दूरमार्गासनम्

दूरं देशं नृपो गत्वा कृत्वा कार्यमशेषतः ।
विज्ञाय स्वपुरं दूरं यत्र तिष्ठत्यनाकुलः ॥ १६ ॥

वर्षर्तुव्यत्ययो यावद्यावच्च शरदागमः ।
तावद्यदुचितं स्थानं दूरमार्गासनं हि तत् ॥ १७ ॥

प्रलोभासनम्

हस्त्यश्वधनरत्नानि दुर्गं राष्ट्रं तथैव च ।
कंचित्कालं स्थितिः कार्या रिपून् हत्वा ददामि ते ॥ १८ ॥

इति प्रलोभितोऽन्येन यत्र तिष्ठति भूमिपः ।
तत्प्रलोभासनं नाम कथितं नीतिवेदिभिः ॥ १९ ॥

मासे पक्षे दशाहे च षडहे पञ्चरात्रके ।
प्रभूतं ते ददामीति प्रलोभ्य स्थापयेन्नृपम् ॥ २० ॥

---

[1] मत्वा—क.

आशया धार्यमाणस्तु यत्र तिष्ठति वा चिरम् ।
प्रलोभासनमेवं वा समाख्यातं मनीषिभिः ॥ २१ ॥

पराधीनासनम्

स्नेहाद्वा वैरिभावाद्वा गन्तुं देशं स्वकं न यः ।
यतते तत्र तत्स्थानं पराधीनासनं स्मृतम् ॥ २२ ॥

त्रय आश्रयाः

स्वयं हीनबलो राजा जयहेतुं न पश्यति ।
बलिना पीड्यमानो यः क्षेमस्थानं समाविशेत् ॥ २३ ॥

तत्संश्रयोऽन्यसंसर्गो दुर्गसंश्रयणं तथा ।
इति भेदास्त्रयः प्रोक्ताश्चतुर्थो नोपलभ्यते ॥ २४ ॥

तत्संश्रयः

महता शत्रुणा यस्तु पीडितोऽल्पस्तथा नृपः ।
सत्यसन्धं परिज्ञाय तमेवाश्रयते बुधः ॥ २५ ॥

बहूंस्तान् सद्गुणान् वीक्ष्य शत्रुं यस्तु समाश्रयेत् ।
गुणनीतिषु तत्त्वज्ञास्तत्संश्रयमुशन्ति हि ॥ २६ ॥

अन्यसंश्रयः

शत्रुणा बाध्यमानोऽपि स्वयं चाप्यनुपायकः ।
गुणहीनं रिपुं ज्ञात्वा तस्मादन्यं गुणाधिकम् ॥ २७ ॥

बलिनं कृपया युक्तं धर्मज्ञं सत्यवादिनम् ।
आश्रयेदीश्वरं ज्ञात्वा स समाश्रय उच्यते ॥ २८ ॥

दुर्गसंश्रयः

वैरिणा बलयुक्तेन पीडितो ह्यबलो नृपः ।
यस्तु संश्रयते दुर्गं दुर्गसंश्रय इष्यते ॥ २९ ॥

द्वैधीभावः

लोभाद्वापि भयाद्वापि योगक्षेमार्थसाधकः ।
द्वेषिमध्ये चिरं कालं द्वैधीभावेन यापयेत् ॥ ३० ॥

पञ्च द्वैधीभावाः

मिथ्याचित्तः समुद्दिष्टो मिथ्यावचन एव च ।
मिथ्याकरण इत्यन्यस्तथा चोभयवेतनः ॥ ३१ ॥

युग्मप्राभृतकश्चेति द्वैधीभावोऽत्र पञ्चधा ।

मिथ्याचित्तः

चित्ते विरोधमाधत्ते वचसा प्रियभाषणम् ॥ ३२ ॥

द्वैधीभावोऽयमाख्यातो मिथ्याचित्तोऽर्थकोविदैः ।

मिथ्यावचनः

वचसाख्याति कर्माणि मनसा तत्ततोऽन्यथा ॥ ३३ ॥

द्वैधीभावोऽपरः ख्यातो मिथ्यावचनसंज्ञितः ।

मिथ्याकरणः

स्तोकं स्तोकं किमप्यादौ कार्यं विश्वासकारणात् ॥ ३४ ॥

करोति तावद्दुष्टोऽसौ यावत्कार्यं विनाशयेत् ।
एवं यः कुरुते मिथ्या रिपोर्नाशाय पार्थिवः ॥ ३५ ॥

मिथ्याकरणनामायं द्वैधीभावः प्रकीर्तितः ।

उभयवेतनः

गुप्तं वेतनमन्यत्र तथैकत्र प्रकाशतः ॥ ३६ ॥

कार्यं करोति सर्वत्र गुप्तदस्य हितेच्छया ।
अलक्षितो रिपोर्मित्रं भूत्वा स्वस्वामिनेऽर्पयन् ॥ ३७

यत्र तिष्ठति द्वैविध्यात्स स्यादुभयवेतनः ।

उभयप्राभृतकः

सन्नाहं प्रेषयिष्यामि साधयिष्यामि ते रिपुम् ॥ ३८ ॥

इति ब्रुवन् विरुद्धाभ्यां द्वाभ्यामर्थं समाहरन् ।
तयोरज्ञातरूपः सन्यत्र राजा प्रवर्तते ॥ ३९ ॥
द्वैधीभावं तमप्याहुर्युग्मप्राभृतकं बुधाः ।

द्वैधीभावसन्ध्यादिज्ञानवतः फलम्

द्वैधीभावं समालम्ब्य य एवं वर्तते नृपः ॥ ४० ॥
विपक्षलक्ष्मीमादत्ते मन्त्ररक्षाविचक्षणः ।
सन्धिं च विग्रहं चैव यानमासनमाश्रयम् ॥ ४१ ॥
द्वैधीभावं च यो वेत्ति प्रयोक्तुं शत्रुमण्डले ।
बलवान् कोशसंपन्नो गुणवान् सत्क्रियाबुधः ॥ ४२ ॥
स कृत्स्नां पृथिवीं भुङ्क्ते देशकालसहायवान् ।

सन्ध्यादिषु तरतमभावः

उपायेषूत्तमं साम भेदो मध्यम इष्यते ॥ ४३ ॥
उपप्रदानमवरं दण्डः कष्टतरः स्मृतः ।
उपायरहितत्वाच्च द्रव्यहानेरभावतः ॥ ४४ ॥
सन्धिमायान्ति कार्याणि तस्मात्सामोत्तमं मतम् ।
कुत्सिता भेदमायान्ति न ते विश्वासभूमयः ॥ ४५ ॥
ततः सन्देहरूपत्वात्स भेदो मध्यमः स्मृतः ।
वित्तस्य संक्षयः पूर्वं सिद्धिर्दैवे व्यवस्थिता ॥ ४६ ॥
उपप्रदानमवरं तेन प्रोक्तं मनीषिभिः ।
लाभार्थं क्रियते युद्धं रणे संशयितो जयः ॥ ४७ ॥
राज्यं च जीवितं चैव दण्डः कष्टतरः स्मृतः ।
चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया ॥ ४८ ॥
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ।
कुलीनेषु कृतज्ञेषु सार्द्रचित्तेषु साधुषु ॥ ४९ ॥
कार्यार्थिषु च मेधावी पूर्वं साम प्रयोजयेत् ।

सामोपायपाञ्चविध्यम्

प्रथमं कर्णसुभगं द्वितीयं दैविकं मतम् ॥ ५० ॥

तृतीयं स्मारकं प्रोक्तं चतुर्थं लोभकं स्मृतम् ।
तथैव पञ्चमं साम निजार्पणमिति स्मृतम् ॥ ५१ ॥

उपायेषूत्तमं साम कथितं निरुपद्रवम् ।

कर्णसुभगम्

मधुरैः सुखसंल्लापैः श्राव्यैश्च हृदयंगमैः ॥ ५२ ॥

एवं वचोभिर्यत्साम तत्कर्णसुभगं मतम् ।

दैविकम्

विश्वासजननोपायैः शपथैर्दैवपूर्वकैः ॥ ५३ ॥

क्रियते यच्च [1] नीतिज्ञैः साम तद्दैविकं स्मृतम् ।

स्मारकम्

यदासीत्सौहृदं पूर्वं सांप्रतं विस्मृतं त्वया ॥ ५४ ॥

इति संस्मार्यते यत्र साम तत्स्मारकं स्मृतम् ।

लोभकम्

ग्रामं पुरं तथा राष्ट्रं वाजिनं वारणं धनम् ॥ ५५ ॥

दास्यामीति च यत्साम स्मृतं तदिह लोभजम् ।

निजार्पणम्

भवत्कार्ये मदीयं स्वं शरीरं च मयार्पितम् ॥ ५६ ॥

इति वागर्पितं साम कथितं तन्निजार्पणम् ।
सामोपायैस्त्वसाध्या ये शत्रवो मदमोहिताः ॥ ५७ ॥

---

[1] नीतिज्ञाः साम तद्दैविकं विदुः—क.

भेदोपायेन ते साध्या नृपेण विजिगीषुणा ।
क्षीरं नीरं यथा हंसो विश्लेषयति संगतम् ॥ ५८ ॥

तथा च संहतान् शत्रून् भेदाद्विश्लेषयेत्तु तान् ।
शत्रुस्थैरात्मपुरुषैर्गूढरुभयवेतनैः ॥ ५९ ॥

भीतावमानितान् क्रुद्धान् भेदयेच्छत्रुसङ्गतान् ।

मित्रभेदाः षट्

[1]प्राणहा मानभङ्गश्च धनहानिश्च बन्धकः ॥ ६० ॥
दाराभिलाषकश्चेति षड्भेदाः साङ्गभङ्गकाः ।

प्राणहाः

प्राणापहो भवेद्यस्तु स भेदः प्राणहाः स्मृतः ॥ ६१ ॥

मानभङ्गः

त्वद्विषत्प्रेरितो राजा तव मानं हरिष्यति ।
एवमुद्वेज्य यो भेदो मानभङ्गः स वर्णितः ॥ ६२ ॥

धनहानिः

धनिकोऽयं महानेष किञ्चित्तव न यच्छति ।
तस्मात्केनाप्युपायेन धनमाहर्तुमर्हसि ॥ ६३ ॥

इति संमन्त्रय भूपाय यद्ब्रूते धनिकाय च ।
अर्थलुब्धो ह्ययं राजा तव द्रव्यं हरिष्यति ॥ ६४ ॥

[2]इत्येवं पिशुनत्वेन छिनत्त्युभयवेतनः ।
धनहानिरयं भेदो नीतिज्ञैः समुदाहृतः ॥ ६५ ॥

बन्धकः

न करोति तव स्वामी विश्वासं त्वयि कर्हिचित् ।
बन्धयित्वा तु निगलैः कारागारे निधास्यति ॥ ६६ ॥

[1] प्राणहानिर्मानभङ्गो धनहानिश्च बन्धनम्-मु. [2] यत्रवं-क.

इति विश्वासमुत्पाद्य निजस्वामिद्विनो नरः ।
यद्भिनत्ति परं बुद्ध्या स भेदो बन्धकः स्मृतः ॥ ६७ ॥

दाराभिलाषकः

विलासी चपलो भोगी रूपवांस्तरुणो विटः ।
अन्तःपुरे मदीयां स्त्रीं कटाक्षैः स्प्रष्टुमीक्षते ॥ ६८ ॥

वध्योऽयमिति भूपालो मया सार्धममन्त्रयत् ।
इति यः कुरुते भेदं स स्याद्दाराभिलाषकः ॥ ६९ ॥

द्वितीयो दाराभिलाषकः

त्वद्भार्यां रूपसंपन्नां नवयौवनशोभिताम् ।
ममाग्रेऽवर्णयद्राजा सापेक्ष इव लक्षितः ॥ ७० ॥

त्वयि जीवत्यलभ्यत्वात्तव द्रोहं विधास्यति ।
दाराभिलाषभेदोऽयमेवं वा परिकीर्तितः ॥ ७१ ॥

अङ्गभङ्गकः

अयमस्मिन् कुले जातः कदाचिद्राज्यमिच्छति ।
अङ्गुलिं वा तथा नेत्रे सन्ततिं वा धनानि च ॥ ७२ ॥

हर्तुमिच्छत्ययं राजा सर्वथा तत्करिष्यति ।
इति यो निर्मितो भेदः सोऽङ्गभङ्ग इति स्मृतः ॥ ७३ ॥

सम्यग्भेदेन शत्रूणां भिनत्ति प्रकृतिं तु यः ।
भेदवज्रेण [1] तद्भिन्नं हृदयं प्रतिभूभुजाम् ॥ ७४ ॥

[2] अर्थहारप्रभेदेन स्वाधिकारव्ययेन च ।
अलब्धवेतनत्वेन मानापहरणेन च ॥ ७५ ॥

द्विषतां कारणैरेभिर्विरक्ता ये च मन्त्रिणः ।
अमात्याः सचिवाश्चैव तथा सामन्तमान्यकाः ॥ ७६ ॥

---

[1] सद्भिन्नं-क. [2] अर्कहार-क.

भृत्याश्च बान्धवाश्चैव ये चान्तर्वर्तिनो नराः ।
युद्धबुद्धिसहाया ये तेषां दानं प्रयोजयेत् ॥ ७७ ॥

अन्ये ये लोभसंयुक्ता व्यसनासक्तचेतसः ।
तेभ्योऽपि दानं युञ्जीत नृपः शत्रुजिघांसया ॥ ७८ ॥

षोडशोपप्रदानभेदाः

अभीष्टं हायनं देश्यं करजं दन्तिसप्तिजम् ।
ग्रामजं शासनं भूषा वसनं प्रतिपत्तिजम् ॥ ७९ ॥

आस्तरं रुक्मजं कन्यादेश्यं वेलाकरं तथा ।
उपप्रदानमेवं तु प्रोक्तं षोडशधा बुधैः ॥ ८० ॥

अभीष्टम्

यस्मै यद्रोचते वस्तु तस्मै योग्यानुसारतः ।
यद्दीयते तदाख्यातमभीष्टं दानमुत्तमम् ॥ ८१ ॥

हायनम्

एकसंवत्सरं यावत्कुटुम्बभरणक्षमम् ।
यस्य यद्दीयते तस्य तद्दानं हायनं स्मृतम् ॥ ८२ ॥

देश्यम्

[1] यद्देशेऽभ्युदितं दानं तद्दानं देश्यमुच्यते ।

करजम्

राष्ट्रोत्थं धनधान्यं यत्तत्स्मृतं करजं बुधैः ॥ ८३ ॥

दन्तिजम्

वारणस्य प्रदानं यत्तद्दानं दन्तिसञ्ज्ञिकम् ।

सप्तिजम्

हयस्य दानमाख्यातं सप्तिजं नीतिकोविदैः ॥ ८४ ॥

---

[1] यद्देशेऽभ्युचितं—क.

ग्रामजम्

अगृहीतकरो वापि प्रगृहीतकरोऽपि च ।
ग्रामः प्रदीयते यत्तु तद्दानं ग्रामजं मतम् ॥ ८५ ॥

शासनम्

पुत्रपौत्रप्रपौत्रेषु दत्तं नैव विलङ्घ्यते ।
अबाध्यत्वेन यत्किञ्चित्तद्दानं शासनं स्मृतम् ॥ ८६ ॥

भूषणाख्यम्

रत्नेन जातरूपेण घटितं चारु भूषणम् ।
दीयते यत्तु तद्दानं भूषणाख्यमुदाहृतम् ॥ ८७ ॥

वसनाख्यम्

नानावर्णविचित्राणि नानासूत्रमयानि च ।
नानादेशसमुत्थानि सूक्ष्माणि च घनानि च ॥ ८८ ॥
वस्त्राण्यतिमनोज्ञानि प्रभूतानि प्रसादतः ।
दीयन्ते यत्तु तद्दानं वसनं परिकीर्तितम् ॥ ८९ ॥

प्रतिपत्तिजम्

आसनं चामरं छत्रं यानं सन्माननोचितम् ।
नाम वा दीयते यत्तु तद्दानं प्रतिपत्तिजम् ॥ ९० ॥

आकरजम्

रौप्यकाञ्चनरत्नानि संजायन्ते यतो भुवः ।
सा खनिर्दीयते यत्तु तदाकरमिति स्मृतम् ॥ ९१ ॥

रुक्मजम्

दीयन्ते यत्र [1] रुक्माणि प्रभूतानि [2] पराणि च ।
तद्दानं रुक्मजं प्रोक्तमर्थशास्त्रविचक्षणैः ॥ ९२ ॥

---

[1] निष्काणि—क. [2] वराणि—क.

कन्यादानम्

भूषणैर्भूषिता कन्या लक्षणैश्च समन्विता ।
विधिवद्दीयते यत्तु कन्यादानं तदुच्यते ॥ ९३ ॥

वेश्यदानम्

रूपयौवनसंपन्ना नृत्यगीतविशारदा ।
वेश्या प्रदीयते यत्तु तद्दानं वेश्यमुच्यते ॥ ९४ ॥

वेलाकरम्

यत्राढ्या बहवः सन्ति बहिस्तस्योपजीविनः ।
रत्नाकरस्य वेलायां बहुपण्यप्रचारिणः ॥ ९५ ॥

अपूर्वो[1]पायलोद्भूतं पत्तनं बहुवस्तुदम ।
दीयते यत्तु तद्दानं वेलाकरमिति स्मृतम् ॥ ९६ ॥

यदसाध्यं हि भेदस्य तद्दानेन प्रसाध्यते ।
सर्वेषामप्युपायानां दानं श्रेष्ठतमं स्मृतम् ॥ ९७ ॥

दानशीलो नृपो लोके देववत्पूज्यते जनैः ।

दण्डप्रयोगे हेतुकथनम्

उपायत्रितयेनापि यो न शक्यो भवेद्रिपुः ॥ ९८ ॥

तस्य दण्डं प्रयुञ्जीत बलवान्यदि भूपतिः ।
सामादीनां प्रयोक्तारमशक्तं मन्यते रिपुः ॥ ९९ ॥

तस्माद्दण्डं प्रयुञ्जीत दण्डो हि वशकृन्नृणाम् ।
बलिष्ठेन तथा कार्या दण्डा द्वादशभेदजाः ॥ १०० ॥

अशक्तेन त्रयं कार्यमेवं पञ्चदश स्मृताः ।
अन्ये च दण्डाः कर्तव्या भूभृता धर्ममूर्तिना ॥ १०१ ॥

क्लेशार्तिहरणाच्चैव जनानां वृत्तरक्षणात् ।

---

[1] अपूर्वोपयिनोद्भूतं—क.

द्वादशदण्डभेदास्तत्स्वरूपं च

देशनाशश्च शत्रूणां जनाङ्गच्छेदकस्तथा ॥ १०२ ॥
गोनृभूधान्यहरणो बन्दिग्राहस्तथा परः ।
देशहारो धनाहारः सर्वस्वहरणः परः ॥ १०३ ॥
दुर्गभङ्गः स्थानदाहो देशनिर्वासकस्तथा ।
युद्धं वधो महादण्डः शत्रुसंहारकारकः ॥ १०४ ॥

देशनाशकदण्डः

ग्रामाश्च यत्र दह्यन्ते स दण्डो देशनाशकः ।

जनाङ्गच्छेदकदण्डः

नासिका श्रवणद्वन्द्वं छिद्यते देशवासिनाम् ॥ १०५ ॥
नराणां यत्र दण्डोऽसौ जनाङ्गच्छेदनो मतः ।

गोग्रहदण्डः

देशजाः पशवः सर्वे गृह्यन्ते सहसा बलात् ॥ १०६ ॥
दण्डोऽसौ गोग्रहो नाम विख्यातः परभूमिषु ।

धान्यहरणदण्डः

गर्तेषु पिहितं धान्यं क्षेत्रे सस्यशिखागतम् ॥ १०७ ॥
आपणे पुञ्जितं यच्च खले राशीकृतं च यत् ।
तत्सर्वं ह्रियते यच्च रिपुराष्ट्रेषु संस्थितम् ॥ १०८ ॥
दण्डोऽसौ धान्यहरणो देशदुर्भिक्षकारणम् ।

बन्दिग्राहदण्डः

कुटुम्बिनः गृहस्था ये धनिका व्यवहारिणः ॥ १०९ ॥
नीयन्ते यत्र बध्वा ते स बन्दिग्राह उच्यते ।

देशहारकदण्डः

जनानामभयं दत्वा भयं छित्वा तथान्यजम् ॥ ११० ॥
आत्मसात्क्रियते राष्ट्रं स दण्डो देशहारकः ।

धनहारदण्डः

आक्रम्य सैनिकैर्ग्रामान् बलात्कृत्वा स्व[1]सम्मतम् ॥ १११ ॥
आहरेत्काञ्चनं दण्डो धनहारः स उच्यते ।

सर्वस्वहरणदण्डः

महत्या सेनया युक्तः ख्यातं नगरपट्टणम् ॥ ११२ ॥
आवेष्ट्य लुण्ठयेद्यत्र धनधान्यगवादिकम् ।
लोहभाण्डानि वस्त्राणि गृहोपकरणानि च ॥ ११३ ॥
यस्माच्च गृह्यते सर्वं सर्वस्वहरणो हि सः ।

दुर्गभङ्गदण्डः

नानाविधैरुपायैर्यत्परेषां दुर्गसाधनम् ॥ ११४ ॥
क्रियते स समाख्यातो दुर्गभङ्गाभिधानवान् ।

स्थानदाहकदण्डः

यस्मिन् पुरे वसेत्कर्ता सपुत्रबलवाहनः ॥ ११५ ॥
तत्पुरं राजनिलयं साट्टप्राकारतोरणम् ।
अन्तःपुरपुरन्ध्रीणां रम्याणि भवनानि च ॥ ११६ ॥
निकेतनानि पुत्राणामपत्यानां गृहाणि च ।
सचिवानां निवासांश्च मन्त्रिणां सदनानि च ॥ ११७ ॥
अन्येषां च मनुष्याणां मन्दिराणि बहूनि च ।
मन्दुरा गजशालाश्च विविधान्यापणानि च ॥ ११८ ॥
भस्मसात्कुरुते यस्तु स दण्डः स्थानदाहकः ।

देशनिर्वासकदण्डः

देशत्यागात्परिभ्रष्टो हतभोगः पदच्युतः ॥ ११९ ॥

---

[1] संमतम् –क.

[1]गिरीणां कन्दराक्रान्तः निकुञ्जभवनाश्रयः ।
वियुक्तो दारपुत्रैश्च बन्धुभिः सचिवैस्तथा ॥ १२० ॥
क्षुत्पिपासापरीतश्च चिन्ताशोकसमन्वितः ।
यानासनविहीनश्च गजवाजिविवर्जितः ॥ १२१ ॥
तत एवंविधो दण्डो देशनिर्वासकः स्मृतः ।

युद्धवधदण्डः

युद्धे शत्रुवधो यस्तु दण्डो युद्धवधाभिधः ॥ १२२ ॥
सन्ध्यादीन् षड्गुणांश्चैव सामादीनप्युपायकान् ।
सार्वभौमत्वमाप्नोति यथाकालं प्रयोजयन् ॥ १२३ ॥
तस्मान्नित्यं प्रयोक्तव्या एते वैरिषु भूभृता ।
ज्ञात्वा स्वरबलं राजा मुहूर्तबलमेव च ॥ १२४ ॥
कुर्वीत सर्वकार्याणि सङ्ग्रामं तु विशेषतः ।
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ॥ १२५ ॥
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ।

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले आसनद्वैधीभावसमाश्रय चतुरुपायवर्णनं नाम द्वादशस्तरङ्गः

---

## अथ त्रयोदशस्तरङ्गः

कीदृशं तत्स्वरबलं मुहूर्तबलमेव च ।
अद्यमेतत्समाख्याहि तच्छ्रोतुं मेऽस्ति कौतुकम् ॥ १ ॥
पुत्र ! ते कथयिष्यामि यस्य श्रवणमीप्सितम् ।
यद्विज्ञाय प्रवृत्तस्य जयः करतलस्थितः ॥ २ ॥

स्वरबलम्

[2]अथातः संप्रवक्ष्यामि शरीरस्थं स्वरोदयम् ।

---

[1] गिरिकन्दरकान्तारनिकुञ्जभवनाश्रयः—क. मु.  [2] नृपतिजयचर्या (पुट ४४).

हंसचारस्वरूपेण येन ज्ञानं त्रिकालजम् ॥ ३ ॥

नाभिस्थिता कुण्डलिनी शक्तिर्भुजगरूपिणी ।
ऊर्ध्वगा दशनाड्यस्तु दश चाधःस्थितास्ततः ॥ ४ ॥

द्वे द्वे तिर्यग्गते नाड्यौ चतुर्विंशतिसङ्ख्यया ।
कुण्डलिन्या महाशक्तेर्मूल[1]मार्गा भवन्त्यमी ॥ ५ ॥

ताभ्यः सूक्ष्ममुखा नाड्यः शरीरस्यातिपोषकाः ।
सङ्ख्यया च समुद्दिष्टाः सप्तसप्तशतानि च ॥ ६ ॥

प्रधाना दश नाड्यस्तु दश वायुप्रवाहिकाः ।
नामानि नाडिकानां च वातानां च वदाम्यहम् ॥ ७ ॥

प्रधाननाडीनामानि

पिङ्गळेडा सुषुम्ना च गान्धारी हस्तिजिह्विका ।
पूषा जया बला व्यूषा कुहूः शङ्खिनिका तथा ॥ ८ ॥

[2]ताभ्यः सूक्ष्ममुखा नाड्यो द्विसप्ततिसहस्रकम् ।
प्रकटं प्राणसंचारो लक्ष्यते देहमध्यत ॥ ९ ॥

वायुनामानि

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ १० ॥

चन्द्रसूर्यसङ्क्रमाः

इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ।
इडानाडीस्थितश्चन्द्रः पिङ्गला भानुवाहिनी ॥ ११ ॥

सुषुम्ना शम्भुरूपेण [3]हंसः शम्भुस्वरूपकः ।
[4]हकारो निर्गमे प्रोक्तः सशक्तिः स्यात्प्रवेशने ॥ १२ ॥

---

[1] व्याख्यानानुसारेण 'मूलमार्गाद्भवन्त्यमूः' इति भवितव्यम्. [2] आकरग्रन्थे क्रमव्यत्यासः. [3] शम्भुर्हंसस्वरूपकः-नर-च. [4] हकारः शंभुरूपक इत्यर्थः.

शक्तिरूपः स्थितश्चन्द्रो वामनाडीप्रवाहकः ।
[1]दक्षचारप्रवाहे तु शम्भुरूपी दिवाकरः ॥ १३ ॥

एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति ताः ।
पृथिवी सलिलं तेजो वायुराकाशमेव च ॥ १४ ॥

मध्ये पृथ्वी अधश्चापो वह्निरूर्ध्वगतो भवेत् ।
तिर्यग्वायुप्रवाहश्च नभो वहति संक्रमे ॥ १५ ॥

पृथ्व्याद्येकैकतत्त्वे स्यादेकैकघटिकोदयः ।
अहोरात्रस्य मध्ये स्युस्तेन द्वादशसंक्रमाः ॥ १६ ॥

[2]अष्टाङ्गुलो भवेद्वह्निरनिलश्चतुरङ्गुलः ।
दिवाकराङ्गुला पृथ्वी सलिलं षोडशाङ्गुलम् ॥ १७ ॥

चापाकारो वहेद्वायुस्त्रिकोणो वह्निरुच्यते ।
चतुरश्रस्तु माहेयो वर्तुलो वारुणः स्मृतः ॥ १८ ॥

कटुस्वादो भवेद्वायुस्तीक्ष्णस्वादोऽनलो भवेत् ।
कषायकस्तु माहेयो मधुरो वारुणो मतः ॥ १९ ॥

शुक्लप्रतिपदो वायुश्चन्द्रस्त्वर्कस्त्र्यहं त्र्यहम् ।
[2]पक्षशस्तोऽनया वृत्त्या विपर्यासे तु दुःखदः ॥ २० ॥

चन्द्रोदये यदा सूर्यश्चन्द्रः सूर्योदये यदा ।
अशुभं [3]ग्लानिरुद्वेगः शुभं सर्वं निजोदये ॥ २१ ॥

शशिनं चारयेद्रात्रौ चारयेदह्नि भास्करम् ।
इत्यभ्यासरतो नित्यं स योगी नात्र संशयः ॥ २२ ॥

यात्रादाने विवाहे च वस्त्रालङ्कारभूषणे ।
शुभकर्मणि सन्धौ च प्रवेशे च शशी शुभः ॥ २३ ॥

विवादद्यूतयुद्धेषु स्नानभोजन[4]सङ्गमे ।
व्यवहारे भये भङ्गे सूर्यनाडी प्रशस्यते ॥ २४ ॥

---

[1] दक्षनाडी प्रवाहे—नर-च. [2] अष्टाङ्गुल इत्यारभ्य पक्षशस्तः इत्यन्तं आकरे न दृश्यते. [3] हानिरुद्वेगस्ताडने जायते ध्रुवम्—नर-च. [4] मैथुने—नर-च.

होमश्च शान्तिकश्चैव दिव्यौषधिरसायनम् ।
[1] विद्यावस्त्रं स्थितं कर्म कर्तव्यं च निशाकरे ॥ २५ ॥

[2] उद्यत्स्वरपदे चैव कृता यात्रातिसिद्धिदा ।
चन्द्रे समं पदं कुर्यात्सूर्ये च विषमं सदा ॥ २६ ॥

पूर्वं पूर्वं पुरस्कृत्य यात्रा भवति सिद्धिदा ।
वामचारप्रवाहे तु न गच्छेत्पूर्वमुत्तरम् ॥ २७ ॥

दक्षचारप्रवाहे तु न गच्छेद्याम्यपश्चिमे ।
वामे दक्षिणतो वापि यत्र वायुः प्रवर्तते ॥ २८ ॥

आदौ तत्पादमुद्धृत्य यो गच्छेत्कार्यसिद्धये ।
युद्धकाले यदा चन्द्रः स्थायी जयति निश्चितम् ॥ २९ ॥

यदा सूर्यप्रवाहस्तु यायी विजयते सदा ।
पृथ्वीजले शुभे तत्त्वे तेजोमिश्रफलोदयम् ॥ ३० ॥

हानिमृत्युकरौ पुंसामशुभौ व्योममारुतौ ।
पार्थिवे सक्षतं युद्धं सन्धिर्भवति वारुणे ॥ ३१ ॥

विजयो वह्नितत्त्वे च वायौ भङ्गो मृतिस्तु खे ।
शयने वा प्रसङ्गे वा युवत्यालिङ्गनेऽपि वा ॥ ३२ ॥

यः सूर्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः ।
जीवेन गृह्यते जीवो जीवं जीवस्य दापयेत् ॥ ३३ ॥

जीवस्थानगते जीवे बालाजीवान्तगा (व) दशा ।
भुक्तमात्रेऽथ मन्दाग्नौ स्त्रीणां वश्यार्थकर्मणि ॥ ३४ ॥

[3] न युद्धं सूर्यवाहेन कर्तव्यं सर्वदा बुधैः ।
श्रान्ते शोके तृषार्ते च ज्वलिते मूर्छितेऽपि वा ॥ ३५ ॥

सज्जनस्वामिबोधार्थे चन्द्रचारं प्रवाहयेत् ।
गर्भप्रश्ने यदा दूतः पूर्णे पुत्रः प्रजायते ॥ ३६ ॥

शून्ये कन्या युगे युग्मं गर्भपातश्च सङ्क्रमे ।
भास्करे विषमा वर्णा समवर्णा निशाकरे ॥ ३७ ॥

---

[1] विद्यारम्भं स्थिरं कार्यं—नर—च. [2] वहन्नाडीपदेऽग्रे च कृते—नरा—च.
[3] शयनं सूर्य—क. नर—च.

वाहस्थो भाषते दूतस्तदा लाभोऽन्यथा न हि ।
ऊर्ध्ववामाग्रतो दूतो [1](ज्ञेयो वामपदे स्थितः ॥ ३८ ॥
दक्षे पृष्ठे तथाधस्तात्सूर्यवाहगतो मतः ।
पूर्णनाडी स्थितो दूतो) यत्पृच्छति शुभाशुभम् ॥ ३९ ॥
तत्सर्वसिद्धिदं ज्ञेयं शून्ये शून्यं न संशयः ।
आदौ शून्यगतः पृच्छेत्पश्चात्पूर्णो विशेद्यदि ॥ ४० ॥
तदा सर्वार्थसिद्धिः [2]स्याद्वामे वामं न संशयः ।
पृथिव्याद्येन तत्त्वेन [3]दिनमासादिकैः फलम् ॥ ४१ ॥
शोभनं च तथा दुष्टं व्योममारुतवह्निभिः ।
श्वासप्रवेशकाले तु दूतो [4]वाञ्छति जल्पितम् ॥ ४२ ॥
इति देहस्वरः प्रोक्तः शिवालिखितमुच्यते ।

शिवालिखितम्

इमं कश्चिदविज्ञाय स्वकार्यं यः करिष्यति ॥ ४३ ॥
न भविष्यन्ति तस्यैव सर्वकामसमृद्धयः ।
न सौरं चान्द्रमानं वा तस्यैवं नान्यखेटजम् ॥ ४४ ॥
न शाकुनफलं तस्य यस्येदं करसंस्थितम् ।

षण्मासविषये शून्यादिरेखाक्रमः

चैत्रवैशाखमासौ द्वौ नभोभाद्रपदावपि ॥ ४५ ॥
माघफाल्गुनमासानामेका पद्धतिरीरिता ।
शून्यं कालं तथावर्तममृतं रोगसंज्ञिकम् ॥ ४६ ॥
पञ्च वेलास्तु कथिता घटिके द्वे मुहूर्तकम् ।

चतुर्मासविषये

आश्वयुक्कार्तिके मासि सहस्यपि सहस्यके ॥ ४७ ॥
रोगामृते च शून्यं च कालमावर्तनं तथा ।

---

[1] क. पुस्तके नास्ति. [2] दिति जानीहि निश्चितम्—नर. च. [3] दिनमासाब्दकैः—नर-च. [4] जल्पति वाञ्छितम्—नर-च.

द्विमासविषये

शून्याख्यममृतं चैवमावर्तं रोगसंज्ञकम् ॥ ४८ ॥
कालरेखायवाः प्रोक्ता ज्येष्ठाषाढद्विमासयोः ।

रौद्रादिपञ्चदश मुहूर्ताः

रौद्रश्वेतजमैत्रा-
स्तथा परौ चक्रवाकसावित्रौ ॥ ४९ ॥
वैरोचनजयदेवा-
वभिजातो रावणो मुहूर्तोऽन्यः ।
बलवदनो विजयाख्यो
नन्दनयमसोमभाग्यवत्संज्ञाः ॥ ५० ॥

घटिकाद्वयपरिमाणं
प्रवर्तन्ते दिवानिशं क्रमशः ।
रौद्रस्तथा श्वेतजचक्रवाक-
वैरोचना रावणबालवाख्यौ ॥ ५१ ॥

यमस्तथैव क्रमशो मुहूर्ता
भान्वादिवारेषु भवेयुराद्याः ।
रौद्रे दुःखं बन्धनं कार्यनाशो
राज्ञां पूजा श्वेतजे भूमिलाभः ॥ ५२ ॥

मैत्रे मित्राद्राज्य[1]मर्थागमश्च
श्रेयोहानिर्वञ्चना चक्रवाके ।
सावित्रनाम्नि प्रभवन्ति विद्याः
वैरोचने शत्रुहतिः प्रदिष्टा ॥ ५३ ॥

प्रारम्भसिद्धिर्जयदेवसंज्ञे
कार्योऽभिजाते हयरोहणादिः ।
बलवदनमुहूर्ते रावणे चाशुभं स्या-
ज्जयति विजयसंज्ञे नन्दने नन्दनीयः ॥ ५४ ॥

यमे चाशुभसंप्राप्तिः सौम्ये स्याद्राजमाननम् ।
भाग्ये स्त्रीसङ्गमाद्यं च मुहूर्तानां क्रमात्फलम् ॥ ५५ ॥

---

[1] मित्रागमश्च—क.

## भान्वादिवासरेषु घटिकाद्वयपरिमितानि (दिवा) रौद्रादिमुहूर्तानि.

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| भानुवासरे | .... | रौ | श्वे | मै | च | सा | वै | ज | अ | रा | ब | वि | नं | य | सौ | भा |
| सोमवासरे | .... | श्वे | मै | च | सा | वै | ज | अ | रा | ब | वि | नं | य | सौ | भा | रौ |
| भौमवासरे | .... | च | सा | वै | ज | अ | रा | ब | वि | नं | य | सौ | भा | रौ | श्वे | मै |
| बुधवासरे | .... | वै | ज | अ | रा | ब | वि | नं | य | सौ | भा | रौ | श्वे | मै | च | सा |
| गुरुवासरे | .... | रा | ब | वि | नं | य | सौ | भा | रौ | श्वे | मै | च | सा | वै | ज | अ |
| शुक्रवासरे | .... | ब | वि | नं | य | सौ | भा | रौ | श्वे | मै | च | सा | वै | ज | अ | रा |
| शनिवासरे | .... | य | सौ | भा | रौ | श्वे | मै | च | सा | वै | ज | अ | रा | ब | वि | नं |

(रात्रावप्येवम्)

शून्यादिपञ्चरेखास्वरूपक्रमफलानि

शून्यं बिन्दुसमाकारममृतं चोर्ध्वरेखया। कालं काकपदं ज्ञेयमावर्तं धनुराकृति ॥ ५६ ॥

कर्तरी रोगरेखा च पञ्चरेखाः प्रकीर्तिताः। शून्ये शून्यं भवेत्कार्यमावर्ते विभ्रमो भवेत् ॥ ५७ ॥

कालरेखा भवेन्मृत्युरर्थहानिश्च कर्तरी। अमृतेन भवेत्सिद्धिः सद्यो भवति निश्चयः ॥ ५८ ॥

रविसौम्यार्किवारेषु आदौ शून्यं प्रजायते। गुरुचन्द्रे तथाऽवर्तममृताख्यं सिते कुजे ॥ ५९ ॥

चैत्र–वैशाख–श्रावण–भाद्रपद–माघ–फाल्गुनमासेषु

भा. बु. श.—

सो. गु.—

कु. शु.—

एकैकस्या अपि रेखाया घटिकाद्वयपरिमितः कालः। (रात्रावप्येवम्)

रविसौम्यार्कजेष्वादौ रोगरेखां लिखेत्तथा । इन्दौ जीवेऽमृतार्धं च कालार्धं भौमशुक्रयोः ॥ ६० ॥

चतुर्णामेवं मासानां पञ्चरेखाक्रमस्त्वयम् ।

आश्वयुज–कार्तिक–मार्गशीर्ष–पुष्यमासेषु

भा. बु. श.—

सो. गु.—

शु. गु.—

एकैकस्या अपि रेखाया घटिकाद्वयपरिमितः कालः । (रात्रावप्येवम्)

रवीन्दुजार्कजेष्वादौ शून्यरेखा भवेत्तथा ॥ ६१ ॥

इन्दौ गुरौ तथावर्तमर्घरोगं कुजे सिते ।
पञ्चरेखाक्रमस्त्वेष लेख्यो मासद्वये भवेत् ॥ ६२ ॥

ज्येष्ठाषाढमासयोः

भा. बु. श.—

सो. गु.— [1]

कु. शु.—

एकैकस्या अपि रेखाया घटिकाद्वयपरिमितः कालः । (रात्रावप्येवम्)

[1] अत्रादौ स्थिता अमृतरेखा अवसाने बिन्दुरेखातः परं योजनीया.

## घटिकाचतुष्टयपरिमितानां सत्त्वरजस्तमोवेलानां ज्ञानोपायः

| | | दिवा | | | | | | | | | रात्रौ | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| भानुवासरे | .... | त त | स स | र र | त त | स स | र र | त त | स, स | र र | त त | स स | र र | त त | स स | र र |
| सोमवासरे | .... | स स | र र | त त | स स | र र | त त | स स | र, र | त त | स स | र र | त त | स स | र र | त त |
| भौमवासरे | .... | र र | त त | स स | र र | त त | स स | र र | त, त | स स | र र | त त | स स | र र | त त | स स |
| बुधवासरे | .... | त त | स स | र र | त त | स स | र र | त त | स, स | र र | त त | स स | र र | त त | स स | र र |
| गुरुवासरे | .... | स स | र र | त त | स स | र र | त त | स स | र, र | त त | स स | र र | त त | स स | र र | त त |
| शुक्रवासरे | .... | र र | त त | स स | र र | त त | स स | र र | त, त | स स | र र | त त | स स | र र | त त | स स |
| शनिवासरे | .... | त त | स स | र र | त त | स स | र र | त त | स, स | र र | त त | स स | र र | त त | स स | र र |

अङ्गनाधनुषि मीनकर्कटे
सत्त्वकालमरणं तु यायिनाम् ।
कौलिमेषवृषवृश्चिकराशौ
राजसे तु मरणं तु यायिनाम् ॥ ६३ ॥

सिंहकुम्भमृगयुग्मराशय-
स्तामसे तु मरणं तु यायिनाम् ।
सत्त्वं रजस्तम इति वेलाक्रम इहोच्यते ।
चतुश्चतुर्घटी चैषां भूयो भूयः क्रमादिह ॥ ६४ ॥

गुरुसोमे सत्त्ववेला भृगुभौमे रजस्तथा ।
शन्यर्कसौम्यवारेषु तमस्तु द्विमुहूर्तकम् ॥ ६५ ॥

### शून्यादिवेलाफलम्

शून्यबिन्दौ च मृत्युः स्यात्कालबिन्दुश्च मृत्युदः ।
आवर्ते लभते युद्धममृतं रोगनाशनम् ॥ ६६ ॥

रोगेण रोगसंप्राप्तिरिति बिन्दुफलं क्रमात् ।
न तिथिर्न च नक्षत्रं न योगः करणं तथा ॥ ६७ ॥

अमृतस्य तु वेलायां सर्वकार्याणि कारयेत् ।

### सत्त्वादिवेलाः

तामसं सात्त्विकं चैव राजसं च त्रिधा मतम् ॥ ६८ ॥

तत्तद्ददाति बहुधा स्वनामसदृशं फलम् ।
रजोवेला भवेच्छीघ्रं सत्त्ववेला स्थिरं तथा ॥ ६९ ॥

एवं ज्ञात्वा मुहूर्तानां बलं गच्छेद्विचक्षणः ।
इदानीं भूबलं वक्ष्ये विजयो येन लभ्यते ॥ ७० ॥

भूबलचक्रं तदुद्धारक्रमश्च




चतुरश्रं लिखेच्चक्रं तन्मध्ये चाष्टकोणकम् ।
आरभ्य पूर्वदिग्भागाद्रेखामावर्तयेत्सुधीः ॥ ७१ ॥

पूर्वादारभ्य वायव्यं वायव्याद्याम्यमानयेत् ।
याम्यादीशानदिग्भागमैशानात्पश्चिमं नयेत् ॥ ७२ ॥

पश्चिमात्कोणमाग्नेयमाग्नेयादुत्तरं नयेत् ।
उत्तरान्नैर्ऋतं कोणं नैर्ऋतादैन्द्रमानयेत् ॥ ७३ ॥

एवमष्टाश्रकं चक्रं जायते सन्निवेशतः ।
तत्र चैत्रादिमासानां विन्यासो दिक्षु वक्ष्यते ॥ ७४ ॥

भूबलचक्रे मासविन्यासक्रमः

चैत्रमासार्धवैशाखं पूर्वभागे न्यसेत्सदा ।
अर्धं वैशाखमासस्य ज्येष्ठं वायव्यतः क्षिपेत् ॥ ७५ ॥

आषाढं श्रावणस्यार्धं याम्यभागे प्रकल्पयेत् ।
श्रावणस्यार्धमैशान्यां नभस्यं च विनिक्षिपेत् ॥ ७६ ॥

आश्विजं कार्तिकस्यार्धं वारुण्यां दिशि विन्यसेत् ।
कार्तिकार्धं मार्गशीर्षं हुताशनदिशि क्षिपेत् ॥ ७७ ॥

पौषमर्धं च माघस्य कौबेर्यां ककुभि क्षिपेत् ।
माघस्यार्धं फाल्गुनं च नैर्ऋत्यां दिशि कल्पयेत् ॥ ७८ ॥

भूभ्रमणक्रमः

यस्यां दिशि स्थितो मासः सार्धस्तत्रोदयो भवेत् ।
तावत्कालं भुवः सोऽपि तावन्नाडीचतुष्टयम् ॥ ७९ ॥

यामार्धं तु बलं भूमेः क्रमाद्दिक्षु व्यवस्थितम् ।
रेखाविन्यासमार्गेण क्रमाद्भवति मेदिनी ॥ ८० ॥

उदयादस्तपर्यन्तमस्तादप्युदयावधि ।
चतुर्यामेषु मेदिन्या दिक्षु भ्रमणमष्टसु ॥ ८१ ॥

भूबलं पृष्ठतः कार्यं दक्षिणे वा जिगीषुणा ।
एवं कृतानि कार्याणि सिद्धिं यान्ति न संशयः ॥ ८२ ॥

अस्यैव चक्रराजस्य कोणानाश्रित्य विन्यसेत् ।

भूबलचक्रे अक्षरवर्गाष्टकविन्यासक्रमः

अष्टौ वर्गानकारादीन् प्रादक्षिण्येन पूर्वतः ॥ ८३ ॥

अवर्गे गरुडः प्रोक्तः कवर्गे पृषदंशकः ।
चवर्गे मृगराजः स्याट्टवर्गे सरमासुतः ॥ ८४ ॥

तवर्गे पन्नगः प्रोक्तः पवर्गे मूषकस्तथा ।
यवर्गे तु गजः प्रोक्तः शवर्गे शश इष्यते ॥ ८५ ॥

पूर्वाग्नैर्ऋतपर्यन्तं भक्षकाः समवस्थिताः ।
[1] (पश्चिमाद्रौद्रदिग्भागे यावद्भक्ष्या व्यवस्थिताः ॥ ८६ ॥

भक्षकात्पञ्चमस्थाने स्थितो भवति भक्ष्यकः ।)
तस्माद्विचार्य यत्नेन स्वशत्रुं पञ्चतां नयेत् ॥ ८७ ॥

भक्ष्यस्थाने स्थिते शत्रौ भक्षकस्थानमाश्रयेत् ।

ब्रह्माण्याद्यष्टयोगिन्यस्तत्स्थानं च

ब्रह्माणी पूर्वदिग्भागे प्रतिपन्नवमीतिथौ ॥ ८८ ॥

द्वितीयायां दशम्यां च माहेशी सौम्यदिग्गता ।
एकादश्यां तृतीयायां कौमारी वह्निदिग्गता ॥ ८९ ॥

द्वादश्यां च चतुर्थ्यां च वैष्णवी नैर्ऋतौ स्थिता ।
पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे स्थिता ॥ ९० ॥

चतुर्दश्यां तथा षष्ठ्यामिन्द्राणी पश्चिमोदया ।
सप्तम्यां पौर्णमास्यां च वायव्ये चण्डिका स्थिता ॥ ९१ ॥

अमावास्याष्टमीतिथ्योर्महालक्ष्मीस्तथेशगा ।
दक्षिणे पृष्ठतः कार्या योगिन्यो विजिगीषुणा ॥ ९२ ॥

योगिनीनां बलं चैव सर्वेषामुत्तमोत्तमम् ।
एवं स्वरमुहूर्तानां बलं भूमेस्तथैव च ॥ ९३ ॥

बलं वर्गस्य योगिन्याः ज्ञात्वा गच्छन् जयी भवेत् ।

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले स्वरमुहूर्तभूमिवर्गयोगिनीबलवर्णनं नाम त्रयोदशस्तरङ्गः

---

[1] क. पुस्तके नास्ति.

## अथ चतुर्दशस्तरङ्गः

स्वरादीनां बलं ज्ञात्वा यात्रां कुर्यादितीरितम् ।
कथं यात्रा विधातव्या शत्रूणां विजये नृपैः ॥ १ ॥

एतन्मह्यं समाख्याहि श्रोतुं कौतुकितं मनः ।
कुमार ! ते प्रवक्ष्यामि यच्छ्रोतुमभिकाङ्क्षसे ॥ २ ॥

### राज्ञां दिग्विजययात्राप्रस्थानक्रमः

युद्धपूर्वदिने राजा कृतोत्साहः सभागतः ।
कुमारान्मण्डलाधीशान् सामन्तान्मान्यकानपि ॥ ३ ॥

सुवर्णवस्त्राभरणैस्तेषां ये सैनिकाः स्थिताः ।
वाग्भिः प्रोत्साहयेत्तांश्च गुणकीर्तनमाननैः ॥ ४ ॥

तेषां प्रतिज्ञाः संश्रुत्य सुभटानां नृपोत्तमः ।
मातङ्गान्मदसंयुक्तान् वाजिनश्च जवाधिकान् । ५ ॥

दद्याद्यथार्हं सर्वेषां सङ्ग्रामजयकाङ्क्षया ।
ततो विसर्जयेत्सर्वान् युद्धाय कृतनिश्चयः ॥ ६ ॥

तस्यां रात्रौ बलारावैः पूरयेद्गगनाङ्गणम् ।
महातूर्यप्रघोषैश्च काहलाशङ्खनिःस्वनैः ॥ ७ ॥

सिंहनादैर्भटानां च त्रासयेद्रिपुसैनिकान् ।
अधिवास्य ततो राजा शस्त्राणि कुलदेवताः ॥ ८ ॥

ततः शयीत मेदिन्यां कुशानास्तीर्य यत्नतः ।
ततः प्रातः समुत्थाय निरीक्ष्य धृतदर्पणः ॥ ९ ॥

स्नात्वा तीर्थजलैः पुण्यैः श्वेताम्बरविभूषितः ।
समाराध्य जगन्नाथमभीप्सितफलप्रदम् ॥ १० ॥

धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनार्पयेत् ।
तदाशिषः समादाय नीराजितजयद्विपः ॥ ११ ॥

दक्षिणाग्रखुरोल्लेखैर्हयानां हेषितैरपि ।
वामेतरविषाणाग्रवेष्टनेन करस्य च ॥ १२ ॥

बृंहितेन गजानां च जानीयाज्जयमञ्जसा ।
नराणां शुभवाक्यैश्च मङ्गलद्रव्यदर्शनैः ॥ १३ ॥

प्रदक्षिणगतैश्चापि भरद्वाजशिखण्डिनाम् ।
अन्यैश्च शकुनैर्भद्रैर्जयमङ्गलसूचकैः ॥ १४ ॥

दक्षिणाक्षिपरिस्पन्दं दक्षिणस्य भुजस्य च ।
मनसश्च प्रसादेन स्वानुकूलानिलेन च ॥ १५ ॥

एवं निमित्तैर्निश्चित्य जयं समर[1]दुर्जयम् ।
शुभस्थानस्थितैः सर्वैर्ग्रहैस्ताराभिरेव च ॥ १६ ॥

उदितेन स्वरेणाथ जयभूमिबलेन च ।
निमित्तैर्विजयोत्साही निर्गत्य निजमन्दिरात् ॥ १७ ॥

ताडयित्वा महाभेरीं प्रतिसैनिकभीषणाम् ।
धनुषां द्वे शते गत्वा तत्र स्थित्वा नृपोत्तमः ॥ १८ ॥

मेलयित्वा ततः सर्वमेवमाघोषयेत्ततः ।
दास्यामि तस्मै प्रयुतं राजानं हन्ति यो रणे ॥ १९ ॥

तत्कुमारप्रहर्तॄणां दास्यामि नियुतं तथा ।
सामन्तमण्डलाधीश[2]हर्तॄणामयुतं तथा ॥ २० ॥

तथैवामात्यहन्तॄणामयुतं पारितोषिकम् ।
प्रधानयोधहन्तॄणां दास्ये पञ्चसहस्रकम् ॥ २१ ॥

[3](त्रिसहस्रं प्रदास्यामि गजव्यूहनिघातिनाम् ।
सहस्रं प्रतिदास्यामि स्यन्दनौघविघातिनाम् ॥ २२ ॥

अश्वसादिनिहन्तॄणां प्रदास्ये शतपञ्चकम् ।)
शतं तस्मै प्रदास्यामि समानयति यः शिरः ॥ २३ ॥

एवं प्रलोभ्य तान् सर्वान् प्रयायाद्युद्धसम्मुखः ।
सुभटान् बलसंयुक्तान् हयविद्याविशारदान् ॥ २४ ॥

---

[1] दुर्जयः—क. [2] हंतॄणा—क. [3] इदमर्धत्रयं क. पुस्तके नास्ति.

वरवाजिसमारूढान् भूपरीक्षा विचक्षणान् ।
द्विशतं वा तदर्धं वा बलिनो हयसादिनः ॥ २५ ॥

पुरः प्रस्थापयेद्राजा [1] प्रतिव्यूहं विचक्षणान् ।

अश्वव्यूहोचिता भूमिः

अल्पवृक्षाचला [2] च्छिद्रे लङ्घनीयदरीस्थिता ॥ २६ ॥

विशर्करा विपङ्का भूरश्वव्यूहाय शस्यते ।

रथव्यूहोचिता भूमिः

निस्थाणुर्निष्कुटापङ्का निर्वल्मीकोपला समा ॥ २७ ॥

केदारव्रततिश्वभ्रवृक्षगुल्मविवर्जिता ।
स्थिरा समतला धात्री रथव्यूहे प्रशस्यते ॥ २८ ॥

गजव्यूहोचिता भूमिः

विपङ्कातीतपङ्काभूर्गजव्यूहे प्रशस्यते ।

चतुरङ्गबलोचिता भूमिः

सर्वदोषोज्झिता भूमिः सरिद्वारिसमन्विता ॥ २९ ॥

विशाला गुणभूयिष्ठा चतुरङ्गबलोचिता ।
एवं परीक्ष्य भूभागं यस्मिन्यत्र यथोचितम् ॥ ३० ॥

तत्र संचारयेत्सैन्यं नृपो युद्धविशारदः ।

विजिगीषोः पुरःसराः अनुयायिनश्च

अरिर्मित्रमरेर्मित्रं मित्रामित्रमतः परम् ॥ ३१ ॥

तथारिमित्रं मित्रं च विजिगीषोः पुरःसराः ।
पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् ॥ ३२ ॥

आसारावनयोश्चापि विजिगीषोस्तु पृष्ठतः ।
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ॥ ३३ ॥

---

[1] प्रतिव्यूहविचक्षणान्–क.  [2] छिद्रलंघनीय–क.

अनुग्रहे संहतयोर्व्यस्तयोश्च वधे प्रभुः ।
मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः ॥ ३४ ॥

अनन्तरमरिं विन्द्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ ३५ ॥

एवं तेषां क्रमान् ज्ञात्वा तत्तद्भागे प्रचारयेत् ।

व्यूहरचना

सर्वलक्षणसंपन्नं समस्तरिपुमर्दनम् ॥ ३६ ॥

रचयेदुत्तमं व्यूहं परव्यूहविभेदकम् ।
मुखे रथा गजाः पृष्ठे तत्पृष्ठे च पदातयः ॥ ३७ ॥

पार्श्वयोश्च हयाः कार्या व्यूहस्यायं विधिः स्मृतः ।

व्यूहनामानि

अर्धचन्द्रं च चक्रं च शकटं मकरं तथा ॥ ३८ ॥

कमलं श्रेणिकां गुल्मं व्यूहानेवं प्रकल्पयेत् ।
क्षत्रं सारभृतं शूरं शस्त्रज्ञमनुरागि च ॥ ३९ ॥

अपि स्वल्पं श्रियै सैन्यं वृथैवं मुण्डमण्डली ।
अपि पञ्चशतं शूरा मृद्नन्ति महतीं चमूम् ॥ ४० ॥

अथवा पञ्च षट् सप्त विजयन्तेऽनिवर्तिनः ।
परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः ॥ ४१ ॥

आकर्णपलिता योधाः सङ्ग्रामे जयशालिनः ।
एकः कापुरुषो जीर्णो दारयेन्महतीं चमूम् ॥ ४२ ॥

भोगप्राप्तिश्च विजये स्वर्गप्राप्तिर्मृतावपि ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥ ४३ ॥

शूराणां रक्तमायाति तेन पापं त्यजन्ति ते ।
घातादिदुःखसहनं रणे तु परमं तपः ॥ ४४ ॥

वराप्सरस्सहस्राणि यान्ति शूरं रणे मृतम् ।
स्वामी सुकृतमादत्ते भग्नानां विनिवर्तनात् ॥ ४५ ॥

ब्रह्महत्याफलं तेषां [1] तथा प्रोक्तं पदे पदे ।
अश्वमेधफलं प्रोक्तं शूराणामनिवर्तिनाम् ॥ ४६ ॥

युद्धेऽवध्याः

गजाद्याश्च न हन्तव्याः न हन्तव्याः पलायिनः ।
[2] न प्रेक्षकाः प्रविष्टाश्च विशस्त्रपतितादयः ॥ ४७ ॥

[3] एकेभैकरथं त्र्यश्वं पञ्च [4] पञ्च पदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ४८ ॥

सेनामुखादिसैन्यभेदास्तत्स्वरूपं च

सेनामुखं गुल्मगणा वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्युक्ताऽक्षौहिणिका ततः ॥ ४९ ॥

महाऽक्षौहिणिका चान्या तत्सङ्ख्याथ प्रकीर्त्यते ।
दशभिस्तु भवेत्पत्तिः (१०) त्रिंशत्सेनामुखं तथा (३०) ॥ ५० ॥

गुल्मस्तु नवतिः (९०) सप्तत्यधिकं द्विशतं गणः (२७०) ।
दशोत्तराष्टशतकं वाहिनी परिकीर्तिता (८१०) ॥ ५१ ॥

व्योमाग्निवेदनेत्रैस्तु पृतना परिकीर्तिता (२,४३०) ।
आकाशनिधिनेत्राद्रिसङ्ख्यया कथिता चमूः (७,२९०) ॥ ५२ ॥

व्योमाद्रिवसुभूनेत्रैः कथिताऽनीकिनी बुधैः (२१,८७०) ।
खद्वयं स्वरवस्विन्दुनेत्रैरक्षौहिणी मता (२,१८,७००) ॥ ५३ ॥

अक्षौहिण्यां प्रदिष्टानां रथानां करिणामपि ।
सङ्ख्यागणिततत्त्वज्ञाः सहस्राण्येकविंशतिः ॥ ५४ ॥

उपर्यष्टौ शतान्याहुस्तथा भूयश्च सप्ततिः ।
ज्ञेयं लक्षं पदातीनां सहस्राणि तथा नव ॥ ५५ ॥

---

[1] तथालोकं पदे पदे—क. [2] न प्रेषकाः—क [3] एकेभैकरथा त्र्यश्वा पत्तिः पंचपदातिका—क. [4] पत्तिः पञ्च—क.

शतानि त्रीणि पञ्चाशच्छूराणां शस्त्रधारिणाम् ।
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ॥ ५६ ॥

दशोत्तराणि षट्प्राहुः सङ्ख्यातत्त्वविदो जनाः ।
रथाः (२१,८७०) ॥ गजाः (२१,८७०) ॥ अश्वाः (६५,६१०) ॥

पदातयः (१,०९,३५०) ॥
खद्वयं निधिवेदाक्षिचन्द्राक्ष्यग्निहिमांशुभिः ॥ ५७ ॥

महाक्षौहिणिका प्रोक्ता सङ्ख्या गणितकोविदैः ।
(१३,२१,२४,९००) ॥
महाक्षौहिणिकायां तु रथाः कोटिमिताः स्मृताः ॥ ५८ ॥

सप्तत्रिंशच्च लक्षाणि गीयन्ते तत्त्ववेदिभिः ।
द्वादशैव सहस्राणि चत्वार्येव शतानि च ॥ ५९ ॥

प्रोक्ता च नवतिस्तद्वदेवमेव गजा मताः ।
रथाः (१,३७,१२,४९०) ॥ गजाः (१,३७,१२,४९०) ॥

अश्वाश्चतुःकोटिमिता लक्षाण्येकादशैव तु ॥ ६० ॥

सप्तत्रिंशत्सहस्राणि तथा शतचतुष्टयम् ।
पञ्चाशदिति सङ्ख्याता महाऽक्षौहिणिकास्थिताः ॥ ६१ ॥

अश्वाः (४,११,३७,४५०) ॥
षट्कोटयस्त्र्यशीतिश्च लक्षाणि च ततः परम् ।
द्विषष्टिश्च सहस्राणि चत्वारि च शतान्यतः ॥ ६२ ॥

पञ्चाशदिति सङ्ख्याता गणितज्ञैः पदातयः ।
पदातयः (६,८३,६२,४५०) ॥
संभावितेन सैन्येन रचयेद्व्यूहमुत्तमम् ॥ ६३ ॥

### व्यूहविभागः

मुखं पूर्वविभागः स्यादुरश्च तदनन्तरम् ।
उरसः पश्चिमे भागे प्रोरस्यं परिकीर्तितम् ॥ ६४ ॥

प्रोरस्यस्य तथा पृष्ठे प्रतिगृह इति स्मृतः ।
कक्षौ प्रकक्षौ कक्षौ च प्रकक्षौ पार्श्वयोः क्रमात् ॥ ६५ ॥

प्रतिगृहात्परो भागः पृष्ठमित्यभिधीयते ।
एवं व्यूहविभागं च विज्ञाय [1] नृपसत्तमः ॥ ६६ ॥

मुखे सुखमदं नागं शूरारूढं सुशिक्षितम् ।
तनुत्राणसमायुक्तं योधद्वयसमन्वितम् ॥ ६७ ॥

त्रिशतैः षट्शतैर्वापि नवभिर्वा तथा शतैः ।
त्रिधा विभक्तैः सुभटैः स्थानत्रयसुसंस्थितैः ॥ ६८ ॥

पृष्ठे च कक्षभागे च रक्षितं खड्गपाणिभिः ।
प्रकक्षदेशे निक्षिप्तैश्चण्डकोदण्डसंयुतैः ॥ ६९ ॥

सुभटैः शतसंख्याकैस्तदर्धैर्वा समावृतम् ।
प्रकक्षे जवसंयुक्तैर्गात्रत्राणसुरक्षितैः ॥ ७० ॥

अश्वैः सर्वायुधोपेतवाहकैश्च समन्वितैः ।
शतपञ्चकसङ्घातप्रकक्षद्वयकल्पितैः ॥ ७१ ॥

परितः पत्तिभिः शूरैरावृतं च पुरो न्यसेत् ।
दारुणं शत्रुसैन्यानां वारणं वैरिवारणम् ॥ ७२ ॥

एवंविधबलोपेतं व्यूहस्याग्रे नियोजयेत् ।
द्विमुखं त्रिमुखं तद्वदेकवक्त्रमथापि वा ॥ ७३ ॥

परव्यूहस्य भेदार्थं कुर्याद्व्यूहमुखं नृपः ।
उरस्स्थाने महीपालः श्रेणमाटविकं बलम् ॥ ७४ ॥

अमित्रजं तथा फल्गु युद्धभूमौ नियोजयेत् ।
प्रोरस्ये युद्धभाण्डानि शस्त्राणि विविधानि च ॥ ७५ ॥

वारि भूरि नयेदुष्ट्रैः तृषार्तानां सुतृप्तये ।
प्रतिगृहप्रदेशे तु स्वयं तिष्ठेन्महीपतिः ॥ ७६ ॥

[1] नृपतिस्ततः—क.

भद्रलक्षणसम्पन्नमैरावतकुलोद्भवम् ।
त्रिषण्वंशकं शुभानूकं कालिङ्गवनसंभवम् ॥ ७७ ॥

भूभृच्छिखरसंकाशं शिक्षितं च वधावधे ।
मदावस्थां चतुर्थीं च संप्राप्तं गिरिसन्निभम् ॥ ७८ ॥

शूरं महाबलं वीरं धीरमन्वर्थवेदिनम् ।
सुवर्णघण्टिकोदारकक्षपक्षसमन्वितम् ॥ ७९ ॥

वक्त्रत्राणसमोपेतं पिञ्छगुच्छसमन्वितम् ।
नानावर्णविचित्राङ्गं पताकापरिशोभितम् ॥ ८० ॥

ढंकिकान्तस्थितैर्योधैर्मध्ये कुन्तधरैर्वृतम् ।
पश्चाच्च सादिना युक्तं शक्तितोमरपाणिना ॥ ८१ ॥

आरूढमतिशूरेण खेटकद्वयधारिणा ।
ईदृग्गुणयुतं नागमारोहेद्विजयोद्यतः ॥ ८२ ॥

विख्यातनामभिर्मौलैः खड्गिकाचर्मपाणिभिः ।
अङ्गरक्षान्वितैः शूरैर्वृतः सन्नङ्गरक्षकैः ॥ ८३ ॥

कक्षस्थैर्देशसंचासैस्तदर्थैर्वा सुरक्षितैः ।
प्रकक्षे सचिवामात्यकुमारेभभटान्वितः ॥ ८४ ॥

मित्रभृत्यबलैः कक्षे चापसायकधारिभिः ।
नानायुधधरैर्वीरैरश्वारूढैः सुरक्षितैः ॥ ८५ ॥

धेनुकाध्यासिताशेषकोशेनाधिष्ठिते स्थिरम् ।
तेषां तु पृष्ठरक्षार्थं नरवाजिबलं न्यसेत् ॥ ८६ ॥

ईदृशीं व्यूहरचनां विधाय परवीरहा ।
व्रजेदब्धिरिव क्षुब्धो जिगीषुः परवाहिनीम् ॥ ८७ ॥

शूराणां सिंहनादैश्च वाजिनां घोषितस्वनैः ।
भेरीप्रहारपातैश्च काहलाशङ्खनिःस्वनैः ॥ ८८ ॥

युद्धाशंसिमहातूर्यनिनादैः स्फोटयन् दिशः ।
यतः फल्गु यतो भिन्नं यतो धृष्टैरधिष्ठितम् ॥ ८९ ॥

तद्बलं प्रथमं हन्यादात्मनश्चोपबृंहयेत् ।
सारं द्विगुणसारेण फल्गु सारेण पीडयेत् ॥ ९० ॥

संहतं तु गजानीकैः प्रचण्डैरवदारयेत् ।
प्रचण्डैर्वीरमुख्यैश्च परसैन्यं विदारयेत् ॥ ९१ ॥

अश्वव्यूहैर्भटानीकं वाजिव्यूहांश्च दन्तिभिः ।
बाणासारैस्तथा कुन्तप्रासशक्त्यसितोमरैः ॥ ९२ ॥

अग्निज्वालाञ्चितैर्बाणैर्विभिन्द्याद्द्विपयूथपान् ।
प्रभूतं कुञ्जरानीकं घटासंघट्टनैर्द्रुतम् ॥ ९३ ॥

पाटयेत्करटभ्रान्तं ताडयेद्द्विपमूर्धनि ।
विसृज्य राजचिह्नानि निश्चित्य नृपतेः पदम् ॥ ९४ ॥

सर्वसैन्येन संयुक्तं तत्र यायाज्जयोन्मुखः ।
नाराचैर्झर्झरीकृत्य कुन्तैर्निर्भिद्य निर्भरम् ॥ ९५ ॥

चक्राघातैर्द्विधा कृत्य [1] पाशैराकृष्य पातयेत् ।
संचूर्ण्य मुद्गराघातैश्छित्वा परशुना भटान् ॥ ९६ ॥

[2] अश्वारूढे क्षुरेणाथ संयोज्य वरवारणम् ।
तमश्वं च गजोद्दामदन्ताघातैर्निपात्य च ॥ ९७ ॥

निस्त्रिंशेन रिपोश्छिन्द्यात्कुण्डलालङ्कृतं शिरः ।
एवं निहत्य सङ्ग्रामे दुष्टशत्रुं मदोद्धतम् ॥ ९८ ॥

जयतूर्यनिनादेन हर्षयन् सुभटान् स्वकान् ।
कुमारामात्यसचिवान् सामन्तान्मण्डलेश्वरान् ॥ ९९ ॥

विनिहत्यागतानां च मानं दद्याद्यथोचितम् ।
द्विषतां रक्तपूरेण पूरयित्वा तु मेदिनीम् ॥ १०० ॥

पिशितेन पिशाचादीन् क्रव्यादानान्त्रमालया ।
पलायनपरान् भीतान् रक्षयित्वा तु धर्मतः ॥ १०१ ॥

[1] पादै–क.  [2] अश्वारूढान् क्षुरेण–मु.

आरोहमुक्तान् स्वीकृत्य तुरगान् वरवारणान् ।
धेनुकाश्चोष्ट्रसङ्घातं निश्शेषं कोशमेव च ॥ १०२ ॥

परिगृह्य तथा सर्वप्रयत्नाद्वीक्ष्य सर्वतः ।
एवं तु युध्यते यत्र युद्धे शत्रुर्महाबलः ॥ १०३ ॥

नृपेण बलिना स स्याद्दण्डो युद्धपदाभिधः ।
एवं बहुविधोपायैर्विजित्य द्विषतो रणे ॥ १०४ ॥

विधूततिमिरोन्मेषो भास्वानिव सुखी भवेत् ।
एवं चोपादिशद्राजनीतिं रणजयावहाम् ॥ १०५ ॥

कियन्तं कालमनयत्पालयन् वसुधां ततः ।
ततः परं कतिपये दिने समतिवाहिते ॥ १०६ ॥

[1] (सङ्कण्णनायको ज्यायान् सन्नाम्नि स्वानुजन्मनि ।
दत्तराज्यभरः सोऽयमवर्तत शमोन्मुखः ॥ १०७ ॥

भूयिष्ठानि शिवस्थानान्यालोक्य च समन्ततः ।)
उपरिष्ठानि संद्रष्टुमिव कैलासमासदत् ॥ १०८ ॥

[1] (ततस्तदनुजन्मापि चिक्कसङ्कण्णनायकः ।
अशात्रवां वसुमतीमशेषामन्वपालयत् ॥ १०९ ॥)

इति श्रीशिवतत्त्वरत्नाकरे पञ्चमकल्लोले दण्डयुद्धोपायव्यूहरचनाक्रमवर्णनं नाम चतुर्दशस्तरङ्गः

---

## अथ पञ्चदशस्तरङ्गः

[2] (ज्येष्ठसङ्कण्णभूपस्य प्रशस्तान्यद्भुतानि च ।
चरित्राणि समाकर्ण्य चित्तमालम्बते मुदम् ॥ १ ॥

---

[1] इमौ कुण्डलितपाठौ क. पुस्तके न दृश्येते. [2] ज्येष्ठेत्यादिसार्धद्वादशश्लोकाः क. पुस्तके न दृश्यते.

ज्येष्ठाधिगतराज्येऽस्मिन् चिक्कसङ्कण्णनायके ।
कान्त्यासन्नपदानानि निदानानि यशःश्रियः ॥ २ ॥

तानि मह्यं समाचक्ष्व गुरो! गुणगणालय ।
कुमार! वर्णयाम्येतत्समाहितमनाः शृणु ॥ ३ ॥

ततः संप्राप्तराज्येऽस्मिन् चिक्कसङ्कण्णनायके ।
फलाभिवृद्ध्या व्युरुचत्सर्वतः क्षितिमण्डलम् ॥ ४ ॥

ततः कतिपयेष्वेवं नीतेषु दिवसेष्वपि ।

### सिद्धप्पनायकजननम्

सिद्धप्पनायकस्तस्माज्जातः सङ्कण्णनायकात् ॥ ५ ॥

विद्याभिः स बभौ चूतलताभिः सुरभिर्यथा ।
एकदा स च सङ्कण्णनायकः समुपागतम् ॥ ६ ॥

विजयाख्यपुरस्थायिम्लेच्छसाहाय्यकोद्धतम् ।
वायव्यदिगवस्थायिसामन्तं पर्यभूत्ततः ॥ ७ ॥

शत्रुपद्मवने दन्ती भूत्वा लक्ष्मीमपाहरत् ।
पुनः कियद्दिनादूर्ध्वं महत्या सेनया सह ॥ ८ ॥

योद्धुं मञ्जुलखानाख्ये म्लेच्छे च समुपागते ।
गजांस्तद्वाजिनश्चापि विजित्य तमपाहरत् ॥ ९ ॥

अनन्तरं गेरसप्पिभैरादेवीमुखान्नृपान् ।
महीपतिः पराभूय तेभ्यो [1] धनमुपाददौ ॥ १० ॥

ततः परं वेंकटप्पनायकं ज्यायसः सुतम् ।
अभ्यषिञ्चन्निजे राज्ये यौवराज्येऽस्य चानुजम् ॥ ११ ॥

सङ्कण्णनायको रामराजनायकनामकम् ।
राज्यसप्ताङ्गविवृतिं तस्मै सम्यगुपादिशत् ॥ १२ ॥

तां तुभ्यं कथयाम्यद्य कुमार शृणु सादरम् ।)

---

[1] धनमपाहरत्–मु.

वेंकटप्पनायकाय सङ्कण्णनायकेनोपदिष्टा राज्यसप्ताङ्गविवृतिः

वश्यसामन्तताशक्तिर्दक्षत्वं क्षिप्रकारिता ॥ १३ ॥
उद्योगित्वमनिर्वेदः सर्वदा धर्मकारिता ।
जनानुरागः सौभाग्यं शस्त्रशास्त्रेषु नैपुणम् ॥ १४ ॥
दोषानुरूपदण्डत्वं सर्वसत्त्वहितैषिता ।
प्रियवादः प्रसन्नत्वं भृत्यानां सुखदृश्यता ॥ १५ ॥
आर्जवं तत्त्वदर्शित्वमक्षुद्रपरिवारता ।
मङ्गलाचार इत्येतैर्गुणैर्युक्तो नृपो वरः ॥ १६ ॥
राजा कार्यवशादेव लोकपालत्वमृच्छति ।

राज्ञोऽष्टदिक्पालांशत्वम्

अष्टानां लोकपालानामंशभूतो महीपतिः ॥ १७ ॥
महैश्वर्ये महाभोगे शत्रूणां च पराजये ।
[1] महाश्रियां महाराज्ये महेन्द्रत्वेन राजते ॥ १८ ॥
राजा चाधर्मवृत्तेषु दहत्यग्निवदुल्बणः ।
यमवद्दण्डयत्येतानपराधानुरूपतः ॥ १९ ॥
धनं हरति रक्षोवदसाधूनां महीपतिः ।
न्यायवृत्तेषु धर्मात्मा प्रसीदति जलेशवत् ॥ २० ॥
वायुवद्ध्वंसनेऽरीणां बलवान् भवतीश्वरः ।
कोशसंवर्धने सोमो भवतीतस्ततो नृपः ॥ २१ ॥

राज्ञः सर्वदेवतामयत्वम्

सर्वज्ञत्वेऽप्रधृष्यत्वे शूलीभवति भूपतिः ।
[2] धृष्टत्वे हि प्रतिब्रह्मा कामसृष्टौ सदा नृषु ॥ २२ ॥
बुध्या संव्यापनाद्विष्णुः क्षमायां तु वसुन्धरा ।
स्थैर्ये महीधरो वीर्ये त्रिपुरारिर्महीपतिः ॥ २३ ॥

---

[1] महाश्रियां—क. [2] धृष्णुत्वे—क.

बार्हस्पत्यं चौशनस्यं नीतौ वहति वै [1]नृपः।
गाम्भीर्ये सागरत्वं च समत्वे व्योमरूपताम् ॥ २४ ॥

कालाग्नित्वं महाक्रोधे रुद्रत्वं लोकसंहृतौ।
एवं सर्वामरत्वं च काले काले दधाति सः ॥ २५ ॥

सर्वदेवमयो राजा तस्माद्भवति निश्चयः।
यस्य दर्शनमात्रेण तुष्यन्तीह सुसाधवः ॥ २६ ॥

चरन्तीह सुखं राज्ये स्वपन्ति विगतज्वराः।
एवं विधं महात्मानं कोऽवमन्येत बुद्धिमान् ॥ २७ ॥

अवमत्य क्षणादेव विनश्यति सहान्वयः।
विभूतिं च तथा कीर्तिं धर्मं च विजयं सुखम् ॥ २८ ॥

य इच्छेत्सततं राजा गुणानेतान् विधारयेत्।

सप्ताङ्गानि

महिषी च कुमारश्च द्रविणं खड्गमन्त्रिणौ ॥ २९ ॥

अश्वाश्चैव गजाश्चेति राज्ञः सप्ताङ्गमीरितम्।

राजमहिषीलक्षणानि

राज्ञाऽग्र्या महिषी कार्या सर्वलक्षणसंयुता ॥ ३० ॥

विनीता गुरुसक्ता च ईर्ष्याक्रोधविवर्जिता।
[2]कृत्याकृत्यगुणज्ञा च भृत्यानामन्ववेक्षिणी ॥ ३१ ॥

रागद्वेषविमुक्ता च सपत्नीषु सदैव या।
भोजनासनपानेन सर्वासामन्ववेक्षिणी ॥ ३२ ॥

सपत्नीनां च पुत्रेषु पुत्रवद्वर्तते सदा।
[3]मन्त्रिणः सचिवामात्यान्या संभावयते सदा ॥ ३३ ॥

ब्राह्मणेषु दयायुक्ता कार्यज्ञा च विशेषतः।
एवं विधगुणोपेता चारुवेषा प्रियंवदा ॥ ३४ ॥

अभिषेच्या भवेद्राज्ञा पौराणां प्रीतिकारिणी।

---

[1] पुरः—क. [2] भृत्याभृत्यगुणज्ञा च—क. [3] मन्त्रिसंवत्सरामात्यान्—ग.

सत्पुत्रप्रशंसा

एकेनापि सुपुत्रेण जायमानेन सत्कुलम् ॥ ३५ ॥
शशाङ्केनेव गगनमेकेनैवोज्ज्वलीकृतम् ।
पात्रं न तापयति यो न मलं प्रसूते
स्नेहं न भक्षयति नैव दशां क्षिणोति ।
दोषावसानसमये चलतां न धत्ते
सत्पुत्रकः [1] सुकृतसद्मनि कोऽपि दीपः ॥ ३६ ॥

पञ्चसुवर्णभेदाः

पञ्चभेदाः सुवर्णस्य तान् प्रवक्ष्ये सुरेश्वरि ।
प्राकृतं सहजं वह्निसंभूतं खनिसंभवम् ॥ ३७ ॥
रसेन्द्रवेधसंजातमिति सिद्धान्तशासनम् ।

प्राकृतसुवर्णम्

ब्रह्माण्डं संवृतं येन रजोगुणभवं खलु ॥ ३८ ॥
तत्प्राकृतमिदं प्रोक्तं देवानामपि दुर्लभम् ।

सहजसुवर्णम्

ब्रह्मा येनावृतो जातः सुवर्णं सहजं हि तत् ॥ ३९ ॥

वह्निसंभूतसुवर्णम्

विसृष्टमग्निना शैवं तेजः पीतं सुदुःसहम् ।
अभूत्स्वर्णं तदुद्दिष्टं वर्णैः षोडशभिर्युतम् ॥ ४० ॥
धारणादेव तत्कुर्याच्छरीरमजरामरम् ।

खनिजसुवर्णम्

तत्र तत्र गिरीणां हि जातं खनिषु यद्भवेत् ॥ ४१ ॥
तच्चतुर्दशवर्णाढ्यं भक्षितं सर्वरोगहृत् ।

---

[1] प्रकृतसर्जनकोऽपि—क.

रसवेधजसुवर्णम्

रसेन्द्रवेधात्संजातं तद्वेधजमुदाहृतम् ॥ ४२ ॥

रसायनमिदं श्रेष्ठं पवित्रं वेधजं हि तत् ।

रूक्षं विवर्णं मलिनं कठोरं
कृष्णं च दाहे कृषणे च पाण्डु ।
स्थूलाग्रकं निर्भिरकं कडारं
स्फुटत्सुवर्णं दशधा न शस्तम् ॥ ४३ ॥

खड्गलक्षणम्

उत्ताने चाथ कुब्जे वा बले साचिगतेऽपि वा ।
संविष्टे चोपविष्टे वा खड्ग एव परायणम् ॥ ४४ ॥

प्रतप्तजाम्बूनदरेखिकाभः
समाङ्गुलः पङ्कजसौरभाढ्यः ।
नीलोत्पलाभो लघुमुष्टियुक्तः
खड्गो जयश्रीविहृतिं विधत्ते ॥ ४५ ॥

मन्त्रिलक्षणम्

कुलीनाः श्रुतसंपन्नाः शुचयश्चानुरागिणः ।
शूरा धीरा [1]विरागाश्च नीतिशास्त्रविशारदाः ॥ ४६ ॥

[2]प्रगल्भवादिनः प्राज्ञाः रागद्वेषविवर्जिताः ।
आये व्यये च निपुणाः स्वामिकार्यरताः सदा ॥ ४७ ॥

कार्याकार्यविवेकज्ञा देवब्राह्मणपूजकाः ।
अमार्गे वर्तमानस्य नृपस्य प्रतिकूलगाः ॥ ४८ ॥

बोधयन्तः प्रभुं वाक्यैर्मन्त्रिणो राष्ट्रवृद्धये ।

सचिवलक्षणम्

अन्वयादागतान् वृद्धानुपधाभिः परीक्षितान् ॥ ४९ ॥

---

[1] विरोगाश्च–क.   [2] प्रगल्भा वाग्मिनः–मानस.

सचिवान् सप्त वाष्टौ वा कुर्वीत मतिमान्नृपः ।
स्वदेशवासिनः प्राज्ञा ऊहापोहपरायणाः ॥ ५० ॥
देशकालविदो धीराः साध्यासाध्यविवेकिनः ।
परेङ्गितज्ञा धीमन्तः स्वकार्यस्य निगूहकाः ॥ ५१ ॥
एवंविधा महीभर्तुः सचिवाः कार्यसिद्धये ।

पुरोहितलक्षणम्

त्रय्यां च दण्डनीत्यां च शान्तिकर्मणि पौष्टिके ॥ ५२ ॥
आथर्वणे च कुशलः स स्याद्राजपुरोहितः ।

ज्यौतिषिकलक्षणम्

अद्वेषी नित्यसंतोषी ब्राह्मणो गणितेक्षणः ॥ ५३ ॥
ग्रहचारविधानज्ञः स वै ज्यौतिषिकः स्मृतः ।

सेनापतिलक्षणम्

कुलजः शीलवान् वीरश्चतुर्भाषाविशारदः ॥ ५४ ॥
व्यूहभेदविधानज्ञः सादितत्त्वविशेषवित् ।
दाता प्रियंवदः शान्तो मतिमान् दृढनिश्चयः ॥ ५५ ॥
राज्ञा सेनापतिः कार्यः शूरो भृत्यविशेषवित् ।

धर्माधिकारिलक्षणम्

स्मृतिशास्त्रार्थकुशला रागद्वेषविवर्जिताः ॥ ५६ ॥
धर्माधिकारिणः कार्या विलोभा भयवर्जिताः ।

दण्डधरलक्षणम्

स्मार्तैः सह समालोच्य यथार्हं दण्डपातिनम् ॥ ५७ ॥
धर्माधर्मविचारज्ञं कुर्याद्दण्डधरं नृपः ।

कोशाध्यक्षलक्षणम्

लोहवस्त्राजिनादीनां रत्नानां च विशेषवित् ॥ ५८ ॥

व्ययेऽपि [1]च विशेषज्ञो रक्षणे निपुणः शुचिः ।
अनूचानः सुसंतुष्टश्चाप्तो बहुकुटुम्बकः ॥ ५९ ॥

सावधानो गणितविद्भाण्डागारे नियुज्यते ।

अङ्काः (सङ्ख्या)

एकाद्या नवपर्यन्ता नवैवाङ्काः स्वरूपतः ॥ ६० ॥

दशोत्तराः क्रमेणैते वर्धन्ते बिन्दुवृद्धितः ।

एकादिपरार्धपर्यन्तानि त्रिंशत्स्थानानि

बिन्दुरेको दशस्थाने शते बिन्दुद्वयं भवेत् ॥ ६१ ॥

बिन्दुत्रयं सहस्रे स्यादयुते तच्चतुष्टयम् ।
बिन्दवः पञ्च लक्षे स्युः प्रयुते बिन्दवश्च षट् ॥ ६२ ॥

बिन्दवः सप्त कोट्यां स्युर्दशकोटिस्तथाष्टभिः ।
शतं कोट्यस्तु नवभिरर्बुदं दशबिन्दुभिः ॥ ६३ ॥

एकादश न्यर्बुदे स्युः खर्वे द्वादश बिन्दवः ।
त्रयोदश महाखर्वे पद्मे च मनुबिन्दवः ॥ ६४ ॥

तिथिसङ्ख्या महापद्मे क्षोणौ षोडश बिन्दवः ।
महाक्षोणौ सप्तदश शङ्खेऽष्टादश बिन्दवः ॥ ६५ ॥

महाशङ्खे तु ते सैकाः क्षितौ विंशति बिन्दवः ।
महाक्षितौ तु ते सैकाः क्षोभे द्वाविंशतिः स्मृताः ॥ ६६ ॥

एकाधिका महाक्षोभे ते चतुर्विंशतिर्निधौ ।
महानिधौ सागरे च महासागरके तथा ॥ ६७ ॥

हरौ महाहरौ सङ्ख्ये महासङ्ख्ये फणौ तथा ।
महाफणौ क्रतौ तद्वन्महाक्रतुपरार्धयोः ॥ ६८ ॥

एकाधिका विधातव्याः क्रमादेतेषु बिन्दवः ।
स्थानान्येतानि षट्त्रिंशद्गणितव्यवहारकैः ॥ ६९ ॥

---

[1] सविशेष-क.

एकाङ्के बिन्दुरेकश्चेद्दशकं तत्प्रकीर्तितम् ।
द्वितीयाङ्के पुरोबिन्दौ सङ्ख्या विंशतिरिष्यते ॥ ७० ॥

एवं तृतीयाद्यङ्केषु बिन्दुः स्यात्पुरतो यदि ।
त्रिंशदाद्यास्तदा सङ्ख्या नवत्यन्ताः प्रकीर्तिताः ॥ ७१ ॥

शताधिके परार्धान्ते यावन्तो बिन्दवस्स्थिताः ।
यस्याङ्कस्य पुरोभागे तावत्सङ्ख्या तु संभवेत् ॥ ७२ ॥

गणिते गुणक्रमः

अङ्कान् कतिपयान् स्थाप्य गुणनीयतया स्थितान् ।
अधस्तात्प्रथमाङ्कस्य गुणकल्पाङ्कमालिखेत् ॥ ७३ ॥

एकैकं गुणयेत्सर्वैरुपरिष्टमधस्तनैः ।
लब्धं निवेशयेदत्र स्वाङ्कस्योपरि लेखयेत् ॥ ७४ ॥

एकादिगुणने वाच्या बुधैरङ्का विपर्ययात् ।
लब्धं तु दशकस्थानं पूर्वेणाङ्केन योजयेत् ॥ ७५ ॥

[1] (गुणाकारक्रमेणादावङ्कान् कतिपयान् न्यसेत् ।)

गणिते भागहारः

[2] विभागकथनं तेषां सुसमं विन्यसेद्बुधः ।
अधोऽङ्कं हृदये कृत्वा तर्कयेदङ्कमूर्ध्वगम् ॥ ७६ ॥

विभागो येन जायेत तेन भागं प्रकल्पयेत् ।
अनेन क्रमयोगेन भजनीयं विभाजयेत् ॥ ७७ ॥

एकत्र स्थापयेल्लब्धमवशिष्टं तथान्यतः ।
अवशिष्टं पुनर्भङ्क्त्वा यथाभागानुसारतः ॥ ७८ ॥

लब्धेन मेलयेत्तत्तु भागहारोऽयमीदृशः ।

गणिते त्रैराशिकादि

प्रमाणं फलमिच्छेति राशित्रितयमुच्यते ॥ ७९ ॥

---

[1] मानसोल्लासे, [2] विभाजकानधस्तेषां—मानस.

इच्छया गुणितं वस्तु प्रमाणेन विभाजयेत् ।
प्रमाणं द्रव्यमाख्यातं फलं द्रविणमिष्यते ॥ ८० ॥

[1] द्रव्यभागविभागार्थमिच्छामिच्छन्ति साधवः ।
ततस्त्रैराशिकमिदं प्रोक्तं गणितकोविदैः ॥ ८१ ॥

पञ्चराशिकमत्रैव सप्तराशिकमेव च ।
नवराशिकमप्यस्मिन् क्षेपश्चैर्हारके विधौ ॥ ८२ ॥

सकलं गणितं प्रोक्तं संक्षेपेण प्रसङ्गतः ।

गणकलक्षणम्

ईदृशं गुणकारं च भागहारं च तत्त्वतः ॥ ८३ ॥

त्रैराशिकविधानं च यो जानाति विनिश्चितम् ।
अलुब्धः सावधानश्च रागद्वेषविवर्जितः ॥ ८४ ॥

स राज्ञा गणकः कार्यः कोशे राष्ट्रे च धीमता ।

शासनलेखकः

सकृदुक्तिगृहीतार्थो लघुहस्तो जिताक्षरः ॥ ८५ ॥
मेधावी वाक्पटुः प्राज्ञः भवेच्छासनलेखकः ।

प्रतीहारः

जलाग्निधूमादर्शेषु लिपीनां दृश्यताजुषाम् ॥ ८६ ॥
नानादेशलिपीनां च तद्भाषाणां च वेक्षकः ।
स्वर्णादिद्रुतिभिर्भूयो लेखनक्रमशिक्षितः ॥ ८७ ॥

उन्नतो रूपवान् दक्षः प्रियवाग्दर्पवर्जितः ।
गृहीतचित्तः सर्वेषां प्रतीहारः स उच्यते ॥ ८८ ॥

सारथिः

प्रगल्भो मतिमान् दक्षः सर्वभाषाविशारदः ।
बलाबलरथाभिज्ञः प्रियवाक् स्थिरदर्शनः ॥ ८९ ॥

कृतविद्यश्च शूरश्च सारथिः पार्थिवोचितः ।

---

[1] द्रव्यजातिविभागोत्थमिच्छा—मानस.

सुधाध्यक्षः

असंभेद्यः शुचिर्दक्षः कृतान्नस्य परीक्षकः ॥ ९० ॥
[1] सूपान्नस्य विशेषज्ञः सुधाध्यक्षो विधीयते ।

सूदाः

कुलक्रमसमायातास्तुष्टेष्टाश्चानुरागिणः ॥ ९१ ॥

कृत्तकेशनखाः [2] शान्ताः पराभेद्या नृपे रताः ।
पानव्यञ्जनतत्त्वज्ञाः [3] खण्डभेदप्रवेदिनः ॥ ९२ ॥

क्षीरप्रकारबोद्धारः सूदाः कार्याः महीभृता ।

भिषजः

नराणां च गजानां च वाजिनां च गवामपि ॥ ९३ ॥

मृगाणां च खगानां च ये जानन्ति चिकित्सितम् ।
परम्परागताः सम्यगष्टाङ्गेषु चिकित्सकाः ॥ ९४ ॥

शस्त्रकर्मकलादक्षा मन्त्रयन्त्रेषु कोविदाः ।
देहे च शिरसि व्याले विषे शल्ये ग्रहेऽपि च ॥ ९५ ॥

वृष्ये रसायने चैव कुशला भिषजोऽष्टसु ।
रोगनाम निदानं च तथा चाङ्गरुजारुजम् ॥ ९६ ॥

औषधं रूपनामभ्यां जानन्तो भिषजो वराः ।

वैद्याः

वमौ विरोचने नस्ये बस्तिशस्त्रक्रियास्वपि ॥ ९७ ॥

शस्यन्ते भिषजः सम्यक् [4] अष्टोनाः पञ्चकर्मसु ।
असाध्याः परकीयानामात्मस्वामिहिते रताः ॥ ९८ ॥

धर्मज्ञा दृढचित्ताश्च वैद्याः कार्या महीभुजा ।

---

[1] सूदानां च विशेषज्ञः-मानस. [2] दान्ताः—क. [3] खण्डपाकस्य वेदिनः-मानस. [4] निष्णाताः—मानस.

कुमाराध्यक्षाः

विबुधा लोभहीनाश्च भाविज्ञाश्च जितेन्द्रियाः ॥ ९९
कार्या राज्ञा कुमाराणामध्यक्षाः सुपरीक्षिताः ।

अङ्गरक्षकाः

कर्मस्वन्येषु सर्वेषु दक्षाश्च शुचयस्तथा ॥ १०० ॥

शूराश्च बुद्धिमन्तश्च शस्त्रशास्त्रार्थकोविदाः ।
योगक्षेमसुखार्थाय दुष्टसंयमनाय च ॥ १०१ ॥

प्राणतुल्याः सदा धीरा निद्रालस्यविवर्जिताः ।
अव्यग्राः शुचयो दक्षाः कार्या राज्ञाङ्गरक्षकाः ॥ १०२ ॥

अन्तःपुरसेवकाः

काणाः खञ्जाश्च कुब्जाश्च तथा वृद्धाश्च पङ्गवः ।
एते चान्तःपुरे नित्यं नियोक्तव्याः क्षमाभृता ॥ १०३ ॥

सभासदः

धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ १०४ ॥

दूतः

क्रमागतो हितमतिः सर्वभावपरीक्षकः ।
धीरो यथोक्तवादी च दूत एवंविधो भवेत् ॥ १०५ ॥

गजाः

सुगन्धिदानद्रवशीकरेषु
दन्ताभिघातस्फुटितोपलेषु ।
गजेषु नीलाभ्रसमप्रभेषु
राज्यं निबद्धं पृथिवीपतीनाम् ॥ १०६ ॥

अश्वाः

दीर्घग्रीवाः सुपार्श्वाः पृथुनयनकटिस्कन्धवक्षोललाटाः
ह्रस्वाः पृष्ठाण्डकर्णैः कठिनघनखुरा दीर्घनिर्मांसजङ्घाः ।

सूक्ष्माः स्फिग्रोमवाला मृदुतनुरसनाप्रोथसृक्कोष्ठकेशाः
शुद्धावर्ताः सुवर्णा घनसितदशनाः सप्तयो राजवाह्याः ॥१०७॥

एवं विज्ञाय सप्तानां चाङ्गानामपि लक्षणम् ।
यथानीति प्रवृत्तस्तु नृपतिः सुखमश्नुते ॥ १०८ ॥

एवमाख्याय सप्ताङ्गराजनीतिं समासतः ।
काले याते कियति स गोपायन् वसुधामिमाम् ॥ १०९ ॥

भूयो राज्यसुखं स्वैरमनुभूय विरज्य किम् ।
तपोराज्यसुखावाप्त्यै जगाम सुतपोवनम् ॥ ११० ॥

प्राप्तराज्ये वेङ्कटप्पनायके शासति क्ष्माम् ।
अचलारोहणायासे शात्रवा भेजिरे क्ष्माम् ॥ १११ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-
परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचिते
वेदागमान्तर्गतविविधविद्यातन्त्रसारभूते शिवतत्त्वरत्नाकरे पञ्चमकल्लोले
राज्यसप्ताङ्गकथनं नाम पञ्चदशस्तरङ्गः समाप्तः

---

कामन्दकीयनीतिं च गुरुभार्गवयोर्मतम् ।
वह्लामरेश्वरं तन्त्रं खण्डं सह्याद्रिनामकम् ॥

निधिप्रदीपिकां चैव जौतिषार्णवमेव च ।
आगमं शिल्पशास्त्रं च शास्त्रं शकुनबोधकम् ॥

आलोक्य संगृहीतोऽयं कल्लोलः पञ्चमोऽभवत् ।
तरङ्गैरन्वितः पञ्चदशसङ्ख्यासमन्वितैः ॥

सैकत्रिंशत्पञ्चशताभ्यधिकं तु सहस्रकम् ।
ग्रन्थानामत्र कल्लोले सङ्ख्या समवलोक्यताम् ॥

श्रीमत्सद्गुणसोमशेखरलसच्चेन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसंजातेन विद्याब्धिना ।
शंभौ दत्तहृदा सदापि बसवक्षोणीभृता निर्मिते
कल्लोलः परिपूरितः कृतिवरे तस्मिन्नभूत्पञ्चमः ॥

---

# षष्ठः कल्लोलः

## प्रथमस्तरङ्गः

[1] केकालापिनि शैलजाकचभरे मेघभ्रमाद्बर्हिणि
स्कन्दस्याहिषु विद्रवत्सु परितस्त्यक्त्वा द्रुते मूषके ।
आश्वासागतमातृपत्रहरिणो भूयः स्खलन्तं भिया
संश्लिष्यानु च सान्त्वयन् गजमुखं नः पातु गौरीपतिः ॥ १ ॥

एवं सर्वां भुवं रक्षन् किं किं रचितवानसौ ।
तस्यापदानमखिलं मह्यं स्वामिन्निरूपय ॥ २ ॥

शृणु नन्दन! तत्सर्वं वर्णयामि यथाक्रमम् ।

### वेङ्कटप्पनायकचरितवर्णनम्

इक्केरिनाम्नि देशे च रम्यं पुरमकल्पयत् ॥ ३ ॥

तत्र चाश्चर्यजनकं भवनं निरमापयत् ।
तत्र नाटकशालां च विचित्रामुदपादयत् ॥ ४ ॥

प्रोद्यच्चमत्कृतीः किंच सत्कृतीरप्यकारयत् ।
सङ्गलाख्येऽपि च ग्रामे तटाकं च व्यधापयत् ॥ ५ ॥

तत्र नानाद्रुमलतारम्यमुद्यानमातनोत् ।
एतेषां वर्णये पुत्र ! निर्मापणविधिं शृणु ॥ ६ ॥

### पुरनिर्माणविधानम्

तत्रादौ पुरनिर्माणविधानं वर्णयामहे ।
वर्धते भूगुणैर्देशो देशः कोशाभिवृद्धिकृत् ॥ ७ ॥

भूमिं गुणवतीं [2] तस्मात्संविशेद्भूतये नृपः ।
सर्वसस्यवती सेव्या खनिद्रविणगर्भिणी ॥ ८ ॥

---

[1] इत आरभ्य षट्श्लोकाः क. पुस्तके न सन्ति. [2] तस्मादाविशे—क.

वस्तव्या बहुपानीया पुण्यकृद्भिर्जनैर्युता ।
स्तम्बेरमाश्ववनोपेता बहूद्यानसुशोभना ॥ ९ ॥

भूर्नदीशोभिता शस्ता सर्वदा धरणीभृताम् ।
ईदृग्भूमियुतं राष्ट्रं महापत्तनभूषितम् ॥ १० ॥

पालनाद्वर्धयेद्राजा स्वकोशस्याभिवृद्धये ।

ग्रामखेटकखर्वडद्रोणमडम्बानां स्वरूपाणि

वृत्त्या समावृतस्तत्र ग्राम इत्यभिधीयते ॥ ११ ॥

नद्यद्रिवेष्टितं विशैः खेटकं परिकीर्तितम् ।
खेटकैर्दशभिर्युक्तं खर्वडं परिकीर्तितम् ॥ १२ ॥

समुद्रतटिनीयोगसमीपस्थलसंस्थितम् ।
पर्वतेन परीतं च द्रोणमित्यभिधीयते ॥ १३ ॥

युक्तमेकादशग्रामैर्मडम्बं परिकीर्तितम् ।

पत्तनविधानम्

अनेकजातिसहितमपारद्रव्यशोभितम् ॥ १४ ॥

पत्तनं तत्समाख्यातं सागरोपान्तसंश्रयम् ।
नगरं सचतुर्द्वारं गोपुराट्टालशोभितम् ॥ १५ ॥

देशान्तराहृतद्रव्यक्रयविक्रयसाधनम् ।
नानाजातिसमाकीर्णं भूपालेन परिष्कृतम् ॥ १६ ॥

प्राच्यां दिशि कुलालानां पश्चिमे मांसजीविनाम् ।
उत्तरे तैलवृत्तीनामैशान्यां पुष्पजीविनाम् ॥ १७ ॥

परितः शूद्रजातीनां शिल्पिनां तु यथेच्छया ।
चण्डालानां तु वायव्ये कारूणां ग्रामतो बहिः ॥ १८ ॥

स्थलं किंचिच्च परितो गवां चाराय कल्पयेत् ।
धनुश्शतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ॥ १९ ॥

द्वे शते खर्वडस्य स्यान्नगरस्य चतुःशतम् ।

वास्तुकर्मणि मासपक्षादिनिर्णयः

वैशाखे फाल्गुने मार्गे कार्तिके श्रावणे तथा ॥ २० ॥

शुक्लपक्षे गृहान् कुर्यात्सर्वकामफलप्रदान् ।
उत्तरात्रितयं चित्रा रोहिणी स्वातिरेव च ॥ २१ ॥

ज्येष्ठा मृगशिरो मूला अश्विनी हस्त एव च ।
ऋक्षाण्येतानि शस्यन्ते सर्वदा वास्तुकर्मणि ॥ २२ ॥

क्रूरग्रहैरदृष्टानि सौख्यदानि भवन्ति हि ।
आदित्यमङ्गलौ त्यक्त्वा सर्वे वाराः शुभावहाः ॥ २३ ॥

गृहकर्मणि शस्यन्ते वास्तुशास्त्रविशारदैः ।
नन्दा चैकादशी षष्ठी प्रतिपच्चेति कीर्तिताः ॥ २४ ॥

[1] पञ्चमीदशमीपूर्णिमास्यः पूर्णा इमाः स्मृताः ।
नन्दाश्च पूर्णास्तिथयो मन्दिरारम्भणे शुभाः ॥ २५ ॥

नातिक्षीणे निशानाथे गृहारम्भा भवन्ति हि ।
वृषो धनुस्तुला कन्या मिथुनं कलशस्तथा ॥ २६ ॥

लग्नान्येतानि शस्तानि गृहप्रासादकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥ २७ ॥

माहेन्द्रे रौहिणे चैव सावित्रे मैत्र एव च ।
गान्धर्वे चैवाभिजिति मुहूर्ते कारयेद्गृहान् ॥ २८ ॥

चन्द्रार्कादिग्रहाः सर्वे स्वक्षेत्रे शुभदा गृहे ।
न वृद्धा न च नीचस्था न च तीक्ष्णांशुदूषिताः ॥ २९ ॥

विप्रादीनां प्रशस्तभूमिनिर्णयः

विप्राणां पाण्डुरा भूमिर्लोहिता क्षत्रजन्मनाम् ।
पीता विशां समाख्याता वृषलानां च मेचका ॥ ३० ॥

---

[1] इदमर्धं क. पुस्तके नास्ति.

वास्तुयोग्यभूपरीक्षा

रत्निमात्रं कृतं गर्तं पूरयेत्तन्मृदा पुनः ।
लाभमभ्यधिके विन्द्याद्धीने हानिः समे समम् ॥ ३१ ॥

धनिष्ठादीनि संत्यज्य पञ्चर्क्षाणि प्रयत्नतः ।
शुभनक्षत्रयोगे च तरून् छिन्द्याच्छुभावहान् ॥ ३२ ॥

गृहनिर्माणे निषिद्धा वृक्षाः

सनीडक्षीरवृक्षं च वायुवह्निविदूषितम् ।
दन्तिदन्ताहतं चैव विद्युत्पातनिपातितम् ॥ ३३ ॥

स्वयं शुष्कं च भग्नं च वक्रं देवालयोद्भवम् ।
चैत्यवृक्षं शिवक्षेत्रनदीसङ्गमसंभवम् ॥ ३४ ॥

तटाककूपमध्यस्थं कण्टकाकुलितं तथा ।
नीपं विभीतकं निम्बं श्लेष्मातकमहीरुहम् ॥ ३५ ॥

असारांच्छाखिनः सर्वान् वर्जयेद्गृहकर्मणि ।
एकजात्या द्विजात्या वा त्रिजात्या वापि भूरुहाम् ॥ ३६ ॥

कारयेन्मन्दिरं राजा श्रियमिच्छन् महीभुजाम् ।

वास्तुकर्मण्यायविभागस्तत्र शुभाशुभविभेदश्च

व्यासेन गुणितं दैर्घ्यमष्टभिश्च विभाजितम् ॥ ३७ ॥

तच्छेषस्तु भवेदायः प्रोक्तो नामभिरष्टभिः ।
आद्यो ध्वजः परो धूमस्तृतीयः सिंह एव च ॥ ३८ ॥

चतुर्थः सारमेयस्तु पञ्चमो वृष उच्यते ।
षष्ठः खरो विनिर्दिष्टः सप्तमः सामजो भवेत् ॥ ३९ ॥

अष्टमो वायसः प्रोक्त आयनामविनिर्णयः ।
एतेषु च समा निन्द्या विषमास्तु शुभावहाः ॥ ४० ॥

ऐन्द्रीं दिशं समारभ्य प्रदक्षिणविधानतः ।
अष्टासु दिक्षु बोद्धव्याः क्रमादाया ध्वजादिकाः ४१ ॥

पश्चिमाशामुखः श्लाघ्यो ध्वजः पूर्वमुखोऽथ वा ।
उत्तराभिमुखः सिंहो वृषः प्राचीमुखः शुभः ॥ ४२ ॥

दक्षिणाभिमुखो हस्ती समस्ते वास्तुकर्मणि ।
मुखं द्वारं विनिर्दिष्टं मन्दिरस्य विचक्षणैः ॥ ४३ ॥

मध्ये स्तम्भशतं तस्य भद्राख्ये विंशतिस्तथा ।
चतुर्भद्रेषु च शतं स्तम्भानां द्वादशाधिकम् ॥ ४४ ॥

[1]चत्वारि मध्ये हि स्तम्भा यत्र तत्स्याच्चतुष्ककम् ।
यस्या बहिरलिन्दः स्याच्छाला स्यात्तदनन्तरम् ॥ ४५ ॥

अलिन्दं च पुनः शाला क्रमेणैवं [2]प्रवर्तते ।
यावत्कर्तुमभीष्टं स्याद्गृहं नरपतेः शुभम् ॥ ४६ ॥

यच्चतुष्का[3]हतं क्षेत्रं पञ्चधा तद्विभज्यते ।
तद्भागप्रमितं कार्यं त्रिभिर्भागैरलिन्दकम् ॥ ४७ ॥

सार्धत्रिभागिका शाला कर्तव्या सुविचक्षणैः ।
इति स्थितिः समस्तानां गृहाणां प्रतिपादिता ॥ ४८ ॥

नाम्ना तमुक्तकोणं यत्तत्कार्यं रविभागतः ।

### सर्वतोभद्रगृहलक्षणम्

मध्यस्तम्भाः शतं सार्धं षड्भिर्न्यूना निरूपिताः ॥ ४९ ॥

चत्वारिंशत्तथा स्तम्भा भद्रे भद्रे निरूपिताः ।
शतं षण्णवत्यधिकं ते स्युश्चतुर्भद्रेषु सङ्ख्यया ॥ ५० ॥

एकादश तथा कोणाः विदिशं विदिशं प्रति ।
चतुर्दश तथा त्रिंशच्चतसृष्वपि सङ्ख्यया ॥ ५१ ॥

कथ्यते सर्वतोभद्रमनुभागैर्विभागितम् ।
मध्ये स्तम्भो भवेत्तस्य षण्णवत्यधिकं शतम् ॥ ५२ ॥

---

[1] चत्वारो मध्यमाः स्तम्भाः—क. [2] प्रवर्धते—मानस. [3] हतं—क. गतं—मानस.

चत्वारिंशत्तथा चैव भद्रे स्तम्भा निरूपिताः ।
एवं चतुर्षु भद्रेषु शतं षष्टिस्तथाष्टकम् ॥ ५३ ॥

कोणास्तस्य विधातव्यास्त्रयोदशमिता बुधैः ।
समस्ता गुणिताः कोणा द्विपञ्चाशद्भवन्ति ते ॥ ५४ ॥

श्रीवत्समष्टभागं स्याच्चतुष्षष्टिस्तु मध्यगाः ।
तस्य स्तम्भाः प्रयोक्तव्या भद्रेऽष्टादशसङ्ख्यया ॥ ५५ ॥

चतुर्ष्वपि च भद्रेषु द्विसप्ततिरुदाहृताः ।
सप्त कोणाः समन्ताच्च द्विगुणा मनुसङ्ख्यया ॥ ५६ ॥

एवमादीन्यनन्तानि गृहाणि धरणीभुजाम् ।
कियन्त्यपि मयोक्तानि प्रधानानि यथाक्रमम् ॥ ५७ ॥

चतुश्शालादिराजभवनभेदास्तल्लक्षणं च

चतुश्शालं द्विशालं च त्रिशालं चैकशालकम् ।
वक्ष्यामि भवनं राज्ञां नामलक्षणसंयुतम् ॥ ५८ ॥

अलिन्दगैश्चतुर्द्वारैश्चतुःशालमुदाहृतम् ।
सर्वतोभद्रनामेदं नृपाणां शस्यते गृहम् ॥ ५९ ॥

नन्द्यावर्तं तथा ख्यातं पश्चिमद्वारवर्जितम् ।
वर्धमानं तथा ख्यातं दक्षिणद्वारवर्जितम् ॥ ६० ॥

स्वस्तिकं तद्भवेन्नाम्ना पूर्वद्वारविवर्जितम् ।
उत्तरद्वारहीनं चेद्रुचकं तद्भवेद्गृहम् ॥ ६१ ॥

सर्वतोभद्रनामेदं चतुःशालमुदाहृतम् ।
शुभप्रदं नरेन्द्राणां विजयारोग्यवर्धनम् ॥ ६२ ॥

नन्द्यावर्तं वर्धमानं स्वस्तिकं रुचकं तथा ।
चत्वारि स्युस्त्रिशालानि गेहानि धरणीभुजाम् ॥ ६३ ॥

नैर्ऋते मुख्यगेहं स्याच्छाले चोत्तरपूर्वगे ।
[1] पूर्वायां चोत्तरद्वारमुत्तरायां च पूर्वतः ॥ ६४ ॥

---

[1] पूर्वायाश्चोत्तरद्वारमुत्तरायाश्च पूर्वतः—मानस.

कर्तव्ये गर्भगेहस्य द्वारे द्वे तु विचक्षणैः ।
एकं स्यात्पूर्वतो द्वारमन्यदुत्तरतः स्थितम् ॥ ६५ ॥

अङ्कणाद्दक्षिणा शाला हस्तिनी परिकीर्तिता ।
अङ्कणात्पश्चिमा शाला महिषीति निगद्यते ॥ ६६ ॥

इदं द्विशालं सिद्धार्थं सर्वकामफलप्रदम् ।
नृपाणां शस्यते स्थानं विशेषाद्वित्तवर्धनम् ॥ ६७ ॥

वायव्ये गर्भगेहं स्याच्छाले दक्षिणपूर्वगे ।
द्वारे शालामुखे कार्ये शालाद्वारे च सम्मुखे ॥ ६८ ॥

महिषी त्वङ्कणात्पश्चादुत्तरा गौः प्रकीर्तिता ।
द्विशालं भयदं चैतद्यमपुर्याश्च निन्दितम् ॥ ६९ ॥

ईशाने प्रथमं वेश्म शाले दक्षिणपश्चिमे ।
दक्षिणादङ्कणात्पूर्वभागे शालोत्तरा स्थिता ॥ ७० ॥

[1] दण्डाख्यं नामतः प्रोक्तं नृणामुद्वेगकारकम् ।
नृपाणां नैव कर्तव्यं निवासार्थं कथंचन ॥ ७१ ॥

विशालमेकं सिद्धार्थं प्रशस्तं पृथिवीभुजाम् ।
क्रीडार्थं तन्निवासार्थं भोगार्थं च प्रशस्यते ॥ ७२ ॥

षोडश राजगेहभेदाः

ध्रुवं हीनमलिन्देन पूर्वालिन्दं तु धन्यकम् ।
जयं स्याद्दक्षिणालिन्दं पश्चिमालिन्दकं वरम् ॥ ७३ ॥

दुर्मुखं चोत्तरालिन्दमेकालिन्दं चतुर्गृहम् ।
धन्यं जयं च शुभदं निन्दिते वरदुर्मुखे ॥ ७४ ॥

---

[1] दण्डाख्यं नामतः प्रोक्तं विशालं भयदं नृणाम् ।
वर्जनीयं प्रयत्नेन नृपैरावासकर्मणि ॥
आग्नेये च मुखे वेश्म स्याच्छाले चोत्तरपश्चिमे ।
अङ्कणात्पूर्वगा छागी दक्षिणा हस्तिनी मता ॥
वाताख्यं नामतः प्रोक्तं नृणामुद्वेगकारकम् ।—क.

पूर्वदक्षिणतोऽलिन्दं नन्दमित्यभिधीयते।
याम्यपश्चिमतोऽलिन्दं मनोरममुदाहृतम्।
पूर्वदिग्भागतोऽलिन्दं गृहं क्रूरं निगद्यते ॥ ७५ ॥

पश्चिमोत्तरतोऽलिन्दं क्षयमित्यभिधीयते।
पूर्वपश्चिमतोऽलिन्दं कान्तं नाम्ना निगद्यते ॥ ७६ ॥

दक्षिणोत्तरतोऽलिन्दं सुपक्षं परिचक्षते।
उत्तरालिन्दहीनं यत्सुमुखं तत्प्रकीर्तितम् ॥ ७७ ॥

पश्चिमालिन्दतो हीनं धनदं गृहमुच्यते।
दक्षिणालिन्दहीनं यदाक्रान्तं तदुदाहृतम् ॥ ७८ ॥

पूर्वालिन्दविहीनं यद्विपुलं परिकीर्तितम्।
सर्वतोलिन्दतो युक्तं विजयं परिकीर्तितम् ॥ ७९ ॥

एवं षोडश गेहानि कथितानि परिस्फुटम्।
यथानाम फलं तेषु विज्ञेयं तन्निवासिनाम् ॥ ८० ॥

राज्ञा तस्मात्प्रकर्तव्यं नृपाणां गेहमुत्तमम्।
हीनस्तम्भमलिन्दं स्याच्छाला स्तम्भैः समावृता ॥ ८१ ॥

नृपाणां गृहकर्तॄणां क्रम एष निरूपितः।

राजभवनान्तरप्रकारः

अन्यच्चतुष्प्रकारं तदेकशालं गृहं भवेत् ॥ ८२ ॥

प्रधानगेहस्तम्भश्च शालास्तम्भैः समो भवेत्।
तस्य लक्ष्म प्रवक्ष्यामि शुभाशुभफलोदयम् ॥ ८३ ॥

उत्तरा शस्यते शाला शाला पूर्वा प्रशस्यते।
दक्षिणा पश्चिमा शाला द्वे शाले परिनिन्दिते ॥ ८४ ॥

नृपाणां सुखवासार्थं न कर्तव्ये कदाचन।
तिष्ठन् गृहेषु शस्तेषु श्रियमाप्नोति पुष्कलाम् ॥ ८५ ॥

आरोग्यं विजयं कीर्तिं सन्तोषं परमाप्नुयात्।
ईदृग्लक्षणसंयुक्तान् विविधान् बहुभूमिकान् ॥ ८६ ॥

कारयित्वा महीपालः प्राप्य चन्द्रबलं महत् ।
विधाय वास्तुपूजादि तर्पयित्वा द्विजानपि ॥ ८७ ॥

सह मङ्गलवाद्येन प्रविशेत्तत्र हर्षितः ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले पुरभवननिर्माणकथनं नाम प्रथमस्तरङ्गः

---

## द्वितीयस्तरङ्गः

नगरागारनिर्माणक्रमाः स्वामिन्निरूपिताः ।
अथ नाटकशालायाः क्रममिच्छामि वेदितुम् ॥ १ ॥

ब्रुवे नाटकशालाया निर्माणस्य क्रमं शृणु ।

नाटकशालानिर्माणक्रमः

सुधाधवलितं रम्यं वास्तुलक्षणसंयुतम् ॥ २ ॥

जालमार्गकृतोद्यानं क्वापि सर्वप्रकाशकम् ।
क्वापि सन्तमसोपेतं मणिदीपप्रकाशितम् ॥ ३ ॥

दन्तिदन्तविनिर्माणमत्तवारणशोभितम् ।
सौवर्णस्तम्भरुचिरं चन्दनस्तम्भगन्धितम् ॥ ४ ॥

रत्नस्तम्भकृतावासं प्रवालस्तम्भरञ्जितम् ।
काचकुट्टिमरोचिष्णु स्फटिकोज्ज्वलकुट्टिमम् ॥ ५ ॥

सुधायाः कुट्टिमोपेतं स्फुरद्वर्णककुट्टिमम् ।
स्फाटिकोपलविन्यासदर्पणाकारभित्तिमत् ॥ ६ ॥

विचित्रचित्रसंयुक्तप्रमोदप्रदभित्तिमत् ।
एवमाश्चर्यजनकं किञ्चिन्निर्मापयेद्गृहम् ।

चित्रकारस्वरूपम्

प्रगल्भैर्भावतत्त्वज्ञैः सूक्ष्मरेखाविशारदैः ॥ ७ ॥

विद्वद्भिर्मानकुशलैश्चित्रलेखनकोविदैः ।
वर्णपूरणदक्षैश्च मिश्रणे च कृतश्रमैः ॥ ८ ॥

चित्रकैर्लेखयेच्चित्रं नानारससमुद्भवम् ।
सुधया निर्मितां भित्तिं श्लक्ष्णां क्षतविवर्जिताम् ॥ ९ ॥

लेपयेच्चित्रकर्मार्थे लेपद्रव्यं प्रवक्ष्यते ।

### लेपद्रव्याणि

माहिषीं त्वचमादाय नवां तोयेन पाचयेत् ॥ १० ॥

नवनीतमिवायाति यावच्चिक्कणतां भृशम् ।
तत्कल्कं चिक्कणीभूतं शलाकाः परिकल्पयेत् ॥ ११ ॥

यत्नेन शोषयेत्पश्चाद्यावत्काठिन्यमाप्नुयात् ।
वज्रलेपमिदं ख्यातं चित्रे सर्वत्र शस्यते ॥ १२ ॥

तद्दृढं मृत्तिकापात्रे तोये कृत्वा प्रतापयेत् ।
संतप्तो द्रवतां याति सर्ववर्णेषु तद्द्रवः ॥ १३ ॥

मिश्रणीयः प्रमाणेन यथावर्णः प्रशस्यते ।
आदाय मृत्तिकां श्वेतां वज्रलेपेन मिश्रयेत् ॥ १४ ॥

तया लेपं प्रकुर्वीत परिशुष्के त्रिवारतः ।
शङ्खचूर्णं सितापिष्टं वज्रलेपसमन्वितम् ॥ १५ ॥

[1]आदाय मृत्तिकां लिम्पेद्यावच्च श्लक्ष्णतां व्रजेत् ।
धातुं नीलगिरौ जातं श्वेतं चन्द्रसमप्रभम् ॥ १६ ॥

नागनाम्नैव विख्यातं शिलया परिवेष्टितम् ।

### वर्णलेपनप्रकारः

मिश्रितं वज्रलेपेन समादाय च पाणिना ॥ १७ ॥

लेपयेन्मृदुयोगेन स्वच्छमच्छं शनैः शनैः ।
पश्चाच्चित्रं विचित्रं च तस्यां भित्तौ लिखेद्बुधः ॥ १८ ॥

---

[1] आदाय भित्तिकां लिम्पेद्यावत्सा—मानस.

नानाभावरसैर्युक्तं सुरेखं [1] वर्णकोचितम् ।
कनिष्ठिकापरीणाहां भागद्वयसमायुताम् ॥ १९ ॥

घनवेणुसमुद्भूतां तूलिकां परिकल्पयेत् ।
तदग्रे ताम्रजं शङ्कुं [2] यवमात्रं विनिक्षिपेत् ॥ २० ॥

तावन्मात्रं बहिः कुर्यात्पत्री नामेरिता बुधैः ।

लेपनसाधनवर्तिका

खर्जूरं भक्तसिक्थेन मृदित्वा [3] कण्टकाकृतिम् ॥ २१ ॥
वर्तिं कृत्वा तया लेख्यं वर्तिका नाम सा भवेत् ।

लेखनी

वत्सकर्णसमुद्भूतरोमाण्यादाय यत्नतः ॥ २२ ॥

तूलिकाग्रे न्यसेत्तानि लाक्षाबन्धनयोगतः ।
लेखनी नाम सा प्रोक्ता सा चैव त्रिविधा भवेत् ॥ २३ ॥

स्थूलादिभेदेन लेखन्यास्त्रैविध्यं तदुपयोगश्च

स्थूला मध्या तथा सूक्ष्मा तया चित्रं विरच्यते ।
स्थूलया लेपनं कार्यं तिर्यगाहितया तया ॥ २४ ॥

अङ्कनं मध्यया कुर्यादग्रपार्श्वनिविष्टया ।
सूक्ष्मया च तथा सूक्ष्मां रेखां कुर्वीत कोविदः ॥ २५ ॥

अग्रेण चित्रिको धीमान् चित्रविद्याविशारदः ।
प्राणी वा यदि वाऽप्राणी यत्प्रमाणमिति श्रुतम् ॥ २६ ॥

चित्रे तयोस्तत्प्रमाणं ज्ञात्वा भित्तौ निवेशयेत् ।
भित्तौ निवेशितस्यास्य दृश्यमानस्य चेतसा ॥ २७ ॥

तन्मानेन लिखेल्लेखां सर्वाङ्गेषु विचक्षणः ।
पूर्वं किट्टेन लेख्यं स्याद्यद्वा वर्तिकया बुधैः ॥ २८ ॥

---

[1] स्वर्णकोच्चितम्—क. [2] यावन्मात्रं. [3] कन्दुका—मानस.

आकारमात्रिकां रेखां विना वर्णं लिखेत्पुरः।
आकारजनिकां रेखां किट्टवर्तिविनिर्मिताम्॥ २९॥

लिखेत्तामेव लेखिन्या गैरिकोद्भूतवर्णतः।
पूरयेद्वर्णतः पश्चात्तत्तद्रूपो[1]चितैः स्फुटम्॥ ३०॥

उज्ज्वलं प्रोन्नतस्थाने श्यामलं निम्नदेशतः।
एकवर्णेऽपि तं कुर्यात्तारतम्यविभेदतः॥ ३१॥

अच्छश्चेदुज्ज्वलो वर्णः [2]पुनः श्यामलतां व्रजेत्।
भिन्नवर्णेषु रूपेषु [3]भित्तौ वर्णः प्रयुज्यते॥ ३२॥

शुद्धवर्णाः

श्वेतेषु पूरयेच्छङ्खं शोणेषु दरदं तथा।
रक्तेष्वलक्तकरसं लोहिते गैरिकं तथा॥ ३३॥

पीतेषु हरितालं स्यात्कृष्णे कज्जलमिष्यते।
शुद्धा वर्णा इमे प्रोक्ताश्चत्वारश्चित्रसंश्रयाः॥ ३४॥

मिश्रवर्णाः

मिश्रान् वर्णानथो वक्ष्ये वर्णसंयोगसम्भवान्।
दरदं शङ्खसम्मिश्रं भवेत्कोकनदच्छवि॥ ३५॥

अलक्तं शङ्खसम्मिश्रं बोराश्वसदृशं भवेत्।
गैरिकं शङ्खसम्मिश्रं जायते मधुकच्छवि॥ ३६॥

हरितालं शङ्खयुक्तं बोराश्वसदृशं भवेत्।
कज्जलं शङ्खसम्मिश्रं धूमच्छायं निरूपितम्॥ ३७॥

नीली शङ्खेन सम्मिश्रा कपोताभा प्रजायते।
राजावर्तः स एव स्यादतसीपुष्पसन्निभः॥ ३८॥

केवलैव च या नीली इन्दीवरसमप्रभा।
हरितालेन मिश्रा चेज्जायते हरितच्छविः॥ ३९॥

---

[1] चिते-क. [2] घनश्यामलतां -क. [3] मिश्रो वर्णः-मानस.

गैरिकं हरितालेन मिश्रितं गौरतां व्रजेत् ।
कज्जलं गैरिकोपेतं श्यामवर्णं [1] निरूपितम् ॥ ४० ॥

अलक्तकेन सम्मिश्रं कज्जलं पाटलं भवेत् ।
अलक्तं नीलिकायुक्तं जम्बूवर्णं स्फुटं भवेत् ॥ ४१ ॥

एवं शुद्धाश्च सम्मिश्रा वर्णभेदाः प्रकीर्तिताः ।

चित्रलेखनप्रकारः

तत्तद्रूपानुसारेण पूरणीयास्तु चित्रकैः ॥ ४२ ॥

एणसारङ्गशार्दूलशिखितित्तिरिकादिषु ।
भिन्नवर्णेषु सत्त्वेषु पृथग्वर्णः प्रयुज्यते ॥ ४३ ॥

गौरवर्णेषु नीलेषु हरितालं पुरो न्यसेत् ।
गौरेषु गैरिकं पश्चान्नीलीं नीलेषु योजयेत् ॥ ४४ ॥

क्षुरेण तीक्ष्णधारेण रेखां न्यूनाधिकां हरेत् ।
पाण्डुरं बिन्दुजातं यत्तत्सर्वं तेन कारयेत् ॥ ४५ ॥

पूरितं वर्णमात्रं यत्तावन्मात्रं हरेत्सुधीः ।
मृदुघर्षणयोगेन यथा सञ्ज्ञा न नश्यति ॥ ४६ ॥

आभरणलेखनम्

रोमराजिसितां कुर्याद्रेखां नानाविधामपि ।
वीरणैः सूक्ष्मतुण्डाग्रैर्मृदुघर्षणयोगतः ॥ ४७ ॥

शुद्धं सुवर्णमत्यर्थं शिलायां परिपेषितम् ।
कृत्वा [2] काचमये पात्रे गालयेत्तन्मुहुर्मुहुः ॥ ४८ ॥

क्षिप्त्वा तोयं तदालोक्य निर्हरेत्तज्जलं मुहुः ।
यावच्छिलारजो याति तावत्कुर्वीत यत्नतः ॥ ४९ ॥

घनत्वान्मसृणं हेम न याति सह वारिणा ।
आस्ते तदमलं हेम बालार्करुचिरच्छवि ॥ ५० ॥

---

[1] प्रजायते—मानस. [2] कांस्यमये—मानस.

तत्कल्कं हेमजं स्वल्पं वज्रलेपेन मेलयेत् ।
मिलितं वज्रलेपेन लेखिन्यग्रे निवेशयेत् ॥ ५१ ॥

लिखेदाभरणं क्वापि यत्किंचिद्धेमकल्पितम् ।
चित्रे निवेशितं हेम यदा शोषं प्रपद्यते ॥ ५२ ॥

वराहदंष्ट्रया तत्तु [1] घट्टयेच्छनकं शनैः ।
यावत्कान्तिं समायाति विद्युच्चकितविग्रहम् ॥ ५३ ॥

सर्वचित्रेषु सामान्यो विधिरेष प्रकीर्तितः ।
प्रान्ते कज्जलवर्णेन लिखेल्लेखाविचक्षणः ॥ ५४ ॥

वस्त्रमाभरणं पुष्पं मुखरागादिकं सुधीः ।
अलक्तेन लिखेत्पश्चाच्चित्रं पूर्णं भवेत्ततः ॥ ५५ ॥

चित्रेषु मुख्यस्थानानि

ऋजु स्यात्सम्मुखं स्थानमन्यदर्धर्जुसंज्ञितम् ।
तृतीयं स्थानकं साचि तुर्यं ह्यर्धर्जुसंज्ञितम् ॥ ५६ ॥

पञ्चमं भित्तिकं प्राहुस्तज्ज्ञाः पार्श्वगतं च यत् ।
एवं स्थानानि मुख्यानि कथितानीह संज्ञया ॥ ५७ ॥

तेषां तु लक्षणं वक्ष्ये ब्रह्मसूत्रविभेदतः ।

ब्रह्मसूत्रभेदेन मुख्यस्थानलक्षणानि भित्तिषु लम्बसूत्रक्रमश्च

ब्रह्मसूत्रबहिःसूत्रे षट्षडंगुलमध्यगे ॥ ५८ ॥

यत्र स्यात्तदृजुस्थानं रूपं साम्मुख्ययोगवत् ।
अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रस्य चैकतः ॥ ५९ ॥

अष्टाङ्गुलं ततोऽन्यत्र चतुरङ्गुलमन्तरम् ।
उक्तमर्धर्जुके स्थाने लम्बसूत्रक्रियाक्रमः ॥ ६० ॥

अङ्गुलानि दशैकत्र कलामात्रं ततोऽन्यतः ।
अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रद्वयस्य च ॥ ६१ ॥

---

[1] घट्टयेत्कनकं—मानस.

[1] साचिस्थाने समाख्यात ऊर्ध्वसूत्रमितिक्रमः।
एकत्रैकाङ्गुलं यस्मिन्नन्यत्रैकादशाङ्गुलम् ॥ ६२ ॥

मध्याद्यर्थाक्षिके स्थाने लम्बसूत्रक्रमो भवेत्।
पक्षसूत्रद्वयं तिष्ठेद्ब्रह्मसूत्रं न दृश्यते ॥ ६३ ॥

लम्बसूत्रक्रमो ह्येष भित्तिके समुदाहृतः।

स्थानेषु लम्बसूत्रक्रमः

स्थानेषु परिवृत्तेषु लम्बसूत्रक्रमो ह्ययम् ॥ ६४ ॥

केशान्ततः समागत्य भ्रूमध्यं नासिकाग्रतः।
चुबुकाद्धृदयं नाभेश्चरणद्वयमध्यगम् ॥ ६५ ॥

आभूमेर्मस्तकं यावद्ब्रह्मसूत्रमुदाहृतम्।
अबलं तदृजुस्थाने स्थानेष्वन्येषु तद्बलम् ॥ ६६ ॥

पक्षसूत्रलक्षणम्

पार्श्वयोस्तस्य सूत्रे द्वे षट्षडङ्गुलदूरगे।
कर्णान्ताच्चुबुकाज्जानुमध्यात्त्वलकबाह्यतः ॥ ६७ ॥

पादप्रदेशिनीमध्याद्भूमिप्रान्ते उभे अपि।
पक्षसूत्रे समाख्याते सर्वस्थानेषु निश्चले ॥ ६८ ॥

परमाण्वादिप्रमाणम्

[2] परमाणुभिरष्टाभिर्वालाग्रमभिधीयते।
वालाग्रैरष्टभिर्लीक्षा यूका लीक्षाष्टकं भवेत् ॥ ६९ ॥

यूकाष्टकं यवः प्रोक्तो यवाष्टकमथाङ्गुलम्।
एकाङ्गुलं भवेन्मात्रा द्वे मात्रे गोलकं कला ॥ ७० ॥

---

[1] साचिस्थानं समाख्यातं मूर्ध्वसूत्रस्थितिक्रमः—मानस.

[2] परमाणुभिरष्टाभिस्त्रसरेणुर्निगद्यते।
त्रसरेणुभिरष्टाभिर्वालाग्रमभिधीयते ॥—मानस.

त्रिमात्रमध्यर्धकला भागस्तु चतुरङ्गुलः ।
त्रयो भागा वितस्तिः स्याद्वितस्तिस्ताल उच्यते ॥ ७१ ॥
तालस्तु मुखमाख्यातं व्यवहाराय कोविदैः ।

मानत्रयम्

उत्सेधस्तु भवेद्दैर्घ्यं विस्तारस्तिर्यगीरितः ॥ ७२ ॥
आनाहः परिधिस्थौल्यमेवं मानत्रयं भवेत् ।

दशतालादिक्रमः

उत्तमं दशतालं स्याच्चतुर्विंशच्छताङ्गुलम् ॥ ७३ ॥
सविंशकं शतं मध्यं कनिष्ठं षोडशाधिकं ।
दशतालमिति ज्ञेयं नवतालं तु वक्ष्यते ॥ ७४ ॥
सद्वादशशतं तत्र ज्येष्ठमष्टाधिकं भवेत् ।
मध्यमाङ्कं ततो वेदमात्राधिकशताङ्गुलम् ॥ ७५ ॥
ज्येष्ठेन दशतालेन ब्रह्मविष्णुमहेश्वराः ।
तथैव मध्यमेनेष्टा दुर्गा लक्ष्मीः सरस्वती ॥ ७६ ॥
ब्राह्मी माहेश्वरी ज्येष्ठा वैष्णवी भूश्च सम्मिता ।
क्षेत्रपालस्य मानं तु कनिष्ठेन विधीयते ॥ ७७ ॥
आदित्यस्कन्ददेवेन्द्रा मोहिनीत्रित्रयं तथा ।
अग्निश्चण्डेश्वरश्चैव यमश्च वरुणस्तथा ॥ ७८ ॥
वायुश्चापि कुबेरश्च गन्धर्वा यक्षराक्षसाः ।
सिद्धचारणनागेन्द्रविद्याधरगणा इमे ॥ ७९ ॥
वरुणानी तथेन्द्राणी कौमारी गरुडस्तथा ।
ज्येष्ठेन नवतालेन विघ्नेशा निर्ऋतिस्तथा ॥ ८० ॥
मध्यमेनाधमे चैव शेषाणां परिकल्पयेत् ।
अष्टतालेन मर्त्याः स्युः सप्तताले विशाखिकाः ॥ ८१ ॥

षट्तालं कुब्जकानां तु पञ्चतालो गणाधिपः ।
वामनस्तु तथैव स्याच्चतुस्तालास्तु भूतकाः ॥ ८२ ॥

किन्नराश्च त्रितालाः स्युः कूश्माण्डाश्च पिशाचकाः ।
एकतालाः कबन्धाः स्युरेवं तालक्रमं विदुः ॥ ८३ ॥

### प्रतिमामानम्

अतः परं प्रवक्ष्यामि प्रतिमामानमुत्तमम् ।
मानं प्रमाणमुन्मानं परिमाणोपमानकम् ॥ ८४ ॥

लम्बमानं षडेतानि मानानि कथयाम्यहम् ।
मानमुत्सेधमानं स्यात्प्रमाणं सहनं मतम् ॥ ८५ ॥

मानं च तिर्यगूर्ध्वं यत्तदुन्मानमिहोच्यते ।

### उत्तमप्रतिकृतेरङ्गुलनियमः

तच्च प्रतिकृतेस्तावत्तदङ्गानां च कथ्यते ॥ ८६ ॥

उत्सेधमानं मूर्धादिपदान्तमनुपूर्वशः ।
लब्धाङ्गदेहिनां तावदङ्गुलानां शतेन च ॥ ८७ ॥

चतुर्विंशत्युत्तरेण प्रतिमां परिकल्पयेत् ।
उष्णीषमङ्गुलमितं केशान्तं त्र्यङ्गुलं ततः ॥ ८८ ॥

उत्सूत्रात्तत आरभ्य षट्त्रिंशद्यवसम्मितम् ।
तद्वन्नासापुटं तत्स्यात्तद्वच्चुबुकमेव हि ॥ ८९ ॥

तेन केशान्तमारभ्य मुखमानं चतुर्मुख ! ।
अष्टोत्तरं यवशतं चुबुकावयवावधि ॥ ९० ॥

गलमूर्धाङ्गुलं सार्धं त्र्यङ्गुलं कण्ठ इष्यते ।
हिक्कासूत्रं समारभ्य हृदयान्तं मुखोन्नतम् ॥ ९१ ॥

ततः प्रभृति नाभ्यन्तं सार्धं सत्रिदशाङ्गुलम् ।
ततः प्रभृति मेढ्रान्तं तद्वदुत्सेध इष्यते ॥ ९२ ॥

तन्मूलाज्जानुपर्यन्तं तन्न्यूनं त्रिदशाङ्गुलम् ।
चतुरङ्गुलमुत्सेधं जानुमण्डलमिष्यते ॥ ९३ ॥

अक्षान्तं जानुनोऽधस्तादेतत्सममितीरितम् ।
ततस्तालान्तमुत्सेधं चतुरङ्गुलसम्मितम् ॥ ९४ ॥

देहाङ्गुलानि यावन्ति दशतालेऽभिपूजिते ।

मध्यमप्रतिकृतावङ्गुलनियमः

विभज्य तावन्त्युक्तानि, मध्यमे श्रूयतां क्रमात् ॥ ९५ ॥

त्रयोदशाङ्गुलं वक्त्रं त्रिस्थानं चतुरङ्गुलम् ।
षड्विंशत्यङ्गुलोत्सेधमूर्वोर्मानमुदाहृतम् ॥ ९६ ॥

तद्वज्जङ्घासमुत्सेधमुत्तमेनेतरत्समम् ।

अधमप्रतिकृतावङ्गुलनियमः

अधमे दशताले तु मुखं शतयवं मतम् ॥ ९७ ॥

अन्यत्तस्य तदेव स्यादूरुर्यवशतद्वयम् ।
जङ्घा च तत्समोत्सेधा मुख्येनान्यत्समं मतम् ॥ ९८ ॥

विंशद्यवशतं पादद्राघिमा कमलासन ! ।
अङ्गुष्ठं त्र्यङ्गुलायामं तदायामा च तर्जिनी ॥ ९९ ॥

एकविंशद्यवायामा मध्यमाङ्गुलिरिष्यते ।
विंशद्यवानामिकान्या कनिष्ठा त्र्यङ्गुलापि च ॥ १०० ॥

यवैश्च पञ्चभिर्युक्ता पार्ष्णिश्च चतुरङ्गुलः ।
भिन्ना तयोरधो बाह्वोरङ्गुल्यः सप्तविंशतिः ॥ १०१ ॥

ततश्च मणिबन्धान्तं षड्विंशत्यङ्गुलायतम् ।
यवद्वयेन च युतं मणिबन्धात्तलं पुनः ॥ १०२ ॥

मध्यमाङ्गुलिमूलान्तं पञ्चाशद्यवसम्मितम् ।
पञ्चाङ्गुलमथाङ्गुष्ठं तर्जनी तद्वदायता ॥ १०३ ॥

षड्यवैश्चाधिकायामा मध्यमा तु षडङ्गुला ।
आयता षड्यवैश्चापि तत्समानामिका मता ॥ १०४ ॥

कनिष्ठाङ्गुलतुलिता मांसला च नखायतिः ।
एकाङ्गुलनखायामा शिष्टा षड्यवसम्मिता ॥ १०५ ॥

बाहवश्चोपबाहुः स्याच्चतुरङ्गुलमायतम् ।
चतुर्यवं चोर्ध्वकण्ठं नालं पञ्चाङ्गुलायतम् ॥ १०६ ॥

लिङ्गं पञ्चाङ्गुलायामं मुष्कं तु चतुरङ्गुलम् ।
सार्धाष्टाङ्गुलविस्तारं ललाटं तदनन्तरम् ॥ १०७ ॥

द्वादशाङ्गुलविस्तारं बालचन्द्रसमाकृति ।
ततस्तु कर्णयोर्मध्यं सार्धं सत्रिदशाङ्गुलम् ॥ १०८ ॥

दशाङ्गुलमधस्तस्य विस्तारश्चुबुकस्य च ।
सपादद्व्यङ्गुलं पूर्णं किञ्चिन्निम्नाकृतिर्भवेत् ॥ १०९ ॥

मूलमध्याग्रविस्तारो ग्रीवायाः क्रमशो भवेत् ।
नवाङ्गुलं तथैकोनसार्धसप्ताङ्गुलं तथा ॥ ११० ॥

भिक्का तयोरधोबाहुमूलयोरन्तरं भवेत् ।
यवैश्चतुर्भिर्विस्तारं स चत्वारिंशदङ्गुलम् ॥ १११ ॥

कक्षयोर्मध्यविस्तारस्त्र्यङ्गुलं सार्धविंशतिः ।
अष्टादशाङ्गुलमितं स्तनयोरपि चान्तरम् ॥ ११२ ॥

षोडशाङ्गुलविस्तारं तुङ्गमध्यमुदाहृतम् ।
अष्टादशाङ्गुलं श्रोणिरधरोदरमिष्यते ॥ ११३ ॥

कटिप्रदेशविस्तारस्त्र्यङ्गुलं सार्धविंशतिः ।
ऊरुमूलस्य विस्तारः सार्धसत्रिदशाङ्गुलः ॥ ११४ ॥

अग्रमेकाङ्गुलं सार्धद्व्यङ्गुलं मध्यमिष्यते ।
द्व्यङ्गुलो मूलविस्तारो लिङ्गस्य समुदाहृतः ॥ ११५ ॥

विस्तीर्णं द्व्यङ्गुलं मूलं मध्यमर्धाधिकं पुनः ।
विस्तीर्णमग्रं मुष्कस्य द्वात्रिंशद्यवसम्मितम् ॥ ११६ ॥

विस्तीर्णमेकादशभिरङ्गुलैरूरुमध्यमम् ।
अग्रं दशभिरेतस्य विस्तीर्णं कमलासन ॥ ११७ ॥

नवाङ्गुलं जानुवक्त्रं पार्श्वे चार्धेन्दु[1]सन्निभे ।
मूले नवाष्टौ मध्ये स्याज्जङ्घार्थे सार्धसप्तकम् ॥ ११८ ॥

विस्तीर्णो नलिकाभागः सार्धैश्च चतुरङ्गुलैः ।
अङ्घ्रिमूलस्य विस्तारस्त्र्यङ्गुलाश्च चतुर्यवः ॥ ११९ ॥

सार्धं पञ्चाङ्गुलं मध्यमग्रं सार्धं षडङ्गुलम् ।
सार्धमष्टाङ्गुलं मूले बाह्वोः सप्ताङ्गुलौ पुनः ॥ १२० ॥

मध्याग्रौ तुल्यविस्तारौ प्रकोष्ठावयवात्परम् ।
सार्धैश्च सप्तभिर्मूले विस्तीर्णं सार्धपञ्चभिः ॥ १२१ ॥

अग्रे चतुर्भिर्मध्ये च मणिबन्धस्य तूच्यते ।
पञ्चाङ्गुलोर्धसहितस्तद्वत्करतलं स्मृतम् ॥ १२२ ॥

अङ्गुष्ठमूलविस्तारो द्व्यङ्गुलो मध्यमङ्गुलम् ।
सषड्यवममुष्याग्रमङ्गुलेन समन्वितम् ॥ १२३ ॥

तर्जन्या मूलविस्तारो नवभिः सहितो यवैः ।
मध्यमेकाङ्गुलं सप्तयवमग्रमुदाहृतम् ॥ १२४ ॥

मूलं दशयवं मध्यं मध्यमाया यवा नव ।
अग्रमेकाङ्गुलं प्रोक्तमितरा तर्जिनीसमा ॥ १२५ ॥

मूले त्वष्टौ कनिष्ठाया यवाः सप्तैव मध्यमे ।
षडग्रेऽङ्गुल्यग्रपर्वस्वर्धं स्यान्नखविस्तृतिः ॥ १२६ ॥

मध्ये करतलं रेखा मध्यमामूल उत्थिता ।
कनिष्ठामूलमारभ्य रेखा मध्यमगा भवेत् ॥ १२७ ॥

मध्यमाङ्गुलितर्जिन्योर्निम्ना तुल्या विचक्षणैः ।
अङ्गुष्ठमूलमारभ्य तर्जिन्याश्चैव मध्यतः ॥ १२८ ॥

---

[1] सन्निभं—क.

तयोश्च रेखयोर्मध्ये तर्जनीमूलगामिनी ।
रेखा कल्प्या यथाशास्त्रं शास्त्राभिज्ञेन शिल्पिना ॥ १२९ ॥

ललाटस्य च विस्तारः सपादद्व्यङ्गुलो भवेत् ।
तस्याधस्ताद्भ्रुवौ कल्प्ये चत्वारिंशद्यवायते ॥ १३० ॥

मध्ये यवेन विस्तीर्णे नेत्रमष्टादशायतम् ।
चक्षुःकनीनिकायामो विस्तारश्च यवः स्मृतः ॥ १३१ ॥

अङ्गुलं श्वेतवर्णस्य विस्तारः कृष्णमण्डलम् ।
यवोनमङ्गुलं ज्योतिस्तन्मध्ये यवसम्मितम् ॥ १३२ ॥

यूकमानं च तन्मध्ये दृष्टिपक्ष्मावली पुनः ।
ऊर्ध्वा समञ्चिता सार्धत्र्यङ्गुला दशिभिर्यवैः ॥ १३३ ॥

विस्तीर्णा स्यात्तदायामो विस्तारश्च तदर्धकः ।
अशीतिः पक्ष्मरोमाणि वक्राग्राणि शतानि च ॥ १३४ ॥

द्व्यङ्गुलं चक्षुषोर्मध्यं मध्यं च श्रुत्यपाङ्गयोः ।
चत्वारिंशद्यवं कर्णविस्तारो द्व्यङ्गुलो भवेत् ॥ १३५ ॥

ऊर्ध्वं कण्ठस्य चायामः सहार्धचतुरङ्गुलः ।
नालं पञ्चाङ्गुलमितं विस्तारं षड्यवैः पुनः ॥ १३६ ॥

पश्चाच्चतुर्यवा नाडी नालतुल्यं चतुर्मुख ! ।
श्रवणस्य च पिप्पल्या मध्यगतं चतुर्यवम् ॥ १३७ ॥

[1] श्रीवत्सकर्णपिप्पल्यङ्गुलमात्रमवस्थिता ।
बन्धनं त्र्यङ्गुलं रन्ध्रं नेत्रसूत्रसमन्वितम् ॥ १३८ ॥

नासिकामूलमध्याग्रविस्तारः कथ्यते क्रमात् ।
अङ्गुलं [2] चाङ्गुलस्यार्धं त्र्यङ्गुलं च चतुर्यवम् ॥ १३९ ॥

अङ्गुलेनोन्नतं मूलं तेन सार्धेन मध्यमम् ।
द्वाभ्यां यवाभ्यां मूलेन द्व्यङ्गुलेनाग्रमुन्नतम् ॥ १४० ॥

---

[1] एवमेव मातृकायां विद्यते. [2] चाङ्गुलं सार्ध-क.

षड्यवं सुषिरं तस्य पुटमध्यं चतुर्यवम् ।
पुटपार्श्वस्य विस्तारो द्वियवः परिकीर्तितः ॥ १४१ ॥

दन्तपाल्यङ्गुलोत्सेधो दर्पणोदरसन्निभः ।
विस्तीर्णावयवौ तुल्यौ राजदन्तौ चतुर्यवौ ॥ १४२ ॥

द्वात्रिंशद्दशनाः कल्प्या यथाशास्त्रोक्तमार्गतः ।
जिह्वा षडङ्गुलायामा विस्तीर्णा त्र्यङ्गुला भवेत् ॥ १४३ ॥

एकादशाङ्गुलं वृत्तं द्व्यङ्गुलं स्तनमण्डलम् ।
चतुर्यवं चूचुकं स्यात् स्तनमण्डलमध्यगम् ॥ १४४ ॥

चतुर्यवं नाभिगर्तं दक्षिणावर्तमिष्यते ।
अध्यर्धमङ्गुलं वृत्तं बहिरर्धाङ्गुलोन्नतम् ॥ १४५ ॥

उष्णीषात्पृष्ठकेशान्तमेकाधिकदशाङ्गुलम् ।
उष्णीषात्पार्श्वकेशान्तं द्वादशाङ्गुलमानकम् ॥ १४६ ॥

कर्णयोरन्तरं विद्यात्सार्धं सत्रिदशाङ्गुलम् ।
मूलमध्याग्रदेशेषु पृष्ठग्रीवा यथाक्रमम् ॥ १४७ ॥

विस्तीर्णा नवभिः सार्धैरङ्गुलैर्नवभिस्तथा ।
अष्टभिश्च भवेत्तस्मादधस्तात्ककुदः स्थितः ॥ १४८ ॥

आयामोत्सेधविस्तारैः ककुदं तच्चतुर्यवम् ।
षट्त्रिंशदङ्गुलं बाह्वोरङ्गुलैर्नवभिस्तथा ॥ १४९ ॥

षड्विंशतिश्चाङ्गुलानां कक्षयोरन्तरं भवेत् ।
पृष्ठमध्यस्य विस्तारो ब्रह्मन् सप्तदशाङ्गुलः ॥ १५० ॥

विस्तीर्णौ पञ्चविंशत्या श्रोणीपार्श्वौ तथाङ्गुलैः ।
कटिप्रदेशविस्तारः षड्विंशत्यङ्गुलो भवेत् ॥ १५१ ॥

षट्त्रिंशदङ्गुलं मध्यं ककुदस्य कटिस्तथा ।
द्व्यङ्गुलोच्छ्रयतस्तस्य स्फिजौ तन्मध्यमङ्गुलम् ॥ १५२ ॥

अष्टाङ्गुलं तयोर्मूलं मध्यं सप्ताङ्गुलं भवेत् ।
अग्रं त्र्यङ्गुलविस्तारमूर्वोर्मूलादिषु त्रिषु ॥ १५३ ॥

भवेत्क्रमेण विस्तारः सार्धं सत्रिदशाङ्गुलम् ।
द्वादशाङ्गुलवत्तस्य तथैव द्वादशाङ्गुलः ॥ १५४ ॥

जङ्घाष्टाङ्गुलविस्तारः सार्धमष्टाङ्गुलं भवेत् ।
जङ्घामध्यं सुविस्तीर्णं नालिका चतुरङ्गुलम् ॥ १५५ ॥

चतुर्यवाधिकं चैव गुल्फं च चतुरङ्गुलम् ।
विस्तारमानं त्रिगुणं सर्वेषां नहनं मतम् ॥ १५६ ॥

अभीतिदो वा वरदो मुख्यो वामेतरः करः ।
स्तनसूत्रसमं कार्यमङ्गुल्यग्रं करस्य तु ॥ १५७ ॥

तयोर्भवेदन्तरालं द्वादशाङ्गुलमञ्जज ! ।
अङ्गुष्ठतर्जनीमध्ये सनालं कमलं भवेत् ॥ १५८ ॥

वरदे कमलाकरं लिखेत्करतलोदरे ।
अङ्गुलाग्रौ यवादर्वाक्सजीवः क्रियते नखः ॥ १५९ ॥

ततोऽग्रे जीवहीनं तु नखाग्रं परिकल्पयेत् ।
सजीवो लोहितः किञ्चिन्निर्जीवः पाण्डुरच्छविः ॥ १६० ॥

यवत्रितयमानेन नखाग्रं परिकल्पयेत् ।
एवं लक्षणसंयुक्तान्मूर्तिभेदान्मनोहरान् ॥ १६१ ॥

देवानां मानुषाणां च तिरश्चां प्राणिनामपि ।
यथाविधानं देवानां मूर्तिभेदाननेकशः ॥ १६२ ॥

भावप्रकाशने दक्षैः वर्णपूरणकोविदैः ।
चित्रकैः कारयामास चित्रमेवं समन्ततः ॥ १६३ ॥

स्वयं नाटकशालायां सकलाश्चर्यकारकम् ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले वर्णसंयोजनचित्रलेखनप्रतिमालक्षणनिरूपणं नाम द्वितीयस्तरङ्गः

---

## अथ तृतीयस्तरङ्गः

स्वामिन्नाटकशालैवं कारितेति समीरितम् ।
यदर्थं तद्विनिर्माणं नटनं तच्च कीदृशम् ॥ १ ॥

नटनार्हाः स्त्रियः काः स्युस्तस्य वा कीदृशः क्रमः ।
तन्मह्यमखिलं ब्रूहि विज्ञाताखिलवास्तव ! ॥ २ ॥

कुमार ! तद्ब्रुवे तुभ्यं समाकर्णय सादरम् ।

### नृत्तस्वरूपम्

प्रागल्भ्यमप्रगल्भानामुत्साहो दीनचेतसाम् ॥ ३ ॥

ईश्वराणां विलासश्च कीर्तिरौदार्यशालिनाम् ।
दुःखिनां दुःखहरणं स्थैर्यं च चलचेतसाम् ॥ ४ ॥

मानो मानवतां यस्मात्तन्नृत्तं सततं मतम् ।

### नृत्तप्राशस्त्यम्

पुत्रोत्पत्तावभीष्टार्थसंसिद्धौ सर्वपर्वसु ॥ ५ ॥

शोभावहं सुमङ्गल्यं कृत्यं सर्वजनप्रियम् ।
नरेन्द्राणां विशेषेण तस्मादेतत्प्रशस्यते ॥ ६ ॥

### नृत्तस्योत्पत्तिः

इन्द्राभ्यर्थनया पूर्वं भरताय चतुर्मुखः ।
प्रमोदाय महेन्द्रस्य नाट्यं समुपदिष्टवान् ॥ ७ ॥

### वाचिकादिभेदेन नृत्तचातुर्विध्यम्

तद्वाचिकाङ्गिकाहार्यसात्त्विकं स्याच्चतुर्विधम् ।
स च पुत्रशतोपेतः सममप्सरसां गणैः ॥ ८ ॥

पुरन्दरस्य पुरतः प्रयोगमकरोन्मुनिः ।

### मार्गनृत्तम्

नृत्तं यदुद्धतं तत्तु ताण्डवं तण्डुने शिवः ॥ ९ ॥

विकृतैरङ्गहाराद्यैरुपेतमुपदिष्टवान् ।
तण्डुनोक्तं मुनिभ्यो वै मनुष्येभ्यो महर्षिभिः ॥ १० ॥

लास्यरूपं तु यन्नृत्तं तत्पार्वत्यै महेश्वरः ।
पुरोपदिष्टवान् सम्यक् सुकुमारप्रयोगतः ॥ ११ ॥

तद्भक्तितुष्टया गौर्या शिक्षिता बाणकन्यका ।
द्वारवत्यां तयाप्येतद्गोपीभ्यः संप्रदर्शितम् ॥ १२ ॥

ततः सौराष्ट्रनारीभ्यो गोपीभिस्संप्रदर्शितम् ।
किंच चित्ररथाख्येन गन्धर्वप्रभुणार्जुनः ॥ १३ ॥

शिक्षितो विविधं नृत्तं तच्च मार्गमिति स्मृतम् ।
शिशिक्षे सकलं तस्माद्विराटदुहितोत्तरा ॥ १४ ॥

तदाराधनतो लब्धं मत्स्येभ्यः समुपादिशत् ।

देशनृत्तम्

अपि नृत्तं विरूपं यत्तत्तद्देशनिवासिनाम् ॥ १५ ॥

देशनृत्तं तदेव स्यात्सर्वलोकानुरञ्जनम् ।

नृत्तद्रष्टृ (प्रोत्साहक) राजनिवेशनस्थानम्

विचित्रभावचित्रार्थचित्रचित्रोपशोभिते ॥ १६ ॥

आस्थानमण्टपे रम्ये सर्वलक्षणसंयुते ।
नानारत्नसमाकीर्णे नानालङ्कारशोभितम् ॥ १७ ॥

सिंहासनं पूर्वमुखं तन्मध्ये विनिवेशयेत् ।

श्रीमान् दाता गुणग्राही भावज्ञः कीर्तिलम्पटः ॥ १८ ॥

सङ्गीतगुणदोषज्ञः सर्वभाषाविशारदः ।
प्रियवाग्वादिमध्यस्थो मार्गदेशप्रभेदवित् ॥ १९ ॥

धीमान् सर्वकलादक्षः सदस्यासीत भूपतिः ।

तादृशराजमहिषीनिवेशनस्थानम्

रूपयौवनसंपन्ना सदा शृङ्गारलोलुपा ॥ २० ॥

सौभाग्यशालिनी भर्तृचित्तनेत्रानुसारिणी ।
देवी चोपविशेत्तत्र वामभागे महीपतेः ॥ २१ ॥

राजविलासिनीनिवेशस्थानम्

रूपयौवनसंपन्ना सर्वाभरणभूषिता ।
हावभावविलासाढ्या विभ्रमादिगुणान्विता ॥ २२ ॥

विलासिनी महीपस्य पश्चाद्भागे निवेशयेत् ।
वाग्गेयकारकविताकारा ये नर्तकादयः ॥ २३ ॥

लास्यलक्षणदक्षाश्च स्यात्तेषामुपवेशनम् ।
अन्येऽपि ये यथायोग्यं तत्तद्विद्याविशारदाः ॥ २४ ॥

भवेयुस्ते महीशस्य नातिदूरोपवेशिनः ।
रम्यं कुसुमसङ्कीर्णं दीपिकाशतशोभितम् ॥ २५ ॥

चित्रोज्ज्वलविशालाढ्यं मण्टपं नृत्तदर्शने ।

नर्तकलक्षणम्

पादस्थानकचारीषु मण्डलीकरणे तथा ॥ २६ ॥

अङ्गहारे दृष्टिहस्तशिरोभावेषु शिक्षितः ।
शुद्धसंकीर्णताभिज्ञो वितते सुषिरे घने ॥ २७ ॥

तते च वाद्ये निपुणो देशदेशाङ्गनृत्तवित् ।
स्वयं नृत्तक्रियाभिज्ञः सर्वभाषाविशारदः ॥ २८ ॥

अरोगो वंशवान् स्वामिवत्सलो विजितेन्द्रियः ।
नित्यालोडितसङ्गीतशास्त्रो नर्तक इष्यते ॥ २९ ॥

पुरोदेशे नरपतेर्दशहस्तान्तरे ततः ।
धार्या यवनिका रम्या नानावर्णविभूषिता ॥ ३० ॥

क्षत्रियाणां च वैश्यानां शूद्राणामथ भेदतः ।
वर्णाः स्युः कथिताः कामं वरमध्याधमाः क्रमात् ॥ ३१ ॥

उत्तमादिभेदेन नर्तकीविभागः

लाटघूर्जरसौराष्ट्रमहाराष्ट्रसमुद्भवाः ।
उत्तमाः स्युर्वरारोहा नृत्ताभिनयकर्मणि ॥ ३२ ॥

मध्योत्तरासमुद्भूता मध्यमाः स्युर्मृगीदृशः ।
कर्नाटद्राविडान्ध्रेषु संभूताः स्युः स्त्रियोऽधमाः ॥ ३३ ॥

नर्तकीनां वयोव्यवस्था

वयो विंशतिपर्यन्तमारभ्य द्वादशाब्दकात् ।
उत्तमं स्यात्तदुपरि यावत्त्रिंशत्तु मध्यमम् ॥ ३४ ॥

आचत्वारिंशदधमं त्रिंशदूर्ध्वमुदाहृतम् ।

वर्णभेदः

गौरः स्यादुत्तमो वर्णः वर्णः कृष्णोऽधमो भवेत् ॥ ३५ ॥

मध्यमो मध्यमो वर्णः वर्णस्यैवं विनिर्णयः ।

नर्तकीलक्षणम्

नातिदीर्घा नातिह्रस्वा न स्थूला न कृशा तथा ॥ ३६ ॥

रूपौदार्यगुणैर्युक्ता सुमुखी दीर्घलोचना ।
सुविभक्ताङ्गवैचित्र्या घनस्तननितम्बिनी ॥ ३७ ॥

जितश्रमा बहुप्रज्ञा सुशिक्षितगतिक्रमा ।
अरोगा रागसम्पन्ना सततं प्रियवादिनी ॥ ३८ ॥

उक्तिप्रत्युक्तिचतुरा सहिता रुचिरैर्गुणैः ।
गुरुदेवद्विजातीनां पूजनोद्युक्तमानसा ॥ ३९ ॥

भूषिता भूषणैः सम्यक्सा मता नर्तकी बुधैः ।

नृत्तोपक्रमः

रङ्गमण्टपमध्यस्था नमस्कुर्याच्चतुर्मुखम् ॥ ४० ॥

विकीर्णपुष्पप्रकरा भारतीं भावयेद्धृदा ।
महादेव महायोगिन् देवदेवामरोत्तम ॥ ४१ ॥

प्रगृह्यतां बलिर्देव मन्त्रसंस्कारसंस्कृतः ।
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यो नमो नमः ॥ ४२ ॥

नमोऽस्तु सर्वजातीयसज्जनेभ्यो नमो नमः ।
प्रशाधि त्वं महाराज पृथिवीं चससागराम् ॥ ४३ ॥

इज्यया चानया नित्यं प्रीयन्तां सर्वदेवताः ।
इति पुष्पाञ्जलिं कृत्वा क्षिप्त्वा यवनिकापटम् ॥ ४४ ॥

वादनोपक्रमं कुर्युर्मार्दङ्गिकपुरोगमाः ।

मार्दङ्गिकादीनां सङ्ख्या

षोडश द्वादशाष्टौ वा सममार्दङ्गिका मताः ॥ ४५ ॥

हुडुक्कावंशवादौ द्वौ द्वौ द्वौ तदनुसारिणौ ।
चतस्रः कांस्यतालिन्यो गायत्येका सवल्लकी ॥ ४६ ॥

अष्टौ तदनुगायिन्यस्तासु द्वे तालकोविदे ।
अष्टौ षड्वाथ चत्वारः समाः काहलधारिणः ॥ ४७ ॥

एकश्च करडाचञ्चुरेष वाद्यविधिः स्मृतः ।

गेया रागविशेषाः

मध्यमादिं पुरस्कृत्य श्रीरागमथवा ध्रुवाम् ॥ ४८ ॥

आदाय प्राञ्जलौ लिप्तिं मृदु गायेयुरङ्गनाः ।
श्रीरागो मध्यमादिश्च नाटकर्णाटगौलकौ ॥ ४९ ॥

छायानाटश्च गातव्याः रागाः षट्प्राञ्जलौ स्फुटम् ।

अङ्गोपाङ्गप्रत्यङ्गानि

नाट्यादिकृतये तज्ज्ञाः षडङ्गानि प्रचक्षते ॥ ५० ॥

शिरो वक्षः करः पार्श्वे कटिश्चरणमित्यपि ।
उपाङ्गानि भ्रुवौ नेत्रे नासा गण्डस्थलाधरम् ॥ ५१ ॥

चुबुकं चेति षट्प्राहुर्नृत्यविद्याविशारदाः ।
प्रत्यङ्गानि पुनर्ग्रीवाबाहुपृष्ठं तथोदरम् ॥ ५२ ॥

ऊरू जङ्घायुगं चेति षडुक्तानि महर्षिभिः ।
शीर्षं दृष्टिस्तथा तारापुटभ्रूभङ्गनासिकम् ॥ ५३ ॥

तथाऽधरो हनुश्चैव मुखरागस्तथापरः ।
हस्तकर्म तथा हस्तप्रचारश्च तथा क्रिया ॥ ५४ ॥

बाहुरंसश्च हृदयं जठरं पार्श्वमेव च ।
कटिरूरुस्तथा जङ्घा पादकर्णं तथा परम् ॥ ५५ ॥

स्थानकं च तथा चारिमण्डलं पाद एव च ।
अङ्गहारस्तथा ज्ञेयो रेचकस्तदनन्तरम् ॥ ५६ ॥

शिक्षा च पद्धतिश्चेति कथितो नृत्यसंग्रहः ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले नाट्यक्रमनिरूपणं
नाम तृतीयस्तरङ्गः

---

## अथ चतुर्थस्तरङ्गः

शिरोदृष्ट्यादिकानां तु प्रोक्ता नृत्तोपयोगिता ।
उपभोगस्तथाङ्गस्य कथ्यतां कस्य कुत्र वा ॥ १ ॥

स्वामिन्! मह्यमिदं ब्रूहि श्रोतुं मेऽस्ति कुतूहलम् ।
कुमार! शृणु तत्सर्वं वर्णयामि तवेप्सितम् ॥ २ ॥

शिरोदृष्टिकरादीनां चाङ्गानामुपयोगिनाम् ।
यथाक्रममथात्रैव लक्षणं प्रतिपाद्यते ॥ ३ ॥

नृत्तोपयोगिशिरोभेदाः

धुतं विधुतमाधूतमञ्चितं कम्पितं तथा ।
आकम्पितं परावृत्तमवधूतमधोमुखम् ॥ ४ ॥

निकुञ्चितं तथोत्क्षिप्तं लोलितं परिवाहितम् ।
इति त्रयोदशविधं शिरः प्रोक्तं मनीषिभिः ॥ ५ ॥

धुतम्

रेचितं तद्धि शनकैस्तिर्यङ्नीतं शिरः स्मृतम् ।
प्रतिषेधे विषादे च तथा पार्श्वावलोकने ॥ ६ ॥
विस्मयादौ प्रयोगोऽस्य कथितो नाट्यनृत्तयोः ।

विधुतम्

तदेव शीघ्रचलनाद्विधुतं वर्णितं शिरः ॥ ७ ॥
भये शीते विषादादौ शिरस्तु विधुतं मतम् ।

आधूतं

उच्चैः कृतं शिरस्तिर्यगाधूतमभिधीयते ॥ ८ ॥
पार्श्वस्थोन्नतवीक्षायां गर्वादौ नाट्यनृत्तयोः ।

अञ्चितम्

मनाग्विनमितं पार्श्वे कथयत्यञ्चितं शिरः ॥ ९ ॥
विनियोगोऽस्य नाट्ये स्याद्व्याधिमूर्छामदादिषु ।

कम्पितम्

कम्पितं तु शिरः शीघ्रं मुहुरूर्ध्वं प्रकम्पितम् ॥ १० ॥
नाट्ये वितर्कविज्ञानपृच्छादौ विनियुज्यते ।

आकम्पितम्

[1] शनैरूर्ध्वमधस्ताच्च कम्पादाकम्पितं शिरः ॥ ११ ॥
पृच्छोपदेशसंज्ञादावेतत्स्यान्नाट्यनृत्तयोः ।

अष्टौ स्थायिभावजाः दृष्टिभेदाः

स्निग्धा हृष्टा च दीना च क्रुद्धा [2] धृष्टा भयान्विता ॥ १२ ॥
जिगुप्सिता विस्मितेति दृशोऽष्टौ स्थायिभावजाः ।

---

[1] इत ऊर्ध्वं सप्तानां शिरसां लक्षणानि लुप्तानि.        [2] दृप्ता—सं. र.

व्यभिचारिदृष्टिभेदाः विंशतिः

शून्या च मलिना श्रान्ता सलज्जा शङ्किता तथा ॥ १३ ॥

विषण्णा मुकुला जिह्मा ललिता च वितर्किता ।
श्रान्तार्धमुकुला त्रस्ता विकासा केकरा तथा ॥ १४ ॥

विप्लुता मदिरा ग्लाना अभितप्ता च कुञ्चिता ।
इति विंशतिरुद्दिष्टा दृष्टयो व्यभिचारिणः ॥ १५ ॥

अष्टौ रसदृष्टयः

कान्ता भयान्विता हास्या करुणा च तथाऽद्भुता ।
रौद्रा वीरा च बीभत्सा इत्यष्टौ रसदृष्टयः ॥ १६ ॥

एवमेकत्र गणिताः षट्त्रिंशन्नाट्यनृत्तयोः ।

रतिभावजा दृष्टिभेदाः

सहर्षा साभिलाषा च मधुरान्तर्विकासिनी ॥ १७ ॥

स्मेरतारा भवेद्दृष्टिः स्निग्धा रत्याख्यभावजा ।

हास्ये प्रयुज्यमाना दृष्टयः

चञ्चला स्मेरगर्भा च मग्नतारा निमेषभाक् ॥ १८ ॥

ईषदाकुञ्चिता दृष्टिर्दृष्टा हास्ये प्रयुज्यते ।

शोके प्रयुज्यमाना दृष्टयः

विस्रस्ताधोत्तरपुटा बाष्पस्थगिततारका ॥ १९ ॥

मन्दसंचारभाग्दृष्टिर्दीना शोकेऽभिधीयते ।

क्रोधे प्रयुज्यमाना दृष्टयः

स्थिरोद्वृत्तपुटा रूक्षा निश्चलोद्वृत्ततारका ॥ २० ॥

आविद्धबद्धभ्रुकुटी दृष्टिः क्रुद्धा भवेत्क्रुधि ।

उत्साहे प्रयुज्यमाना दृष्टयः

स्थिरतारा समुत्फुल्ला प्रसादगुणशालिनी ॥ २१ ॥

धृष्टा दृष्टिः प्रयोक्तव्या भाव उत्साहनामनि ।

भये प्रयुज्यमाना दृष्टयः

स्थिरा विकाससहिता निश्चलीकृततारका ॥ २२ ॥
दृष्टिर्निष्क्रान्तमध्येयं भये ज्ञेया भयान्विता ।

जुगुप्सायां प्रयुज्यमाना दृष्टयः

लक्ष्यालोकसमुद्विग्ना दृष्टिस्स्थगिततारका ॥ २३ ॥
ससंकोचपुटा सा स्याज्जुगुप्सायां जुगुप्सिता ।

विस्मये प्रयुज्यमाना दृष्टयः

उद्वृत्ततारकात्यर्थं समा विकसि (ता) तं तथा ॥ २४ ॥
विस्पष्टमुकुला दृष्टिर्विस्मये विस्मयाभिधा ।
इत्यष्टौ दृष्टयः प्रोक्ताः स्थायीभावसमाश्रयाः ॥ २५ ॥

शून्या दृष्टिः

निश्चला समतारा च ग्राह्यानर्थानगृह्णती ।
तथा समपुटोपेता शून्या दृष्टिरुदाहृता ॥ २६ ॥

मलिना दृष्टिः

मनाङ्निमीलितप्रान्ता किंचिद्दर्शिततारका ।
ईषदस्पष्टपक्ष्माग्रा मलिना दृष्टिरिष्यते ॥ २७ ॥

श्रान्ता दृष्टिः

सममग्नपुटद्वन्द्वा क्षामा चकिततारका ।
तथैवाञ्चितनेत्रा च दृष्टिः श्रान्ताभिधीयते ॥ २८ ॥

लज्जिता दृष्टिः

मनाक्पतितपक्ष्माग्रा लज्जावस्थिततारका ।
किंचित्संकुचिता दृष्टिर्लज्जिता कथिता बुधैः ॥ २९ ॥

शङ्किता दृष्टिः

चला किंचित्स्थिरा किंचिद्गूढा चकिततारका ।
आयता तिर्यगुत्तुङ्गा शङ्किता दृष्टिरीरिता ॥ ३० ॥

विषण्णा दृष्टिः

विस्तारितपुटद्वन्द्वा अवक्रस्तब्धतारका ।
पर्यस्ता सनिमेषा च विषण्णा दृष्टिरीरिता ॥ ३१ ॥

मुकुला दृष्टिः

विस्फुरच्छिलष्टपक्ष्मा या सुखोन्मीलिततारका ।
सङ्कोचितपुटद्वन्द्वा दृष्टिः सा मुकुलाभिधा ॥ ३२ ॥

जिह्मा दृष्टिः

लम्बवक्रपुटद्वन्द्वा मन्दा तिर्यग्विलोकिनी ।
निगूढतारका दृष्टिर्नाम्ना जिह्मेति कीर्तिता ॥ ३३ ॥

ललिता दृष्टिः

वक्रोद्दन्तसकामा च भ्रूविकारसमन्विता ।
सविस्मया च मधुरा ललिता दृष्टिरिष्यते ॥ ३४ ॥

वितर्किता दृष्टिः

तर्कोद्वृत्तपुटद्वन्द्वा विकासान्विततारका ।
अधः स्थितप्रचारा च ज्ञेया दृष्टिर्वितर्किता ॥ ३५ ॥

भ्रान्ता दृष्टिः

चञ्चलीकृततारा च व्याकुला भ्रान्तदर्शना ।
भृशं संस्पृष्टमध्या सा विभ्रान्ता दृष्टिरिष्यते ॥ ३६ ॥

अर्धमुकुला दृष्टिः

ईषदुत्फुल्लपक्ष्माग्रा किंचिद्वक्रपुटद्वया ।
मनाङ्मीलिततारा या ज्ञेयाऽर्धमुकुलाभिधा ॥ ३७ ॥

त्रस्ता दृष्टिः

उद्वर्तितपुटा त्रासात्तरलीकृततारका ।
सुव्याकोशा च मध्या च त्रस्ता दृष्टिः प्रकीर्तिता ॥ ३८ ॥

विकासा दृष्टिः

विकासितपुटद्वन्द्वा निर्निमेषा विकासिनी ।
तथा चञ्चलतारा च विकासा दृष्टिरिष्यते ॥ ३९ ॥

केकरा दृष्टिः

मनाग्वक्रपुटा योगमीलितार्धनिमेषभाक् ।
भृशं विभ्रान्ततारा दृग्दूरालोकेषु केकरा ॥ ४० ॥

विप्लुता दृष्टिः

स्फुरणं पुटयोर्यत्र शैथिल्यं स्तब्धता तथा ।
उद्वृत्ततारकाद्वन्द्वां दृशं तां विप्लुतां विदुः ॥ ४१ ॥

मदिरा दृष्टिः

आकम्पमानमध्या या सौष्ठवेन विवर्जिता ।
दृष्टिर्विकासतारा सा मदिरेति निगद्यते ॥ ४२ ॥

ग्लाना दृष्टिः

भ्रूपक्ष्माग्रपुटैः श्रान्तैः क्रमान्मीलिततारका ।
शिथिला मन्दसंचारा ग्लाना दृष्टिरुदाहृता ॥ ४३ ॥

अभितप्ता दृष्टिः

सव्यथा मन्दतारा च संतप्ता चञ्चलैः पुटैः ।
अभितप्ताभिधा दृष्टिर्विज्ञेया भावुकैर्जनैः ॥ ४४ ॥

कुञ्चिता

मनाग्वर्तितपक्ष्माग्रा वक्रीकृतपुटद्वया ।
श्रान्ता विकृततारा च कुञ्चिता दृष्टिरिष्यते ॥ ४५ ॥

इत्युक्ता व्यभिचारिण्यो विंशतिर्नाट्यदृष्टयः ।

शून्यादिदृष्टीनां विनियोगाः

अभितप्ता च शून्या च चिन्तायां दृष्टिरिष्यते ॥

वैवर्ण्ये चातिनिर्वेदे दृष्टिः स्यान्मलिनाभिधा ।
भेदे श्रमे भवेच्छ्रान्ता त्रपायां लज्जिता मता ॥ ४६ ॥

व्यायामे चाप्यपस्मारे ग्लाना दृष्टिः प्रकीर्तिता ।
सविषादा विषादे स्याच्छङ्कायामपि शङ्किता ॥ ४७ ॥

दुःखे स्वप्ने सुषुप्तौ च मुकुला दृष्टिरिष्यते ।
अक्षिरोगेऽप्यसूयायां दुष्प्रेक्षे कुञ्चिता च दृक् ॥ ४८ ॥

निर्वेदे त्वभितप्ता दृगभिघातोपतापयोः ।
जडतायामसूयायां जिह्मा दृष्टिः प्रकीर्तिता ॥ ४९ ॥

वितर्किता स्मृते तर्के ललिता धृतिहर्षयोः ।
आनन्दे चार्धमुकुला स्पर्शगन्धरसादिषु ॥ ५० ॥

विभ्रान्ता विभ्रमे दृष्टिः सङ्ग्रामावेगयोरपि ।
विप्लुता दृष्टिरुन्मादे चापले मरणादिषु ॥ ५१ ॥

केकरा च भवेद्दृष्टिर्दूरालोकविलोकने ।
मदेषु मदिरा दृष्टिः सत्रासा त्रासदर्शने ॥ ५२ ॥

प्रसादहर्षसंभूता सकामापाङ्गसङ्गता ।
संभोगनाम्नि शृङ्गारे कान्ता दृष्टिः प्रयुज्यते ॥ ५३ ॥

स्तब्धोद्वृत्तपुटद्वन्द्वा ललितोद्वृत्ततारका ।
भये भयानका दृष्टिर्नाट्यज्ञैः संप्रयुज्यते ॥ ५४ ॥

क्रमवक्रपुटद्वन्द्वा किंचिद्विभ्रान्ततारका ।
हास्यदृष्टिरियं प्रोक्ता हास्याभिनयकर्मणि ॥ ५५ ॥

पतितोर्ध्वपुटा सास्रा नासिकाग्रावलोकिनी ।
शोकमन्दरताराच करुणे करुणैव दृक् ॥ ५६ ॥

समाकुञ्चितपक्ष्माग्रा विस्पष्टोद्वृत्ततारका ।
विस्तीर्णान्ता च सौम्या च दृष्टिः स्यादद्भुतेऽद्भुता ॥ ५७ ॥

रूक्षा क्रूरारुणोद्वृत्ता विस्रब्धपुटतारका ।
कुटिलभ्रुकुटी दृष्टी रौद्रा रौद्ररसे भवेत् ॥ ५८ ॥

गम्भीरा समतारा च दीप्ता क्षेपविवर्जिता ।
उत्फुल्लाभ्यन्तरा दृष्टिर्वीरा वीररसे भवेत् ॥ ५९ ॥

निकुञ्चितपुटोपान्ता सुश्लिष्टा स्थिरसूक्ष्मभाक् ।
भीभत्से सघृणा दृष्टिर्भीभत्सा कथिता रसे ॥ ६० ॥

इत्यष्टौ दृष्टयो नाट्ये कथिता रससंश्रयाः ।
एवमेकीकृताः सर्वाः षट्त्रिंशद्दृष्टयः स्मृताः ॥ ६१ ॥

आलोकिताद्यष्टदर्शनानि

आलोकितं समं त्र्यश्रं प्रलोकितविलोकिते ।
उल्लोकितानुवृत्ते च ततोऽन्यदवलोकितम् ॥ ६२ ॥

इत्यष्टौ दर्शने भेदास्तेषां लक्षणमुच्यते ।

आलोकितादिदर्शनानां लक्षणानि

वीक्षणं सहसा यत्स्याद्वदन्त्यालोकितं हि तत् ॥ ६३ ॥

समं यत्समतारं च समन्ताद्दर्शनं विदुः ।
दृष्टिः सा च भवेत्त्र्यश्रपक्ष्मान्तर्वर्तितारकम् ॥ ६४ ॥

पार्श्वयोर्दर्शनं यत्स्यात्तत्प्रलोकितमुच्यते ।
विलोकितं तु विज्ञेयं पृष्ठभागनिरीक्षणम् ॥ ६५ ॥

उल्लोकितं तु विज्ञेयमूर्ध्वदेशनिरीक्षणम् ।
दूरस्थदर्शनं प्राहुरनुवृत्तं विचक्षणाः ॥ ६६ ॥

अधस्थाद्दर्शनं प्राहुरवलोकितसंज्ञितम् ।
इत्यष्टौ दर्शने भेदा नृत्तनाट्यसमाश्रयाः ॥ ६७ ॥

नव तारकाकर्मभेदाः

वेपनं चलनं पातो भ्रमणं च प्रवेशनम् ।
निवर्तनं च निष्कामः समुद्वृत्तमतः परम् ॥ ६८ ॥

प्राकृतं चेति कर्मेदं तारयोर्नवधा स्मृतम् ।

तेषां स्वरूपम्

वेपनं चलनं प्रोक्तं वलनं तिर्यगीक्षणम् ॥ ६९ ॥

स्रस्ततारं भवेत्पातो भ्रमणं च पुटान्तरे ।
तारयोर्मण्डलावृत्तिः प्रवेशोऽन्तःप्रवेशनम् ॥ ७० ॥

निवर्तनं कटाक्षस्य निष्क्रामो निर्गमो मतः ।
समुन्नतिः समुद्वृत्तं सहजं प्राकृतं भवेत् ॥ ७१ ॥

तेषां विनियोगः

निष्क्रामं चलनं चैव करुणे च भयानके ।
हास्ये रसे च बीभत्से प्रवेशनमुदाहृतम् ॥ ७२ ॥

निष्क्रामश्चलनोद्वृत्तिर्भ्रमणं रौद्रवीरयोः ।
करुणे पातनं कार्यं निष्क्रामश्चाद्भुते रसे ॥ ७३ ॥

तारकर्मेति कथितं रसभावसमाश्रयम् ।

तारापुटप्रकारस्तद्विनियोगश्च

विवर्तितं तथोन्मेषः पिहितं कुञ्चितं समम् ॥ ७४ ॥

विचालितं च स्फुरितं निमेषः प्रसृतं तथा ।
विवर्तितं समुद्वृत्तमुन्मेषः पुटयोः पुनः ॥ ७५ ॥

विश्लेषस्तु परिज्ञेयः पिहितं स्थगितं भवेत् ।
अञ्चितं कुञ्चितं स्यात्तु समं नैसर्गिकं मतम् ॥ ७६ ॥

विचालितं वाहितं स्यात्स्पन्दितं स्फुरितं भवेत् ।
निमीलितं निमेषः स्यात्प्रसृतं च प्रसारितम् ॥ ७७ ॥

कोपे विवर्तितं प्रोक्तं निमेषोन्मेषसंयुतम् ।
वीरविस्मयहर्षेषु प्रसृतं तु प्रकीर्तितम् ॥ ७८ ॥

निकुञ्चितनिमेषे च गन्धस्पर्शरसादिषु ।
स्फुरितं स्यादनर्थाय शृङ्गारे तु समं मतम् ॥ ७९ ॥

धूमोष्णवातमूर्छादौ पिहितं परिकीर्तितम् ।
विचालितं परिज्ञेयमभिघाते मनीषिभिः ॥ ८० ॥

तारापुटप्रकारोऽयं रसभावेषु दर्शितः ।

सप्त भ्रूविक्षेपास्तत्स्वरूपं विनियोगश्च

भ्रुकुटिः कुञ्चितं चैव रेचितं पातनं तथा ॥ ८१ ॥

उत्क्षेपं सहजं चैव चतुरं चेति सप्तधा ।
भ्रूमध्यमूलविक्षेपो भ्रुकुटिः कथिता बुधैः ॥ ८२ ॥

एकस्य मृदुभङ्गेन द्वयोर्वा स्यान्निकुञ्चितम् ।
रेचितं पुनरेकस्य ललितोत्क्षेपणाद्भ्रुवः ॥ ८३ ॥

पातनं पुनरेकस्याः द्वयोर्वा स्यादधोगतिः ।
सममुद्गतिरुत्क्षेपो भ्रुवोरेकैकशोऽथवा ॥ ८४ ॥

निसर्गतः समुत्पन्नं सहजं परिकीर्तितम् ।
चतुरं चेषदुच्छ्वासमसृणायतता भ्रुवोः ॥ ८५ ॥

वेलावितर्ककोपेषु दर्शने श्रवणे तथा ।
लीलायां सहजे चैकामूर्ध्वं संचारयेद्भ्रुवम् ॥ ८६ ॥

रोषविस्मयहर्षेषु स्यादुत्क्षेपो द्वयोर्भ्रुवोः ।
हासासूयाजिगुप्सासु घ्राणे च पतनं भ्रुवोः ॥ ८७ ॥

क्रोधाश्रयेष्वनेकेषु भ्रुकुटी घटिता भवेत् ।
चतुरं स्यात्सुखस्पर्शे शृङ्गारे ललिते तथा ॥ ८८ ॥

मोहान्विते विलासे च किलिकिञ्चितनृत्तयोः ।
तथा कुट्टमिते प्राज्ञैः भ्रुवोः कार्यं निकुञ्चितम् ॥ ८९ ॥

विधेयं रेचितं सद्भिः कारणादानतेक्षणे ।
अनुद्धतेषु भावेषु भवेत्स्वाभाविकं मतम् ॥ ९० ॥

एवं प्रदर्शितान्यत्र भ्रुवोः कर्माणि सप्तधा ।

षण्णासिकाभेदास्तासां स्वरूपं विनियोगश्च

स्वाभाविकी नता मन्दा सोच्छ्वासा च निकूणिता ॥ ९१ ॥

विकृष्टा चेति निर्दिष्टा नासिका षड्विधा बुधैः ।
स्वाभाविकी समा ज्ञेया मुहुः श्लिष्टपुटा नता ॥ ९२ ॥

निभृता कथिता मन्दा सोच्छ्वासा हृतमारुता ।
निकूणिता ससंकोचा विकृष्टा विकसत्पुटा ॥ ९३ ॥

इति नाट्ये समुद्दिष्टा नासाः षोढा मनीषिभिः ।
रुदिते मन्दविच्छिन्ने सोच्छ्वासा नासिका मता ॥ ९४ ॥

औत्सुक्ये चित्तनिर्वेदे मन्दा शोके च नासिका ।
तीव्रगन्धे विकृष्टा स्याद्रोषश्वासभयार्तिषु ॥ ९५ ॥

हृद्यगन्धेषु सोच्छ्वासा दीर्घोच्छ्वासे कृते तथा ।
असूयायां जिगुप्सायां हास्ये प्रोक्ता निकूणिता ॥ ९६ ॥

स्वाभाविकी स्याद्भावेषु शेषेष्वेव तु नासिका ।

गण्डभेदाः षट् तल्लक्षणं विनियोगश्च

कम्पितः कुञ्चितः क्षामः फुल्लः पूर्णः समस्तथा ॥ ९७ ॥

इति षोढा समुद्दिष्टो गण्डस्तल्लक्ष्म कथ्यते ।
स्फुरितः कम्पिताभिख्यः ससंकोचस्तु कुञ्चितः ॥ ९८ ॥

अवनम्रस्तथा क्षामः फुल्लो विकसितः पुनः ।
पूर्णः समुन्नतः प्रोक्तस्तथा स्वाभाविकः समः ॥ ९९ ॥

इति गण्डाः समुद्दिष्टाः षड्विधाः पूर्वसूरिभिः ।
दुःखे क्षामो विधातव्यः प्रमोदे फुल्ल इष्यते ॥ १०० ॥

उत्साहगर्वयोः पूर्णः कम्पितो दुःखहर्षयोः ।
शीते ज्वरे भये स्पर्शे रोमाञ्चे चैव कुञ्चितः ॥ १०१ ॥

अवशिष्टेषु भावेषु प्राकृतं कर्म गण्डयोः ।

अधरकर्माणि षट् तल्लक्षणं विनियोगश्च

विवर्तितं विसर्गश्च कम्पनं विनिगूहनम् ॥ १०२ ॥

सन्दष्टकसमुद्गौ च षोढा कर्माधराश्रयम् ।
विवर्तितं समुद्दिष्टमधरस्याविकोणनम् ॥ १०३ ॥

विसर्गश्च विनिष्क्रामः स्फुरणं कम्पनं भवेत् ।
विनिगूहः प्रवेशः स्यात्सन्दष्टो दशनक्षतम् ॥ १०४
श्लिष्टोऽधरः समुद्गः स्यादधरे लक्ष्म षड्विधम् ।
अवज्ञावेदनासूयाहास्यादौ स्याद्विवर्तितम् ॥ १०५ ॥
जये रोषे भये श्रान्ते वेदनादौ च कम्पितम् ।
आयासे च विलासे च रञ्जनादौ च गूहनम् ॥ १०६ ॥
क्रोधकर्मणि सन्दष्टं समुद्गं चुम्बनादिषु ।

चुबुकभेदाः सप्त तल्लक्षणं विनियोगश्च

खण्डनं कुट्टनं छिन्नं लेहनं छुरितं समम् ॥ १०७ ॥
दष्टं च दन्तयोगेन चुबुकं सप्तधा भवेत् ।
कोपे च खण्डनं ज्ञेयं दन्तघृष्टौ च कुट्टनम् ॥ १०८ ॥
भयव्याधिजराशीतग्रस्तानां कुट्टनं स्मृतम् ।
व्यायामे रुदिते शीते च्छिन्नं व्याधिभयादिषु ॥ १०९ ॥
लेहनं लेह्यलेहादौ जृम्भायां छुरितं मतम् ।
समं सहजभावेषु संदष्टं कोपकर्मणि ॥ ११० ॥
इति जिह्वोष्ठदन्तानां व्यापारैश्चुबुकक्रिया ।

चत्वारि मुखचिह्नानि

श्यामं रक्तं प्रसन्नं च तुर्यं स्वाभाविकं मुखम् ॥ १११ ॥
श्यामं तु जायते वक्त्रं भीभत्से च भयानके ।
मदे वीरे च रौद्रे च जायते रक्तमाननम् ॥ ११२ ॥
प्रसन्नमद्भुते वक्त्रं हास्यशृङ्गारयोरपि ।
स्वरूपावस्थितं वक्त्रं भवेत्स्वाभाविकं पुनः ॥ ११३ ॥
कन्धरायास्तु कर्माणि शिरःकर्मानुगानि यत् ।
अतस्तस्या मया कर्म पृथङ्नेह प्रदर्श्यते ॥ ११४ ॥
इति शीर्षादिकण्ठान्तमङ्गानां कर्म वर्णितम् ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले भरतेरितशीर्षादिकण्ठान्ताभिनयनिरूपणं नाम चतुर्थस्तरङ्गः

---

## अथ पञ्चमस्तरङ्गः

अङ्गानां शीर्षमुख्यानां विनियोग उदीरितः ।
इदानीं शृणु हस्तस्य विनियोगो निरूप्यते ॥ १ ॥

हस्तकर्माणि विंशतिः

विसर्गो धूननं रक्षा संश्लेषो मोक्षणं तथा ।
विक्षेपान्दोलने चैव निग्रहस्तु परिग्रहः ॥ २ ॥

आकर्षणं विकर्षः स्याद्वियोगोत्कर्षणं तथा ।
ताडनं मोटनं भेदं छेदनं [1] स्फुटनं तथा ॥ ३ ॥

आह्वानं तर्जनं चेति हस्तकर्माणि विंशतिः ।
एषामन्वर्थसंज्ञत्वान्न पृथग्लक्ष्म कथ्यते ॥ ४ ॥

करप्रचारस्त्रिविधः

अधोमुखस्तथोत्तानस्तथा पार्श्वगतः परः ।
करप्रचारस्त्रिविधो नाट्ये नृत्ते च युज्यते ॥ ५ ॥

चतुर्धा हस्तकरणम्

पूर्वमावेष्टितं ज्ञेयमुद्वेष्टितमतः परम् ।
व्यावर्तितं ततः प्रोक्तं परं च परिवर्तितम् ॥ ६ ॥

चतुर्धा हस्तकरणं प्रोक्तं तल्लक्ष्म कथ्यते ।

हस्तकरणलक्षणानि

अभ्यन्तरे यथाङ्गुल्यस्तर्जनीप्रमुखाः क्रमात् ॥ ७ ॥

प्रवेक्ष्यन्ते तु करणमावेष्टितमिदं हि तत् ।
बहिर्मुखा यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ॥ ८ ॥

उद्वेष्ट्यन्ते तु करणमुद्वेष्टितपदाभिधम् ।
अभ्यन्तरे कनिष्ठाद्या व्यावर्तन्ते यथाक्रमम् ॥ ९ ॥

---

[1] स्फोटनं–क.

अङ्गुल्यः करणं ज्ञेयं तदा व्यावर्तिताभिधम् ।
अङ्गुल्यः परिवर्तन्ते कनिष्ठाद्या बहिर्यदा ॥ १० ॥
क्रमेणैव तदा ज्ञेयं करणं परिवर्तितम् ।

बाहुप्रचारा दश

ऊर्ध्वः प्रसारितस्तिर्यगञ्चितोऽधोमुखस्तथा ॥ ११ ॥
स्वस्तिको मण्डलगतिरपविद्धस्तथापरः ।
पृष्ठानुसारितश्च स्यादुद्वेष्टितक इत्यपि ॥ १२ ॥
दशधा कथितः प्राज्ञैः प्रचारो बाहुसंश्रयः ।
संज्ञातो ज्ञातरूपाणामेषां लक्ष्म न कथ्यते ॥ १३ ॥

नृत्तहस्तास्त्रिंशत्

[1]चतुरश्रौ करौ पूर्वमुद्वृत्ताख्यौ ततः परम् ।
ततस्तलमुखौ ज्ञेयौ स्वस्तिकौ विप्रकीर्णकौ ॥ १४ ॥
[2]अरालकटकावक्त्रौ ततश्चाविद्धवक्त्रकौ ।
सूच्यास्यौ रेचितास्यौ च भवेतामर्ध[3]रेचितौ ॥ १५ ॥
उत्तानवञ्चितौ चान्यौ पल्लवौ च नितम्बकौ ।
केशबन्धौ लताख्यौ च करिहस्तावतः परम् ॥ १६ ॥
पक्षवञ्चितनामानौ पक्षप्रद्योतकौ ततः ।
तार्क्ष्यपक्षौ करौ स्यातां दण्डपक्षौ प्रकीर्तितौ ॥ १७ ॥
ऊर्ध्वमण्डलिनौ हस्तौ पार्श्वमण्डलिनावपि ।
उरोमण्डलिनावन्यावुरःपार्श्वार्धमण्डलौ ॥ १८ ॥

---

[1] भरतनाट्ये चतुःषष्टिनृत्तहस्ता अभिहिताः. [2] अरालखटकौ वक्त्रौ—सं. र.
[3] अर्धरेचितोत्तानवञ्चितयोर्लक्षणं कोशेषु न दृश्यते। संगीतरत्नाकरे तयोर्लक्षणमेवं विद्यते—
"एकेन चतुरश्रेण तौ स्यातामर्धरेचितौ ॥
कपोलांसललाटानां क्षेत्रे त्वन्यतमे स्थितौ ।
त्रिपताकौ करौ किंचित्तिर्यञ्चौ संमुखौ मिथः ॥
अंसकूर्परयोः किंचिच्चलतोरूर्ध्वतस्तलौ ।
क्षणं भूत्वा प्रचलितौ ज्ञेयावुत्तानवञ्चितौ ॥" इति.

मुष्टिकस्वस्तिकौ हस्तौ नलिनीपद्मकोशकौ ।
ललितौ वलितौ ख्यातावलपद्मौ तथोल्बणौ ॥ १९ ॥
नृत्तहस्ता इमे प्रोक्ताः संयुक्ता नृत्यवेदिभिः ।

चतुरश्रहस्तौ

समकूर्परसस्कन्धौ वक्षसोऽष्टाङ्गुलान्तरौ ॥ २० ॥
प्राङ्मुखौ कटकावक्त्रौ चतुरश्रौ निरूपितौ ।

उद्वृत्तहस्तौ

तालवृन्तवदुद्वृत्तौ हंसपक्षौ यदा करौ ॥ २१ ॥
वक्षसः सम्मुखीभूतावुद्वृत्ताविति कीर्तितौ ।

तलमुखौ

हंसपक्षौ तथा हस्तावन्योन्याभिमुखौ स्थितौ ॥ २२ ॥
रेचितौ त्र्यश्रभावेन स्यातां तलमुखौ तथा ।

स्वस्तिकौ

मणिबन्धसमीपस्थौ हंसपक्षाभिधौ करौ ॥ २३ ॥
स्थितौ स्वस्तिकरूपेण स्वस्तिकौ कथितौ करौ ।

विप्रकीर्णौ

करौ स्वस्तिकनामानौ विश्लिष्टौ मणिबन्धनात् ॥ २४ ॥
भवेतां हंसपक्षाख्यौ विप्रकीर्णाभिधौ मतौ ।

अरालकटकामुखौ

पुरस्तादुरसो न्यस्तः कटकाख्यः पराङ्मुखः ॥ २५ ॥
तिर्यक्प्रसारितः किंचिदरालश्चोन्नताननः ।
निजस्थानगतावेतौ विन्यस्तव्यस्तकौ तथा ॥ २६ ॥
[1] सव्यापसव्यौ तत्स्यातामरालकटकामुखौ ।

---

[1] सव्यापसव्यतः स्यातां—क.

आविद्धवक्रकौ

भुजकूर्परबाह्वग्रैर्वक्रैरावर्तितौ करौ ॥ २७ ॥
अवाङ्मुखतलौ हस्तावुक्तावाविद्धवक्रकौ ।

सूचीवक्त्रौ

भुजङ्गमस्तकौ हस्तौ किञ्चित्कुञ्चितकूर्परौ ॥ २८ ॥
मध्याङ्गुष्ठानतौ तिर्यक्सूचीवक्त्रौ प्रकीर्तितौ ।

रेचिताख्यौ

हंसपक्षौ धृतौ भ्रान्तौ पार्श्वदेशप्रसारितौ ॥ २९ ॥
हस्तौ हस्तविशेषज्ञैः कथितौ रेचिताभिधौ ।

पल्लवौ

रेचितो दक्षिणो हस्तश्चतुरश्रं ततः परम् ॥ ३० ॥
हस्ताभिनयतत्त्वज्ञैः कथितौ पल्लवौ करौ ।

नितम्बकौ

स्कन्धादूर्ध्वविनिष्क्रान्तौ त्रिपताकौ करौ यदा ॥ ३१ ॥
नितम्बाविति विख्यातौ नितम्बे कृतिरेचितौ ।

केशबन्धौ

पार्श्वतः केशबन्धाच्च नितम्बा बहुशो यदा ॥ ३२ ॥
तदा हस्तविशेषज्ञैः केशबन्धाविति स्मृतौ ।

लताभिधौ

त्रिपताकौ यदा हस्तौ पार्श्वदेशप्रसारितौ ॥ ३३ ॥
भूयो भूयोऽपि तत्रैव रेचितौ तौ लताभिधौ ।

करिहस्तौ

त्रिपताकौ यदा हस्तौ कर्णोपान्तमुपागतौ ॥ ३४ ॥
डोलितौ पार्श्वतः पार्श्वे हस्तौ तु करिहस्तकौ ।

कल्लोले

पक्षवञ्चितौ

कटिमस्तकलग्नाग्रौ त्रिपताकौ यदा करौ ॥ ३५ ॥
प्रयोगज्ञैः सदा ज्ञेयौ पक्षवञ्चितसंज्ञिकौ ।

पक्षप्रोद्यतकौ

एतावेव परावृत्तौ पक्षप्रद्योतकौ करौ ॥ ३६ ॥

तार्क्ष्यपक्षकौ

त्रिपताकौ पताकौ वा नितम्बस्थावधोमुखौ ।
कूर्परौ कुञ्चितौ किंचित्करौ गरुडपक्षकौ ॥ ३७ ॥

दण्डपक्षौ

हंसपक्षौ यदा हस्तौ व्यावृत्तौ परिकीर्तितौ ।
प्रसारितभुजौ तिर्यग्दण्डपक्षावुदाहृतौ ॥ ३८ ॥

ऊर्ध्वमण्डलिनौ

हस्तावरालनामानावूर्ध्वदेशविवर्तितौ ।
आवृत्तिपरिवृत्तिभ्यामूर्ध्वमण्डलिनौ करौ ॥ ३९ ॥

पार्श्वमण्डलिनौ

तथैव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ करौ ।
[1] (तथैव पार्श्वविन्यस्तौ पार्श्वमण्डलिनाविमौ ॥ ४० ॥)

उरोमण्डलिनौ

एक उद्वेष्टितो हस्तो द्वितीयोऽप्यपवेष्टितः ।
वक्षस्समीपनिक्षिप्तावुरोमण्डलिनौ करौ ॥ ४१ ॥

उरःपार्श्वार्धमण्डलौ

अलपल्लवकारालावुरःपार्श्वान्तरस्थितौ ।
पूर्ववद्भ्रमितौ हस्तावुरःपार्श्वार्धमण्डलौ ॥ ४२ ॥

---

[1] अधिक इति भाति.

मुष्टिकस्वस्तिकौ

मणिबन्धसमीपस्थौ स्वस्तिकाकारधारिणौ ।
कटकावदनौ हस्तौ मुष्टिकस्वस्तिकौ मतौ ॥ ४३ ॥

नलिनीपद्मकोशकौ

व्यावृत्तथा परिवृत्तथा च पद्मकोशाभिधौ करौ ।
स्यातां जानुसमीपस्थौ नलिनीपद्मकोशकौ ॥ ४४ ॥

ललितौ

पल्लवाख्यौ शिरःस्थाने हस्तौ ललितसंज्ञितौ ।

वलितौ

मुष्टिकस्वस्तिकौ हस्तौ शिरोदेशविवर्तितौ ॥ ४५ ॥
उक्तौ वलितनामानौ नृत्तविद्याविशारदैः ।

अलपद्मौ

करौ प्रसारितावूर्ध्वावलपद्मसमाश्रयौ ॥ ४६ ॥

उल्बणौ

उद्वेष्टिताग्रौ विज्ञेयौ नृत्तज्ञैरुल्बणाभिधौ ।

पताकादिताम्रचूडान्ताश्चतुर्विंशतिरसंयुतहस्ताः

पताकः प्रथमो हस्तस्त्रिपताकस्ततः परम् ॥ ४७ ॥
कर्तरीमुखसंज्ञः स्यादर्धचन्द्रोऽप्यरालकः ।
शुकतुण्डस्ततो ज्ञेयो मुष्टिकस्तदनन्तरम् ॥ ४८ ॥
शिखरश्च कपित्थश्च तथान्यः कटकामुखः ।
सूच्यास्यः पद्मकोशश्च सर्पशीर्षस्ततः परम् ॥ ४९ ॥
मृगशीर्षश्च [1] लाङ्गूलो ह्यलपद्मस्तथैव च ।
चतुरो भ्रमरश्चैव हंसास्यो हंसपक्षकः ॥ ५० ॥

---

[1] काङ्गूलो—संगीतरत्नाकरे.

सन्दंशमुकुलौ स्यातामूर्णानाभिस्ततः परम् ।
ताम्रचूड इति प्रोक्ताश्चतुर्विंशतिसङ्ख्यया ॥ ५१ ॥

पताकः

अङ्गुष्ठस्तर्जनीमूले संलग्नो यत्र कुञ्चितः ।
अङ्गुल्यः प्रसृताः श्लिष्टाः स पताकः करः स्मृतः ॥ ५२ ॥
प्रतापनप्रहारादौ विनियोगोऽस्य दर्शितः ।

त्रिपताकः

स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः ॥ ५३ ॥
मङ्गलद्रव्यसंस्पर्शे तिलकस्य कृतावपि ।
अश्रुप्रमार्जनादौ च विनियोगोऽस्य दर्शितः ॥ ५४ ॥

कर्तरीमुखः

अस्यैव मध्यमा पार्श्वे तर्जनीपृष्ठदर्शिनी ।
कर्तरीमुखनामासौ करः प्रोक्तस्तथा बुधैः ॥
विद्यादिरञ्जने मार्गदर्शनादावयं करः ।

अर्धचन्द्रः

साङ्गुष्ठाः करशाखाः स्युर्विनता यत्र चापवत् ॥ ५५ ॥
तमाहुरर्धचन्द्राख्यं चन्द्रलेखादिदर्शने ।

अरालकः

पताके तर्जनी वक्रा नाम्ना सोऽयमरालकः ॥ ५६ ॥
शौर्यगाम्भीर्यधैर्यादौ विनियोगोऽस्य दर्शितः ।

शुकतुण्डः

अस्यैव यदि हस्तस्य कुञ्चिताऽनामिका भवेत् ॥ ५७ ॥
शुकतुण्डस्तदा नाहं सत्यमित्यादिषु स्मृतः ।

मुष्टिकः

अङ्गुष्ठेनातिपीड्यन्ते यदाङ्गुल्यस्तलस्थिताः ॥ ५८ ॥
तदा स्यान्मुष्टिकः खड्गग्रहणादौ नियुज्यते ।

शिखरः

अङ्गुष्ठो मुष्टिकस्यैव यदा स्यादूर्ध्वनिर्गतः ॥ ५९ ॥
तदासौ शिखरः कार्यः प्रग्रहग्रहणादिषु ।

कपित्थकः

अस्यैव तर्जनी वक्रा यदाङ्गुष्ठनिपीडिता ॥ ६० ॥
तदा कपित्थकः कार्यः खड्गाद्यायुधदर्शने ।

कटकामुखः

कपित्थस्यैव हस्तस्य कनिष्ठाऽनामिका यदा ॥ ६१ ॥
उत्क्षिप्ता कुञ्चिता किंचित्तदा स्यात्कटकामुखः ।
आदर्शचामरच्छत्रधारणादौ नियुज्यते ॥ ६२ ॥

सूचीमुखः

अस्यैव यदि हस्तस्य तर्जनी [1] प्रश्रिता भवेत् ।
सूचीमुखस्तदा हस्तो विद्युद्दीपादिदर्शने ॥ ६३ ॥

सर्पमस्तकः

अङ्गुष्ठसहिताः सर्वाः करशाखाः सुसंहताः ।
निम्नं तलं च यत्र स्यात्स हस्तः [2] सर्पमस्तकः ॥ ६४ ॥
इभकुम्भस्थलास्फाले भुजङ्गगतिदर्शने ।
अम्भश्चुलकपानादौ विनियोगोऽस्य दर्शितः ॥ ६५ ॥

---

[1] प्रसृता—क. [2] सर्पहस्तकः—क.

मृगशीर्षकः

यस्मिन् कनिष्ठिकाङ्गुष्ठावूर्ध्वावन्याश्च संहताः ।
अधोमुखास्तथाङ्गुल्यः स हस्तो मृगशीर्षकः ॥ ६६ ॥

[1] अक्षपाते तथा स्वेदमार्जनादौ नियम्यते ।

लाङ्गुलम्

मध्यमाङ्गुष्ठतर्जन्यो यत्र त्रेताग्निवत्स्थिताः ॥ ६७ ॥

कुञ्चितानामिका चोर्ध्वा कनिष्ठा चेत्तु लाङ्गुलम् ।
मणिपूगफलादीनां दर्शने सा नियुज्यते ॥ ६८ ॥

अलपद्मकः

आवर्तिताः करतले यस्मिन्नङ्गुलयोऽखिलाः ।
पार्श्वागताश्च विरलाः करोऽसावलपद्मकः ॥ ६९ ॥

निषेधशून्यवाक्यादौ हस्तोऽयं विनियुज्यते ।

चतुरः

ऊर्ध्वं कनीयसी यस्मिन्नन्यास्तिस्रः प्रसारिताः ॥ ७० ॥

अङ्गुष्ठो मध्यमामध्ये स हस्तश्चतुरः स्मृतः ।
विनये नियमादौ च विनियोगोऽस्य दर्शितः ॥ ७१ ॥

भ्रमरः

वक्रा प्रदेशिनी यस्मिन् सन्दंशोऽङ्गुष्ठमध्ययोः ।
कनिष्ठानामिका चोर्ध्वे विरले भ्रमरस्तु सः ॥ ७२ ॥

विनियोगोऽस्य विज्ञेयः कर्णपूरादिदर्शने ।

हंसवक्त्रः

मध्यमाङ्गुष्ठतर्जन्यः संश्लिष्टाग्राः परे पुनः ॥ ७३ ॥

ऊर्ध्वे च विरले यस्मिन् हंसवक्त्रः स कीर्तितः ।
किंचित्प्रसारिताग्रोऽसौ मृदुत्वादौ नियुज्यते ॥ ७४ ॥

---

[1] अस्त्रपाते–क.

हंसपक्षः

ऊर्ध्वा कनीयसी यस्मिन्नङ्गुष्ठः कुञ्चितो मनाक् ।
शेषाः प्रसारिताः श्लिष्टाः स हस्तो हंसपक्षकः ॥ ७५ ॥
प्रतिग्रहेष्वाचमन[1]प्रभृतिष्वेष दृश्यते ।

सन्दंशः

यत्राङ्गुष्ठस्य तर्जन्याः सन्दंशः परिदृश्यते ॥ ७६ ॥
ऊर्ध्वाश्च विरलाः शेषाः स सन्दंशकरो मतः ।
एष प्रयुज्यते हस्तः कुसुमापचयादिषु ॥ ७७ ॥

मुकुलः

अङ्गुलीपञ्चकं यत्र मिलिताग्रं प्रदृश्यते ।
मुकुलो मुकुलाकारः करोऽसौ परिकीर्तितः ॥ ७८ ॥
भोजने देवपूजायामेष हस्तः प्रयुज्यते ।

ऊर्णनाभिः

अङ्गुल्यः कुञ्चिताः सर्वाः [2]पद्मकोशे यदा तदा ॥ ७९ ॥
ऊर्णनाभिस्तदा हस्तः शिरःकण्डूयनादिषु ।

ताम्रचूडः

तर्जनी कुञ्चिता यत्र सन्दंशोऽङ्गुष्ठमध्ययोः ॥ ८० ॥
शेषे तलगताग्रे च ताम्रचूडकरः स्मृतः ।
बालविश्वासने शैघ्र्यदर्शने तालपातने ॥ ८१ ॥
जृम्भणे च तथा राज्ञां ताम्रचूडकरो भवेत् ।
इत्यसंयुतहस्तानां चतुर्विंशतिरीरिताः ॥ ८२ ॥

अञ्जल्याद्यवहित्थकान्तास्त्रयोदश संयुतहस्ताः

अञ्जलिः प्रथमः प्रोक्तः कपोतः कर्कटस्तथा ।
स्वस्तिकाख्यः स विज्ञेयः कटकावर्धमानकः ॥ ८३ ॥

---

[1] प्रभृतिष्वेव—क. [2] पद्मकोशो—क.

उत्सङ्गो निषधान्दोलौ ततः पुष्प[1]पुटः करः ।
मकरो गजदन्तश्च वर्धमानोऽवहित्थकः ॥ ८४ ॥

एते तु संयुता हस्तास्त्रयोदश निरूपिताः ।

अञ्जलिः

पताकाकारहस्ताभ्यां श्लिष्टाभ्यामञ्जलिर्भवेत् ॥ ८५ ॥

गीर्वाणगुरुविप्राणामयं स्यादभिवादने ।

कपोतः

अन्योन्यपार्श्वसंश्लेषात्कपोतः करयोर्मतः ॥ ८६ ॥

प्रणामे विनयादौ च प्रयोगोऽस्य प्रदृश्यते ।

कर्कटः

अङ्गुल्यः [2]करयोर्याः स्युरन्योन्यं मध्यनिर्गताः ॥ ८७ ॥

स करः कर्कटः कम्बुवादनादौ प्रयुज्यते ।

स्वस्तिकः

करावरालावुत्तानौ मणिबन्धे निवेशितौ ॥ ८८ ॥

वामपार्श्वगतौ चेत्स्यात्स हस्तः स्वस्तिकाभिधः ।
[3]मेघवार्धिवनादीनां विश्लिष्टानां च दर्शने ॥ ८९ ॥

कटकावर्धमानः

कटकाख्यो यदा हस्तावन्योन्याभिमुखीकृतौ ।
कटकावर्धमानोऽयं प्रणामादौ नियुज्यते ॥ ९० ॥

उत्सङ्गः

करौ चेत्सर्पशीर्षाख्यौ क्रियेते स्वस्तिकाकृती ।
व्यत्यस्तभुज[4]संबाधः उत्सङ्गः स्यात्करः स्मृतः ॥ ९१ ॥

परिरम्भे च कम्पादौ करोऽयं विनियुज्यते ।

---

[1] पटः—क. [2] करयोर्यस्मिन् अन्योन्यं—क. [3] मघावार्धि—क. [4] भुजसंबन्धः—क.

निषधः

करं मुकुलनामानं कपित्थकरवेष्टितम् ॥ ९२ ॥
वदन्ति निषधं सोऽयं समयादिषु दृश्यते ।

आन्दोलः

शिथिलांसौ यदा हस्तौ पताकाख्यौ प्रलम्बितौ ॥ ९३ ॥
तदान्दोलाह्वयो हस्तो विषादादौ प्रयुज्यते ।

पुष्पपुटः

हस्तः सर्पशिरः[1]संज्ञो ह्यन्योन्यं पार्श्वसङ्गतौ ॥ ९४ ॥
हस्तः पुष्पपुटः स स्याद्देवतातर्पणादिषु ।

मकरः

हस्तौ पताकनामानावूर्ध्वाङ्गुष्ठावधोमुखौ ॥ ९५ ॥
उपर्युपरि विन्यस्तौ मकरः कथितः करः ।
विनियोगोऽस्य शार्दूलसिंहनक्रादिदर्शने ॥ ९६ ॥

गजदन्तः

अन्योन्याभिमुखौ हस्तौ किंचित्कुञ्चितकूर्परौ ।
सर्पशीर्षकरौ सोऽयं गजदन्तः प्रकीर्तितः ॥ ९७ ॥
पाषाणपर्वतोत्पाटे स्तम्भादिग्रहणादिषु ।

वर्धमानः

पराङ्मुखौ हंसपक्षौ वर्धमानो भवेत्करः ॥ ९८ ॥
विनियोगोऽस्य मन्तव्यः कवाटोद्घाटनादिषु ।

अवहित्थः

अभिवक्षस्थलं स्यातां शुकतुण्डौ यदा करौ ॥ ९९ ॥

---

[1] संज्ञावन्योन्यं–क.

शनैरधोमुखौ नीताववहित्थस्तदा करः ।
दौर्बल्यौत्सुक्यनिःश्वासगात्रकार्श्येष्वसौ भवेत् ॥ १०० ॥

एते तु संयुता हस्तास्त्रयोदश निरूपिताः ।
एवं कराश्चतुष्षष्टिर्नाट्यनृत्तोपयोगिनः ॥ १०१ ॥

दर्शिताः संग्रहेणैव विनियोगपुरस्सरम् ।

इति श्री शिवतत्त्वरत्नाकरे षष्ठकल्लोले हस्ताभिनयवर्णनं नाम पञ्चमस्तरङ्गः

---

## अथ षष्ठस्तरङ्गः

अथ वक्षःप्रभृत्यङ्गभेदानां लक्षणानि तु ।
निगद्यन्ते क्रमेणैव विनियोगपुरःसरम् ॥ १ ॥

### पञ्चविधवक्षोभेदाः

समसुद्वाहितं चैव निभुग्नं च प्रकम्पितम् ।
आभुग्नं चेति विज्ञेयं वक्षः पञ्चविधं भवेत् ॥ २ ॥

### समवक्षः

सकलैरङ्गविन्यासैः समैः सौष्ठवसंयुतम् ।
स्वभावावस्थितं वक्षः समं नाम प्रकीर्तितम् ॥ ३ ॥

### उद्वाहितवक्षः

ऊर्ध्ववक्त्रं तु विज्ञेयं वक्ष उद्वाहिताभिधम् ।
उन्नतालोकजृम्भादौ प्रयोगोऽस्य प्रदृश्यते ॥ ४ ॥

### निभुग्नवक्षः

उन्नतं निम्नपृष्ठं च निभुग्नांसं च निश्चलम् ।
निभुग्नसंज्ञकं वक्षो गर्वादौ विनियुज्यते ॥ ५ ॥

प्रकम्पितवक्षः

वक्षो यत्र भवेद्युक्तमूर्ध्वक्षेपैर्निरन्तरम् ।
प्रकम्पिताख्यं विज्ञेयमुरो हासादिकर्मसु ॥ ६ ॥

आभुग्नवक्षः

उदग्रपृष्ठं निम्नं च कुञ्चितांसं श्लथं मनाक् ।
आभुग्नाख्यमुरस्तत्स्यान्मूर्छाशोकभयादिषु ॥ ७ ॥

इति पञ्चविधं वक्षः प्रोक्तं, जठरमुच्यते ।

जठरत्रैविध्यम्

[1] खल्वं क्षामं तथा पूर्णं जठरं कथितं त्रिधा ॥ ८ ॥

निम्नं खल्वं नतं क्षाममाध्मातं पूर्णमुच्यते ।
क्षुधिते व्याधिते शान्ते जठरं खल्वमिष्यते ॥ ९ ॥

जृम्भारोदनहास्यादौ जठरं क्षाममिष्यते ।
व्याधावत्यशनादौ च पूर्णं जठरमुच्यते ॥ १० ॥

पञ्च पार्श्वभेदाः

समुन्नतं नतं चैव प्रसारितमतः परम् ।
विवर्तितं चापसृतं पार्श्वं पञ्चविधं भवेत् ॥ ११ ॥

पार्श्वं भुजकटिस्कन्धैरुन्नतैः स्यात्समुन्नतम् ।
आभुग्नस्तु कटिर्यत्र स्कन्धोऽप्यपसृतो मनाक् ॥ १२ ॥

नताभिधानं तत्पार्श्वं कथितं नाट्यवेदिभिः ।
आयामात्पार्श्वयोर्ज्ञेयं पार्श्वं नाम प्रसारितम् ॥ १३ ॥

पार्श्वं विवर्तितं ज्ञेयं त्रिकस्यैव विवर्तनात् ।
पार्श्वादपसृते किंचित्पार्श्वं चापसृतं भवेत् ॥ १४ ॥

समुन्नतं चापसृतं नतं स्यादुपसर्पणे ।
प्रसारितं प्रमोदादौ परिवृत्तौ विवर्तितम् ॥ १५ ॥

---

[1] क्षामं खल्वं समं पूर्णमुदरं स्याच्चतुर्विधम् । इति चतुर्धा जठरं वर्णयन्ति ।

[1]निवृत्तेऽपसृतं पार्श्वे ज्ञेयं नाट्यविशारदैः ।
इति पार्श्वं समुद्दिष्टं, अधुना कटिरुच्यते ॥ १६ ॥

पञ्चविधाः कटयः

विवृत्ता रेचिता छिन्ना कम्पितोद्वाहिता तथा ।
इति पञ्चविधा प्रोक्ता कटिर्नाट्यविशारदैः ॥ १७ ॥

विवृत्ता सा कटिर्ज्ञेया सम्मुखी या पराङ्मुखी[2] ।
परितो भ्रमणाज्ज्ञेया संज्ञया रेचिता कटिः ॥ १८ ॥

तिर्यङ्मध्यस्य चलनाच्छिन्ना नाम कटिर्भवेत् ।
तूर्णं गतागतैस्तिर्यक्कटिरुक्ता प्रकम्पिता ॥ १९ ॥

उद्वाहिता गतैः [3]पार्श्वनितम्बोद्वाहिता कटिः ।
वर्तनेषु विवृत्ता स्याद्भ्रमणेषु च रेचिता ॥ २० ॥

व्यायामेषु भवेच्छिन्ना कम्पिता गमनादिषु ।
उद्वाहिता कटिः स्थौल्ये तथा लीलागतादिषु ॥ २१ ॥

ऊरुभेदाः पञ्च

वलितः कम्पितश्चैव स्तम्भितोद्वर्तितावपि ।
निर्वर्तिताह्वयश्चेति भवेदूरुस्तु पञ्चधा ॥ २२ ॥

वलनक्रियया युक्तः स्यादूरुर्वलिताभिधः ।
नमनोन्नमनात्पार्ष्णेरूरुः स्यात्कम्पितो मुहुः ॥ २३ ॥

अपवृत्ते क्रियायोगे ऊरुः स्यात् स्तम्भिताभिधः ।
वलिताविद्धकरणादूरुरुद्वाहितो मतः ॥ २४ ॥

पार्ष्ण्योरभ्यन्तरगतेरूरुर्निर्वर्तितः स्मृतः ।
स्वेच्छाविहारे [4]चरितो भवेद्भीतौ च कम्पितः ॥ २५ ॥

---

[1] निवृत्ते प्रसृते पार्श्वे. [2] पराङ्मुखे इति भवितुमुचितम्. [3] पार्श्वे नितम्ब-क. [4] वलित इत्यर्थः.

विषादे साध्वसे चैव स्तम्भितं विनियोजयेत् ।
उद्वर्तितः प्रयोक्तव्यो व्यायामे ताण्डवे तथा ॥ २६ ॥
संभ्रमादिपरिभ्रान्तावूरुर्निर्वर्तितः स्मृतः ।

पञ्चविधा जङ्घा

उद्वाहिता नता क्षिप्ता परिवृत्ता ततः परम् ॥ २७ ॥
आवर्तितेति विज्ञेया जङ्घा पञ्चविधा बुधैः ।
ऊर्ध्वमुद्वाहनाज्जङ्घा भवेदुद्वाहिताभिधा ॥ २८ ॥
जानुसंकोचनादुक्ता नता जङ्घा मनीषिभिः ।
विक्षेपणेन जङ्घायाः क्षिप्ता जङ्घा निगद्यते ॥ २९ ॥
परिवृत्ता भवेज्जङ्घा प्रतीपप्रापणक्रमात् ।
वामतो दक्षिणः पादो वामोऽपि हि तथान्यतः ॥ ३० ॥
क्षिप्यते यत्र विद्वद्भिर्जङ्घा सावर्तिताभिधा ।
आविद्धगमनादौ तु स्याज्जङ्घोद्वाहिताभिधा ॥ ३१ ॥
स्थानासनादौ कर्तव्या नता जङ्घा प्रयोक्तृभिः ।
व्यायामे ताण्डवे चैव क्षिप्ता जङ्घा नियुज्यते ॥ ३२ ॥
परिवृत्ता तु कर्तव्या कोविदैस्ताण्डवादिषु ।
गतौ विदूषकस्य स्याज्जङ्घावर्तितसंज्ञिका ॥ ३३ ॥

षड्विधश्चरणः

अञ्चितः कुञ्चितः सूची तथाऽग्रतलसंचरः ।
उद्घट्टितः समश्चेति चरणः षड्विधः स्मृतः ॥ ३४ ॥
भूमौ यस्य स्थितः पार्ष्णिरङ्गुल्यः किंचिदञ्चिताः ।
ऊर्ध्वमग्रतलं पादः सोऽञ्चितः परिकीर्तितः ॥ ३५ ॥
यस्य पार्ष्णिः समुत्क्षिप्तस्तथाङ्गुल्यश्च कुञ्चिताः ।
कुञ्चितो मध्यभागश्च कुञ्चितश्चरणस्तु सः ॥ ३६ ॥
यस्योत्क्षिप्ता भवेत्पार्ष्णिरङ्गुष्ठाग्रे व्यवस्थितः ।
वामपादः स्वभावस्थः सूचीपादः स उच्यते ॥ ३७ ॥

[1]अङ्गुष्ठौ प्रसृतौ यस्मिन्नुत्क्षिप्तः पार्ष्णिरेव च।
अङ्गुल्यः कुञ्चिताः स स्यात्पादोऽग्रतलसंचरः ॥ ३८ ॥

स्थित्वा चाङ्घ्रितलाग्रेण भूमौ पार्ष्णिनिघट्टिते।
उद्घट्टिताभिधः पादो नृत्यज्ञैः संप्रकीर्तितः ॥ ३९ ॥

स्वभावसंस्थितो भूमौ ज्ञेयः पादः समाभिधः।
पादाहतादौ कर्तव्यश्चरणोऽञ्चितसंज्ञकः ॥ ४० ॥

उदारगमनाद्येषु कुञ्चितश्चरणो भवेत्।
चरणे नूपुराख्याने सूचीचरण इष्यते ॥ ४१ ॥

धरणीताडनादौ स्यात्पादोऽग्रतलसंचरः।
उद्वाहिताख्यकरणे पाद उद्घट्टितः स्मृतः ॥ ४२ ॥

स्वभावस्याभिनयने समपादः प्रकीर्तितः।

त्रयः स्थानकभेदाः

स्थानकत्रितयं स्त्रीणां तत्रैकं चायतं भवेत् ॥ ४३ ॥

अश्वक्रान्तं द्वितीयं स्यात्तृतीयं चावहित्थकम्।

आयतस्थानकम्

समः स्याद्दक्षिणः पादस्त्र्यश्रस्तदितरो भवेत् ॥ ४४ ॥

तालमात्रं तयोर्मध्यं मितं चेद्दक्षिणः करः।
तालसंज्ञस्तथा पादः समुन्नतमुरस्थलम् ॥ ४५ ॥

मुखं प्रसन्नं तत्र स्यादुन्नता च समा कटिः।
तदेतदायतं नाम स्थानकं परिकीर्तितम् ॥ ४६ ॥

इदं रङ्गप्रदेशे स्यात्पुष्पाञ्जल्यर्पणादिषु।

अश्वक्रान्तस्थानकम्

एकः समो द्वितीयोऽङ्घ्रिर्यस्मिन्नग्रतलाञ्चितः ॥ ४७ ॥

---

[1] अङ्गुष्ठोप्रसृतौ—क.

विद्धं सूच्याथवाविद्धमश्वक्रान्तं तदुच्यते ।
साहित्ये च विलासादौ प्रयोगोऽस्य प्रदृश्यते ॥ ४८ ॥

अवहित्थस्थानकम्

अंधुनोदितहस्ताङ्घ्रिविन्यासस्य विपर्ययात् ।
अवहित्थाभिधं सद्भिः स्थानकं परिकीर्तितम् ॥ ४९ ॥
लीलायां च वितर्के च विस्मयादौ च तद्भवेत् ।

वैष्णवादिभेदेन स्थानकषाड्विध्यम्

प्रथमं वैष्णवं ज्ञेयं समपादमतः परम् ॥ ५० ॥
वैशाखं मण्डलं च स्यादालीढं तदनन्तरम् ।
प्रत्यालीढमिति ज्ञेयान्युक्तानि स्थानकानि षट् ॥ ५१ ॥

वैष्णवस्थानकम्

सार्धं तालद्वयं यस्मिन्नन्तरं पादयोर्भवेत् ।
जङ्घा च कुञ्चिता किञ्चिच्छेषमङ्गुष्ठसौष्ठवम् ॥ ५२ ॥
स्थानकं वैष्णवं तत्स्याद्विष्णुरस्याधिदेवता ।

वैशाखस्थानकम्

[1]पक्षत्र्यस्रस्थयोर्यत्र पादयोरन्तरं भवेत् ॥ ५३ ॥
सार्धं तालत्रयं ज्ञेयं वैशाखस्थानकं च तत् ।
विशाखो देवता चात्र कीर्तिता भरतादिभिः ॥ ५४ ॥
तुरङ्गवाहनादौ च [2] प्रयोगोऽस्य प्रदृश्यते ।

---

[1] प्रधानं सौष्ठवं पादमेकतालान्तरौ समौ ।
यत्र तत्समपादं स्याच्चतुराननदैवतम् ॥
इति समपादस्थानकलक्षणं सङ्गीतरत्नाकरे.

[2] विनियोगोऽत्र दृश्यते—क.

मण्डलस्थानकम्

पादौ पदास्थितौ त्र्यस्रावेकतालान्तरस्थितौ ॥ ५५ ॥

कटिजानू समानौ च स्थानकं मण्डलं तथा ।
चतुरस्रं तदा लोके महेन्द्रश्चास्य देवता ॥ ५६ ॥

गजानां वाहनादौ च विनियोगोऽस्य दृश्यते ।
स्थानान्येतानि चत्वारि दृश्यन्ते नाट्यनृत्तयोः ॥ ५७ ॥

आलीढस्थानकम्

वामस्त्र्यस्रस्थितः पादो दक्षिणः प्रसृतः पुनः ।
अन्तरं पञ्चतालं चेत्तयोरालीढकं तदा ॥ ५८ ॥

रुद्रोऽपि देवता चास्य प्रयोगो वीररुद्रयोः ।

प्रत्यालीढस्थानकम्

विपरीतपदन्यासं प्रत्यालीढमितीरितम् ॥ ५९ ॥

देवता विनियोगश्च द्वयमालीढवत्स्मृतम् ।
अनयोर्विनियोगस्तु नाट्य एव प्रदृश्यते ॥ ६० ॥

उक्तानि भरतोक्तानि स्थानकानि मयाधुना ।

अन्यानि च मनोज्ञानि लिख्यन्ते लक्ष्यदर्शनात् ।

प्रकारान्तरेणैकविंशतिस्थानकभेदाः

संहतं समपादं च स्वस्तिकं वर्धमानकम् ॥ ६१ ॥

नन्द्यावर्तं चतूरश्रं पार्ष्णिविद्धं तथैव च ।
पार्ष्णिपार्श्वगतं स्थानमेकपार्श्वगतं तथा ॥ ६२ ॥

एकजानुकृतं चैव परावृत्तं तथाऽपरम् ।
पृष्ठोत्तानतलस्थानमेकपादं तथैव च ॥ ६३ ॥

ब्राह्मं च वैष्णवं शैवं गारुडं वृषभासनम् ।
समसूचिकमित्युक्तं तथा विषमसूचिकम् ॥ ६४ ॥

च(ख)ण्डसूचिकमित्येवं स्थानकान्येकविंशतिः ।

संहतस्थानकम्

गुल्फयोः संगतिर्यत्र मिथश्चाङ्गुष्ठयोरपि ॥ ६५ ॥
स्वभावावस्थितं देहं स्थानकं संहतं तु तत् ।

समपादम्

समावृजुस्थितौ पादौ वितस्त्यन्तरमायतौ ॥ ६६ ॥
भवेतां यत्र तत्स्थानं समपादमुदाहृतम् ।

स्वस्तिकम्

नूपुरस्थानसंबद्धं कनिष्ठाद्वयसंगतम् ॥ ६७ ॥
ईषदुच्चतलं नाम्ना स्वस्तिकं स्थानकं विदुः ।

वर्धमानकम्

तिरश्चीनमुखौ पादौ पार्ष्णिभ्यां यत्र संगतौ ॥ ६८ ॥
स्थानकं वर्धमानाख्यं तदुक्तं नृत्यकोविदैः ।

नन्द्यावर्तम्

वर्धमानं यदा स्थानं षडङ्गुलकृतान्तरम् ॥ ६९ ॥
नन्द्यावर्तं तु तज्ज्ञेयं नृत्यभेदविशारदैः ।

चतुरश्रम्

सार्धा वितस्तिर्यत्र स्यादन्तरं पादयोर्यदा ॥ ७० ॥
नन्द्यावर्ते तदा ज्ञेयं स्थानकं चतुरश्रकम् ।

पार्ष्णिविद्धकम्

पार्ष्ण्यङ्गुष्ठसमायोगात् स्थानकं पार्ष्णिविद्धकम् ॥ ७१ ॥

पार्ष्णिपार्श्वकम्

पार्श्वस्यान्तर्गता पार्ष्णिः कीर्तितं पार्ष्णिपार्श्वकम् ।

एकपार्श्वम्

एकः पादः समो यत्र बहिस्तिर्यक्कृतोऽपरः ॥ ७२ ॥
स्थानकं तत्समुद्दिष्टमेकपार्श्वाभिधं बुधैः ।

एकजानुकम्

एकः पादः समो यस्मिन् परः कुञ्चितजानुकः ॥ ७३ ॥
चतुरङ्गुलविश्लेषादेकजानु निगद्यते ।

परावृत्तम्

पार्ष्ण्यङ्गुष्ठसमौ यत्र स्यातां पार्ष्णिकनिष्ठके ॥ ७४ ॥
परावृत्तं परिज्ञेयं स्थानकं स्थानकोविदैः ।

पृष्ठोत्तानतलम्

अङ्गुलीपृष्ठसंलग्ना पाश्चात्याङ्घ्रिर्यदा भवेत् ॥ ७५ ॥
समः पादः [1] पुरस्ताच्चेत्पृष्ठोत्तानतलं भवेत् ।

एकपादम्

समस्थानस्थितस्त्वेकः पुरस्ताज्जानुमूर्धनि ॥ ७६ ॥
बाह्यपार्श्वेन संलग्नमेकपादं तदीरितम् ।

ब्राह्मम्

एकः समो द्वितीयस्तु कुञ्चितश्चरणो यदि ॥ ७७ ॥
जानुसन्धिसमानश्च ब्राह्मं स्यात् स्थानकं तदा ।

वैष्णवम्

सममेकं पदं भूमावन्यत्किंचिच्च कुञ्चितम् ॥ ७८ ॥
पुरः प्रसारितः पादस्तिर्यक्तद्वैष्णवं विदुः ।

---

[1] पुरस्स्थश्चेत्–क.

शैवम्

यत्र वामः समः पादो जानुशीर्षसमोऽपरः ॥ ७९ ॥
कुञ्चितश्च निरालम्बः स्थानकं शैवमिष्यते ।

गारुडम्

आकुञ्चिताङ्घ्रिर्वामश्चेत्तदन्यो जानुना स्थितः ॥ ८० ॥
भूतले तु तदाख्यातं स्थानकं गारुडं बुधैः ।

वृषभासनम्

जानुद्वयं यदा भूमौ संवृत्तं समवस्थितम् ॥ ८१ ॥
तिर्यक्सौष्ठवसंयुक्तं तदा स्याद्वृषभासनम् ।

समसूचि

तिर्यक्प्रसारितौ पादावूरुजङ्घांसपार्ष्णिकम् ॥ ८२ ॥
भूमिलग्नं तदा स्थानं समसूचीति कीर्तितम् ।

विषमसूचिकम्

पुरः प्रसारितस्त्वेकः पश्चादेकः प्रसारितः ॥ ८३ ॥
जानुगुल्फे च भूलग्ने भवेद्विषमसूचिकम् ।

च(ख)ण्डसूचिकम्

एकस्तु कुञ्चितः पादो द्वितीयस्तिर्यगायतः ॥ ८४ ॥
ऊरू पार्ष्णिसमौ लग्नौ भुवि स्याच्चण्डसूचिकम् ।
स्थानकानामिति त्रिंशन्नियोज्यं नाट्यनृत्तयोः ॥ ८५ ॥

चारीलक्षणम्

न चारीरहितं नाट्यं नृत्यं वा दृश्यते क्वचित् ।
तस्मात्तल्लक्षणं वक्ष्ये यदुक्तं भरतादिभिः ॥ ८६ ॥

कटेरूरोश्च जङ्घायाः क्रियया क्रियते समम् ।
पादप्रचारणं यत्र सा चारीत्यभिधीयते ॥ ८७ ॥

चारीद्वैविध्यम्

भूमिजाकाशिनी चेति सा चारी द्विविधा मता ।

भूमिचार्याः षोडशभेदाः

प्रत्येकमेतयोर्ज्ञेया भेदाः षोडश षोडश ॥ ८८ ॥

समपादा [1] चार्धगतिः [2] स्थितावर्तात ईषिता ।
[3] ऊरुवृत्ता डिता बद्धा जनितोर्च्चण्डिता तथा ॥ ८९ ॥

स्यन्दिता शकटास्याथ स्यादपस्यन्दिता तथा ।
[4] समासादितमत्तल्ली मत्तल्ल्यथाभ्यधिका तथा ॥ ९० ॥

एडकाक्रीडिता चेति भूमिचार्यः प्रदर्शिताः ।

आकाशचार्याः षोडशभेदाः

अतिक्रान्तोर्ध्वजानुश्च सुची नूपुरपादिका ॥ ९१ ॥

विद्युद्भ्रान्ता च दण्डा च भुजङ्गत्रासिता तथा ।
डोलापादा ततोद्वृत्ता स्यादाक्षिप्ता मृगप्लुता ॥ ९२ ॥

पार्श्वक्रान्ताप्यपक्रान्ता भ्रमर्याविद्धसंज्ञिता ।
अलाता चेति चार्योऽमूराकाशिन्यः प्रकीर्तिताः ॥ ९३ ॥

एकैकमण्डलोत्पत्तिश्चारिभिर्बहुभिर्भवेत् ।
अधुना कथ्यते तेषां नाम प्रत्येकमेव हि ॥ ९४ ॥

द्विधा भवन्ति चैतानि भौमान्याकाशगानि च ।

भौमचारीमण्डलानि दश

भ्रमरं शकटास्यं च समं स्फुरितमण्डलम् ॥ ९५ ॥

अध्यर्धं पृष्ठकुट्टाख्यमेडकक्रीडितं तथा ।
आस्कन्दितं तथावातं तथा चाधोगताभिधम् ॥ ९६ ॥

इति प्रोक्तानि भौमानि मण्डलानि दश क्रमात् ।

---

[1] चाषगतिः—स. र. [2] स्थितावर्ताथ विच्यवा, जनितोत्स्यस्थिता तथा इत्यपि पाठः स्यात्. [3] ऊरुवृत्ता ड्डिता—क. [4] समोत्सारितमत्तल्ली—स. र.

आकाशचारीमण्डलानि दश

अतिक्रान्तं दण्डपादं सूचीविद्धमलातकम् ॥ ९७ ॥

विचित्रं विहितं क्रान्तं तथा वलितसञ्चरम् ।
वामाविद्धं तथा ज्ञेयं तथा च वलिताभिधम् ॥ ९८ ॥

उक्तान्याकाशजान्येवं मण्डलानि पुनर्दश ।
एवमष्टोत्तरशतं करणान्यपराणि च ॥ ९९ ॥

पाताः षोडश संप्रोक्ता नृत्यतत्त्वविशारदैः ।
विस्तरः क्रियतेऽस्माभिर्नैव संग्रहकाङ्क्षिभिः ॥ १०० ॥

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले वक्षःप्रभृतिपादान्ताभिनयस्थानकचारी-
मण्डलभेदवर्णनं नाम षष्ठस्तरङ्गः

---

## अथ सप्तमस्तरङ्गः

सभापतेश्च सभ्यानां नर्तक्या नर्तकस्य च ।
रङ्गस्थलस्य लक्ष्माणि तथा पुष्पाञ्जलेरपि ॥ १ ॥

शिरःप्रभृतिगात्राणां लक्ष्माण्यभिनयस्य च ।
श्रीमद्भिः कीर्तितान्यासन् बहुधा विबुधोत्तम ! ॥ २ ॥

निर्वृतं हृदयं श्रीमद्वचोभिरमृतैरिव ।
अधुना नटनार्थं यौ गीततालावपेक्षितौ ॥ ३ ॥

तौ ब्रूहि सप्रभेदौ मे श्रोतुकामोऽस्म्यहं गुरो ! ।
मनीषा तव निर्दोषा नन्दनानन्ददायिनी ॥ ४ ॥

गीततालौ सप्रभेदौ शृणु तौ वर्णयामहे ।
प्रथमं तत्र गीतस्य स्वरूपं वर्ण्यतेऽधुना ॥ ५ ॥

अष्टादशगीताङ्गानि

नादश्रुतिस्वरग्राममूर्छनातानवर्णकाः ।
अलङ्कारोऽथ गमकं जातिरागौ तथापरौ ॥ ६ ॥

रागाङ्गभाषाभाषाङ्गविभाषान्तरभाषिकाः ।
उपाङ्गं च क्रियाङ्गं चेत्यङ्गान्यष्टौ तथा दश ॥ ७ ॥

अष्टादशानामेतेषां स्वरूपमधुनोच्यते ।

गीतवाद्यनृत्तानां नादाधीनत्वम्

गीतं नादात्मकं वाद्यं नादयु(व्य)क्तं प्रशस्यते ॥ ८ ॥

तद्द्वयानुगतं नृत्तं नादाधीनमतस्त्रयम् ।

जगतो नादाधीनत्वम्

नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ॥ ९ ॥

वचसो व्यवहारोऽयं नादाधीनमतो जगत् ।

नादद्वैविध्यं तत्राहतनादस्य लोकरञ्जकत्वं च

आहतोऽनाहतश्चेति द्वेधा नादो निगद्यते ॥ १० ॥

तत्र चानाहतं नादमेकाग्रन्यस्तमानसाः ।
गुरूपदिष्टमार्गेण महान्तः पर्युपासते ॥ ११ ॥

स च रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ।
तस्मादाहतनादस्य श्रुत्यादिद्वारतोऽखिलम् ॥ १२ ॥

गेयं वितन्वते लोकरञ्जनं भवभञ्जनम् ।
उत्पत्तिमभिधास्यामस्तस्य श्रुत्यादिहेतुताम् ॥ १३ ॥

नादोत्पत्तिक्रमः

आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः ।
नाभिस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ॥ १४ ॥

ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपथे चरन् ।
नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिम् ॥ १५ ॥

पञ्चभेदा नादाः

नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
इति पञ्चाभिधां धत्ते पञ्चस्थानस्थितः क्रमात् ॥ १६ ॥

व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ १७ ॥

नाकारः प्राणनामा स्याद्दकारश्चानलो मतः ।
जातः प्राणाग्निसंयोगान्नाद इत्यभिधीयते ॥ १८ ॥

तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः ।
हृद्यूर्ध्वनाडीसंलग्ना नाड्यो द्वाविंशतिर्मताः ॥ १९ ॥

तिरश्चयस्त्वासु तावत्यः श्रुतयो मारुताहतेः ।
उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ॥ २० ॥

एवं कण्ठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ।
प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ॥ २१ ॥

सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ।

सप्त स्वराः

श्रुतिभ्यश्च स्वराः षड्जर्षभगान्धारमध्यमाः ॥ २२ ॥
पञ्चमो दैवतश्चाथ निषाद इति सप्त ते ।

द्वाविंशतिश्रुतीनां सप्तस्वरेष्वन्तर्भावः

चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ॥ २३ ॥

द्वे द्वे निषादगान्धारौ त्रिस्त्री ऋषभदैवतौ ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ २४ ॥

स्वराणां वंशाः

गीर्वाणकुलसंभूताः षड्जगान्धारमध्यमाः ।
पञ्चमः पितृवंशोत्थो रिधावृषिकुलोद्भवौ ॥ २५ ॥

निषादोऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ।
रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ॥ २६ ॥

शूद्रावन्तरकाकल्यौ, स्वरे वर्णास्त्विमे क्रमात् ।

स्वराणां वर्णभेदाः

पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभोऽसितः ॥ २७ ॥
पीतः कर्बुर इति, एषां जन्मभूमीरथ ब्रुवे ।

स्वराणां जन्मभूमिः

जम्बूशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ॥ २८ ॥
द्वीपेषु पुष्करे चैते जाताः षड्जादयः क्रमात् ।

स्वरद्रष्टारः

वह्निर्वेधाः शशाङ्कश्च लक्ष्मीकान्तश्च नारदः ॥ २९ ॥
ऋषयो ददृशुः पञ्च षड्जादींस्तुम्बुरुर्ध्वनीन् ।

स्वराणां देवताः

वह्निब्रह्मसरस्वत्यः शर्वश्रीशगणेश्वराः ॥ ३० ॥
सहस्रांशुरिति प्रोक्ताः क्रमात् षड्जादिदेवताः ।

स्वराणां छन्दांसि

क्रमादनुष्टुब्गायत्री त्रिष्टुप्च बृहती ततः ॥ ३१ ॥
पङ्क्तिरुष्णिक्च जगतीत्याहुश्छन्दांसि सादिषु ।

स्वराणां रसविशेषाः

सरी वीरेऽद्भुते रौद्रे धो भीभत्से भयानके ॥ ३२ ॥
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ।

स्वरविशेषवादनाः पक्षिविशेषाः

षड्जं मयूरो वदति गावस्त्वृषभभाषिणः ॥ ३३ ॥
अजाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम् ।
पुष्पसाधारणे काले पिकः कूजति पञ्चमम् ॥ ३४ ॥
दैवतं हेषते वाजी निषादं बृंहते गजः ।

त्रयो ग्रामाः

ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः ॥ ३५ ॥

षड्जग्रामो भवेदादौ मध्यमग्राम एव च ।
गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ॥ ३६ ॥

षड्जमध्यमनामानौ ग्रामौ गायन्ति मानुषाः ।
न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥ ३७ ॥

लक्षणं ग्रामयोर्वक्ष्ये षड्जमध्यमसंज्ञयोः ।
षड्जग्रामः पञ्चमे च चतुर्थस्वरसंस्थिते ॥ ३८ ॥

स्वोपान्त्यश्रुतिसंस्थेऽस्मिन्मध्यमग्राम इष्यते ।
यद्वाथ त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ ३९ ॥

रिमयोः श्रुतिमेकैकां गान्धारश्चेत्समाश्रितः ।
पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः ॥ ४० ॥

गान्धारग्राममाचष्टे तदा तन्नारदो मुनिः ।
प्रवर्तते स्वर्गलोके ग्रामोऽसौ न महीतले ॥ ४१ ॥

क्रमाद्ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ।
हेमन्तग्रीष्मवर्षासु गातव्यास्ते यथाक्रमम् ॥ ४२ ॥

पूर्वाह्णकाले मध्याह्नेऽपराह्णेऽभ्युदयार्थिभिः ।
क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ॥ ४३ ॥

मूर्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ।
षड्जे तूत्तरमन्द्रादौ रजनी चोत्तरायता ॥ ४४ ॥

शुद्धा षड्जा मत्सरीकृदश्वक्रान्ताभिरुद्गता ।
मध्यमे स्यात्तु सौवीरी हरिणाश्वा ततः परम् ॥ ४५ ॥

स्यात्कलोपनता शुद्धा मध्या मार्गी च पौरवी ।
हृष्यकेत्यथ तासां तु लक्षणं प्रतिपाद्यते ॥ ४६ ॥

[1] मध्यस्थानस्थषड्जेन मूर्छनाऽऽरभ्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षडन्या मूर्छनाः क्रमात् ॥ ४७ ॥

मध्यमध्यममारभ्य [2] सौवीरी मूर्छना भवेत् ।
षडन्यास्तदधोऽधस्थात्स्वरानारभ्य तु क्रमात् ॥ ४८ ॥

षड्जस्थानस्थितै[3]र्न्याद्यै रजन्याद्याः परे जगुः ।
हरिणाश्वादिका गाद्यैर्मध्यमस्थानसंस्थितैः ॥ ४९ ॥

षड्जादीन्मध्यमादींश्च तदूर्ध्वं [4] सारयेत्क्रमात् ।
चतुर्धा ताः पृथक्शुद्धाः काकलीकलितास्तथा ॥ ५० ॥

सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिताः ।
श्रुतिद्वयं चेत् षड्जस्य निषादः संश्रयेद्यदा ॥ ५१ ॥

स काकली मध्यमस्य गान्धारस्त्वन्तरः स्वरः ।
यस्यां यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ॥ ५२ ॥

मूर्छना तावतिथ्येव सा निश्शङ्केन कीर्तिता ।
प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ॥ ५३ ॥

तासूच्चार्यान्त्यस्वरांस्तान् पूर्वानुच्चारयेत्क्रमात् ।
ते क्रमास्तेषु सङ्ख्या स्याद्द्विनवत्या शतत्रयम् ॥ ५४ ॥

षड्जग्रामे मूर्छनादेवताः

यक्षरक्षोनारदाब्जभवनागाश्विपाशिनः ।
षड्जग्रामे मूर्छनानामेताः स्युर्देवताः क्रमात् ॥ ५५ ॥

मध्यमग्रामे मूर्छनादेवताः

ब्रह्मेन्द्रवायुगन्धर्वशिवद्रुहिणभानवः ।
स्युरिमा मध्यमग्रामे मूर्छनादेवताः क्रमात् ॥ ५६ ॥

तासामन्यानि नामानि नारदो मुनिरब्रवीत् ।

षड्जग्रामे सप्त मूर्छनाः

मूर्छनोत्तर[5]वर्णाढ्या षड्जग्रामे समुद्गता ॥ ५७ ॥

---

[1] मध्यमस्थानषड्जेन-क. [2] षडस्यामूर्छना-क. [3] नाद्यैः-क.
[4] सादयेत्-क. [5] मन्द्राद्या-क.

अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ।
[1] रजनीति समाख्याता ऋषीणां सप्त मूर्छनाः ॥ ५८ ॥

मध्यमग्रामे सप्त मूर्छनाः

आप्यायिनी विश्वहृता चन्द्रा हैमा कपर्दिनी ।
मैत्री चान्द्रमसी पित्र्या मध्यमे मूर्छना इमाः ॥ ५९ ॥

गान्धारग्रामे सप्त मूर्छनाः

नन्दा विशाला सुमुखी चित्रा चित्रवती सुखा ।
आलापा चेति गान्धारग्रामे स्युः सप्त मूर्छनाः ॥ ६० ॥
ताश्च स्वर्गे प्रयोक्तव्याः विशेषात्तेन नोदिताः ।

तानाः

तानाः स्युर्मूर्छनाः शुद्धाः षाडवौडुवितीरिताः ॥ ६१ ॥
षड्जगाः सप्त हीनाश्चेत् क्रमात्सरिपसप्तमैः ।
तदाष्टाविंशतिस्ताना मध्यमे सरिगोज्झिताः ॥ ६२ ॥
सप्त क्रमाद्यदा तानाः स्युस्तदा त्वेकविंशतिः ।
एते चैकोनपञ्चाशदुभये षाडवा मताः ॥ ६३ ॥
सपाभ्यां द्विश्रुतिभ्यां च [2] रिपाभ्यां सप्त वर्जिताः ।
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः ॥ ६४ ॥
रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते ।
हीनाश्चतुर्दशैव स्युः पञ्चत्रिंशत्तु ते युताः ॥ ६५ ॥
सर्वे चतुरशीति स्युर्मिलिताः षाडवौडुवाः ।

कूटतानाः

असम्पूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ॥ ६६ ॥
मूर्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ।
पूर्णाः पञ्चसहस्राणि चत्वारिंशद्युतानि तु ॥ ६७ ॥

---

[1] रजनीति–क. [2] रिधाभ्यां–क.

एकैकस्यां मूर्छनायां कूटतानाः सह क्रमैः ।
षट्पञ्चाशन्मूर्छना स्युः पूर्णाः कूटास्तु योजिताः ॥ ६८ ॥

लक्षद्वयं सहस्राणि ह्यशीतिर्द्वे शते तथा ।
चत्वारिंशच्च सङ्ख्याता इत्थं भेदान्तरं बुधैः ॥ ६९ ॥

तानसंख्यापरिज्ञानोपायः

अङ्कानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।
हते पूर्वेण पूर्वेण तेषु चाङ्के परे परे ॥ ७० ॥

एकस्वरादिसङ्ख्या स्यात्क्रमेण प्रतिमूर्छनम् ।
[1] क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः ॥ ७१ ॥

स चेदुपरि तत्पूर्वः पुरस्तूपरि[2] वर्तनम् ।
मूलक्रमक्रमात्पृष्ठे शेषाः प्रस्तार ईदृशः ॥ ७२ ॥

खण्डमेरूद्धारः

सप्ताद्येकान्तकोष्ठानामधोऽधः सप्त पङ्क्तयः ।
तास्वाद्यायामाद्यकोष्ठे लिखेदेकं परेषु खम् ॥ ७३ ॥

वेद्यतानस्वरमितान्नयसेत्तेष्वेव लोष्टकान् ।
प्राक्पङ्क्त्यन्त्याङ्कसंयोगमूर्ध्वाधः स्थितपङ्क्तिषु ॥ ७४ ॥

शून्यादधो लिखेदेकं तं चाधोऽधः स्वकोष्ठकान् ।
कोष्ठसङ्ख्यागुणं न्यस्येत्खण्डमेरुरयं मतः ॥ ७५ ॥

खण्डमेरावुद्दिष्टनष्टज्ञानोपायः

स्वरान्मूलक्रमस्यान्त्यात्पूर्वं यावतिथः स्वरः ।
उद्दिष्टान्त्यस्तावतिथे कोष्ठेऽधो लोष्टकं क्षिपेत् ॥ ७६ ॥

लोष्टचालनमन्त्यात्स्यात्त्यक्त्वा लब्धं क्रमो भवेत् ।
लोष्टाक्रान्ताङ्कसंयोगादुद्दिष्टस्य मितिर्भवेत् ॥ ७७ ॥

यैरङ्कैर्नष्टसङ्ख्या स्यान्मौलैकाङ्कसमन्वितैः ।
तेषु लोष्टान् [3] क्षिपेन्मूले लोष्टस्थानस्थितं भवेत् ॥ ७८ ॥

---

[1] क्रमादन्यः—क. मु.   [2] वर्तिनः—सं. र.   [3] क्षिपेन्मौले—क.

नष्टतानस्वरस्थानं ततो यावतिथे पदे ।
अधः क्रमाधस्थलोष्टः स्वरस्तावातिथो भवेत् ॥ ७९ ॥

क्रमान्तिमस्वरात्पूर्वाल्लब्धत्यागादि पूर्ववत् ।

खण्डमेरुः

| स | रि | ग | म | प | ध | नि |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | २४ | १२० | ७२० |
| | | ४ | १२ | ४८ | २४० | १४४० |
| | | | १८ | ७२ | ३६० | २१६० |
| | | | | ९६ | ४८० | २८८० |
| | | | | | ६०० | ३६०० |
| | | | | | | ४३२० |

खण्डमेरौ तानसङ्ख्याज्ञानोपायः

तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात् ॥ ८० ॥

एकस्वरादितानानां सङ्ख्या संज्ञायते क्रमात् ।

स्थाय्यादिभेदेन चतुर्विधा वर्णाः

[1]गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ॥ ८१ ॥
स्थाय्यारोह्यवरोही च सञ्चारीत्यथ लक्षणम् ।
स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य यः ॥ ८२ ॥
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।
एतत्सम्मिश्रणाद्वर्णः सञ्चारी परिकीर्तितः ॥ ८३ ॥

अलङ्कारलक्षणं तत्र विशेषश्च

[2]विशिष्टवर्णसन्दर्भमलङ्कारं प्रचक्षते ।
[3]तत्र भेदा बहुविधास्तत्र स्थायिगतान् ब्रुवे ॥ ८४ ॥
येषामाद्यन्तयोरेकः स्वरस्ते स्थायिवर्णगाः ।

प्रसन्नाद्याद्यलङ्कारभेदाः सप्त

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञकः ॥ ८५ ॥
ततः प्रसन्नमध्यः [4]स्यात्परश्च क्रमरेचितः ।
[5]प्रस्तारोऽथ प्रसादः स्यात्सप्तैते स्थायिनि स्थिताः ॥ ८६ ॥

तारमन्द्रस्वरूपम्

मन्द्रः प्रकरणेऽत्र स्यान्मूर्छनाप्रथमस्वरः ।
स एव द्विगुणस्तारः पूर्वः पूर्वोऽथवा भवेत् ॥ ८७ ॥
मन्द्रः परः [6]परस्तारः पसन्नो मृदुरित्यपि ।
मन्द्रस्तारस्तु दीप्तः स्यान्मन्द्रो बिन्दुशिरा भवेत् ॥ ८८ ॥
ऊर्ध्वरेखाशिरास्तारो रिपाख्रिर्वचनाप्लुतः ।

स्थायिगतालङ्काराः

मन्द्रद्वयात्परे तारे प्रसन्नादिरुदीरितः ॥ ८९ ॥
सं सं सं

---

[1] मानक्रिया–क. [2] विशिष्टं वर्ण–क. [3] तस्य भेदास्तु बहवस्तत्र–स. र.
[4] स्यात्पंचमः–स. र. [5] प्रसादोऽथाप्रसादः–बृहद्देशी. [6] ततस्तारः–स. र.

[1] तद्वैषम्ये प्रसन्नान्तः सं सं सं ।
प्रसन्नद्वयमध्यमे ॥ ९० ॥

दीप्ते प्रसन्नाद्यन्तः स्यात् ।
सं सं सं ।
तारयोर्मध्यमे पुनः ॥ ९१ ॥

मन्द्रे प्रसन्नमध्याख्यमलङ्कारविदो विदुः ।
सं सं सं ।
[2] आद्यन्तौ मूर्छनादिश्चेत्स्वरो मध्ये द्वितीयकः ॥ ९२ ॥
सैका कलाथ चेन्मध्ये [3]तत्तृतीयचतुर्थकौ ।
सा द्वितीया पञ्चमाद्यास्त्रयोऽन्त्याश्चेत्कला परा ॥ ९३ ॥
एवं कलात्रयेणोक्तोऽलङ्कारः क्रमरेचितः ।
सं रि सं । सं ग म सं । संपधनि सं ।
दीप्तान्तश्चेत्प्रतिकलं प्रस्तारः सोऽभिधीयते ॥ ९४ ॥
सं रि सं । सं गमसं । सं प ध नि सं ।
तारमन्द्रविपर्यासात्तं प्रसादं प्रचक्षते ।
सं रि सं । सं गमसं । सं पध नि सं ।

आरोह्यलङ्काराः द्वादश

स्यातां विस्तीर्णनिष्कर्षौ बिन्दुरभ्युच्चयोऽपरः ॥ ९५ ॥
हसितप्रेङ्खिताक्षिप्तसन्धिप्रच्छादितास्तथा ।
उद्गीतोद्वाहितौ तद्वत् त्रिवर्णो वेणुरित्यमी ॥ ९६ ॥
द्वादशाऽरोहिवर्णस्थालङ्काराः परिकीर्तिताः ।

अवरोह्यलङ्काराः द्वादश

अवरोहक्रमादेते द्वादशाप्यवरोहिणि ॥ ९७ ॥

---

[1] तद्वैलोम्ये—स. र. [2] आद्यन्तयोर्मूर्च्छनाऽऽदिश्चेत्स्वरोऽन्तर्द्वितीयकः—स. र.
[3] स्तत्तृतीय—स. र.

तथा संचारिवर्णस्थाः सङ्ख्याताः पञ्चविंशतिः ।
एवमेकोनपञ्चाशद्भेदास्तत्र व्यवस्थिताः ॥ ९८ ॥
द्रष्टव्यास्ते सूक्ष्मबुध्येत्यत्र नैतत्प्रपञ्चयते ।

प्रकारान्तरेण सप्तालङ्कारभेदाः

अन्येऽपि सप्तालङ्कारा गीतज्ञैरुपदर्शिताः ॥ ९९ ॥

तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नकः ।
आवर्तकः सम्प्रदानो विधुतोऽप्युपलोलकः ॥ १०० ॥
उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ।
कलास्तेषां द्वितीयाद्याः पूर्वैकैकप्रहाणतः ॥ १०१ ॥

तारमन्द्रप्रसन्नालङ्कारः

अष्टमस्वरपर्यन्तमारुह्याद्यं व्रजेद्यदि ।
तारमन्द्रप्रसन्नोऽयमलङ्कारस्तदोच्यते ॥ १०२ ॥

सं रि ग म प ध नि सं सं ।

मन्द्रतारप्रसन्नालङ्कारः

मन्द्रादष्टममुत्प्लुत्य सप्तकस्यावरोहणे ।
मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः ॥ १०३ ॥

सं सं नि ध प म ग रि सं ।

आवर्तकालङ्कारः

आद्यं द्वितीयमाद्यं च द्विर्द्विर्गत्वा द्वितीयकम् ।
सकृदाद्यं यत्कलायां गायेदावर्तकस्तदा ॥ १०४ ॥

सस रिरि सस रिस । रिरि गग रिरि गरि ।
गग मम गग मग ।
मम पप मम पम । पप धध पप धप ।
धध निनि धध निध ।

संप्रदानालङ्कारः

एतस्यैव कलान्त्यौ द्वौ स्वरौ संत्यज्य गीयते।
यदा तदा संप्रदानमलङ्कारं विदुर्बुधाः ॥ १०५ ॥

सस रिरि सस। रिरि गग रिरि। गग मम गग
मम पप मम।

पप धध पप। धध निनि धध।

विधुतालङ्कारः

युग्ममेकान्तरितयोस्त्यक्तादप्येवमेव चेत्।
द्विर्द्विः प्रयुज्येत तदा विधुतो बुधसम्मतः ॥ १०६ ॥

सग सग। रिम रिम। गप गप। मध मध। पनि पनि।

उपलोलाङ्कारः

कलायामाद्ययोर्युग्मं चेत्तृतीयद्वितीययोः।
द्विर्द्विः प्रयुज्यते तज्ज्ञैरुपलोलस्तदोच्यते ॥ १०७ ॥

सरि सरि गरि गरि। रिग रिग मग मग। गम गम पम पम।
मप मप धप धप। पध पध निध निध।

उल्लासितकालङ्कारः

द्विर्गत्वाऽऽद्यं तृतीयं च प्रथमं च तृतीयकम्।
सत्कुर्यादेयत्कलायां तमुल्लासितमूचिरे ॥ १०८ ॥

सस गसग। रिरिमरिम। गगपगप। ममधमध।
पपनिपनि। इति सप्तालङ्काराः।

अलङ्कारनिरूपणफलम्

रक्तिलाभः स्वरज्ञानं [1]वर्णगानविचित्रता।
इति प्रयोजनान्याहुरलङ्कारनिरूपणे ॥ १०९ ॥

---

[1] वर्णमानविचित्रता-क, वर्णज्ञान-स. र.

पञ्चदश गमकभेदास्तेषां स्वरूपं च

स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ।
तिरिपुः स्फुरितश्चैव कम्पितो लीन एव च ॥ ११० ॥

आन्दोलितश्च वल्ली च त्रिभिन्नः कुरुलस्तथा ।
आहतोल्लासितौ चैव प्लावितो गुम्भितस्तथा ॥ १११ ॥

मुद्रितोनामितो मिश्र इति पञ्चदश स्मृताः ।
लघुप्रडमरुध्वानकम्पानुकृतिसुन्दरः ॥ ११२ ॥

द्रुततुर्यांशवेगेन तिरिपुः परिकीर्तितः ।
वेगाद्द्रुततृतीयांशं [1]कम्पिते स्फुरितो मतः ॥ ११३ ॥

द्रुतार्धमानवेगेन कम्पितं गमकं विदुः ।
लीनस्तद्द्रुतवेगेनान्दोलितो लघुवेगकः ॥ ११४ ॥

येन केनापि वेगेन हृद्यत्वे कुरुलः स्मृतः ।
त्रिभिन्नस्तु त्रिषु स्थानेष्वविश्रान्तघनस्वरः ॥ ११५ ॥

कुरुलो वलिरेव स्याद्ग्रन्थिः कोमलस्वरः ।
स्वरमग्रिममाहत्य विविक्तस्त्वाहतो मतः ॥ ११६ ॥

उल्लासितस्तु स प्रोक्तः यः स्वरानुत्तरोत्तरान् ।
प्लावितं तु क्रमाद्यत्स्यात्प्लुतमानेन कम्पनम् ॥ ११७ ॥

हृदयंगमहुंकारगम्भीरो गुम्भितो भवेत् ।
मुखमूर्धान्तसंवीतो मुद्रितो गमको भवेत् ॥ ११८ ॥

स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः ।
एतेषां मिश्रणे तावन्मिश्रितो गमको मतः ॥ ११९ ॥

गमकानां लक्षणानि प्रोक्तान्येवं क्रमेण तु ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले नादादिगमकान्तनिरूपणं नाम सप्तमस्तरङ्गः

---

[1] कंपितः स्फुरितो मतः—क.

## अथाष्टमस्तरङ्गः

जात्यादीनामथाङ्गानां स्वरूपं वर्ण्यते क्रमात् ।

सप्तजातयः

शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ॥ १ ॥

षाड्ज्यार्षभी च गान्धारी मध्यमा पञ्चमी तथा ।
धैवती चाथ नैषादी, शुद्धतालक्ष्म कथ्यते ॥ २ ॥

जातेः शुद्धतालक्षणम्

यासां नामस्वरो न्यासोपन्यासोंऽशो ग्रहस्तथा ।
तारन्यासविहीनास्ताः पूर्णाः शुद्धाभिधा मताः ॥ ३ ॥

वैकृता भेदाः

विकृता वर्जिता न्यासैर्लक्ष्महीना भवन्त्यमूः ।
संपूर्णत्वग्रहांशोपन्यासेष्वेकैकवर्जनात् ॥ ४ ॥

भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ।
त्यागे त्रयाणां चत्वार एकस्त्यक्ते चतुष्टये ॥ ५ ॥

भेदाः पञ्चदशैवैते षाड्ज्याः [1] सद्भिर्निरूपिताः ।
[2] तथाष्टौ पूर्णताहीनाः (सप्त त्वितरवर्जिताः ॥ ६ ॥

द्विधा स्युः पूर्णताहीनाः) षाडवौडुवभेदतः ।
अतोऽष्टावधिकाश्चार्षभ्यादिष्वौडुवजातिषु ॥ ७ ॥

अतस्त्रयोविंशतिधा [3] षड्जाः प्रत्येकमीरिताः ।

वैकृतजातिसंसर्गाज्जाता भेदाः

विकृतानां तु संसर्गाज्जाता एकादश स्मृताः ॥ ८ ॥

स्यात् षड्जकैशिकी षड्जोदीच्यवा षड्जमध्यमा ।
गान्धारोदीच्यवा रक्तगान्धारी कैशिकी तथा ॥ ९ ॥

---

[1] षड्ज्याः षड्भिर्निरूपिताः—क. [2] तत्राष्टौ—क. [3] षट्सु—ख. ग.

मध्यमोदीच्यवा कार्मारवी गान्धारपञ्चमी ।
तथान्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ॥ १० ॥

संयोगहेतवः

षाड्जीगान्धारिकायोगाज्जायते षड्जकैशिकी ।
षाड्जिकामध्यमाभ्यां तु जायते षड्जमध्यमा ॥ ११ ॥

गान्धारीपञ्चमीभ्यां तु जाता गान्धारपञ्चमी ।
गान्धार्यार्षभिकाभ्यां तु जातिरान्ध्री प्रजायते ॥ १२ ॥

षाड्जी गान्धारिका तद्वद्धैवती मिलितास्त्विमाः ।
षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ॥ १३ ॥

उत्पादयन्ति नैषादीपञ्चम्यार्षभिका युताः ।
नन्दयन्तीं च गान्धारीपञ्चम्यार्षभिका युताः ॥ १४ ॥

गान्धारी धैवती षाड्जी मध्यमेति युतास्त्विमाः ।
गान्धारोदीच्यवां कुर्युर्मध्यमोदीच्यवां पुनः ॥ १५ ॥

एता एव विना [1] षड्जं पञ्चम्या सह कुर्वते ।
कुर्युस्ता रक्तगान्धारीं नैषादी [2] सा च धैवती ॥ १६ ॥

आर्षभीं धैवतीं त्यक्त्वा पञ्चभ्यः कैशिकी भवेत् ।

सर्वासां जातीनां ग्रामविभागः

चतस्रः षड्जशब्दिन्यो नैषादी धैवती तथा ॥ १७ ॥

आर्षभी चेति सप्तैताः षड्जग्रामस्य जातयः ।
शेषाः स्युर्मध्यमग्रामे पूर्णत्वाद्यधुनोच्यते ॥ १८ ॥

नित्यपूर्णा जातयः

कार्मारवी च गान्धारपञ्चमी षड्जकैशिकी ।
मध्यमोदीच्यवेत्येता नित्यपूर्णाः प्रकीर्तिताः ॥ १९ ॥

---

[1] षाड्ज्या—स. र. [2] न च धैवती—स. र.

## अथाष्टमस्तरङ्गः

जात्यादीनामथाङ्गानां स्वरूपं वर्ण्यते क्रमात् ।

### सप्तजातयः

शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ॥ १ ॥

षाड्ज्यार्षभी च गान्धारी मध्यमा पञ्चमी तथा ।
धैवती चाथ नैषादी, शुद्धतालक्ष्म कथ्यते ॥ २ ॥

### जातेः शुद्धतालक्षणम्

यासां नामस्वरो न्यासोपन्यासोंऽशो ग्रहस्तथा ।
तारन्यासविहीनास्ताः पूर्णाः शुद्धाभिधा मताः ॥ ३ ॥

### वैकृता भेदाः

विकृता वर्जिता न्यासैर्लक्ष्महीना भवन्त्यमूः ।
संपूर्णत्वग्रहांशोपन्यासेष्वेकैकवर्जनात् ॥ ४ ॥

भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ।
त्यागे त्रयाणां चत्वार एकस्त्यक्ते चतुष्टये ॥ ५ ॥

भेदाः पञ्चदशैवैते षाड्ज्याः [1] सद्भिर्निरूपिताः ।
[2] तथाष्टौ पूर्णताहीनाः (सप्त त्वितरवर्जिताः ॥ ६ ॥

द्विधा स्युः पूर्णताहीनाः) षाडवौडुवभेदतः ।
अतोऽष्टावधिकाश्चार्षभ्यादिष्वौडुवजातिषु ॥ ७ ॥

अतस्त्रयोविंशतिधा [3] षड्जाः प्रत्येकमीरिताः ।

### वैकृतजातिसंसर्गाज्जाता भेदाः

विकृतानां तु संसर्गाज्जाता एकादश स्मृताः ॥ ८ ॥

स्यात् षड्जकैशिकी षड्जोदीच्यवा षड्जमध्यमा ।
गान्धारोदीच्यवा रक्तगान्धारी कैशिकी तथा ॥ ९ ॥

---

[1] षड्ज्याः षड्भिर्निरूपिताः—क. [2] तत्राष्टौ—क. [3] षड्जु—स. र.

मध्यमोदीच्यवा कार्मारवी गान्धारपञ्चमी ।
तथान्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ॥ १० ॥

संयोगहेतवः

षाड्जीगान्धारिकायोगाज्जायते षड्जकैशिकी ।
षाड्जिकामध्यमाभ्यां तु जायते षड्जमध्यमा ॥ ११ ॥

गान्धारीपञ्चमीभ्यां तु जाता गान्धारपञ्चमी ।
गान्धार्यार्षभिकाभ्यां तु जातिरान्ध्री प्रजायते ॥ १२ ॥

षाड्जी गान्धारिका तद्वद्धैवती मिलितास्त्विमाः ।
षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ॥ १३ ॥

उत्पादयन्ति नैषादीपञ्चम्यार्षभिका युताः ।
नन्दयन्तीं च गान्धारीपञ्चम्यार्षभिका युताः ॥ १४ ॥

गान्धारी धैवती षाड्जी मध्यमेति युतास्त्विमाः ।
गान्धारोदीच्यवां कुर्युर्मध्यमोदीच्यवां पुनः ॥ १५ ॥

एता एव विना [1] षड्जं पञ्चम्या सह कुर्वते ।
कुर्युस्ता रक्तगान्धारीं नैषादी [2] सा च धैवती ॥ १६ ॥

आर्षभीं धैवतीं त्यक्त्वा पञ्चम्यः कैशिकी भवेत् ।

सर्वासां जातीनां ग्रामविभागः

चतस्रः षड्जशब्दिन्यो नैषादी धैवती तथा ॥ १७ ॥

आर्षभी चेति सप्तैताः षड्जग्रामस्य जातयः ।
शेषाः स्युर्मध्यमग्रामे पूर्णत्वाद्यधुनोच्यते ॥ १८ ॥

नित्यपूर्णा जातयः

कार्मारवी च गान्धारपञ्चमी षड्जकैशिकी ।
मध्यमोदीच्यवेत्येता नित्यपूर्णाः प्रकीर्तिताः ॥ १९ ॥

---

[1] षाड्ज्या—स. र. [2] न च धैवती—स. र.

संपूर्णाः षाडवाः

षाड्जी च नन्दयन्त्यान्ध्री गान्धारोदीच्यवेत्यमूः ।
संपूर्णाः षाडवाः प्राह चतस्रः काश्यपो मुनिः ॥ २० ॥

दशावशिष्टाः सम्पूर्णाः षाडवौडुविता मताः ।
पञ्चमीमध्यमाषड्जमध्यमाख्यासु जातिषु ॥ २१ ॥
[1]स्वरसाधारणः प्रोक्तो मुनिभिर्भरतादिभिः ।

अष्टादशसु जातिषु त्रिषष्टिरंशाः

एकांशा नन्दयन्ती च मध्यमोदीच्यवा तथा ॥ २२ ॥

गान्धारपञ्चमीत्येतास्तिस्रो द्व्यंशा[2]स्तथैव च ।
गान्धारोदीच्यवा चाथ पञ्चमीत्युदिता इमाः ॥ २३ ॥

नैषाद्यार्षभिकाषड्जकैशिक्यस्त्र्यंशिका मताः ।
आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशिकाः ॥ २४ ॥

पञ्चांशा रक्तगान्धारी गान्धारी मध्यमा तथा ।
षाड्जीत्येताश्चतस्रः स्युः षडंशैकैव कैशिकी ॥ २५ ॥

सप्तांशा सूरभिः षड्जमध्यमा परिकीर्तिता ।
इति त्रिषष्टिरंशाः स्युर्जातिष्वष्टादशस्विमे ॥ २६ ॥

रागस्वरूपं तद्भेदाश्च

योऽऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥ २७ ॥

---

[1] स्वरसाधारणं प्रोक्तं मुनिभिर्भरतादिभिः ।
अंशेषु समपेक्ष्येतद्यथास्वनियमाद्भवेत् ॥
एतदल्पनिगास्त्वाहुः कम्बलाश्वतरादयः ।
अल्पद्विश्रुतिके रागभाषादावपि तन्मतम् ॥
निगयोरंशयोः षड्जमध्यमायां न तद्भवेत् ।
विकृता एव तत्रापि स्वरसाधारणाश्रयाः ॥—स. र.

[2] स्तु धैवती—स. र.

प्रधानरागा द्वात्रिंशत्तेष्वष्टौ पुरुषाः स्मृताः ।
शेषा योषा इति ज्ञेयाश्चतुरुत्तरविंशतिः ॥ २८ ॥

अष्टौ पुंरागाः

रागौ बङ्गालभूपालौ भैरवो मालवस्तथा ।
श्रीरागोऽथ वसन्तश्च सालङ्गः पलवङ्गरः ॥ २९ ॥

अष्टावेते रागविद्भिः पुरुषाः संप्रकीर्तिताः ।

चतुर्विंशतिः स्त्रीरागाः

वेलावती मलहरी कुरञ्जी मेघरञ्जिनी ॥ ३० ॥

छायागौली च धन्यासी तुण्डी मङ्गलकौशिकी ।
कर्णाटगौली देशाक्षी वराळी रीतिगौलिका ॥ ३१ ॥

बौली रामक्रिया देवक्रिया गुण्डक्रिया अपि ।
ललिता देशकारी च गौलनारायणाह्वया ॥ ३२ ॥

गुर्जरी पूर्वगौली च भल्लारी साहुरीति च ।
आन्दोलीति स्त्रियः प्रोक्ताश्चतुरुत्तरविंशतिः ॥ ३३ ॥

एकैकस्य पुंरागस्य तिस्रस्तिस्रोऽङ्गनारागा इति विभागः

पुरुषाह्वयरागाणामेकैकस्य मनीषिभिः ।
स्त्रीरागाः प्रविभज्यन्ते तिस्रस्तिस्रोऽङ्गना इति ॥ ३४ ॥

वेलावती मलहरी बौली भूपालकस्य च ।
बङ्गालस्य च धन्यासी छायाकर्णाटगौलिके ॥ ३५ ॥

देवक्रिया भैरवस्य कुरञ्जी मेघरञ्जिनी ।
मालवे गुर्जरी गुण्डक्रिया नारायणाह्वया ॥ ३६ ॥

श्रीरागस्य तथान्दोली भल्लारी साहुरीति च ।
रामक्रिया वसन्तस्य वराली शुभकैशिकी ॥ ३७ ॥

सारङ्गस्य च देशाक्षी रीतिपूर्वादिगौलिके ।
ललिता देशकारी च तुण्डी शेषस्य योषितः ॥ ३८ ॥

मतङ्गस्य मतेनैवं रागसङ्ख्या प्रदर्शिता ।

षाडवौडुवसंपूर्णभेदेन रागत्रैविध्यम्

षाडवा औडुवाश्चैव संपूर्णाश्चेति ते त्रिधा ॥ ३९ ॥

स्वरैः षड्भिः षाडवः स्यात्तैस्तु पञ्चभिरौडुवः ।
सप्तभिस्तु स्वरैर्ज्ञेयो रागः संपूर्ण उच्यते ॥ ४० ॥

षाडवौडुवस्वरशब्दानां निर्वचनम्

षडवन्ति प्रयोगं ये स्वरास्ते षाडवा मताः ।
[1]षट्स्वरास्तेषु जातत्वाद्गीतं षाडवमुच्यते ॥ ४१ ॥

वान्ति यान्त्युडवोऽत्रेति व्योमोक्तमुडुवं बुधैः ।
पञ्चमं तच्च भूतेषु पञ्चसङ्ख्या तदुद्भवा ॥ ४२ ॥

औडुवी साऽस्ति येषां च स्वरास्ते त्वौडुवा मताः ।
ते संजाता यत्र गीते तदौडुवितमुच्यते ॥ ४३ ॥

गीतादिविहितस्तत्र स्वरो ग्रह इतीरितः ।
गीते समाप्तिकृन्न्यासः [2]स्वर इत्युच्यते बुधैः ॥ ४४ ॥

पुमाश्रया रागाः षट्

भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥ ४५ ॥

भैरवरागस्य स्त्रीरागाः

मध्यमादिर्भैरवी च बङ्गाली च वराटिका ।
सैन्धवी च पुनर्ज्ञेया भैरवस्य वराङ्गनाः ॥ ४६ ॥

कौशिकस्य स्त्रीरागाः

तोडी कुम्भावती गौडी गुण्डकी ककुभा तथा ।
रागिण्यो रागराजस्य कौशिकस्य वराङ्गनाः ॥ ४७ ॥

---

[1] षट्स्वरं तेषु–स. र. षट्स्वरमिति गीतविशेषणम्. [2] एकविंशतिधा च सः–स. र.

हिन्दोलस्य स्त्रीरागाः

वेलावती रामकरी देशाक्षी पटमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य वराङ्गनाः ॥ ४८ ॥

दीपकस्य स्त्रीरागाः

केतारी कानडी देशी काम्बोजी नाटिका पुनः ।
दीपकस्य प्रियाः पञ्च ख्याता रागविशारदैः ॥ ४९ ॥

श्रीरागस्य स्त्रीरागाः

वसन्ती मालवी चैव मालवश्रीर्धनासिका ।
असावरीति विज्ञेयाः श्रीरागस्य वराङ्गनाः ॥ ५० ॥

मेघरागस्य स्त्रीरागाः

मल्हारी देशकारी च भूपाली गुर्जरी तथा ।
[1] टक्का च पञ्चमी भार्या मेघरागस्य योषितः ॥ ५१ ॥

षण्णां पुरुषरागाणां पञ्च पञ्च स्त्रियो मताः ।
एवं स्त्रीपुंसभेदेन षट्त्रिंशत्समुदीरिताः ॥ ५२ ॥

क्रमादेषां लक्षणं च ध्यानं च समुदीर्यते ।

स्त्रीपुंभेदभिन्नानां भैरवादीनां षट्त्रिंशद्रागाणां लक्षणं ध्यानं च
(भैरवरागः)

धैवतांशग्रहन्यासो रिपहीनो धमान्तकः ॥ ५३ ॥

भैरवः स तु विज्ञेयो धैवतादिकमूर्छनः ।
धैवतो विकृतो यस्मिन्नौडुवः परिकीर्तितः ॥ ५४ ॥

गङ्गाधरः शशिकलातिलकस्त्रिनेत्रः
सर्पैर्विभूषिततनुर्गजकृत्तिवासाः ।
भास्वत्त्रिशूलकर एष नृमुण्डधारी
शुभ्राम्बरो जयति भैरव आदिरागः ॥ ५५ ॥

ध नि स ग म प ध म । इति भैरवः ॥

---

[1] टक्कारपञ्चमी—क.

मध्यमादिः

मध्यमादिश्च रागाङ्गग्रहांशन्यासमध्यमा ।
सप्तस्वरैस्तु गातव्या मध्यमादिकमूर्छना ॥ ५६ ॥

संपूर्णा कथिता तज्ज्ञै रिधहीना क्वचिन्मता ।

पत्या सहासं परिरभ्य कामं
सुचुम्बितास्या कमलायताक्षी ।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा
सा मध्यमादिः कथिता मुनीन्द्रैः ॥ ५७ ॥

म प ध नि स रि ग म ।° इति मध्यमादिः ।

भैरवी

संपूर्णा भैरवी ज्ञेया ग्रहांशन्यासमध्यमा ।
सौवीरीमूर्छना ज्ञेया मध्यमग्रामचारिणी ॥ ५८ ॥

कैश्चिदेषा भैरववत्स्वरैर्ज्ञेया विलक्षणा ।

स्फटिक[1]रजतपीठे रम्यकैलासशृङ्गे
विकचकमलपत्रैरर्चयन्ती महेशम् ।
करधृतघनवाद्या पीतवर्णायताक्षी
सुकविभिरियमुक्ता भैरवी भैरवश्री ॥ ५९ ॥

म प ध नि स रि ग म । स नि स ग म (प) ध म । इति भैरवी ।

बङ्गाली

बङ्गाली त्वौडुवा ज्ञेया ग्रहांशन्यासषड्जभाक् ।
रिधहीना च विज्ञेया मूर्छना प्रथमा मता ॥ ६० ॥

पूर्णा वाङ्गत्रयोपेता कल्लिनाथेन भाषिता ।

[1] रञ्जित—क.

कक्षे निवेशितकरण्डधरा तपस्वि-
न्युद्यत्त्रिशूलपरिमण्डितवामहस्ता ।
भस्मोज्ज्वला निबिडबद्धजटाकलापा
बङ्गालिकेत्यभिहिता तरुणार्करोचिः ॥ ६१ ॥

स ग म प नि स । म प ध नि स रि ग म । इति बङ्गाली ।

### वराटिका

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः ।
प्रथमा मूर्छना यस्याः संपूर्णा कीर्तिवर्धिनी ॥ ६२ ॥

विनोदयन्ती दयितं सुकेशी
सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरवृक्षपुष्पं
वराङ्गनेयं कथिता वराटी ॥ ६३ ॥

स रि ग म प ध नि स । इति वराटिका ।

### सैन्धवी

षड्जग्रहांशकन्यासा पूर्णा सैन्धविका मता ।
मूर्छनोत्तरमन्द्राद्या कैश्चित् षाडविका मता ॥ ६४ ॥

रिहीना तु भवेन्नित्यं रसे वीरे प्रयुज्यते ।

त्रिशूलपाणिः शिवभक्तियुक्ता
रक्ताम्बरा धारितबन्धुजीवा ।
प्रचण्डकोपा रसवीरयुक्ता
सा सैन्धवी भैरवरागिणीयम् ॥ ६५ ॥

स रि ग म प ध नि स । स ग म प ध नि स । इति सैन्धवी ।

### मालवकौशिकः

षड्जग्रहांशकन्यासः पूर्णो मालवकौशिकः ।
मूर्छना प्रथमा ज्ञेया काकलीस्वरसंयुता ॥ ६६ ॥

आरक्तवर्णो घृतगौरयष्टिः
वीरः सुवीरेषु कृतप्रहारः ।
वीरैर्वृतो वीरकपालमाला-
धारी मतो मालवकौशिकोऽयम् ॥ ६७ ॥

स रि ग म प ध नि स । स नि ध प म ग रि स । इति मालवकौशिकः ।

तोडी

मध्यमांशग्रहन्यासा सौवीरी मूर्छना मता ।
संपूर्णा कथिता तज्ज्ञैस्तोडी स्त्री कौशिकी मता ॥ ६८ ॥
ग्रहांशन्यासषड्जां च केचिदत्र प्रचक्षते ।

तुषारकुन्दोज्ज्वलदेहयष्टिः
काश्मीरकर्पूरविलिप्तदेहा ।
विनोदयन्ती हरिणं वनान्ते
वीणाधरा राजति तोडिकेयम् ॥ ६९ ॥

म प ध नि स रि ग म । स रि ग म प ध नि स । इति तोडी ।

कम्भावती

धैवतांशग्रहन्यासा षाडवा त्यक्तपञ्चमा ।
कम्भावतीति विज्ञेया मूर्छना पौरवी मता ॥ ७० ॥

कम्भावती स्यात्सुखदा रसज्ञा
तारुण्यलावण्यविभूषिताङ्गी ।
गानप्रिया कोकिलरम्यनादा
प्रियंवदा कौशिकरागिणीयम् ॥ ७१ ॥

ध नि स रि ग म ध । इति कम्भावती ।

गौडी

ग्रहांशन्यासषड्जा स्याद्रिपहीना सुखप्रदा ।
मूर्छना प्रथमा ज्ञेया गौडी सर्वाङ्गसुन्दरी ॥ ७२ ॥

निवेशयन्ती श्रवणेऽवतंस-
माम्राङ्कुरं कोकिलनादरम्या ।
श्यामा मधुस्यन्दिसुसूक्ष्मनादा
गौडीयमुक्ता किल कोहलेन ॥ ७३ ॥

स ग म ध नि स । इति गौडी ।

गुण्डक्रिया

रिधहीना गुणकरी त्वौडुवा परिकीर्तिता ।
निग्रहांशे तु विन्यासा कैश्चित् षड्जत्रया मता ॥ ७४ ॥
रजनी मूर्छना चात्र मालवाश्रयिणी च सा ।
शोकाभिभूतनयना करुणं रुदन्ती
नम्राननना धरणिधूसरगात्रयष्टिः ।
आमुक्तचारुकबरी प्रियदूरवृत्तिः
सङ्कीर्तिता गुणकरी करुणे कृशाङ्गी ॥ ७५ ॥

नि स ग म प नि । [1](स ग म प नि स) इति गुण्डक्रिया ।

ककुभा

धैवतांशग्रहन्यासा सम्पूर्णा ककुभा मता ।
तृतीयमूर्छनोत्पन्ना शृङ्गाररसमण्डिता ॥ ७६ ॥
सुपोषिताङ्गी रसमण्डिताङ्गी
चन्द्रानना चम्पकदामयुक्ता ।
कटाक्षिणी स्यात्परमा विचित्रा
[2]हाने नियुक्ता ककुभा मनोज्ञा ॥ ७७ ॥

ध नि स रि ग म प ध । इति ककुभा ।

हिन्दोलः

हिन्दोलको रिधत्यक्तः सत्रयो गदितो बुधैः ।
मूर्छना शुद्धमध्या स्यादौडुवः काकलीयुतः ॥ ७८ ॥

---

[1] क. पुस्तके नास्ति. [2] गाने—क.

नितम्बिनीमन्दतरङ्गितासु
डोलासु खेलासुखमादधानः ।
तासां कपोलेष्वतिकामयुक्तो
हिन्दोलरागः कथितो मुनीन्द्रैः ॥ ७९ ॥

[1]स ग म प नि स । इति हिन्दोलः ।

वेलावली

धैवतांशग्रहन्यासा पूर्णा वेलावली मता ।
पौरवीमूर्छना ज्ञेया रसे वीरे प्रयुज्यते ॥ ८० ॥

सङ्केतवीक्षां दयिताय दत्वा
वितन्वती भूषण[2]मङ्गुलीषु ।
मुहुः स्मरन्ती [3]नृपमिष्टदेवं
वेलावली नीलसरोजकान्तिः ॥ ८१ ॥

ध नि स रि ग म प ध । इति वेलावली ।

रामकरी

षड्जग्रहांशकन्यासा पूर्णा रामकरी मता ।
मूर्छना प्रथमा ज्ञेया करुणे सा प्रयुज्यते ॥ ८२ ॥
रिधत्यक्ता तु कैश्चित्तु कैश्चित्पञ्चमवर्जिता ।

हेमप्रभाभासुरभूषणा च
नीलं निचोलं वपुषा वहन्ती ।
कान्ते समीपे पदमाश्रितेऽपि
मानोन्नता रामकरी मतेयम् ॥ ८३ ॥

स रि ग म प ध नि स । स ग म प नि स । स रि ग म ध नि स ।
इति रामकरी ।

देशाक्षी

देशाक्षी षाडवा ज्ञेया गत्रयेण विभूषिता ।
ऋषभेण वियुक्ता सा शार्ङ्गदेवेन कीर्तिता ॥ ८४ ॥

---

[1] स ग प म नि स—क. [2] मङ्गकेषु—क. [3] स्मरमिष्ट—क.

मूर्छना हरिणाश्वा च संपूर्णां केचिदूचिरे ।

वीरे रसे व्यञ्जितरोमहर्षे
निरुध्य संबद्धविलासबाहुः ।
प्रांशुः प्रचण्डः कलितेन्दुरागो
देशाक्षिरागः कथितो मुनीन्द्रैः ॥ ८५ ॥

ग म प ध नि स रि ग । इति देशाक्षी ।

पलमञ्जरी

पञ्चमांशग्रहन्यासा पूर्णा च पलमञ्जरी ।
हृष्यका मूर्छना ज्ञेया रसिकानां सुखप्रदा ॥ ८६ ॥

वियोगिनी क्लान्तविशीर्णगात्रा
स्रजं वहन्ती वपुषा च शुक्लाम् ।
आश्वास्यमाना प्रियया च सख्या
सुधूसराङ्गी पलमञ्जरीयम् ॥ ८७ ॥

प ध नि स रि ग म प । इति पलमञ्जरी ।

ललिता

रिपवर्जा च ललिता त्वौडुवा सत्रया मता ।
मूर्छना शुद्धमध्या स्यात्संपूर्णां केचिदूचिरे ॥ ८८ ॥

धैवतत्रयसंयुक्ता द्वितीया ललिता मता ।

प्रफुल्लसप्तच्छदमाल्यधारी
रुजा च गौरोत्पललोचनश्रीः ।
विनिर्गता दैववशात्प्रभाते
विलासवेषा ललिता प्रदिष्टा ॥ ८९ ॥

स ग म ध नि स । ध नि स ग म ध । इति ललिता ।

दीपकः

षड्जग्रहांशकन्यासः संपूर्णो दीपको मतः ।
मूर्छना शुद्धमध्या स्याद्गातव्या गायनैः सदा ॥ ९० ॥

बाला रतार्थं प्रविलीनवेषा
गृहेऽन्धकारे सुखसंप्रयुक्ता।
तस्याः शिरोभूषणरत्नदीपै-
र्लज्जामुदग्रां कृतवान् प्रदीपः ॥ ९१ ॥

स रि ग म प ध नि स। इति दीपकः।

### केताररागः

केतारी रिधहीनास्यादौडुवा परिकीर्तिता।
नित्रया मूर्छना मार्गी काकलीस्वरमण्डिता ॥ ९२ ॥

जटां दधानः सितचन्द्रमौलि-
र्नागोत्तरीयो धृतयोगपीठः।
गङ्गाधरो ध्याननिमीलिताक्षः
केताररागः कथितस्तपस्वी ॥ ९३ ॥

नि स ग म प नि। इति केतारी।

### कर्नाटी

त्रिर्निषादाथ संपूर्णा निषादो विकृतो भवेत्।
मार्गी च मूर्छना ज्ञेया कर्नाटीयं सुखप्रदा ॥ ९४ ॥

कृपाणपाणिर्गजदन्तपत्र-
मेकं दधद्दक्षिणहस्तकेन।
संस्तूयमाना सुरचारणौघैः
कर्नाटिकेयं क्षितिपालमूर्तिः ॥ ९५ ॥

नि स रि ग म प ध नि। इति कर्नाटी।

### देशी

देशी पञ्चमहीना सा ऋषभत्रयसंयुता।
कपोलललतिका ज्ञेया मूर्छना विकृतर्षभा ॥ ९६ ॥

निद्रालसं सा कपटेन कान्तं
विबोधयन्ती सुरतोत्सवाय ।
गौरी मनोज्ञा शुकपिञ्छवस्त्रा
ख्याता च देशी रतपूर्णचित्ता ॥ ९७ ॥

रि ग म ध नि स रि । इति देशी ।

काम्भोजी

धांशन्यासग्रहा पूर्णा पौरवी मूर्छना मता ।
मल्हारी[1] निकटा ज्ञेया काम्भोजी च निगद्यते ॥ ९८ ॥

पीतं वसाना वसनं सुकेशी
वने रुदन्ती शुकनाददूना ।
विलोकयन्ती विदिशासु भीता
काम्भोजिका कान्तमनुस्मरन्ती ॥ ९९ ॥

ध नि स रि ग म प ध । इति काम्भोजी ।

नाटिका

ग्रहांशन्यासषड्जा स्यात्संपूर्णा नाटिका मता ।
प्रथमा मूर्छना ज्ञेया गमकैर्बहुभिर्मता ॥ १०० ॥

तुरङ्गमस्कन्धनिषण्णबाहुः
स्वर्णप्रभः शोणितशोणगात्रः ।
संग्रामभूमौ विचरन् प्रतापी
नाटोऽयमुक्तः किल शृङ्गमूर्तिः ॥ १०१ ॥

स रि ग म प ध नि स । इति नाटी ।

श्रीरागः

श्रीरागः स तु विख्यातः सत्रयेण विभूषितः ।
पूर्णः सर्वगुणोपेतो मूर्छना प्रथमा मता ॥ १०२ ॥

---

[1] निकटे ज्ञेया—क.

केचित्तु कथयन्त्येनमृषभत्रयसंयुतम् ।

अष्टादशाब्दः स्मरचारुमूर्ति-
धीरो लसत्पल्लवकर्णपूरः ।
[1]षड्जाधिदेवोऽरुणवस्त्रधारी
श्रीरागराजः क्षितिपालमूर्तिः ॥ १०३ ॥

स रि ग म प ध नि स । रि ग म प ध नि स रि ।

इति श्रीरागः ।

### वसन्ती

वसन्तिका तु संपूर्णा सत्रया कथिता बुधैः ।
श्रीरागमूर्छनैवात्र ज्ञेया रागविचक्षणैः ॥ १०४ ॥

शिखण्डिबर्होच्चयबद्धचूडः
कर्णावतंसीकृतशोभनाम्रः ।
इन्दीवरश्यामतनुर्विलासी
वसन्तकः स्यादलमञ्जुलश्रीः ॥ १०५ ॥

स रि ग म प ध नि स । इति वसन्ती ।

### मालवी

मालवी त्वौडुवा ज्ञेया नित्रया रिपवर्जिता ।
रजनीमूर्छना ज्ञेया काकलीस्वरमण्डिता ॥ १०६ ॥

नितम्बिनीचुम्बितवक्त्रपद्मः
समुज्ज्वलत्कुण्डलवान् प्रमत्तः ।
सङ्केतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥ १०७ ॥

नि स ग म ध नि । इति मालवी ।

---

1 षड्जादिसेव्यो–क.

मालवश्रीः

मालवश्रीस्तु रागाङ्गपूर्णा सत्रयभूषिता ।
मूर्छनोत्तरमन्द्रा स्याच्छृङ्गाररसमण्डिता ॥ १०८ ॥

रक्तोत्पलं हस्ततले नियुक्तं
विभावयन्ती तनुदेहयष्टिः ।
रसालवृक्षस्य तले निषण्णा
तोकस्मिता सा किल मालवश्रीः ॥ १०९ ॥

स रि ग म प ध नि स । इति मालवश्रीः ।

धनश्रीः

सत्रया ऋषभत्यक्ता षाडवा च धनश्रिका ।
मूर्छना प्रथमा ज्ञेया रसे वीरे प्रयुज्यते ॥ ११० ॥

दूर्वादलश्यामतनुर्मनोज्ञा
कान्तं लिखन्ती चरणेन दूना ।
खिन्ना कपोले नयनेऽश्रुबिन्दु-
निष्यन्दिनी धूतकचा धनश्रीः ॥ १११ ॥

स ग म प ध नि स । इति धनश्रीः ।

असावरी

असावरी गरित्यक्ता धग्रहांशा तथौडुवा ।
न्यासस्तु धैवतो ज्ञेयः करुणारसनिर्भरा ॥ ११२ ॥

अथवा ।

ककुभा धैवतोत्पन्ना ख्याता मांशग्रहा मता ।
पञ्चमेनैव रहिता षाडवा च निगद्यते ॥ ११३ ॥

श्रीखण्डशैलशिखरे शुकपुच्छवस्त्रा
मातङ्गमौक्तिककृतोत्तमहारवल्ली ।
आकृष्य चन्दनतरोरुरगं वहन्ती
सासावरी वलयमुज्ज्वलनीलकान्तिः ॥ ११४ ॥

ध नि स म प ध । म ध नि स रि ग ध । इत्यसावरी ।

मेघरागः

मेघः पूर्णो धत्रयः स्यादुत्तरायणमूर्छनः ।
विकृतो धैवतो ज्ञेयः शृङ्गाररसपूरितः ॥ ११५ ॥

नीलोत्पलाभवपुरिन्दुसमानशीलः
पीताम्बरस्तृषितचातकयाच्यमानः ।
पीयूषमन्दहसितो द्रुममध्यवर्ती
[1]वीरेषु राजति युवा किल मेघरागः ॥ ११६ ॥

ध नि स रि ग म प ध । इति मेघरागः ।

मल्हारी

मल्हारी सपहीना स्यादौडुवी पौरवीयुता ।
वर्षासु सुखदा ज्ञेया धांशन्याससग्रहान्विता ॥ ११७ ॥

गौरी कृशा कोकिलरम्यनादा
गीतच्छलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती
मल्हारिका यौवनदूनचित्ता ॥ ११८ ॥

ध नि रि ग म ध । इति मल्हारी ।

देशकारी

देशकारी तु संपूर्णा षड्जन्याससग्रहांशिका ।
मूर्छना प्रथमा ज्ञेया वराटी मिश्रिता भवेत् ॥ ११९ ॥

भर्त्रा समं केलिरतिः सुकेशी
सर्वाङ्गपूर्णा कमलायताक्षी ।
पीनस्तनी रुक्मतनुः सुपूर्णा
चन्द्रानना सैव च देशकारी ॥ १२० ॥

स रि ग म प ध नि स । इति देशकारी ।

---

[1]वीरेष राजति—क.

भूपाली

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः ।
मूर्छना प्रथमा ज्ञेया संपूर्णा शान्तके रसे ॥ १२१ ॥

कैश्चित्तु रिपहीनेयमौडुवा परिकीर्तिता ।

गौरद्युतिः कुङ्कुमलिप्तदेहा
तुङ्गस्तनी चन्द्रमुखी मनोज्ञा ।
भर्तुः स्मरन्ती विरहेण दूना
भूपालिकेयं रसशान्तियुक्ता ॥ १२२ ॥

स रि ग म प ध नि स । स ग म ध नि स । इति भूपाली ।

गुर्जरी

ग्रहांशन्यासऋषभा संपूर्णा गुर्जरी मता ।
सप्तमी मूर्छना तस्या भूपाल्या सह मिश्रिता ॥ १२३ ॥

श्यामा सुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवतल्पमध्ये ।
श्रुतिस्वराणां दधती विभागं
तन्त्रीमुखाद्दक्षिणगुर्जरीयम् ॥ १२४ ॥

रि ग म प ध नि स रि । इति गुर्जरी ।

टक्का

टक्का स्यात्तु त्रिधा षड्जा[1]संपूर्णा स्वादिमूर्छना ।

शय्यासु सुप्तं नलिनीदलानां
वियोगिनं वीक्ष्य विषण्णचित्ता ।
सुवर्णवर्णा गृहमागता सा
सुभूषयन्ती किल टक्कसंज्ञा ॥ १२५ ॥

स रि ग म प ध नि स । इति टक्का ।

---

[1] संपूर्णाश्चादि–क. संपूर्णश्चादि–सङ्गीतदर्पणे.

इति क्रमेण षट्त्रिंशद्रागाः सम्यङ्निरूपिताः ।
रागास्त्वनन्ता विज्ञेयास्ते द्रष्टव्या मनीषिभिः ॥ १२६ ॥

रागाङ्गभाषाङ्गोपाङ्गक्रियाङ्गानां लक्षणानि

रागच्छायानुकारित्वाद्रागाङ्गमिति कथ्यते ।
मध्यमादिमुखाः प्रोक्ता रागाङ्गानि त्रयोदश ॥ १२७ ॥

किंचिद्भाषानुसारित्वं भाषाङ्गमिति कथ्यते ।
उपसामीप्यतो वृत्ती रागानां स्यादुपाङ्गता ॥ १२८ ॥

तानानां करणं तत्र क्रियाशब्देन कथ्यते ।
क्रियायां यद्भवेदङ्गं क्रियाङ्गं तदुदाहृतम् ॥ १२९ ॥

भावक्रियादिक्रियाङ्गानि प्रोक्तानि द्वादशैव तु ।
प्रोक्ताः षण्णवतिर्भाषा विभाषा विंशतिः स्मृताः ॥ १३० ॥

चतस्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य सम्मताः ।

अथ वेलाः (पूर्वयामे गातव्या रागाः)

पूर्वयामे तु देशाक्षी भैरवः पलमञ्जरी ॥ १३१ ॥
भूपाली [1]सावरी देवक्रिया गुर्जरसंभवा ।

द्वितीये यामे गातव्या रागाः

वेलावली द्वितीये तु कुरुञ्जी शुभकौशिकी ॥ १३२ ॥
[2]तोडी वराली धन्यासी बङ्गालश्च वसन्तकः ।

तृतीये यामे गातव्या रागाः

ललिताथ तृतीये तु यामे जीमूतरञ्जिनी ॥ १३३ ॥
बौली चान्दोलिका रामक्रिया गुण्डक्रिया अपि ।
मल्हारी देशकर्याख्या [3]भल्लाली च ततः परम् ॥ १३४ ॥

---

[1] साबुरी—क. [2] तुंडी—क. [3] भल्लाले—क.

यामे तु मालवी छायागौलः कर्नाटगौलिका ।
श्रीरागः पूर्वगौली च सारङ्गो रीतिगौलिका ॥ १३५ ॥

गौलनारायणाख्या च गातव्या गायकोत्तमैः ।

सायंकाले निषिद्धा रागाः

देशाक्षी भैरवी शुद्धा सालगाख्या च भैरवी ॥ १३६ ॥

देवक्री रक्तहंसी च [1]सुहरी रागरञ्जकः ।
एते सूर्यांशतो जाताः सायंकाले तु निन्दिताः ॥ १३७ ॥

प्रगायति प्रभाते यः स नरः सुखमेधते ।

सायंकाले गातव्या रागाः

[2]शुद्धनाला सालगा च नटा शुद्धवराटिका ॥ १३८ ॥

वराटिका द्राविडी च देशी नागवराटिका ।
छायावराटिका च स्यान्माहुर्यस्वालिका तथा ।

मल्हारिका तथा छाया गौडी कर्नाटिकाह्वया ।
गौडो मालवगौडश्च [3]रामक्रिरुतिरुत्तमा ॥ १३९ ॥

छायारामकृती रङ्गछाया सर्ववराटिका ।
कर्नाटाह्वयवङ्कोलसहिताश्चन्द्रमोऽशकाः ॥ १४० ॥

सायमेते प्रगातव्यास्तस्य श्रीरतुला भवेत् ।
अत्रोक्तेतररागाणां न वेलानिर्णयः क्वचित् ॥ १४१ ॥

अवेलारागश्रवणे प्रायश्चित्तम्

अवेलारागमाकर्ण्य तस्य दोषप्रशान्तये ।
ईशानं च हरिं स्मृत्वा मध्यमादिं प्रयोजयेत् ॥ १४२ ॥

देवताविषये गीतं पुण्यगीतं च यद्भवेत् ।
अध्यात्मं चैव यद्गानं तथा तत्पापनाशनम् ॥ १४३ ॥

---

[1] साहुरी–क. [2] शुद्धनट्टा सालगा च नट्टा–क. [3] रामक्री ...रुत्तमा–क.

विवाहसमये गानं देवतास्तुतिपूर्वकम् ।
अवेलारागमाकर्ण्य न दोषः परिकीर्तितः ॥ १४४ ॥

आयुर्धर्मौ यशो बुद्धिर्धनं धान्यं बलं शुभम् ।
राज्याभिवृद्धिः सन्तानं पूर्णरागे फलं भवेत् ॥ १४५ ॥

संग्रामरूपलावण्यं विरहो गुणकीर्तनम् ।
षाडवेन प्रगातव्यं लक्षणं चरितं तथा ॥ १४६ ॥

व्याधिनाशे शत्रुनाशे भयशोकविनाशने ।
दुःस्थिते चैव सन्तापे मङ्गलाशिषि संयुगे ॥ १४७ ॥

औडुवेन प्रगातव्यं क्षामे च ग्रहमोक्षणे ।

उत्तमोत्तमगायकः

प्रवीणः शब्दविद्यायां तथालङ्कारपद्धतौ ॥ १४८ ॥

तथा शास्त्रेषु कुशलो लोकव्यापारकोविदः ।
गीतशास्त्रेषु निष्णातः स्वरलक्षणलक्ष्यवित् ॥ १४९ ॥

रागरागाङ्गभाषासु क्रियासु च विचक्षणः ।
कर्ता [1] स्वरप्रबन्धानां धातुमातुविचक्षणः ॥ १५० ॥

स्रष्टा च सर्वरीतीनां देशभाषाविशारदः ।
तालमानक्रियादक्षो निर्भयः प्रतिभान्वितः ॥ १५१ ॥

स्वरपाटप्रयोगेषु प्रवीणः पदबन्धने ।
श्रेष्ठो वाग्गेयकारोऽयमुत्तमोत्तम उच्यते ॥ १५२ ॥

उत्तमगायकः

गुणैः कैश्चिद्विहीनोऽपि धातुमातुविचक्षणः ।
उत्तमः स तु विज्ञेयो गीतशास्त्रविशारदैः ॥ १५३ ॥

स्थानभ्रष्टः

श्रुतिहीनस्वरंकुर्वन्नप्राप्तस्थानकत्रयः ।
स्थानभ्रष्टः स विज्ञेयो गायकेष्वतिनिन्दितः ॥ १५४ ॥

---

[1] सर्वप्रबन्धानां—क.

अस्वरो गायकः

प्रयुङ्क्ते वर्जितं यस्तु स्वरं रागक्रियाविधौ ।
प्रारब्धांशं न शक्नोति पुनः स्थापयितुं धिया ॥ १५५ ॥
स चास्वर इति ज्ञेयो निन्दितो गायकाधमः ।

श्रुतिबाह्यः

न्यूनाधिका श्रुतिर्यस्य षड्जादिषु विभाव्यते ॥ १५६ ॥
स बाह्यो निन्दितो ज्ञेयो गायको रागनाशकः ।

कपिलगायकः

नासाद्वारगतैर्नादैर्यस्तु गायति गायकः ॥ १५७ ॥
कपिलः स तु विज्ञेयः सोऽपि कष्टतमो मतः ।

काकी गायकः

काकस्वरसमो यस्य स्वरः कर्णकठोरकः ॥ १५८ ॥
ध्वनिर्यश्च प्रयोगेषु स काकी निन्दितो भृशम् ।

संदष्टगायकः

संदश्य दशनान् सर्वान् चर्वन्निव पदावलिम् ॥ १५९ ॥
यो गायति स विज्ञेयः संदष्टो गीतनाशकः ।

अव्यवस्थितगायकः

व्यवस्थितं तु यद्गीतं यः करोत्यव्यवस्थितम् ॥ १६० ॥
अव्यवस्थितनामासौ निन्दितो गायको बुधैः ।

फूत्कारी गायकः

मुहुरुच्छ्वासनिःश्वासफूत्कारपरिगर्जितैः ॥ १६१ ॥
खासैर्निष्ठ्यूतसंयुक्तैः फूत्कारी गायकोऽधमः ।

कम्पकः

ग्रीवायां यस्य भाले च सिरालाभः प्रदृश्यते ॥ १६२ ॥
घोणः फुल्लोऽरुणे नेत्रे गायन्निन्द्यः स कम्पकः ।

वक्री गायकः

अत्यर्थं कन्धरां वक्रां कृत्वा गीतं च गायति ॥ १६३ ॥
समं गातुं न जानाति स वक्री कथ्यतेऽधमः ।

कराली गायकः

व्यादाय वदनं यस्तु करालध्वनिना युतः ॥ १६४ ॥
गीतं गायति विज्ञेयः कराली स निराकृतः ।

निमीलनो गायकः

निमील्य नयनद्वन्द्वमपश्यन्नग्रतः स्थितान् ॥ १६५ ॥
गायन्निन्द्यः परिज्ञेयः निन्दितः स निमीलनः ।

उष्ट्रग्रीवो गायकः

उष्ट्रवत्कन्धरां कृत्वा जानुभ्यामाश्रितो महीम् ॥ १६६ ॥
यो गायति स विज्ञेयः उष्ट्रग्रीवोऽतिनिन्दितः ।

प्रसारी गायकः

प्रसार्य गात्रं हस्तौ च गीतं चाप्यविचक्षणः ॥ १६७ ॥
गायन्मानाधिकं प्रोक्तः प्रसारी स न शस्यते ।

कम्पितः

कम्पमानो ध्वनिर्यस्य सहजो गीतकर्मणि ॥ १६८ ॥
कम्पितः स तु विज्ञेयो निन्दितो ध्वनिकोविदैः ।

शारीरलक्षणम्

अभ्यासेन विना यत्तु रागाणां वक्ति कारकम् ॥ १६९ ॥
शरीरेण सहोत्पन्नं शारीरं तत्प्रचक्षते ।
चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेष्विव ॥ १७० ॥
यथेक्षुदण्डे माधुर्यं शारीरे श्राव्यता तथा ।
अन्यजन्मकृताभ्यासाद्दानयोगाच्छिवार्चनात् ॥ १७१ ॥
शारीरं प्राप्यते पुम्भिरभ्यासान्नैव लभ्यते ।

पञ्च गायकभेदाः

शिक्षको भावकश्चैव रञ्जको रसिकस्तथा ॥ १७३ ॥
अपरः कुटिकाराख्यः पञ्चधा गायकाः स्मृताः ।

शिक्षकलक्षणम्

कृतं वाग्गेयकारेण श्रुतं गृह्णात्यनुक्तकम् ॥ १७४ ॥
न विस्मरन् सावधानः शिक्षाकारः स कथ्यते ।

भावकलक्षणम्

रसहानौ न संधत्ते निर्भावे भावमानयेत् ॥ १७५ ॥
रागं करोति वैदग्ध्यात् भावकः सोऽभिधीयते ।

रञ्जकलक्षणम्

श्रोतृणां हृदयं ज्ञात्वा तेषां चित्तानुसारतः ॥ १७६ ॥
गायन्नूञ्जयते यस्तु स रञ्जक इति स्मृतः ।

रसिकलक्षणम्

स्निग्धामात्मश्रुतिं [1] कृत्वा भृशमानन्दभाग्भवेत् ॥ १७७ ॥
पुलकाञ्चितसर्वाङ्गो गाता च रसिकः स्मृतः ।

कुटिकारलक्षणम्

परगीतानुकारं यो ध्वनिचेष्टादिसंयुतम् ॥ १७८ ॥
सम्यक्प्रकुरुते दक्षः कुटिकारः स कथ्यते ।

सकण्ठगायकः

स्वरं वर्णं च तालं च युक्तं यो घटयेत्त्रयम् ॥ १७९ ॥
शोभनध्वनिसंयुक्तः सकण्ठो गायको हि सः ।

---

[1] श्रुत्वा—क.

क्रियापरगायकः

यथाशास्त्रप्रयोगेण मार्गं देशीयमेव च ॥ १८० ॥
यो गायति विना दोषैः कथ्यतेऽसौ क्रियापरः ।

रक्तादिध्वनिभेदाः

वेणुवीणासमैर्नादै रक्तोऽसौ ध्वनिरिष्यते ॥ १८१ ॥
कोकिलस्वनसंकाशो मधुरो ध्वनिरुच्यते ।
उच्चस्थानेऽपि यः श्राव्यः स्निग्धो ध्वनिरसौ मतः ॥ १८२ ॥
अकृशो निबिडो यस्तु खरोऽसौ ध्वनिरिष्यते ।
दूरस्थः श्रूयते यस्तु बृन्दमध्यस्थितोऽपि वा ॥ १८३ ॥
स माधुर्यगुणोपेतः श्रावकोऽसौ ध्वनिर्वरः ।
स्थानत्रयेऽपि यः श्राव्यः शोभनो लक्षणान्वितः ॥ १८४ ॥
ध्वनीनामुत्तमः प्रोक्तो ध्वनिस्थानकशोभनः ।

गाने सप्त महागुणाः

शारीरं च ध्वनिर्मेधा प्रौढिर्गमककौशलम् ॥ १८५ ॥
तालज्ञानमभीतिश्च गातुः सप्त महागुणाः ।
गीतस्याङ्गानि नादादिन्यासान्युक्तानि यानि तु ॥ १८६ ॥
तान्यष्टादशसंख्याकान्याख्यातानि यथाक्रमम् ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले जात्यादिकाङ्गगायकलक्षणनिरूपणं नामाष्टमस्तरङ्गः

---

# अथ नवमस्तरङ्गः

## तालस्य मुख्यत्वम्

अतः परं च क्रियते तालानां सुनिरूपणम् ।
गीतं वाद्यं च नृत्तं च सर्वं ताले प्रतिष्ठितम् ॥ १ ॥

न तालेन विना किंचित्तस्मात्तालस्य मुख्यता ।
तकारात्ताण्डवं प्रोक्तं लकाराल्लास्यमुच्यते ॥ २ ॥

तकारः शङ्करः प्रोक्तो लकारः पार्वती स्मृता ।
शिवशक्तिसमायोगात्ताल इत्यभिधीयते ॥ ३ ॥

न तालेन विना गीतं न वाद्यं तालवर्जितम् ।
न नृत्तं तालहीनं स्याद्रञ्जकः स ततो मतः ॥ ४ ॥

## तालभेदाः

अतः परं तालभेदा उदीर्यन्ते यथाक्रमम् ।
शिवपञ्चाननोद्भूताः पञ्च तालाः प्रकीर्तिताः ॥ ५ ॥

सद्योजातमुखे चच्चत्पुटतालः समुद्गतः ।
वामदेवमुखे चाचपुटतालः समुद्गतः ॥ ६ ॥

अघोरे तु मुखे जातः षट्पितापुत्रकस्तथा ।
मुखे तत्पुरुषे जातः सम्पक्वेष्टकसंज्ञकः ॥ ७ ॥

ईशानाख्ये मुखे देवि ताल उद्घट्टसंज्ञिकः ।
तस्मादेते पञ्च तालाः प्रशस्ताः पातकापहाः ॥ ८ ॥

## सङ्गीतसमयसारोक्ता एकोत्तरशततालाः

[1] चच्चत्पुटश्चाचपुटः षट्पितापुत्रकस्तथा ।
संपक्वेष्टक उद्घट्ट आदितालश्च दर्पणः ॥ ९ ॥

चच्चरी सिंहलीलश्च [2] कन्दर्पः सिंहविक्रमः ।
श्रीरङ्गो रतिलीलश्च [3] रङ्गतालः परिक्रमः ॥ १० ॥

---

[1] अत्र सङ्गीतसमयसारोक्तक्रमं अत्रैव विवरणक्रमं चानुसृत्य पाठभेदः क्रमभेदश्चाश्रितः. [2] त्रिभिन्नो वीरविक्रमः—मु. [3] रङ्गतालश्च कन्दुकः—मु.

प्रत्यङ्गो गजलीलश्च [1]त्रिभिन्नो वीरविक्रमः ।
हंसलीलो वर्णभिन्नो राजचूडामणिस्तथा ॥ ११ ॥

रङ्गोद्योतो राजतालः [2]सिंहविक्रीडितस्ततः ।
वनमाली वर्ण[3]तालस्ततो रङ्गप्रदीपकः ॥ १२ ॥

हंसनादः सिंहनादो मल्लिकामोदसंज्ञकः ।
ततः शरभलीलश्च रङ्गाभरण एव च ॥ १३ ॥

ततस्तुरङ्गलीलश्च सिंहनन्दनसंज्ञकः ।
जयश्रीर्विजयानन्दः प्रतितालो द्वितीयकः ॥ १४ ॥

मकरन्दः कीर्तितालो विजयो जयमङ्गलः ।
राजविद्याधरो मठो [4]जयतालः कुडुक्ककः ॥ १५ ॥

[5]ततो निस्सारुकः क्रीडा त्रिभङ्गी [6]कोकिलप्रियः ।
श्रीकीर्तिर्बिन्दुमाली च समतालश्च [7]मण्डलः ॥ १६ ॥

दुरीक्षणो मट्ठिका च ढेङ्किका वर्णमट्ठिका ।
अभिनन्दो[8]ऽन्तरक्रीडो मल्लतालश्च दीपकः ॥ १७ ॥

अनङ्गतालो विषमो नान्दी [9]मुकुलकन्दुकौ ।
[10]एकतालश्च कङ्कोलश्चतुस्तालश्च दोम्बली ॥ १८ ॥

अभङ्गो राजभेङ्कोलस्तथैव लघुशेखरः ।
प्रतापशेखरश्चान्यो जगझम्पश्चतुर्मुखः ॥ १९ ॥

झम्पश्च प्रतिमठश्च तथा तालस्तृतीयकः ।
तस्मादुपरि विज्ञेयो [11]वसन्तललितौ रतिः ॥ २० ॥

करणाख्ययतिश्चैव षट्तालो वर्धनस्तथा ।
ततो वर्णयतिश्चैव राजनारायणस्तथा ॥ २१ ॥

---

[1] सिंहविक्रीडितस्तथा–मु. [2] कन्दर्पः सिंहविक्रमः–मु. [3] तालः पूर्णो रङ्ग–मु. [4] जयश्चैव डुडुक्ककः–मु. [5] ततो निस्सारिणी क्रीडा मल्लतालश्च दीपकः–स. मकरन्दः. [6] केरलप्रियः–स. समयसारः [7] नन्दनः–मु. [8] रतिक्रीडो–मु. [9] मुकुल. संज्ञकः–मु. [10] सिंहतालश्च–मु. [11] वसन्ततिलको रतिः मु.

मदनश्चैव विज्ञेयः पार्वतीलोचनस्तथा ।
ततो गारुडितालः स्यात्ततः श्रीनन्दनो जयः ॥ २२ ॥

लीला विलोकितौ चन्यो ललितप्रिय एव च ।
जनकश्चैव लक्ष्मीशो रागवर्धनसंज्ञकः ॥ २३ ॥

उत्सवश्चेति तालानां स्यादेकाभ्यधिकं शतम् ।

### चच्चत्पुटादितालक्षणम्

चतुरश्रादितालानामिदानीं कथयाम्यहम् ॥ २४ ॥

प्रस्तारसदृशं लक्ष्म तद्भेदांश्च चतुर्विधान् ।
ताले चच्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुप्लुतौ ॥ २५ ॥

गुरुर्लघुर्गुरुश्चैव भवेच्चाचपुटाभिधे ।
पलगा गलपाश्चैव षट्पितापुत्रके स्मृताः ॥ २६ ॥

मगणः स्यात्प्लुताद्यन्तः संपद्वेष्टकतालके ।
उद्घट्टे मगणस्त्वेकः आदिताले लघुः स्मृतः ॥ २७ ॥

दर्पणः स्याद्द्रुतद्वन्द्वं गुरुश्चैकः प्रकीर्तितः ।
अष्टकृत्वस्तु चच्चर्यां विरामान्तौ द्रुतौ लघुः ॥ २८ ॥

सिंहलीले विधातव्यं लघ्वाद्यन्तं द्रुतत्रयम् ।
द्रुतद्वयं यकारश्च कन्दर्पे परिकीर्तितः ॥ २९ ॥

सिंहविक्रमताले स्युर्मगणो लपलां गपौ ।
श्रीरङ्गसंज्ञके ताले सगणो लघुपौ मतौ ॥ ३० ॥

रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् ।
चत्वारो रङ्गताले स्युर्द्रुता गुरुरतः परम् ॥ ३१ ॥

परिक्रमे लघुद्वन्द्वं यगणस्तदनन्तरम् ।
प्रत्यङ्गसंज्ञके ताले मगणः स्याल्लघुद्वयम् ॥ ३२ ॥

लचतुष्कं विरामान्त्यं गजलीले प्रकीर्तितम् ।
लघुर्गुरुर्लघुश्चैव त्रिभिन्ने परिकीर्तितः ॥ ३३ ॥

वीरविक्रमताले तु लद्रुतौ लगुरू ततः ।
सविरामं लघुद्वन्द्वं ताले स्याद्धंसलीलके ॥ ३४ ॥

वर्णभिन्नाभिधे ताले द्रुतद्वन्द्वं लघुर्गुरुः ।
राजचूडामणौ ताले द्रुतौ नश्च द्रुतौ लगौ ॥ ३५ ॥

रङ्गद्योतनताले तु मगणो लप्लुतावपि* ।
गपौ द्रुतौ लगौ पश्च सिंहविक्रीडिते लपौ ॥ ३६ ॥

[1]द्वौ द्रुतौ लो द्रुतौ च वनमालिनि गस्ततः ।
गुरुर्लघुद्रुतौ गश्च वर्णे स्याच्चतुरश्रके ॥ ३७ ॥

लघुद्रुतौ लघू गश्च त्र्यश्रे वर्णे प्रकीर्तितः ।
प्रतितूर्ये विरामान्त्या सिंश्राख्ये द्वादश द्रुताः ॥ ३८ ॥

प्लुतो गुरुर्द्रुतद्वन्द्वं गद्वयं लो गुरुस्ततः ।
रङ्गप्रदीपताले स्यात्तगणाद्गप्लुतौ यदि ॥ ३९ ॥

लप्लुतौ द्रुतयुग्मं च हंसनादे निरूपितः ।
यगणो लो गुरुश्चैव सिंहनादे निरूपितः ॥ ४० ॥

ताले स्यान्मल्लिकामोदे लद्वयं खचतुष्टयम् ।
लघुर्द्रुतचतुष्कं लौ स्यातां शरभलीलके ॥ ४१ ॥

[2]तगणाल्लौ च गौराद्यौ रङ्गाभरणसंज्ञके ।
तपला गो द्रुतौ गौ लौ पलपा गश्च लद्वयम् ॥ ४२ ॥

निःशब्दं लचतुष्कं च ताले स्यात्सिंहनन्दने ।
तुरङ्गलीलताले स्याद्द्रुतद्वन्द्वं [3]लघुस्ततः ॥ ४३ ॥

भगणाल्लो गुरुश्चैव जयश्रीः परिकीर्तिता ।
भवेयुर्विजयानन्दे लद्वयाद्गुरवस्त्रयः ॥ ४४ ॥

लौ द्रुतौ प्रतितालस्य द्रुतौ लश्च द्वितीयके ।
मकरन्दे द्रुतद्वन्द्वं लघुत्रयमतो गुरुः ॥ ४५ ॥

---

[1] वेदद्रुताः—क. [2] तगणा लौ च गौ कार्यौ रङ्ग—क. [3] लघू ततः—क.

* राजताले गपौ, दौ च गलौ प्लुतः—सं. र.

[1] लपौ पगौ लपौ चैव कीर्तिताले प्रकीर्तिताः।
प्लुतो गश्च प्लुतो गश्च ताले विजयसंज्ञके ॥ ४६ ॥

सगणद्वितयं यत्र स तालो जयमङ्गलः।
लघुर्वेको द्रुतौ ताले राजविद्याधराभिधे ॥ ४७ ॥

सकारान्मठताले स्यात्कल्पितं लचतुष्टयम्।
भकारतो गुरुद्वन्द्वं निश्शब्दमथवा भवेत् ॥ ४८ ॥

अथवा नगणो गश्च लघू चेति प्रकीर्तितः।
जगणो लो द्रुतौ पश्च जयताले प्रकीर्तितः ॥ ४९ ॥

द्रुतद्वयं लघुद्वन्द्वं भवेत्ताले कुडुक्कके।

लघुद्वन्द्वं विरामान्त्यं ताले निस्सारुके भवेत्।
द्रुतद्वन्द्वं विरामान्त्यं क्रीडाताले प्रकीर्तितम् ॥ ५० ॥

चण्डनिस्सारुकः कैश्चिदयमेवाभिधीयते।
सकाराद्गुरुणैकेन त्रिभङ्गिरभिधीयते ॥ ५१ ॥

कोकिलप्रियताले स्युः क्रमाद्गुरुलघुप्लुताः।
श्रीकीर्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ॥ ५२ ॥

चत्वारो बिन्दवो गुर्वोर्मध्ये स्युर्बिन्दुमालिनि।
समताले लघुद्वन्द्वं विरामान्तं द्रुतद्वयम् ॥ ५३ ॥

[2] लौ द्रुतश्च प्लुतश्चान्त्यस्ताले स्यान्मण्डलाभिधे।
केचिद्द्रुवक्रयोर्मध्ये बिन्दुयुग्मं प्रचक्षते ॥ ५४ ॥

दुरीक्षणे लघुद्वन्द्वाद्गुरुरेकः प्रकीर्तितः।
मठिकायां विधातव्या गुरुबिन्दुप्लुताः क्रमात् ॥ ५५ ॥

विरामं व्योमयुग्मं च लद्वयं चेति केचन।
ढेङ्किका रगणेन स्यात्केषांचिच्चैव योजना ॥ ५६ ॥

लो बिन्दू लश्च बिन्दू च विज्ञेया वर्णमठिका।
लद्वयं बिन्दुयुग्मं च गुरुश्चैवाभिनन्दने ॥ ५७ ॥

---

[1] तपौ पगौ तपौ चैव—क. [2] लो द्रुतौ च प्लुतश्चान्ते ताले स्यान्नन्दनाभिधे।

विधातव्यान्तरक्रीडे विरामान्तं द्रुतद्वयम् ।
मल्लताले च लघवो विरामान्त्यं द्रुतद्वयम् ॥ ५८ ॥

द्रुतद्वयं लघुद्वन्द्वं गुरुद्वन्द्वं च दीपके ।
लघुप्लुतौ सकारश्च स्यादनङ्गाभिधे पुनः ॥ ५९ ॥

वेदद्रुता विरामान्ता द्विवारं विषमे मताः ।
नान्दीताले समुद्दिष्टा लघुबिन्दू लघू गुरू ॥ ६० ॥

मुकुलाख्ये तथा ताले लघुर्बिन्दू लघुर्गुरुः ।
अन्यैर्लघ्वादिगुर्वन्तं मध्ये बिन्दुचतुष्टयम् ॥ ६१ ॥

लघुद्वन्द्वात्सकारेण कन्दुकः परिकीर्तितः ।
एकेनैव द्रुतेन स्यादेकतालश्च संज्ञया ॥ ६२ ॥

चतुर्विधान्यकङ्कालः पूर्वखण्डः समोऽसमः ।
पूर्णो लघुचतुष्केन गुरुणा लघुना क्रमात् ॥

द्रुतद्वन्द्वं लघुः खण्डे गुरुद्वन्द्वं लघुः समे ।
एको लघुर्गुरुद्वन्द्वं कङ्कोले विषमे भवेत् ॥

चतुस्ताले गुरुः पूर्वं ततो बिन्दुत्रयं भवेत् ॥

विरामान्त्यं लघुर्बिन्दुर्डोम्बल्याख्ये प्रकीर्तितः ।
लघुमेकं वदन्त्यन्ये ताले बद्धपणाभिधे ॥ ६३ ॥

अभङ्गताले कर्तव्यो लघोरग्रे त्रिमात्रकः ।
रगणाद्बिन्दुयुग्मेन राजभेङ्कोल इष्यते ॥ ६४ ॥

एकेन सविरामेण लघुना लघुशेखरः ।
प्रतापशेखरः स्याद्गाद्विरामान्तं द्रुतत्रयम् ॥ ६५ ॥

(जगज्झम्पे गुरुस्त्वेको विरामान्त्यं द्रुतत्रयम् । )

चतुर्मुखाभिधे ताले भगणानन्तरं प्लुतः ।
गुरुर्लघुः प्लुतः कैश्चिदयमेव प्रकीर्तितः ॥ ६६ ॥

व्योमद्वयं विरामान्तं लश्च झम्पाभिधे भवेत् ।
सगणो भगणो वापि प्रतिमट्ठे बुधैः स्मृतः ॥ ६७ ॥

तालज्ञैरयमेवान्यैः सोलकः परिकीर्तितः ।
तृतीयताले बिन्दोः स्यात्सविरामं द्रुतद्वयम् ॥ ६८ ॥

वसन्तताले कर्तव्यो नगणो मगणस्तथा ।
ताले ललितसंज्ञे स्याद्द्रुतद्वन्द्वं गुरुर्लघुः ॥ ६९ ॥

रतिताले लघुः कार्यस्ततश्चैको गुरुः स्मृतः ।
ताले करणयत्याख्ये ज्ञेयं बिन्दुचतुष्टयम् ॥ ७० ॥

षट्तालसंज्ञके ताले बिन्दुषट्कं निरन्तरम् ।
वर्धने बिन्दुयुगलं ततः कार्यौ लघुप्लुतौ ॥ ७१ ॥

वर्णयत्यभिधे ताले लघुद्वन्द्वं प्लुतद्वयम् ।
राजनारायणे बिन्दुद्वितयं जगणो गुरुः ॥ ७२ ॥

द्रुतद्वयं प्लुतश्चैको मदने परिकीर्तितः ।
पार्वतीलोचने प्रोक्तौ लौ द्रुतौ तनभाः क्रमात् ॥ ७३ ॥

[1] गत्रयं लघुबिन्दू च गुरुद्वन्द्वं द्रुतद्वयम् ।
गारुडी कथ्यते प्राज्ञैर्विरामान्त्यश्चतुर्द्रुतः ॥ ७४ ॥

श्रीनन्दनस्य तालस्य भगणात्प्लुत इष्यते ।
जये स्याज्जगणो लश्च बिन्दुयुग्मं प्लुतस्ततः ॥ ७५ ॥

बिन्दुर्लघुः प्लुतश्चैव लीलाताले प्रकीर्तितः ।
विलोकिते लघुर्वक्रः शून्ययुग्मं प्लुतस्ततः ॥ ७६ ॥

ललितप्रियताले स्यात्सगणानन्तरं लघुः ।
जनकाभिधताले स्यान्नयसेभ्यः परं गुरुः ॥ ७७ ॥

बिन्दुद्वयं विरामान्तं लक्ष्मीशे लप्लुतौ ततः ।
लघुद्वयं विरामान्तं लप्लुतौ रागवर्धने ॥ ७८ ॥

उत्सवः कथितः प्राज्ञैर्लघोरूर्ध्वं द्रुतो लघुः ।

अस्मिन् शास्त्रेऽप्रसिद्धानामितरेषां रागाणां प्रत्ययार्थमुपायाः

अन्येऽपि सन्ति भूयांसः तालास्ते लक्ष्यवर्त्मनि ॥ ७९ ॥

---

[1] यत्रयं–क.

प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्न प्रदर्शिताः ।
तद्भेदप्रत्ययार्थं तु लघूपाया भवन्त्यमी ॥ ८० ॥

प्रस्तारसङ्ख्ये नष्टं चोद्दिष्टं पातालकस्ततः ।
द्रुतमेरुर्लघोर्मेरुर्गुरुमेरुः प्लुतस्य च ॥ ८१ ॥

मेरुः संयोगमेरुश्च खण्डप्रस्तारकस्ततः ।
प्राचां चतुर्णां मेरूणां नष्टोद्दिष्टे पृथक्पृथक् ॥ ८२ ॥

एकोनविंशतिरिति प्रत्ययास्तान् ब्रुवेऽधुना ।

प्रस्तारः

न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि ॥ ८३ ॥

प्रागूने वामसंस्थांस्तु संभवे महतो लिखेत् ।
अल्पानसंभवे तालपूर्त्यै भूयोऽप्ययं विधिः ॥ ८४ ॥

सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ ।
[1] प्लुतौ व्यस्ते समस्ते च न तु व्यस्ते प्लुतेऽस्ति सः ॥ ८५ ॥

सङ्ख्या

एकद्व्यङ्कौ क्रमान्न्यस्य युञ्जीतान्त्यं पुरातनैः ।
द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ॥ ८६ ॥

तृतीयपञ्चमाङ्काभ्यां क्रमात्तं योगमग्रतः ।
लिखेद्दक्षिणसंस्थैवमङ्कश्रेणी विधीयते ॥ ८७ ॥

सा चाङ्कैरिष्टतालस्थद्रुतसङ्ख्यैः समाप्यते ।
द्रुतो लघुः सार्धमात्रो गुरुः सार्धद्विमात्रिकः ॥ ८८ ॥

प्लुतः सार्धत्रिमात्रश्चेत्येकैकद्रुतवर्धितैः ।

तालभेदाः क्रमादङ्कैः सङ्ख्यायन्ते स्थितैरिह ।
यदङ्कयोगादन्त्योऽङ्को लब्धस्तैरन्ततः क्रमात् ॥ ८९ ॥

भेदा द्रुतान्ता लघ्वन्ता गुर्वन्ताश्च प्लुतान्तकाः ।
सङ्ख्यायन्त इति प्रोक्ताः सङ्ख्या निश्शङ्कसूरिणा ॥ ९० ॥

[1] प्लुते—क.

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ६ | १० | १९ | ३३ |

नष्टम्

अत्रैतावतिथो भेदः किं रूप इति पृच्छति ।

यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ।
भेदानां यावतां मध्ये नष्टप्रश्नः कृतो भवेत् ॥ ९१ ॥

तावत्सङ्ख्याङ्कपर्यन्तां लिखेत्सङ्ख्याङ्कसन्ततिम् ।
अन्त्याङ्के तत्र नष्टाङ्कं पातयेदथ शेषतः ॥ ९२ ॥

पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपतितादद्रुतः ।
पूर्वश्चेत्पतितो न स्याल्लघुस्तु पतिताद्भवेत् ॥ ९३ ॥

उत्तरेणाकृतार्थेन सहितात्तदसंभवे ।
अकृतार्थेन पूर्वेण सान्तरे पतिते पृथक् ॥ ९४ ॥

लघुर्निरन्तरे त्वस्मिन् लघुरेव गुरुर्भवेत् ।
गुरुहेतौ तृतीये तु पतिते च प्लुतिर्भवेत् ॥ ९५ ॥

अङ्काभावे द्रुता ग्राह्यास्तालपूरणहेतवः ।
इति नष्टस्य विज्ञेयमुत्तरं रूपनिर्णयात् ॥ ९६ ॥

उद्दिष्टम्

[1] नष्टेऽत्र कथितो भेदः कतमः प्रश्न ईदृशः ।
उद्दिष्टं तत्र सङ्ख्याङ्कसन्ततिं नष्टवल्लिखेत् ॥ ९७ ॥

यैरङ्कैः पतितैर्नष्टे लभ्यन्ते ये प्लुतादयः ।
तानेवाङ्कान् लभन्ते ते भेदमुद्दिष्टमाश्रिताः ॥ ९८ ॥

[2] यद्वा प्लुतं भवेदङ्कं मध्येऽङ्कात्प्राप्तसप्तमे ।
तदभावे तु षष्ठाङ्के पातितेऽन्त्याङ्कमध्यतः ॥ ९९ ॥

---

[1] ईदृग्रूपोऽत्र कतिधा भेदः प्रश्न इत्थं दृशः—सं. र. [2] यद्वा षड्प्लुतहेत्वङ्कमध्येऽन्यात्प्राचि सप्तमे—सं. र.

यः शेषः स प्लुताल्लभ्यो लब्धहीनान्त्यशेषतः ।
ज्ञानं पूरणसङ्ख्याया उद्दिष्टोत्तरमिष्यते ॥ १०० ॥

पाताललक्षणम्

आदौ रूपमथैकैक[1]मङ्कं सङ्ख्याङ्कसङ्ख्यकम् ।
क्रमादधोऽधो विन्यस्येदन्त्यादींश्चतुरस्तथा ॥ १०१ ॥

स्वपङ्क्तिस्थान्लिखेदङ्का[2]दन्त्यसङ्ख्याङ्कवद्रुतम् ।
किंतु प्रतिनिधिर्नात्र विद्यते तुर्यषष्ठयोः ॥ १०२ ॥

इष्टतालद्रुत[3]मितां वीथिकां विलिखेदपि ।
क्रमादन्त्योपान्त्यतुर्यषष्ठैर्यत्र द्रुतादयः ॥ १०३ ॥

[4]निर्णीयन्ते सर्वतोऽत्र पातालः सोऽभिधीयते ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ६ | १० | १९ | ३२ | ६०. | १०६ |
| १ | २. | ५ | १० | २२ | ४४ | ९१ | १८० | ३५८ |

द्रुतमेरुलक्षणम्

पङ्क्तिं कृत्वेष्टतालस्थद्रुतसम्मितकोष्ठिकाम् ॥ १०४ ॥

तिरश्चीं तत्परामूनां कोष्ठेनाथ ततः पराम् ।
द्विद्विकोष्ठोनि[5]तास्त्वन्याः पूर्वतोऽथाङ्कयोजना ॥ १०५ ॥

द्वौ द्वौ तासामाद्यकोष्ठौ स्यातामेकाङ्कसंयुतौ ।
अधस्तन्यास्तृतीयादौ विषमे कोष्ठके लिखेत् ॥ १०६ ॥

अन्त्याद्यङ्कचतुष्कस्य योगः सङ्ख्याङ्कसङ्ख्वत् ।
समे त्वन्त्यं विनैतेषां योगं न्यस्याथ पङ्क्तिषु ॥ १०७ ॥

[6]परामशेषकोष्ठेषु चतुर्योगोऽयमिष्यते ।
नास्ति प्रतिनिधिस्त्वासामङ्कयोस्तुर्यषष्ठयोः ॥ १०८ ॥

---

[1] मङ्कसङ्ख्याङ्कसन्ततेः–स. र. [2] दग्रसंख्याङ्कवद्युतान्–स. र. [3] मितेष्वङ्केषु लिखितेष्वपि–स. र. [4] मीयन्ते सर्वमेदस्थाः–स. र. [5] निताः स्वस्वपूर्वं–स. र. [6] पराङ्क शेष–सं. र.

तासां स्वभावतो यास्तु निष्पन्ना ऊर्ध्वपङ्क्तयः ।
तन्मध्ये तु समा कोष्ठेऽन्त्यस्थानेऽन्त्यादधस्तनः ॥ १०९ ॥

अङ्कः कार्योऽथ तैरङ्कैर्भेदसङ्ख्याभिधीयते ।
विषमायामूर्ध्वपङ्क्तौ स्थितैरङ्कैरधः क्रमात् ॥ ११० ॥

एकद्रुताद्या विषमत्र्यादिसङ्ख्यास्तु तद्गताः ।
सर्वद्रुतान्ता मीयन्ते समपङ्क्तिस्थितैः पुनः ॥ १११ ॥

द्रुतहीनादयो द्व्यादिसमसङ्ख्यास्तु तद्गताः ।
सर्वद्रुतान्ता जायन्ते द्रुतमेरुरयं मतः ॥ ११२ ॥

ऊर्ध्वपङ्क्तिस्थसर्वाङ्कयोगात्सङ्ख्यापि गम्यते ।

द्रुतमेरुकोष्ठम्

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | १ | १ | ७ | ८ |
| | | | १ | १ | ५ | ६ | २० | २७ |
| | १ | १ | ३ | ४ | ९ | १४ | २५ | ४४ |
| १ | १ | २ | २ | ५ | ४ | १२ | ७ | २६ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

लघुमेरुलक्षणम्

[1] (लघुमेरौ कोष्ठपङ्क्तेः प्राग्वदाद्यावलौ लिखेत् ॥ ११३ ॥

---

[1] एतत्कोष्ठान्तर्गतार्धचतुष्टयस्थाने सङ्गीतरत्नाकरे :—

लघुमेरौ कोष्ठपङ्क्तीः प्राग्वन्यस्येत्तदादिमाः ।
एकैककोष्ठ एकाङ्कयुक्तोऽधःपङ्क्तिकेषु तु ॥
शेषकोष्ठेष्वन्त्यतुर्यषष्ठयोगं निवेशयेत् ।
परासां शेषकोष्ठेषूपान्त्याधस्तनसंयुतम् ॥
त्रियोगमेवमादध्यादत्र च द्रुतमेरुवत् ।
सदसत्त्वे प्रतिनिधिः (धेः) कोष्ठाङ्कैरूर्ध्वपङ्क्तिगैः ॥
लघुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धलाः ॥—इति पाठो पवर्तते.

योगमन्त्यस्य तुर्यस्य षष्ठाङ्कस्य तदूर्ध्वतः ।
अधोगोपान्त्ययुक्तस्य तैरङ्कैरूर्ध्वपङ्क्तिगैः ॥ ११४ ॥

लघुहीनादुपकस्य चैकद्व्यादिलसंयुताः ।)
सर्वलान्ताः क्रमात् ज्ञेयाः सङ्ख्यासर्वाङ्कसन्ततेः ॥ ११५ ॥

लघुमेरुकोष्ठम्

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | १ |
| | | | | | | | १ | ५ | १५ |
| | | | | | १ | ४ | १० | २० | २९ |
| | | | १ | ३ | ६ | १० | १८ | ३३ | ६१ |
| | १ | २ | ३ | ४ | ७ | १२ | २९ | ३४ | ५५ |
| १ | १ | १ | २ | ३ | ५ | ७ | १० | १४ | २१ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

गुरुमेरुलक्षणम्

गुरुमेरावधःपङ्क्तिः परा कोष्ठत्रयोनिता ।
तच्चतुःकोष्ठहीनाः स्युः स्वस्वपूर्वावलेः पराः ॥ ११६ ॥

एकाङ्कवन्त अद्याद्यकोष्ठाः प्रथमपङ्क्तिगाः ।
द्वितीयो ह्यङ्कवानन्त्योपान्त्यषष्ठाङ्कयोगिनः ॥ ११७ ॥

शेषकोष्ठाः परास्तांस्तु द्वितीयादिषु लिख्यते ।
[1] अन्त्याद्द्वितीयषष्ठाङ्का अधस्तुर्याङ्कसंयुतः ॥ ११८ ॥

लघुस्थाने गुरुर्ज्ञेयः शेषं तु लघुमेरुवत् ।

---

[1] योगोऽन्त्योपान्त्यषष्ठानां—स. र.

गुरुमेरुकोष्ठम्

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | ८ | ३ | १ |
| | | | १ | २ | ५ | १० | २० | ३८ | ७३ |
| १ | २ | ३ | ५ | ८ | १४ | २३ | ३९ | ६५ | १०९ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

प्लुतमेरुलक्षणम्

प्लुतमेरावधः पङ्क्तिः पञ्चकोष्ठोनिता परा ॥ ११९ ॥

तत्पराः स्वस्वपूर्वातः षट्षट्कोष्ठोनिता मताः ।
अधः पङ्क्तौ तु षष्ठाङ्कस्थाने तुर्यं नियोजयेत् ॥ १२० ॥

त्रियोगोऽयमधः षष्ठयुक्तः स्यात्परपङ्क्तिषु ।
प्लुतो ज्ञेयो गुरुस्थाने शेषं तु गुरुमेरुवत् ॥ १२१ ॥

प्लुतमेरुकोष्ठम्

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | १ | २ | ५ | १० | २२ | ४४ |
| १ | २ | ३ | ६ | १० | १८ | ३१ | ५५ | ९६ | १६८ | २९६ |

संयोगमेरुः

संयोगमेरोरूर्ध्वाः स्युश्चतस्रः कोष्ठपङ्क्तयः ।
इष्टतालद्रुतमितैः कोष्ठैर्युक्तास्ततः परे ॥ १२२ ॥

द्वे पङ्क्ती स्वस्वपूर्वातो द्विद्विकोष्ठोनिते ततः ।
[1] पङ्क्ती चैकैककोष्ठोने ततस्तिस्रश्च पङ्क्तयः ॥ १२३ ॥

एककोष्ठोनिताः पश्चाद्द्विद्विकोष्ठोनिते परे ।
[2] पङ्क्ती द्वे स्वस्वपूर्वाभ्यां तथैकैकोनिते परे ॥ १२४ ॥

---

[1] सङ्गीतरत्नाकरे एतत्पङ्क्तिस्थाने—'द्वे षष्ठ्या एककोष्ठोने ततस्तिस्रोऽष्टमावलेः' इति वर्तते. [2] पङ्क्तिभ्यां स्वस्व—स. र.

आद्यासु चतसृष्वासां क्रमेण सकलद्रुताः ।
समस्तलघवः सर्वगुरवः सकलप्लुताः ॥ १२५ ॥

एकाङ्कयुक्तनिश्शेषकोष्ठाद्या स्यात्परा पुनः ।
संयुक्तैर्विषमैः कोष्ठैः समैस्त्वेकाङ्कसंयुतैः ॥ १२६ ॥

कर्तव्या गुरुपङ्क्तेस्तु त्रयः कोष्ठा नभोऽन्विताः ।
तुर्यमेकाङ्कयुक्चैवं चतुष्कोष्ठाः परा अपि ॥ १२७ ॥

प्लुतपङ्क्तौ सशून्याः स्युः पञ्च षष्ठस्तु रूपवान् ।
षट्कोष्ठास्तद्वदन्याः स्युः षट्सु पङ्क्तिष्वनन्तरम् ॥ १२८ ॥

संयोगजाः क्रमाद्भेदा दलघू दगुरू दपौ ।
लगौ लपौ गपौ चेति तदङ्कप्रक्रिया त्वियम् ॥ १२९ ॥

अत्रोपदिष्टादारभ्य स्यादधोधोऽङ्कलेखनम् ।
[1]अन्त्यपूर्वद्वितीयाङ्कतुर्यषष्ठास्तथा क्रमात् ॥ १३० ॥

[2]योगा दलगपेषु स्युस्तेषु [3]यद्योगजा भिदाः ।
पङ्क्तौ तदङ्कयोगाङ्कं तत्कोष्ठे संभवाल्लिखेत् ॥ १३१ ॥

लेख्यपङ्क्त्युपरिश्रेणी या तिरश्ची तदाश्रिता ।
अङ्का दलगपानां स्युराद्यपङ्क्तिचतुष्टये ॥ १३२ ॥

तेषु प्रस्तुतभेदस्थद्रुतादिव्यक्तिसंश्रितान् ।
अङ्कान् गृह्णीत तेऽप्यन्त्यद्वितीयाद्या द्रुतादिषु ॥ १३३ ॥

प्रस्तुतेषु विपर्यस्ताः स्युरङ्कासम्भवे तु खम् ।
त्रियोगजाश्च ये भेदाश्चतुर्योगभवाश्च ये ॥ १३४ ॥

तत्पङ्क्तीनामपि ज्ञेयमेवमेवाङ्कपूरणम् ।
किन्तु त्रियोगजे भेदे ये त्रयः स्युर्द्वियोगजाः ॥ १३५ ॥

तेषां सन्निहिताङ्कानां प्रागुक्तोऽङ्कविपर्ययः ।
चतुर्योगे तु चत्वारो ये स्युर्भेदास्त्रियोगजाः ॥ १३६ ॥

तदङ्केष्वेव पूर्वोक्तं स्याद्विपर्यययोजनम् ।
ये चत्वारस्त्रियोगोत्थाश्चतुर्योगोत्थपञ्चमाः ॥ १३७ ॥

---

[1] अन्त्यं पूर्वे द्वितीयाङ्क—क. [2] योज्या—स. र. [3] तद्योगजा—स. र.

भेदास्ते पङ्क्तिषु ज्ञेयाः क्रमादन्यासु पङ्क्तिषु ।
द्लगा द्लपाश्चैव द्गपा ल्गपाः क्रमात् ॥ १३८ ॥
त्रियोगजाश्चतुर्योगोद्भवा द्लगपा इति ।
एष संयोगमेरुः स्यादतो ज्ञेयमथोच्यते ॥ १३९ ॥
तिर्यक्पङ्क्तिस्थकोष्ठाङ्कैस्तैस्तैः सर्वद्रुतादयः ।
ऊर्ध्वपङ्क्तिगता मेयास्तदभावस्तु शून्यतः ॥ १४० ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | द्रु |
| • | १ | ० | १ | ० | १ | ० | १ | ० | १ | ० | १ | ० | ल |
| • | ० | ० | १ | ० | ० | ० | १ | ० | ० | ० | १ | ० | गु |
| • | ० | ० | ० | ० | १ | ० | ० | ० | ० | ० | १ | ० | प्लु |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३७६ | २३१ | १४३ | ८७ | ५४ | ३२ | २० | ११ | ७ | ३ | २ | द्रु. ल. |
| ३५ | २४ | १८ | १३ | ९ | ५ | ४ | ३ | २ | द्रु. गु. | | |
| ११ | ७ | ६ | ५ | ४ | ३ | २ | ० | द्रु. प्लु. | | | |
| • | ११ | ० | ७ | ० | ३ | ० | २ | ल. गु. | | | |
| • | ४ | • | ३ | ० | २ | ० | द्रु. गु. | | | | |
| • | • | ० | २ | ० | ० | ० | प्लु. गु. | | | | |
| ५०० | २५१ | १३४ | ६० | ३२ | १२ | ६ | द्रु. ल. गु. | | | | |
| १२२ | ६० | ३२ | २ | ६ | द्रु. ल. प्लु. | | | | | | |
| २० | १२ | ६ | द्रु. गु. प्लु. | | | | | | | | |
| • | ६ | गु. प्लु. | | | | | | | | | |
| २४ | द्रु. ल. गु. प्लु. | | | | | | | | | | |

एवं तालप्रभेदानां ज्ञानोपायः प्रदर्शितः ।
वाद्यानां मर्दलादीनां नृत्तविद्योपयोगिनाम् ॥ १४१ ॥
स्वरूपं वर्ण्यते सम्यगिदानीं शास्त्रसम्मतम् ।

मर्दलादिवाद्यलक्षणम्

(ब्राह्मणादिभेदेन वृक्षभेदाः)

चन्दनं तु द्विजातीनां क्षत्रिये रक्तचन्दनम् ॥ १४२ ॥
खदिरो वैश्यजातीनामितरेषां तथेतरे ।

अनुपयुक्ता वृक्षाः

नीरसोषरभूजाता जीर्णा वातहतोत्तराः ॥ १४३ ॥
निर्भिन्नाः परितो गर्भे मर्दलेष्वसुखा द्रुमाः ।

मर्दले वर्ज्यं चर्म

मेदोऽन्वितं जराक्रान्तं छिन्नं काकमुखाहतम् ॥ १४४ ॥
अग्निधूमहतं जीर्णं वर्ज्यं चर्म च मर्दले ।

मृदङ्गनिर्माणम्

निर्दोषभूजकाष्ठेन मृदङ्गः क्रियते वरः ॥ १४५ ॥
अङ्गुलैरेकविंशत्या कृतायोऽमान्तरा पृथुः ।
चतुर्दशाङ्गुलं वामं वक्त्रमस्य प्रकल्पयेत् ॥ १४६ ॥
त्रयोदशाङ्गुलं चान्यत्पिण्डं त्वर्धाङ्गुलं भवेत् ।
एकाङ्गुलाधिके कुर्याद्वक्त्रयोश्चर्मणी घने ॥ १४७ ॥
चत्वारिंशच्च रन्ध्राणि तयोः प्रान्ते पृथक् पृथक् ।
व्यवधानं भवेदेषामन्तराङ्गुलमङ्गुलम् ॥ १४८ ॥
[1] सव्येऽनुक्रमयोगेन रन्ध्रकेषु क्षिपेत् क्रमात् ।
नीविकां कर्करमयीं तेषु रन्ध्रेषु निक्षिपेत् ॥ १४९ ॥

---

[1] सव्येन वामयोगेन—क.

मृदङ्गमध्ये बध्नीयात्त्रिभिः [1]सेवनकैस्तथा ।
कुर्याद्गोमूत्रिकाबन्धक्रमबन्धद्वयेन च ॥ १५० ॥

कुण्डलीद्वितयं प्रान्ते कक्ष्याबन्धाय कल्पते ।
कक्ष्यां निवेश्य तत्रैव सव्ये द्विगुणितां नयेत् ॥ १५१ ॥

साङ्गुलद्वितयं प्रान्ते बन्धनं स्यान्निरन्तरम् ।
भक्तेन भूतिमिश्रेण मृदितेन पुनः पुनः ॥ १५२ ॥

चिक्कणेन मुखे वामे बोहणं च परिक्षिपेत् ।
पिण्डिकां पूरिकाकारसम्मिताकृतिधारिणीम् ॥ १५३ ॥

किञ्चिन्मात्रेण भक्तेन वक्त्रं दक्षं प्रलेपयेत् ।
अनेनैव भवेन्नादो मृदङ्गस्य मनोहरः ॥ १५४ ॥

मुखयोर्बोहणं दत्वा वादयित्वाऽऽननद्वयम् ।
गिडदामिति वामं तु गडदामिति दक्षिणम् ॥ १५५ ॥

मर्दलोत्पन्नवर्णानां मूलकारणम्

अन्धकासुरनामानं संहत्य च महासुरम् ।
आनन्दताण्डवपरे बहुधैव महेश्वरे ॥ १५६ ॥

सूचिते भ्रमणीवेगे भूमौ पतति कुण्डले ।
तद्धित्तोटण्णीति वर्णपञ्चकं समभूत्तदा ॥ १५७ ॥

तेनाक्षरेण पूर्वेण बहुशब्दा भवन्ति हि ।
प्रबन्धसू[2]डकाख्येन द्विधा भेदेन वर्णिताः ॥ १५८ ॥

प्रबन्धे बहुभेदोऽस्ति भुवि चैकोत्तरं शतम् ।
पाटाक्षरान् प्रवक्ष्यामि वर्णानेकोनविंशतिम् ॥ १५९ ॥

सप्त शुद्धाक्षराणि

तस्य वर्णेषु शुद्धेषु सप्त वर्णा भवन्ति हि ।
तद्धित्तोटण्णङ्झेंधेति शुद्धाक्षरमुदाहृतम् ॥ १६० ॥

---

[1] सेचनकैस्तथा—क. [2] इत्थमेव मातृकायां पाठो विद्यते । सूलकेति मुद्रितेऽस्ति । बृहद्देश्यां जोडणीति कश्चित् प्रबन्धेन सह पठितोऽस्ति । सूडक इति तु स्यात्.

पञ्चवर्णा मृदङ्गस्य द्वौ वर्णौ पटहस्य तु ।
एतानि सप्त वर्णानि विज्ञेयानीह कोविदैः ॥ १६१ ॥

षोडश पाटाक्षराणि

सर्वे पाटाक्षरा ज्ञेया वर्णाष्षोडश कादयः ।
अधिकान् भजमान्वर्णान् वर्णयन्त्यपरे तथा ॥ १६२ ॥

ङवर्जितं कवर्गं च टवर्गं च तवर्गकम् ।
रहौ षोडशवर्णास्तु पाटाक्षरमुदाहृतम् ॥ १६३ ॥

सप्त द्वीपाः समुद्राश्च ऋषयः सप्त च स्वराः ।
सप्त वीराश्च विज्ञेयाः सप्तशुद्धाक्षरस्थले ॥ १६४ ॥

नागबन्धादिपञ्चशुद्धपाटाः

नागबन्धः स्वस्तिकश्च शुद्धश्च स्यादलग्नकः ।
[1]समस्खलिति पञ्चैते मुख्यपाटाः प्रकीर्तिताः ॥ १६५ ॥

तालैः सप्तभिरेतेषां योजने तु कृते सति ।
प्रत्येकं सप्त पाटाः स्युः पञ्चत्रिंशद्भवन्त्यमी ॥ १६६ ॥

षड्जादिस्वरेषु तकारादिपाटाक्षरक्रमः

षड्जग्रहे तकारश्च धिकारो वृषभग्रहे ।
गान्धारे चैव तोकारष्टकारो मध्यमग्रहे ॥ १६७ ॥

णकारः पञ्चमे चैव झेंकारो धैवते ततः ।
धकारं च निषादे तु स्वरपाटाक्षरक्रमः ॥ १६८ ॥

मृदङ्गाधारदेवताः

इच्छाशक्तिर्वामजानौ ज्ञानशक्तिस्तु मध्यतः ।
क्रियाशक्तिर्दक्षजानौ मृदङ्गाधारदेवताः ॥ १६९ ॥

वामहस्ताधिदेवताः

मणिबन्धे वसेद्ब्रह्मा गोविन्दोऽङ्गुष्ठमाश्रितः ।
तर्जन्यग्रे शिवः प्रोक्तो मध्यमायां च भास्करः ॥ १७० ॥

---

[1] समपाणिश्चेति भवितुमुचितम् ।

कन्दर्पोऽनामिकायां च कनिष्ठायां बृहस्पतिः ।
चन्द्रमा हस्तमध्ये स्यादित्थं हस्ताधिदेवताः ॥ १७१ ॥

दक्षहस्ताधिदेवताः

मणिबन्धे स्थितो ब्रह्माङ्गुष्ठे तु गणाधिपः ।
तर्जन्यामीश्वरः प्रोक्तो मध्यायां नन्दिकेश्वरः ॥ १७२ ॥

अनामायामनन्तः स्यात्कनिष्ठायां तु नारदः ।
मध्ये तु देवताः सर्वा दक्षहस्ते प्रकीर्तिताः ॥ १७३ ॥

ताललक्षणम्

कांस्येन तालयुग्मं स्यादङ्गुलत्रयसम्मितम् ।
वर्तुलं मध्यतो निम्नं ताले त्वङ्गुलमात्रकम् ॥ १७४ ॥

गुञ्जाप्रमाणविवरं विस्तारोऽप्यङ्गुलद्वयम् ।
यवप्रमाणपिण्डं च श्लक्ष्णमन्योन्यसन्निभम् ॥ १७५ ॥

नेत्रपट्टाञ्चलाग्राणि रन्ध्रे प्रक्षिप्य रज्जुवत् ।
यथा रन्ध्रान्न निर्याति ग्रन्थिं दद्यात्तदग्रतः ॥ १७६ ॥

संवेष्ट्य तर्जनीं वामामङ्गुष्ठेन प्रपीड्य च ।
कार्यस्तिर्यङ्मुखस्तालस्तालमध्ये प्रयत्नतः ॥ १७७ ॥

कनिष्ठानामिकामध्याः पाणिशाखाः प्रसारयेत् ।
तेन तालाग्रदेशेन ताडयेन्मध्यतोऽपरम् ॥ १७८ ॥

लघुगुर्वादिभिर्मानैर्वादयेद्बहुभङ्गिभिः ।

क्षुद्रघण्टिका

कांस्यकल्पतपुटद्वन्द्वा गर्भस्थायसगोलका ॥ १७९ ॥

रन्ध्रद्वयान्वितशिखा सुस्वना क्षुद्रघण्टिका ।
तास्तु घर्घरिका लोके प्रसिद्धा रज्जुगुम्फिताः ॥ १८० ॥

पादानुचलनादासां शब्दाः पाटानुयायिनः ।

नृत्ते यानभेदाः

हंसलावकयोर्यानं मयूरेभहयस्य च ॥ १८१ ॥
[1] कक्कुटीटिट्टिभस्यापि गमनं नर्तने भवेत् ।

नृत्यपात्रस्य दश प्राणाः

जवः स्थिरत्वं रेखा च भ्रमणी [2] दृष्टिरश्रमः ॥ १८२ ॥
मेधा प्रीतिर्वचो गीतं प्राणाः पात्रस्य ते दश ।
इत्थं नृत्यविधौ योग्याः पदार्थाः संप्रकीर्तिताः ॥ १८३ ॥

शास्त्रप्रसिद्धा मुख्या वाद्यभेदाः

अवनद्धं घनं चैव ततं च सुषिरं तथा ।
इति शास्त्रेषु वाद्यानां चतुष्टयमुदाहृतम् ॥ १८४ ॥

झल्लर्यादय आनद्धभेदाः

झल्लरी मुरजो भेरी पटहं करडा तथा ।
कुडुक्का च हुडुक्का च ढक्का डमरुकस्तथा ॥ १८५ ॥
निस्साणः सोल्लुका भाणस्तुम्बुकी दुन्दुभिस्तथा ।
तूर्यास्यान्येऽपि भेदाः स्युरानद्धस्यानुगा इमे ॥ १८६ ॥

सुषिरभेदाः

पाविका काहला वासो मुकुरी मधुकर्यपि ।
वंशस्तथैव शङ्खः स्याच्छुक्तिः शृङ्गं सुरुल्लपि ॥ १८७ ॥
सुषिरस्यापि वाद्यस्य भेदा इत्थं भवन्त्यमी ।

घनवाद्यभेदाः

कांस्यतालस्तथा तालो घण्टिका जयघण्टिका ॥ १८८ ॥
क्षुद्रघण्टा तथा कम्रा घनवाद्यानुगा इमे ।

---

[1] मर्कुटी-क. [2] दृक्परिश्रमः—क.

ततवाद्यभेदाः

वीणादिकं ततं वाद्यं तदनेकविधं स्मृतम् ॥ १८९ ॥

गान्धर्वाङ्गं नृत्तगीतवाद्यमेवं निरूपितम् ।
इत्थं नाटकशालायां वेङ्कटक्षोणिपालकः ॥ १९० ॥

पश्यन्नथ यथाशास्त्रं नाट्यं सुखमवर्तत ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले तालप्रस्तारादिवाद्यादिवर्णनं नाम नवमस्तरङ्गः

---

## अथ दशमस्तरङ्गः

स्वामिन्! वेङ्कटभूपाल! स्थले सङ्गलनामके ।
वरं तटाकं निर्माप्योद्यानं तत्राप्यकारयत् ॥ १ ॥

इतीरितं पुरा सम्यक् तयोर्निर्माणकौशलम् ।
श्रोतुमिच्छा मामकीने हृदये संप्रवर्तते ॥ २ ॥

विशेषविदिताशेषवेद्यजात! [1] दयानिधे! ।
तन्निरूपय वात्सल्यादुन्नतात्मगुणोदय! ॥ ३ ॥

[2] उद्यानप्रशंसा

पुंसः सर्वसुखैकसाधनफलाः सौन्दर्यगर्वोद्धुर-
क्रीडालोलविलासिनीजनमनस्स्फीतप्रमोदावहाः ।
गुञ्जद्भृङ्गविनिद्रपङ्कजभृतः स्फारोल्लसद्दीर्घिका-
युक्ताः सन्ति गृहेषु यस्य विपुलारामाः स पृथ्वीपतिः ॥ ४ ॥

---

[1] दयाम्बुधे–क.   [2] उपवनविनोदः (वृक्षायुर्वेदे).

उद्यानस्य सुखसाधनता

नवं वयो हारि वपुर्वराङ्गनाः
सखा कलावित्कलवल्लकीस्वनः ।
धनं वृथान्यत्सकलं सुखैषिणो
विना विहारोपवनानि भूपतेः ॥ ५ ॥

दशकूपसमा वापी दशवापीसमो ह्रदः ।
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥ ६ ॥

गृहस्य प्रागादिक्रमेण रोप्या वृक्षाः

गृहस्य पूर्वदिग्भागे न्यग्रोधः सार्वकामिकः ।
उदुम्बरस्तथा याम्ये वारुण्यां [1] पिप्पलः शुभः ॥ ७ ॥

प्लक्षश्चोत्तरतो धन्यो विपरीतं तु वर्जयेत् ।
वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतो गृहात् ॥ ८ ॥

न्यग्रोधं पश्चिमे चैव तथोदुम्बरमुत्तरे ।
देवदानवगन्धर्वाः किन्नरोरगराक्षसाः ॥ ९ ॥

पशुपक्षिमनुष्याश्च संश्रयन्ति सदा तरून् ।
क्रीडारामं तु यः कुर्यादुद्दामफलसंयुतम् ॥ १० ॥

तस्मै प्रसीदति [2] वरं पार्वतीवल्लभः स्वयम् ।

यस्तु [3] संरोपयेद्बिल्वं शङ्करप्रीतिकारकम् ।
तत्कुले तु महालक्ष्मीर्वसे[4]दापुत्रपौत्रकम् ॥ ११ ॥

अश्वत्थमेकं पिचुमन्दमेकं
न्यग्रोधमेकं दश तिन्त्रिणीश्च ।
कपित्थबिल्वामलकत्रयं च
नवाम्रवापी नरकं न पश्येत् ॥ १२ ॥

सर्वासां वृक्षजातीनां छाया वर्ज्या गृहे सदा ।
अपि सौवर्णकं वृक्षं गृहद्वारे न रोपयेत् ॥ १३ ॥

---

[1] पिप्पलद्रुमः—मु [2] परं—क. [3] संपोषयेत्—मु. [4] दाचन्द्रतारकम्—मु.

बदर्यादिवृक्षरोपणनिषेधः

बदरी कदली चैव दाडिमी बीजपूरकम् ।
प्ररोहति गृहे यस्य तद्गृहं न प्ररोहति ॥ १४ ॥

उपवननिर्माणप्रदेशः

न कुर्याद्याम्यनैरृत्याग्नेयेष्वपि च वाटिकाम् ।
अन्यथा कलहोद्वेगौ कष्टं वा लभते भृशम् ॥ १५ ॥

[1] तस्माद्राज्ञां हि शुभदं पुत्रपौत्रप्रवर्धनम् ।
पश्चिमोत्तरपूर्वेषु भवेदुपवनं कृतम् ॥ १६ ॥

उद्यानयोग्यभूमिलक्षणम्

अथोपवननिर्माणे योग्यां भूमिं प्रचक्ष्महे ।

जाङ्गलानूपसामान्यस्वभावापि च मेदिनी ।
भेदैः सा भिद्यते षड्भिर्वर्णतो रसतस्तथा ॥ १७ ॥

भूमेः षड्भेदाः

असितविपाण्डुश्यामल-
लोहितबहुपीतसितरुचः क्रमशः ।
मधुराम्ललवणतिक्ताः
कटुककषायान्विता भुवो रसतः ॥ १८ ॥

वृक्षरोपणे वर्ज्या भूमिः

विषपाषाणवल्मीकाबिलयुक्ता तथा मही ।
दूरोदका शर्करिला तरुभ्यो न हिता भवेत् ॥ १९ ॥

प्रशस्तभूमिः

इन्द्रनीलशुकपक्षकोमला शङ्खकुन्दकुसुमेन्दु[2]सन्निभा ।
तप्तकाञ्चनविकासिचम्पकस्पर्धिनी वसुमती प्रशस्यते ॥ २० ॥

---

[1] तस्माद्राज्यं–मु. [2] निर्मला–मु.

समा समासन्नजला हरिद्वर्णतृणाङ्कुरा ।
तस्यां सर्वे यथास्थानं प्ररोहन्ति महीरुहाः ॥ २१ ॥

न जाङ्गला न चानूपा भूमिः साधारणी शुभा ।
तस्यां सर्वेऽपि तरवः प्ररोहन्ति न संशयः ॥ २२ ॥

अनूपजा वृक्षाः

पनसलिकुचतालीवंशजम्बीरजम्बू-
तिलकवटकदम्बाश्मातखर्जूरपूगाः ।
कदलितिनिशमृद्वीकेतकीनालिकेर-
प्रभृतय इति चान्ये प्रायशोऽनूपजाः स्युः ॥ २३ ॥

जाङ्गलजा वृक्षाः

शोभाञ्जनश्रीफलसप्तपर्णशेफालिकाशोकशमीकरीराः ।
कर्कन्धुकाकेसरनिम्बशाका वृद्धिं लभन्ते भुवि जाङ्गलायाम् ॥

साधारणभूजा वृक्षाः

बीजपूरकपुन्नागकतकाम्रातिमुक्तकाः ।
प्रियङ्गुदाडिमाद्याश्च साधारणसमुद्भवाः ॥ २५ ॥

निधिदेवमहीपानां प्रभावाच्चातियत्नतः ।
[1] असात्म्यभूसमुत्पन्ना अपि सिद्ध्यन्ति पादपाः ॥ २६ ॥

वनस्पतिद्रुमलतागुल्माः पादपजातयः ।
बीजात्काण्डात्तथा कन्दात्तज्जन्म त्रिविधं विदुः ॥ २७ ॥

वनस्पत्यादीनां लक्षणम्

ते वनस्पतयः प्रोक्ता विना पुष्पं फलन्ति ये ।
द्रुमाश्च ते निगदिताः पुष्पैः सह फलन्ति ये ॥ २८ ॥

प्रसरन्ति प्रतानैर्यास्ता लताः परिकीर्तिताः ।
बहुस्तम्भा विटपिनो गुल्मा ये ते प्रकीर्तिताः ॥ २९ ॥

---

[1] असात्म्यभावमुत्पन्नाः.

बीजजा वृक्षाः

जम्बूचम्पकपुन्नागतिन्त्रिणीनागकेसराः ।
कपित्थबदरीबिल्व[1]कुम्भकारीप्रियङ्गवः ॥ ३० ॥

पनसाम्रमधूकाद्याः [2]करमर्शाश्च बीजिकाः ।

काण्डजा वृक्षाः

ताम्बूली सिन्धुवारश्च तगराद्याश्च काण्डजाः ॥ ३१ ॥

बीजकाण्डजा वृक्षाः

पाटला दाडिमीप्लक्षकरवीरवटादयः ।
मल्लिकोदुम्बरः कुन्दो बीजकाण्डोद्भवा मताः ॥ ३२ ॥

कन्दोद्भवाः

कुङ्कुमार्द्ररसोनालकन्दाः कन्दसमुद्भवाः ।

बीजकन्दोद्भवाः

पलापद्मोत्पलादीनि बीजकन्दोद्भवानि तु ॥ ३३ ॥

बीजावापार्हक्षेत्रम्

सम्यक्कृष्टे समे क्षेत्रे माषानुप्त्वा तिलांस्तथा ।
सुनिष्पन्नानपनयेत् तत्र बीजोप्तिरिष्यते ॥ ३४ ॥

बीजसंस्कारः

अथतुंपक्वात्फलतो विशोषिता-
द्विकृष्य बीजं पयसा निषिच्य च ।
विशोषितं पञ्चदिनानि सर्पिषा
विडङ्गमिश्रेण च धूपयेत्ततः ॥ ३५ ॥

---

[1] कुम्भकारि–क. मु. [2] करमर्दाश्च–क

क्षीरनिषिक्तं बीजं
शुष्कं तिलभस्मसर्पिषा लिप्तम् ।
गोमयमृदितमथोप्तं
सद्यो जायेत धूपितं वलया ॥ ३६ ॥

पयसि निषिक्तं बीजं
गोमयपरिमर्दितं [1]विशोष्य ततः ।
माक्षिकविडङ्गचूर्णै-
र्बहुशो मृदितं प्रजायेत ॥ ३७ ॥

जम्बूपनसचूतानां सरलालिकुचस्य च ।
क्षीरसिक्तं वपेद्बीजं घृतगोविड्विडङ्गकैः ॥ ३८ ॥

बीजावापकलक्षणम्

शुचिः स्नातो बिभ्रद्वसनममलं पूजितसुरो
गुरुं नत्वा दत्वा वसु मतिमते सद्गुणवते ।
स्वयं बीजान्यादौ वपति कतिचिद्वास्तुपुरुषं
नमस्कृत्वा सिञ्चेत्तदनु परितोऽन्यः परिजनः ॥ ३९ ॥

बीजधानीं तृणास्तीर्णां कृत्वा सिञ्चेत्पयोऽम्बुना ।
जाताङ्कुरां च सलिलैर्निस्तुषां शोषमानयेत् ॥ ४० ॥

वृक्षरोपणविधानम्

अयथाविहितानां यन्मनोज्ञतासम्पदौ न स्तः ।
कथयाम्यतस्तरूणां रोपविधानं यथोद्दिष्टम् ॥ ४१ ॥

वृक्षरोपणयोग्यनक्षत्राणि

ध्रुवमृदुमूलविशाखागुरुभं श्रवणस्तथाश्विनी हस्ता ।
उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ४२ ॥

---

[1] विशोषितश्चैव–मु.

वृक्षरोपणप्रकारः

हस्तप्रमाणान् विटपान् सुसिक्तान्
सङ्क्रामयेन्मूलवतः समृत्कान् ।
सर्पिर्मधूशीरविडङ्गलिप्तान्
बिले निदध्याच्च करीषयुक्ते ॥ ४३ ॥

अवालुकाश्लक्ष्णमृदा पूरिते शोधिते तथा ।
कोदण्डार्धमिते [1] खाते गर्ते सिक्ते क्षिपेत्तरुम् ॥ ४४ ॥

कदलीक्षीरिणौ रोप्यौ मूले दत्वा तु गोमयम् ।

रम्भायाः सुपरिणतैः फलैर्विलिप्तां
कुर्वाणो भुवि निहितां पलालरज्जुम् ।
शुद्धायामुपरि सगाढमृत्कसुप्ता-
मासिञ्चेदबहुजलैर्बहून्यहानि ॥ ४५ ॥

सा रज्जुस्तदनु तमालनीलभासो
बिभ्राणा त्वरुणरुचोऽङ्कुरान् प्रसूते ।
भूयस्तामुपचितकाण्डपत्रमूला-
मारोप्य प्रथितविधानतो निषिञ्चेत् ॥ ४६ ॥

वृक्षरोपणे मासाः

आषाढे श्रावणे मासि बीजवापनरोपणे ।
ग्रीष्मादन्यत्र वल्लीनां केचिदिच्छन्ति रोपणम् ॥ ४७ ॥

विन्यासक्रमः

मण्डपनन्द्यावर्तस्वस्तिकचतुरश्रसर्वतोभद्रैः ।
वीथीनिकुञ्जपुञ्जकविन्यासैः पादपा रोप्याः ॥ ४८ ॥

दशविंशतिषोडशभिस्तु करै-
रधरोत्तरमध्यकृतान्तरकान् ।
द्विचतुस्त्रिभिरन्तरितान् क्रमश-
स्तृणपादपगुल्मभृतश्च वपेत् ॥ ४९ ॥

---

[1] भागे-मु.

सान्द्ररोपणमवृद्धिकारणं
वातभीतिरतिदूररोपणे ।
[1]भिन्नवर्त्मरचनाल्पपीडना
[2]सैव युक्तिरिति मे प्रतीयते ॥ ५० ॥

किंशुकादीनां रोपणनिषेधः

किंशुकश्च गिरिकर्णिका सिता
तित्तरीकविफलाक्षनीलिकाः ।
कोविदार इति भीतिदा गणा
नैव तानुपवनेषु रोपयेत् ॥ ५१ ॥

प्रथमरोप्या वृक्षाः

फलिन्यशोकपुन्नागशिरीषा निम्बचम्पकाः ।
मङ्गल्याः प्रथमं रोप्याः भल्लातश्च गदापहः ॥ ५२ ॥

वृक्षाणां दिग्व्यवस्था

पूर्वस्यां करमर्दवंशविटपाः पारावता दक्षिणे
कौबेर्यां बदरी कपित्थतरवो धात्री च पश्चाच्छिवा ।
अन्ये चोत्तरमध्यमाधमशिफा रोप्याः स्ववर्गैः समं
कृत्वा चान्तरकं यथायथममी पत्रैरुपर्यस्पृशः ॥ ५३ ॥

सेचनविधिः

सर्वस्य च नवोप्तस्य सायंप्रात[3]र्निषेचनम् ।
शीतातपसमीरेभ्यो रक्षणं च विधानतः ॥ ५४ ॥

हेमन्ते शिशिरे देयं तोयं चैकान्तरे दिने ।
वसन्ते प्रत्यहं ग्रीष्मे सायंप्रातर्निषेचनम् ॥ ५५ ॥

वर्षासु च शरत्काले यदा वृष्टिर्न दृश्यते ।
तदा देयं जलं तज्ज्ञैरालवाले महीरुहाम् ॥ ५६ ॥

---

[1] भिन्नवृत्ति–मु, भिन्नवर्ग–उ. चि. [2] नैव–क. [3] निषेवणम्–मु.

वारिणा यावता यस्य मूले सौहित्यमिष्यते ।
तावत्तस्य तरोर्देयं किं घटार्धविवक्षया ॥ ५७ ॥

आलवालस्थितं तोयं शोषं न भजते यदा ।
अजीर्णं तद्विजानीयान्न देयं तादृशं जलम् ॥ ५८ ॥

समीपजातं यत्तस्य तृणगुल्मलतादिकम् ।
पाटनीयं प्रयत्नेन द्रुमाणां वृद्धिमिच्छता ॥ ५९ ॥

नीहारादिभ्यो वृक्षाणामवश्यरक्षणीयता

नीहाराच्चण्डवाताच्च धूमाद्वैश्वानरादपि ।
जालकारात्प्रयत्नेन रक्षणीयाः क्षमारुहाः ॥ ६० ॥

[1] पङ्क्तिमध्ये सुपुष्पाश्च फलवन्तस्तथापरे ।
वृक्षाः कार्या युता वृत्या सा चापि परिखावृता ॥ ६१ ॥

द्रुमगुल्मानां हिमाग्निबाधाशमनोपायः

विद्युदाहतवृक्षस्य भूतिमादाय सर्वतः ।
रक्षार्थं विकिरेदेषां [2] तया न हिमबाधनम् ॥ ६२ ॥

दीप्तोऽप्यग्निः शमं याति वज्रदग्धद्रुभस्मना ।

दृष्टिदोषहरणमन्त्रयन्त्रविधानम्

सितशाल्योदनं दध्ना सैन्धवेन [3] युतं वने ॥ ६३ ॥

क्षेपणीयं च परितस्तरूणां दृष्टिवारणम् ।

शलभाखवादिपीडानिवारणम्

शलभाखुपतङ्गानां पिपील्यादेर्भये सति ॥ ६४ ॥

अष्टोत्तरशतं जप्त्वा मन्त्रं पत्रे तरोर्लिखेत् ।

---

[1] पङ्क्मध्ये—मु. [2] तया नैव हि बन्धनम्—मु. [3] समन्वितम्—मु.

मन्त्रः—ओं स्वस्ति किष्किन्धावस्थितः प्रकटपराक्रमान्तर्हिता-र्कमण्डलोपजीवितः श्रीहनूमानाज्ञापयति। (मूषकपतङ्गपिपीलिका-शलभकरभकीटगन्धिकानिवहैर्न स्थातव्यम्। क्रममाणस्य शरीर-निग्रहं समावर्तयति) ॥ ६५ ॥

तस्य वानरसिंहस्य क्रममाणस्य सागरम्।
कक्षान्तरगतो वायुर्जीमूत इव नर्दति ॥ ६६ ॥

हुं फट् नमः।

पत्रे [1] मन्त्रं समालिख्य जप्त्वा तं निखनेद्भुवि।
क्षेत्रे कीटपतङ्गाखुपिप्पल्यादि विनश्यति ॥ ६७ ॥

उद्याने लतागृहनिर्माणम्

द्रुमप्रवालस्थगितान्तराणि
विकीर्णपुष्पाणि समीरणेन।
गृहाणि कुर्याद्विमुक्तकानां
लताभिरालोलमधुव्रताभिः ॥ ६८ ॥

डोला

स्थानेष्वपरेषु तथा
पादपयुगलेषु मिथुनसंवाह्याः।
शाखावलम्बिनीभि-
र्डोलाः कार्या लताभिश्च ॥ ६९ ॥

क्रीडाशैलः

तरुविटपलतानिकुञ्जरम्यो
विरचितकन्दरसानुगण्डशैलः।
विविधमणिगुहो विचित्रधातुः
क्वचिदपि पर्वतराड्विलासहेतुः ॥ ७० ॥

मयूरपोषणम्

केकानिनादसुभगाः सदा [2] सन्त्रासिताहयः।
ताण्डवेन तदुद्देशान्मण्डयन्ति शिखण्डिनः ॥ ७१ ॥

---

[1] मन्त्रं–मु. [2] संहेषिता–ख.

पुष्करिणीनिर्माणम्

विलम्बिनो यत्र तटद्रुमा वपु-
 र्विलोकयन्ति प्रसवेक्षणैरिव ।
शमं दिशन्तः कलहंसभूषणा
 क्वचिद्भवेत्पुष्करिणी मनोरमा ॥ ७२ ॥

दीर्घिकानिर्माणम्

निर्यादस्सलिलां सुखावतरणां तीरेषु पुष्पद्रुमां
कूजद्वृक्ष[1]विहङ्गमां सतरणीमत्यायतां दीर्घिकाम् ।
कुर्यात्तत्र समुल्लसत्कमलिनीपत्रैः क्वचिच्छ्यामलां
श्यामालोचनमालिकां विधदतीं निलोत्पलानि क्वचित् ॥७३॥

वापीनिर्माणम्

उपवनमिव वारिमध्यमग्नं
 विमलतया प्रतिबिम्बितं दधाना ।
शशिकरनिकरेण पूरितेव
 क्वचिदुपनेयपयाः सुखाय वापी ॥ ७४ ॥

कूपवापीपुष्करिणीतटाकदीर्घिकाणां लक्षणम्

द्वारहीनो भवेत्कूपो द्वारेणैकेन वापिका ।
नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका ॥ ७५ ॥

कुल्याविधूततोयश्च तटाकः परिकीर्तितः ।

कूर्मनिक्षेपणम्

स्फटिकरजतवर्णो नीलराजीवचित्रः
 कमलसदृशमूर्तिश्चारुवंशश्च कूर्मः ।
अरुणसमवपुर्वा सर्षपाकारचित्रः
 सकलनृपमहत्त्वं मन्दिरस्थः करोति ॥ ७६ ॥

---

[1] विहङ्गपूगनिचुलां नात्यायतां दीर्घिकाम्—मु.

अञ्जनभृङ्गश्यामतनुर्वा बिन्दुविचित्रो व्यङ्गयशरीरः ।
सर्पशिरा वा स्थूलगलो यः सोऽपि नृपाणां राष्ट्रविवृद्धयै ॥७७॥

वैडूर्यत्विड् स्थूलकण्ठस्त्रिकोणो
गूढच्छिद्रश्चारुवंशः प्रशस्तः ।
क्रीडावाप्यां तोयपूर्णे घटे वा
कूर्मः कार्यो मङ्गलार्थं नरेन्द्रैः ॥ ७८ ॥

जलशोधकद्रव्यक्षेपणम्

अर्जुनमुस्तोशीरैः
सनागकोशातकामलकचूर्णैः ।
केतकफलचूर्णयुतैः
कूपे योगः प्रदातव्यः ॥ ७९ ॥

कलुषं कटुकं लवणं विरसं
सलिलं यदि चाशुभगन्धि भवेत् ।
तदनेन भवत्यमलं सरसं
शुभगन्धि गुणैरपरैश्च युतम् ॥ ८० ॥

प्रोक्तेत्युपवनक्रीडा वृक्षारोपणपूर्विका ।
अथ वक्ष्ये जलोत्पत्तिचिह्नानि क्रमशोऽधुना ॥ ८१ ॥

जलोत्पत्तिचिह्नानि

पातालादूर्ध्वगमाः
सिराः प्रसर्पन्ति सर्वतो दिक्षु ।
नीरस्य भूमिमध्ये
ज्ञात्वा ताः कल्पयेत्कूपम् ॥ ८२ ॥

दिक्पतिसंज्ञा च सिरा
नवमी मध्ये महाशिरा नाम ।
[1]एताभ्योऽन्याः शतशः
कुमुद्वाद्यैर्नामभिः प्रथिताः ॥ ८३ ॥

---

[1] एता: शून्याः–मु.

यदि वेतसोऽम्बुरहिते
देशे हस्तैस्त्रिभिस्ततः पश्चात् ।
[1] सार्धे पुरुषे तोयं
वहति सिरा पश्चिमा तत्र ॥ ८४ ॥

चिह्नमपि चार्धपुरुषे
मण्डूकः पाण्डुरोऽथ मृत्पीता ।
पुटभेदकश्च तस्मिन्
पाषाणो भवति तत्र बहुतोयम् ॥ ८५ ॥

जम्बूवृक्षस्य प्राक्
वल्मीको यदि भवेत्समीपस्थः ।
तस्माद्दक्षिणपार्श्वे
सलिलं पुरुषद्वये स्वादु ॥ ८६ ॥

अर्धपुरुषे च मत्स्यः
पारावतसन्निभोऽथ पाषाणः ।
मृद्भवति तत्र नीला
दीर्घं कालं च बहुतोयम् ॥ ८७ ॥

वल्मीकेन युतायां
त्रिगुण्ड्यां दक्षिणतः करत्रयोन्माने ।
पुरुषद्वये सपादे
भवति जलं स्वादु चाशोष्यम् ॥ ८८ ॥

रोहितमत्स्योऽर्धनरे
मृत्कपिला पाण्डुरा ततः परतः ।
[2] सिकताश्च शर्कराश्च
क्रमेण परतो भवत्यम्भः ॥ ८९ ॥

पूर्वेण यदि बदर्या
वल्मीको दृश्यते जलं पश्चात् ।
पुरुषैस्त्रिभिरादेश्यं
श्वेता गृहगोधिकार्धनरे ॥ ९० ॥

---

[1] अर्धे–क.     [2] सिकता सशर्कराथ.

सपलाशा बदरी चे-
दिश्यपरस्यां ततो जलं भवति ।
पुरुषत्रये सपादे
पुरुषेऽत्र च दुन्दुभश्चिह्नम् ॥ ९१ ॥

काकोदुम्बरिकायां
वल्मीको दृश्यते सिरा तस्मिन् ।
पुरुषत्रये सपादे
पश्चिमदिक्स्था च सा सिरा वहति ॥ ९२ ॥

आपाण्डुपीतमृत्का
गोनसवर्णश्च भवति पाषाणः ।
पुरुषार्धे कुमुदनिभो
दृष्टिपथं मूषको याति ॥ ९३ ॥

आसन्नो वल्मीको
दक्षिणपार्श्वे विभीतकस्य यदि ।
अध्यर्धे तत्र सिरा
पुरुषे ज्ञेया दिशि प्राच्याम् ॥ ९४ ॥

तस्यैव पश्चिमायां
वल्मीको भवेद्यदा हस्ते ।
तत्रोदग्भवति सिरा
चतुर्भिरर्धाधिकैः पुरुषैः ॥ ९५ ॥

श्वेतो विश्वम्भरकः
प्रथमे पुरुषे च कुङ्कुमाभोऽश्मा ।
अपरस्यां दिशि च सिरा
नश्यति वर्षत्रयेऽतीते ॥ ९६ ॥

सकुशः स्थित ऐशान्यां
वल्मीको यत्र कोविदारस्य ।
मध्ये तयोर्नरैर-
र्धपञ्चमैस्तोयमक्षोभ्यम् ॥ ९७ ॥

प्रथमे पुरुषे भुजङ्गः
कमलोदरसन्निभो मही रक्ता ।
[1] कुरुविन्दकपाषाणः
चिह्नान्येतानि [2] वाच्यानि ॥ ९८ ॥

सर्वेषां वृक्षाणां
अधःस्थितं दर्दुरं यदा पश्येत् ।
[3] तस्माद्धस्ते तोयं
चतुर्भिरर्धाधिकैः पुरुषैः ॥ ९९ ॥

उत्तरतश्च मधूकात्
अहिनिलयः [4] पश्चिमे तु मेकोऽयम् ।
परिहृत्य पञ्चहस्तात्
अर्धाष्टे पौरुषे वाच्यम् ॥ १०० ॥

अहिराजः पुरुषेऽस्मिन्
धूम्रा धात्री कपित्थ[5]वर्णोऽश्मा ।
माहेन्द्री वहति सिरा
भवति सफेनं सदा तोयम् ॥ १०१ ॥

सर्पावासः पश्चात्
यदा कदम्बस्य दक्षिणेन जलम् ।
पुरतो हस्तत्रितयात्
षड्भिः पुरुषैस्तुरीयोनैः ॥ १०२ ॥

वल्मीकसंवृतो यदि
तालो वा भवति नालिकेरो वा ।
पश्चात् षड्भिर्हस्तै-
र्नरैश्चतुर्भिः सिरा याम्या ॥ १०३ ॥

---

[1] कुरुविन्दः पाषाणः-द्ध्द्द. [2] चान्यानि-मु. [3] तस्याधस्तात्तोयं-मु.
[4] पश्चिमोत्तरे तोयम्-क. [5] वर्णश्च-मु.

अश्मातकस्य वामे
बदरी वा दृश्य[1]तेऽहिनिलयो वा ।
षड्भिरुदकचास्य करैः
सार्धैं पुरुषत्रये तोयम् ॥ १०४ ॥

कूर्मः प्रथमे पुरुषे
पाषाणो धूसरः ससिकता मृत् ।
आदौ सिरा च याम्या
पूर्वोत्तरतो द्वितीया च ॥ १०५ ॥

[2] जलरहिते यद्देशे
चिह्नान्येतानि दृश्यन्ते ।
वीरणदूर्वारहिते
यत्र हि तस्मिन् जलं पुरुषे ॥ १०६ ॥

तिलकाम्रातकवरुणा
भल्लातकबिल्वतिन्दुकाङ्कोलाः ।
पिण्डारशिरीषकाञ्जना
[3] परूषकारञ्जवञ्जुलानीपाः ॥ ॥ १०७ ॥

एते यदि सुस्निग्ध-
वल्मीकैः परिवृतास्ततस्तोयम् ।
हस्तैस्त्रिभिरुत्तरतः
चतुर्भिरर्धेन च [4] नरस्य ॥ १०८ ॥

अतृणे सतृणा यस्मिन्
सतृणे तृणवर्जिता मही यत्र ।
तस्मिन् सिरा प्रदिष्टा
वक्तव्यं वा धनं तत्र ॥ १०९ ॥

---

[1] तेऽथ वल्मीकः—मु.

[2] जलपरिहीने देशे दृश्यन्तेऽनूपजानि चेन्निमित्तानि ।
वीरणदूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे ॥ दका.

[3] परूषका वञ्जुलोऽतिबला—दका.   [4] नरस्याथ—मु.   नरेण—दका.

कण्टकयकण्टकानां
व्यत्यासेऽम्भस्त्रिभिः करैः पश्चात् ।
खात्वा पुरुषत्रितयं
[1] त्रिधा च युक्तं धनं [2] वा स्यात् ॥ ११० ॥

वृक्षस्यैका शाखा
यदि विनता भवति पाण्डुरा वा स्यात् ।
विज्ञातव्यं शाखा-
ग्रतले नीरं त्रिपुरुषादेव ॥ १११ ॥

यत्फलकुसुमविकारः
तस्य च पूर्वे सिरा त्रिभिर्हस्तैः ।
भवति पुरुषैश्चतुर्भिः
पाषाणोऽधः क्षितिः पीता ॥ ११२ ॥

[3] यदि कण्टकहीना स्यात्
निदिग्धिका शुभ्रपुष्पसंयुक्ता ।
तस्यास्तलेऽम्बु वाच्यं
त्रिभिर्नरैरर्धपुरुषे वा ॥ ११३ ॥

खर्जूरी द्विशिरस्का
यत्र भवेज्जलविवर्जिते देशे ।
तस्याः पश्चिमभागे
निर्देश्यं त्रिपूरुषे वारि ॥ ११४ ॥

यदि भवति कर्णिकारः
सितकुसुमः स्यात्पलाशवृक्षो वा ।
सव्येन तत्र हस्त-
द्वयेऽम्बु पुरुषत्रये भवति ॥ ११५ ॥

---

[1] त्रिभागयुक्तं–द्रक्का. [2] पश्चात्–मु. [3] यदि कण्टकारिका कण्टकैर्विना दृश्यते सितैः कुसुमैः । द्रक्का.

ऊष्मा यस्यां धात्र्यां
धूमो वा वारि तत्र नरयुगले ।
निर्देष्टव्या च सिरा
महता वारिप्रवाहेन ॥ ११६ ॥

यस्मिन् क्षेत्रोद्देशे
जातं सस्यं विनाशमुपयाति ।
स्निग्धमतिपाण्डुरं वा
महासिरा नरयुगे तत्र ॥ ११७ ॥

पूर्वोत्तरेण पीलोः
यदि वल्मीको जलं भवति पश्चात् ।
उत्तरगमना च [1] सिरा
विज्ञेया पञ्चभिः पुरुषैः ॥ ११८ ॥

चिह्नं दर्दुर आदौ
मृत्कपिला तत्परं भवेद्धरिता ।
भवति च पुरुषेऽधोऽश्मा
तस्य तले वारि निर्देश्यम् ॥ ११९ ॥

बदरीरोहितवृक्षौ
संपृक्तौ चेद्विनापि वल्मीकात् ।
हस्तत्रयेऽम्बु पश्चात्
षोडशभिर्मानवैर्भवति ॥ १२० ॥

[2] सुरसं जलमादौ द-
क्षिणा सिरा वहति चोत्तरेणान्या ।
पिष्टनिभः पाषाणो
मृच्छ्वेता वृश्चिकोऽर्धनरे ॥ १२१ ।

---

[1] शिला—क. [2] आदौ तोयं सुरसं दक्षिणगा वहति चोत्तरेण सिरा -मु.

सकरीरा चेद्बदरी
त्रिभिः करैः पश्चिमेन तत्राम्भः ।
अष्टादशभिः पुरुषै-
रैशानी बहुजला च सिरा ॥ १२२ ॥

[1] ककुभकरीरावेक-
त्र संयुतौ ककुभबिल्वौ वा ।
हस्तत्र (द्व) येऽम्बु पश्चात्
नरैर्भवत्येकविंशत्या ॥ १२३ ॥

ग्रन्थिप्रचुरा यस्मिन्
शमी भवेदुत्तरेण वल्मीकः ।
पश्चात्पञ्चकरान्ते
शतार्धसङ्ख्यैर्नरैः सलिलम् ॥ १२४ ॥

स्निग्धायताः पादपगुल्मवल्ल्यो
विच्छिन्नपत्राश्च ततः शिरास्ति ।
पद्मक्षुरोशीर [2] कुलास्तथेन्द्रे
काशः कुशो वा नलिनीसखो वा ॥ १२५ ॥

खर्जूरजम्ब्वर्जुन [3] केतकाः स्युः
क्षीरान्विता वा द्रुमगुल्मवल्ल्यः ।
छत्रेभनागाः शतपत्र [4] नीलाः
स्युर्नक्तमालाश्च सतिन्दुवाराः ॥ १२६ ॥

विभीतको वा मदयन्तिको वा
यत्रास्ति तस्मिन् पुरुषत्रयेऽम्भः ।
[5] (स्यात्पर्वतस्योपरि पर्वतोऽन्यः
तत्रापि मूले पुरुषत्रयेऽम्भः । )
[6] या मेदिनी काशकुशैश्च युक्ता
नीला च मृद्यत्र सशर्करा च ॥ १२७ ॥

---

[1] ककुभः कारीरो वा ककुभो बिल्वस्तथैकत्र–मु. [2] कुलाः सगुण्ड्राः काशाः कुशा वा नलिका नलो वा–दका. [3] वेतसाः–दका. [4] नीपाः–दका. [5] दकार्गल।।ठः. [6] या मौञ्जिकैः–दका.

तस्यां प्रभूतं सरसं च तोयं
कृष्णाऽथवा यत्र च रक्तमृद्वा ।
सशर्करा ताम्रमही कषायं
क्षारं धरित्री कपिला करोति ॥ १२८ ॥

आपाण्डुरायां लवणं प्रदिष्टं
मृष्टं पयो नीलवसुन्धरायाम् ।
शाकाश्वकर्णार्जुनबिल्वसर्जाः
श्रीपर्ण्यरिष्टाधवशिंशुपाश्च ॥ १२९ ॥

छिद्रैश्च पत्रैर्द्रुमगुल्मवल्ल्यो
रूक्षाश्च दूरेऽम्बु निवेदयन्ति ।
सूर्याग्निभस्मोष्ट्रखरानुवर्णा
या निर्जला सा वसुधा प्रदिष्टा ॥ १३० ॥

रक्ताङ्कुराः क्षीरयुताः करीरा
रक्ता धरा चेज्जलमश्मनोऽधः ।
वैडूर्यमुक्ताम्बुदमेचकाभा
पाकोन्मुखोदुम्बरसन्निभा वा ॥ १३१ ॥

भृङ्गाऽञ्जनाभा कपिलाथवा या
ज्ञेया शिला भूरिसमीपतोया ।
पारावतक्षौद्रसमा मही या
क्षौमस्य वस्त्रस्य च तुल्यवर्णा ॥ १३२ ॥

या सोमवल्ल्याश्च समानरूपा
सा भूरि तोयं कुरुतेऽक्षयं च ।
ताम्रैः समेता पृषतैश्च चित्रै-
रापाण्डुभस्मोष्ट्रखरानुवर्णा ॥ १३३ ॥

भृङ्गे तथाऽम्बष्ठकपुष्पकाभा
सूर्याग्निवर्णा च शिला वितोया ।
[1](ज्ञात्वा जलस्येत्थमधः प्रविष्टां
सिरां निखन्यादथ शुद्धलग्ने) ॥ १३४ ॥

---

[1] मुद्रितपुस्तकपाठः.

याश्चेन्द्रनीलमणिहिङ्गुलिकाञ्जनाभाः
सूर्योदयांशुहरितालनिभाश्च याः स्युः ।
ताः शोभना मुनिवचोऽत्र पुनः प्रमाणं
तद्भेदनक्रममथो प्रवदामि सर्वम् ॥ १३५ ॥

शिलाभेदनक्रमः

भेदं शिला नैति यदा तदानीं
पलाशकाष्ठैः सह तिन्दुकानाम् ।
प्रज्वालनानन्तरमग्निवर्णा
सुधाम्बुसिक्ता प्रविदारमेति ॥ १३६ ॥

सिताम्बुना मेचकभस्मना वा
यत्सप्तकृत्वः परिषेचनं तत् ।
कार्यं शरक्षारयुतं शिलायाः
प्रस्फोटने वह्न्युपतापितायाः ॥ १३७ ॥

[1] तप्तकाञ्जिकसुराः स कुलित्था
योजितानि बदराण्यपि तस्मिन् ।
सप्तरात्रमुषितान्यभितप्तां
दारयन्ति हि शिलां परिषेकैः ॥ १३८ ॥

कूपखननयोग्यनक्षत्राणि

हस्तो मघाऽनुराधा
पुष्यधनिष्ठोत्तराश्विरोहिण्यः ।
शतभिषगित्यारम्भे
कूपानां शस्यते भगणः ॥ १३९ ॥

आग्नेये यदि कोणे
ग्रामस्य पुरस्य वा भवेत्कूपः ।
नित्यं स करोति भयं
दाहं च स मानुषं प्रायः ॥ १४० ॥

---

[1] रक्तकाञ्जि, तक्रकाञ्जि–द्का.

नैर्ऋतकोणे बाल-
क्षयं च वनिताक्षयं तु वायव्ये ।
[1] दिश्यैशान्यां भीतिः
शेषास्तु शुभावहा कूपाः ॥ १४१ ॥

इति जलभूमिपरीक्षा
प्रोक्ता पोषाय रोपिततरूणाम् ।

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले उपवननिर्माणजलभूमि-
परीक्षावर्णनं नाम दशमस्तरङ्गः

---

## अथ एकादशस्तरङ्गः

पोषणविधिः—(उपवनविनोदः)

फलकुसुमसम्पदुचिता
रोपणतो भवति केवलान्न यतः ।
[2] पोषणविधिमथ सम्मत-
मनोकहानामतो वक्ष्ये ॥ १ ॥

फलवृक्षरोपणविधिः

खर्जूरबिल्वलिकुचाः सितसर्षपेण
पिण्याकतश्च तुषवारिवशेन चाम्राः ।
ऐरावता निचुलपत्रजलोक्षणेन
सव्रीहिमांससलिलेन च यान्ति वृद्धिम् ॥ २ ॥

प्राचीनामलकतरोः प्रिया हि माषाः
क्षीराम्भो हितमिह बालतिन्दुकानाम् ।
प्रीयन्ते यवरजसा च नालिकेराः
सर्वेषां भवति [3] रुचिर्निमग्नभूमौ ॥ ३ ॥

---

[1] दिक्त्रयमेतत्त्यक्त्वा—दका. [2] रोपण—ख. [3] रुचिर्हि निम्नभूमौ—उपवनविनोदः.

कुरङ्गकीटसारङ्गसृगालाश्वादिमेदसा ।
क्वथितेन सदुग्धेन पञ्चपल्लववारिणा ॥ ४ ॥

कृतसेको भवेदाशु सहकारोऽतिसौरभः ।

घृतकुणपवचावराहविष्ठा-
सलिलमतीव सुखाय दाडिमानाम् ।
क्वथितमथ कुलुत्थचूर्णकं वा
जलमपि वृद्धिकरं सदा शफर्याः ॥ ५ ॥

यस्त्रिफलाशफरीघृतालिप्तो
धूपित आ(ज्य)द्यफलत्रयधूपैः ।
आम्रफलैरपि दाडिमशाखी
तालफलानि विडम्बयतीव ॥ ६ ॥

दधिमुस्तकाञ्जिकसुराबदरी-
तिल[1]मोथिका कुणपशीधुपयः ।
फलिनीकदम्बकरिकेसरकान्
कुरुते सुगन्धिबहुपुष्पयुतान् ॥ ७ ॥

प्रियङ्गुगुञ्जाफलनिम्बपिप्पली-
वचाहरिद्रातिलसर्षपैः समैः ।
घृताश्वकर्णाम्बु विलोड्य पाययेत्
सचम्पके नागतरौ सुवृद्धिदम् ॥ ८ ॥

सिक्त्वाम्भोभिः पललतुषयोः कुक्कुटानां पुरीषं
मूले दत्वा सुकुसुमफला गोस्तनी वृद्धिमेति ।
स्कन्धन्यस्तैः पनस[2]तरवोऽप्याशु पालालभारैः
मूलादग्रं दधति च वचावारिसिक्ताः फलानि ॥ ९ ॥

सर्पिर्गुडक्षीरमधूपचारं
दत्वा निषिक्तौ च कपित्थबिल्वौ ।
पीयूषकल्पान्यतिमांसलानि
फलान्यनस्थीनि सदा दधाते ॥ १० ॥

---

[1] गोधिका-मु. [2] तरवो वाशु पालाल- मु.

कोशातकीफलशिफाक्वथितामिषाम्भः-
संसेचनाच्च सुकणारजसा च युक्तः ।
लब्धोपचारमथ धूपजलाभिषिक्तः
शोभां बिभर्ति कुसुमैर्नितरां मधूकः ॥ ११ ॥

तिलयष्टिमधुकमधुभिः
मिश्रितजलसेकतर्पिता बदरी ।
कुणपैरुपचितमूला
फलति फलं शर्करामधुरम् ॥ १२ ॥

अजैडकासूकरविड्विडङ्ग-
किण्वोपचारेण च बीजपूरः ।
भूयोऽश्वमूत्राविलवारिसिक्तः
फलानि धत्ते सुबहूनि शश्वत् ॥ १३ ॥

वृश्चिककण्टकविद्धाः
सुरभीघृतधूपिता हि निखिललताः ।
मूषककोलवसाभिः
संसिक्ताः स्युः फलैर्नम्राः ॥ १४ ॥

सुरभिजलनिषेकतो निदाघे
कुणपजलेन च केतकी निषिक्ता ।
जलधरसमये सुगन्धसूची-
चयनिचितानि बिभर्ति पल्लवानि ॥ १५ ॥

यस्य कस्यापि पुष्पस्य सौरभेणाधिवासितान् ।
मृत्तिकाशकलान्मूले वृक्षणां बहुलान् क्षिपेत् ॥ १६ ॥

कुष्ठपत्रमुरामुस्तातगरोशीरचूर्णकैः ।
मिश्रितेनाम्भसा सेकान्मासं सौरभसम्भवः ॥ १७ ॥

कुल्माषदन्तिदन्तानां चूर्णयुकपङ्कसम्भवा ।
प्रत्यहं पुष्पिताम्भोजमण्डिता पद्मिनी भवेत् ॥ १८ ॥

सिद्धार्थः कदलीदलानि शफरी विट् कोलमार्जारयोः
एतेषां समभागमाज्यसहितं चूर्णं तरुभ्यो हितम् ।
दत्तं धूपविलेपनोपचरणैराप्यायनं रोगहृ-
च्छाखाः पल्लवयत्यलं मधुकरव्यालोलपुष्पच्छदाः ॥ १९ ॥

धूपो घृतस्य समृदो यववारिसेको
नित्यं च दुग्धसलिलैः कुणपाम्बुभिर्वा ।
लेपो विडङ्गतिलकल्ककृतः शिशूनां
वृद्धिं करोति परमां खलु भूरुहाणाम् ॥ २० ॥

अङ्कोलक्काथतोयेन मिश्रितं घृतमाक्षिकम् ।
वसा किटिकुरङ्गाणामेतैः सिक्ता महीरुहाः ॥ २१ ॥

सिद्धार्थकफलोपेताः सर्वदा फलशोभिताः ।
जायन्ते पत्रपुष्पाढ्याः सच्छाया रोगवर्जिताः ॥ २२ ॥

यष्टीमधूकपुष्पाणि सिता कुष्ठं समाक्षिकम् ।
निष्पिष्य घुटिकाः कृत्वा मूले सर्वत्र निक्षिपेत् ॥ २३ ॥

दुग्धसेकं च वृक्षस्य यस्य कुर्याद्विचक्षणः ।
फलं सुनिश्चितं तस्य मधुरं जायते भृशम् ॥ २४ ॥

इत्येवं पोषणविधिस्तरूणामुपवर्णितः ।

कुणपजलम्

कुरङ्गकिटिमत्स्यानां मेषच्छागलखड्गिनाम् ॥ २५ ॥

मांसं ग्राह्यं यथालाभं मेदोमज्जावसास्तथा ।
तान्सर्वानेकतः कृत्वा वह्नौ नीरेण पाचयेत् ॥ २६ ॥

सम्यक्पक्वं क्षिपेत् भाण्डे तत्र दुग्धं च निक्षिपेत् ।
चूर्णीकृत्य खलिर्देया तिलानां माक्षिकं तथा ॥ २७ ॥

स्विन्नांश्च सरसान्माषान् तत्र दद्याद्घृतं तथा ।
उष्णं जलं क्षिपेत्तत्र मात्रा नास्तीह कस्यचित् ॥ २८ ॥

[1](पक्षैकं स्थापिते भाण्डे कोष्णस्थाने मनीषिणा)।
कुणपस्तु भवेदेव तरूणां पुष्टिकारकः।

तरुचिकित्सा

नराणामिव वृक्षाणां वातपित्तकफाद्रुदाः ॥ २९ ॥

सम्भवन्ति यतस्तस्मात्कुर्यात्तद्दोषनाशनम्।
कीटजग्धेऽग्निसम्प्लुष्टे वातभग्नेऽशनिक्षते ॥ ३० ॥

वृक्षे च्छेदापचारादिपीडिते च पृथक्क्रिया।
कृशो दीर्घो लघू रूक्षो निद्राहीनोऽल्पचेतनः ॥ ३१ ॥

न धत्ते फलपुष्पाणि वातप्रकृतिकस्तरुः।
आतपासहनः पाण्डुः शाखाहीनो मुहुर्यदि ॥ ३२ ॥

अकालफलपाकी स्याच्छाखी पित्तात्मकः [2]कृशः।
स्निग्धशाखादलः शाखी सम्यक्पुष्पफलोज्ज्वलः ॥ ३३ ॥

लतापरीतगात्रस्तु कफवान् परिमण्डलः।

कटुतिक्तकषायरसैः
पवनः पित्तं कदूष्णलवणाम्लैः।
स्निग्धमधुराम्ललवणैः
श्लेष्मा कोपं प्रयाति तरोः ॥ ३४ ॥

सुस्निग्धैः पिशितरसैः प्रयाति वातः
सुस्निग्धैर्मधुर[3]हितैर्जलैश्च पित्तम्।
कट्वम्लैरहिमजलैः कषायरूक्षैः
श्लेष्मापि क्रमविहितैः प्रयाति नाशम् ॥ ३५ ॥

रौक्ष्यं ग्रन्थिः कुटिलता
वाताद्वृक्षस्य जायते नितराम्।
गोविड्विलोडितवसा-
कुणपजलैस्तज्जयोऽपि भवेत् ॥ ३६ ॥

---

[1] उपवनविनोदे. [2] स्मृतः—उ. वि. [3] हिमैः—उ. वि.

दोषैर्यस्य विना प्रवालकुसुमम्लानि[1] विरूढं वपुः
मूले तस्य तरोर्भवन्ति कृमयो यत्नाच्च तानुद्धरेत् ।
गोमूत्राज्यविडङ्ग[2]सर्षपजलैर्लिम्प्रेत्प्रणष्टै[3]स्ततः
सिक्तः क्षीरजलैरुदेति सहसा धूपैश्च धूपायितः ॥ ३७ ॥

करञ्जारग्वधारिष्टसप्तपर्णत्वचा कृतः ।
उपचारः कृमिहरो मूत्रमुस्ताविडङ्गवान् ॥ ३८ ॥

कुणपजलपयोनिषिक्तमूलः
सरसिजकन्दविलिप्तसर्वगात्रः ।
तरुरनलहतो बिभर्ति भूयो
[4] मरकतरागहराणि पल्लवानि ॥ ३९ ॥

प्लक्षार्कोदुम्बरत्वक्घृतमधुमधुरोच्छिष्टदुग्धैर्विलिप्तः
स्तम्भैरुत्तम्भ्य रज्ज्वा परिकलितवपुः पूरितः प्लक्षमृद्भिः ।
सिक्तः क्षीरेण भूयो जलभरिततलश्चण्डवातादिभग्नः
[5] स्वस्थोभूत्वाङ्घ्रिपायी कुसुमफलभरानातनोति प्रकामम् ॥

अशनिदग्धवृक्षस्य पुनरुज्जीवनम्

वृक्षस्याशनिदग्धस्य जीवनं शृणु भेषजम् ।
[6] घृतोशीरमधूकैश्च मुद्गान् माषान् यवांस्तिलान् ॥ ४१ ॥

पिष्ट्वा क्षीराम्बुसंयुक्तैः सेचयेत्तमभीक्ष्णशः ।
स सेकाप्यायितः शीघ्रं प्रकृतिस्थो भविष्यति ॥ ४२ ॥

जनयित्वा फलकुसुमे यः पुनरुपयाति वन्ध्यतां शाखी ।
सक्षीरैः कुणपजलैः भूयः सिक्तः फलत्येव ॥ ४३ ॥

असेकतोऽत्यन्तनिषेकतश्च शाखाः सशोषाः फलिता निरीक्ष्य ।
सप्ताहमात्रं [7]श्रितमत्र सर्पिर्विडङ्गयुक्ताम्बु निषेचनीयम् ॥४४॥

---

[1] विरूढं–मु. [2] सर्षपतिलै–उ. वि. [3] तथा–मु. [4] मरकतकान्तिनिभानि, मदकतरङ्गहरिन्ति–उ. वि. [5] स्वस्थोभूत्वा प्रियायाः–ख. [6] घृतक्षीर–मु. घनोशीर–उ. वि. [7] सृतमेव सर्पि–उ. वि.

उन्निद्रता मत्स्यसगन्धता च
प्रवालहानिः सपिपीलिकत्वम् ।
[1]एवं प्रवाताद्विकृतादजीर्णा-
त्तरोर्भवेत्तत्र चिकित्सनीयम् ॥ ४५ ॥

तन्मूलशूलं परशुप्रहारै-
र्विस्रावितं दोषरसं निहत्य ।
क्षौद्राज्यजन्तुघ्नतिलैः प्रलिप्तं
मृत्पूरितं दुग्धजलैर्निषिञ्चेत् ॥ ४६ ॥

शर्करातिलगोक्षीरवारिसेकात्तथा तरोः ।
शोषः शाम्यति वृक्षस्य लेपधूपोपचारतः ॥ ४७ ॥

प्रियङ्गु[2]वटतर्कारिवेतसार्जुनवल्कलैः ।
[3]क्षीरदुग्धैर्विलिप्तानां स्रावः शाम्यति शाखिनाम् ॥ ४८ ॥

फलकुसुमद्रुमाणां चित्रीकरणम्

वृक्षायुर्वेदफलं मनोहरं शास्त्रतः सिद्धम् ।
नानाविधानचित्रं चित्रीकरणं प्रवक्ष्यामि ॥ ४९ ॥

सुरभिसुमनोलब्धामोदां निधाय च मृत्तिकां
धवखदिरयोः क्वाथाम्भोभिः सुगन्धिभिरुक्षणात् ।
मलयजरजोलेपाद्धूपाद्धृतस्य च भूरुहां
व्रजति कुसुमं निर्गन्धानामतीव सुगन्धिताम् ॥ ५० ॥

यवतिलनिशापलाशैरुपचितमूला तदम्बुसिक्ता च ।
ज्वलदनलोपममसकृत्कार्पासी तूलकं सूते ॥ ५१ ॥

शाल्मलीत्वङ्निशानीलीत्रिफला[4]कृष्णशीधुभिः ।
सकृल्लेपोपचारेण शुकपक्षनिभं भवेत् ॥ ५२ ॥

---

[1] त्वग्भ्रंशनाशादि–उ. वि. [2] वटतत्कारि–मु, वनकर्कारी. [3] नीरदुग्धैः–मु, क्षीरसिक्तैः–उ. वि. [4] कुष्ठशीधुभिः–मु.

मञ्जिष्ठातिलयवपीतसारसारैः
जीवन्तीदलसहितैर्मनःशिला(जैः)क्तैः ।
गोजाविप्रचुरपयःश्रितैर्विलिप्ता-
त्कार्पासात्प्रभवति तूलकं खनीलम् ॥ ५३ ॥

सम्पक्वेक्षुरसविदारिकन्दपरिलिप्तमूलभागस्य ।
सिक्तस्येक्षुरसेन च तरोरकाले भवेत्कुसुमम् ॥ ५४ ॥

तिल[1]खलिविडङ्गगोमय-
विलोडितेक्षुरससेचितस्य तरोः ।
फलकुसुममकालभवं
मनोहरं फलति लोकस्य ॥ ५५ ॥

मधुयष्टिसिताकुष्ठमधुपुष्पविनिर्मितैः ।
मोदकैश्छादिते मूले निरस्थि स्यात्फलं तरोः ॥ ५६ ॥

मधुककुसुमगुञ्जाशर्करोदुम्बराज्यं
समधु निहितमन्तःकाण्डमुत्कीर्य बद्धा ।
उपरि च परिलिप्तं वत्सविड्भिस्तरूणां
जनयति फलमेतत्स्वादु सेकादनस्थि ॥ ५७ ॥

तत्काल[2]निहतस्योच्चै[3]श्छागस्यार्द्रेण चर्मणा ।
बद्धायां वृक्षशाखयां [4]फलपाको न जायते ॥ ५८ ॥

[5]करिमदमृदितवलीमुख-
नलकैर्मूलेषु कीलितस्य तरोः ।
[6]संवत्सरं न यावत्
फलितानि फलानि नैव पच्यन्ते ॥ ५९ ॥

---

[1] खनि–मु. [2] निहितस्य–उ. वि. [3] श्छागस्य स्कन्धचर्मणा–उ. वि.
[4] फलपातो–ख. मु. [5] करिवर–उ. वि. [6] संवत्सरं च यावत्फलितस्य फलानि जायन्ते–उ. वि.

बद्ध्वा चर्मतृणाभ्यां
विडङ्गमधुदुग्ध[1]लेपतो लिप्ता।
शाखा पयोऽम्बुसेकात्
चिरमपि पक्वं फलं धत्ते ॥ ६० ॥

मीनकोलवसामांसकुष्ठसेकेन धूपनात्।
सर्वबीजानि साश्चर्यमुत्तिष्ठन्ति फलन्ति च ॥ ६१ ॥

अङ्कोलतैल(सूकर) सुरिका-
शिशुमारवसासु भावितं बीजम्।
सद्यो रोहति निहितं
भूमौ करकाम्भसा सिक्तम् ॥ ६२ ॥

बीजमाम्रादिवृक्षाणां पक्वं मीनफलाम्बुनि।
अङ्कोलीतैलदुग्धाज्ये निहितं [2]बृहतीभवेत् ॥ ६३ ॥

भस्मन्यामेलितं [3]शुष्कं सप्त षट् सह भिद्यते।
[4]फलं चाशेषलोकस्य कृतकौतुकमञ्जसा ॥ ६४ ॥

एकविंशतिवारेण कुक्कुटस्यासृजोक्षितम्।
तत्क्षणाद्दाडिमीबीजं वर्धते फलति ध्रुवम् ॥ ६५ ॥

मत्स्यकोलवसामांसचणक्षारभावितम्।
यस्य कस्यापि वा बीजं [5]द्रुतं पुष्पफले दिशेत् ॥ ६६ ॥

स्कन्धतः समन्ततश्च सूकरास्थितो दृढम्।
कीलितो न संशयं विनाशमेत्यनोकहः ॥ ६७ ॥

कुलित्थक्वाथतोयेन तरुः पुष्पफले त्यजेत्।
किंशुकार्जुनतत्कारीलवणाम्बूक्षणेन वा ॥ ६८ ॥

---

[1] लेपितोल्लिख्य–उ. वि. [2] सुबृहत्–मु. [3] सक्षमं–मु, शुष्कसुप्तसुद्भिद्य सह–उ. वि. [4] फलेनाशेष–उ. वि. [5] द्रुतपुष्पफलं भवेत्–ख.

नानावर्णैर्घटितं
कन्दं कुमुदस्य सूत्रसङ्घटितम् ।
घृतमधुविलिप्तमुप्तं
सूते कुसुमं तथा वर्णम् ॥ ६९ ॥

माहिषकरीषमूत्रैः मृदितविशुष्कं दिनानि यत्सप्त ।
कुमुदफलबीजमुप्तं जनयति करवीरविटपं तत् ॥ ७० ॥

कूष्माण्डवार्ताकपटोलिकादि-
बीजं वसाभावितसिक्तमुप्तम् ।
विशोधितायां भुवि सर्वकालं
फलान्यनस्थीनि महान्ति धत्ते ॥ ७१ ॥

या मन्दारद्रुमरन्ध्रे कौष्मण्डी निर्गता लता ।
मृद्गोमयभृते तस्मिन् सिक्के फलति सा सदा ॥ ७२ ॥

सूकरासृग्वसासिक्तमङ्कोलीतैलभावितम् ।
एरण्डजं कारवल्लीफलं सूतेऽतिकौतुकम् ॥ ७३ ॥

वार्ताकबीजं घृतमाक्षिकाक्तं
विशोषितं गोमयलिप्तरन्ध्रे ।
बालस्य कूष्माण्डफलस्य [1] तस्मिन्
पक्वं गृहीतं फलितं महत्स्यात् ॥ ७४ ॥

खरतुरगविषाणित्रेशितततापितयाऽयश्शलाकया मूले ।
तिर्यग्विद्धा कदली फलति फलं करिकराकारम् ॥ ७५ ॥

कोलशोणितमेदोभ्यामङ्कोलक्वथितेन च ।
सेविता कदली सूते दाडिमीफलमुत्तमम् ॥ ७६ ॥

नरमांसवसारक्तदन्तिदन्तविचूर्णितैः ।
[2] मिश्रितेनाम्बुना सिक्ता रम्भा चूतफला भवेत् ॥ ७७ ॥

[3] अङ्कोलक्वथितं खिन्नं नृमांसं छागदुग्धयुक् ।
पिण्याकसहितं मूले सहकारस्य निक्षिपेत् ॥ ७८ ॥

---

[1] तप्तं पक्वाद्गृहीतं—ड. वि. [2] मिश्रितैरुदकैः. [3] अङ्कोलक्वथिते त्वस्मिन्—मु.

द्राक्षावल्लीसमाकारः सहकारः सदाफलः ।
जायते निश्चितं धत्ते सर्वेषामद्भुतं महत् ॥ ७९ ॥

शशकूर्मासृङ्मध्ये बहुभावितमाम्रजं बीजम् ।
रूढं सिक्तं दुग्धैः फलति फलं सर्वकालेषु ॥ ८० ॥

कृमिरिपुयवयष्टिमधुगुडदुग्धविलेपनेन निम्बतरुः ।
भवति जलदुग्धसिक्तः स्वभावतिक्तोऽपि मधुरफलः ॥ ८१ ॥

बीजं नरपलाङ्कोलतैलस्विन्नं शुभं सदा ।
उद्गच्छति मृदा पूर्णमम्भस्सिक्तं करे क्षणात् ॥ ८२ ॥

अङ्कोलतैलभावितमुषितं [1] सद्यस्तु कुमुदकन्दमलम् ।
[2] करकाण्डरक्तमिश्रं कलशे कुसुमं समुद्वहते ॥ ८३ ॥

गोकोलास्थिकरीषैस्तु दिग्धे गर्ते विशोधिते ।
उप्तं च वालुकापूर्णे मूलकं गर्तवद्भवेत् ॥ ८४ ॥

इष्टकचिते समन्तात्पुरुषनिखातेऽवटे तरुर्जातः ।
वामन एव हि धत्ते फलकुसुमं सर्वकालमपि ॥ ८५ ॥

अन्नादिनिष्पत्तिज्ञानम्

[3] फलकुसुमपत्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् ।
सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् ॥ ८६ ॥

---

[1] गोशकृति–उ. वि. [2] करकाम्बुकर्दमभृते कलशे–उ. वि. [3] फलकुसुमसम्प्रवृत्तिं–बृ. सं.

शालेन कलमशाली रक्ताशोकेन रक्तशालिश्च ।
पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः ॥

अतिमुक्तककुन्दाभ्यां कार्पासं सर्षपान् वदेदशनैः ।
बदरीभिश्च कुलुत्थान् चिरबिल्वेनादिशेन्मुद्गान् ॥

अतसीवेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः ।
तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणाः ॥

चम्पककुसुमैः कनकं विद्रुमसंपच्च बन्धुजीवेन ।
कुरवकवृद्ध्या वज्रं वैदूर्यं नन्दिकावर्तैः ॥

न्यग्रोधेन तु यवकास्तिन्दुकवृद्धया च षष्टिको भवति।
अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् ॥ ८७ ॥

जम्बूभिः स्थ (स्ति) लमाषाः शिरीषवृध्या [1] च कङ्गुनिष्पत्तिः।
[2] (गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन ॥ ८८ ॥

करिणश्च हस्तिकर्णैर्निर्दिश्या वाजिनोऽश्वकर्णेन।
गावश्च पाटलाभिः कदलीभिरजाविकं भवति) ॥ ८९ ॥

आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम्।
खदिरशमीभ्यां दुर्भिक्षमर्जुने शोभना वृष्टिः ॥ ९० ॥

पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन।
निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥ ९१ ॥

पुष्पोद्गमनिमित्तदोहदविशेषाः

पुष्पोद्गमेऽनोकहानां दोहदान्तरमुच्यते।
अशोकश्चरणाहत्या वकुलो मुखशीधुना ॥ ९२ ॥

आलिङ्गनात्कुरवकस्तिलको वीक्षणेन तु।
करस्पर्शेन माकन्दो मदरागेण चम्पकः ॥ ९३ ॥

---

विन्धाच्च सिन्धुवारेण मौक्तिकं कारुकाः कुसुम्भेन।
रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥
श्रेष्ठी सुवर्णपुष्पात् पद्मैर्विप्राः पुरोहिताः कुमुदैः।
सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृत्तिः ॥
दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण।
श्यामा लताभिवृद्धया बन्धक्यो वृद्धिमायान्ति ॥
यस्मिन् काले स्निग्धनिश्छिद्रपत्राः
संदृश्यन्ते वृक्षगुल्मा लताश्च।
तस्मिन् वृष्टिः शोभना सम्प्रदिष्टा
रूक्षैश्छिद्रैरल्पमम्भः प्रदिष्टम् ॥
इति बृहत्संहितायामधिकांशा वर्तन्ते, ते चावश्यापेक्षिता इत्यत्र संगृहीताः।

[1] दुग्धनिष्पत्तिः—मु. उ. वि. [2] बृ. सं., उ. वि.

संछायापात्कर्णिकारश्च सिन्धुवारो मुखानिलात् ।
गीत्या प्रियालुर्नितरां नमेरुर्हसनेन च ॥ ९४ ॥

स्त्रीभिर्व्रजन्ति विकृतिं दशदोहदभूरुहाः ।
एवमुद्यानमध्ये तु लतागुल्मद्रुमान्विते ॥ ९५ ॥

हंससारससन्नादिवापीवरविराजिते ।
प्रेक्षणादिविलासैर्या वशयन्ति तरूनपि ॥ ९६ ॥

ताभिर्विलोलनेत्राभिः सार्धमाबद्धखेलनः ।
श्रीवेङ्कटमहीपालः सुखमन्वभवच्चिरम् ॥ ९७ ॥

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले तरुचिकित्सापोषणविचित्रीकरण-
दोहदवर्णनं नामैकादशस्तरङ्गः

---

## द्वादशस्तरङ्गः

स्वामिन्! याभिः सहारामे सुखं भूयन्वभूदिति ।
उदीरितं मृगाक्ष्यस्ता गुरो! ब्रूहि कियद्विधाः ॥ १ ॥

कीदृग्विलासशालिन्यः कीदृग्गुणपरिष्कृताः ।
कीदृशाकृतयः सर्वमेतद्ब्रूहि कलानिधे! ॥ २ ॥

शृणु नन्दन! तत्सर्वं वर्णयामि यथाक्रमम् ।

स्त्रिया निर्दुष्टत्वम्

सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम् ॥ ३ ॥

अग्निः सर्वाङ्गकान्तिं च कस्मान्नेष्टतमाः स्त्रियः ।
स्त्रियः पवित्रममलं नैता दुष्यन्ति कर्हिचित् ॥ ४ ॥

मध्ये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः ।
तत्रापि शय्या शयने वरस्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः ॥ ५ ॥

न हयैर्न च मातङ्गैर्न रथैर्न च पत्तिभिः ।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ६ ॥

स्त्रीणामुत्तमा गुणाः

अचापल्यं भयं लज्जा दाक्षिण्यमनुकूलता ।
मधुरस्वरता दाक्ष्यं पटुत्वं प्रियवादिता ॥ ७ ॥

मनःशुचित्वं लावण्यं गुरुशुश्रूषणे रतिः ।
धर्मज्ञतार्जवं सत्यं कौशलं सर्वकर्मसु ॥ ८ ॥

हृष्टता स्मितभाषित्वं पतिदोषनिगूहनम् ।
[1]व्यवायनाख्यमित्येते योषितां प्रवरा गुणाः ॥ ९ ॥

स्त्रीषु श्रैष्ठ्यपरंपरा

स्त्रीणां रूपवती श्रेष्ठा सुरूपासु सयौवना ।
[2]रतिकौशलसारज्ञा संगीतज्ञा च नर्तकी ॥ १० ॥

उत्तरोत्तरमेतासु श्रैष्ठ्यं पूर्वगुणैः सह ।
एतैः सर्वगुणैर्युक्ता दुर्लभा रमणी भुवि ॥ ११ ॥

जातिस्वभावगुणदेशजधर्मचेष्टा-
भावेङ्गितेषु विकलो रतितन्त्रमूढः ।
लब्ध्वापि हि स्खलति यौवनमङ्गनानां
किं नालिकेरफलमाप्य कपिः करोति ॥ १२ ॥

पद्मिनी चित्रिणी चाथ शङ्खिनी हस्तिनी ततः ।
पूर्वपूर्वा वरास्तासु श्रेष्ठास्तल्लक्ष्म लक्ष्महे ॥ १३ ॥

पद्मिनीलक्षणम्

कमलमुकुलमृद्वी फुल्लराजीवगन्धः
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे ।
चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे
स्तनयुगल[3]मनल्पश्रीफलश्रीविडम्बि ॥ १४ ॥

---

[1] व्ययवैमुख्य–मानसोल्लासे. [2] सयौवनासु गीतज्ञा गीतज्ञास्वपि नर्तकी–मानसोल्लासे. [3] मनर्घ्यं श्रीफल–र. र.

तिलकुसुमसमानां बिभ्रती नासिकां च
द्विजगुरुसुरपूजाश्रद्दधाना सदैव।
कुवलयदलकान्तिः कापि चाम्पेयगौरी
स्फुटसरसिजकोशाकारकामातपत्रा ॥ १५ ॥

व्रजति मृदु सलीलं राजहंसीव तन्वी
त्रिवलिललितमध्या हंसवाणी सुवेषा।
मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा
धवलकुसुमवासोवल्लभा पद्मिनी स्यात् ॥ १६ ॥

चित्रिणीलक्षणम्

सुगतिरनतिदीर्घा नातिखर्वा कृशाङ्गी
स्तनजघनविशाला काकजङ्घोन्नतोष्ठी।
मधुसुरभिरताम्बुः कम्बुकण्ठी चकोर-
स्वरवचनविभागा नृत्तगीताद्यभिज्ञा ॥ १७ ॥

मदनसदनमस्या वर्तुलोच्छूनमन्त-
र्मृदु मदनजलाढ्यं लोमभिर्नातिसान्द्रम्।
प्रकृतिचपलदृष्टिर्बाह्यसंभोगरक्ता
रसयति मधुराल्पं चित्रिणी चित्ररक्ता ॥ १८ ॥

शङ्खिनीलक्षणम्

[1] तनुरतनुरपि स्याद्दीर्घदेहाङ्घ्रिमध्या
ह्यरुणकुसुमवासःकाङ्क्षिणी कोपशीला।
अनिभृतशिरमङ्गं दीर्घनिम्नं वहन्ती
स्मरगृहमतिलोम क्षारगन्धि स्मराम्बु ॥ १९ ॥

सृजति बहुनखाङ्कं संप्रयोगे लघीयः
स्मरसलिलपृषत्का किञ्चिदुत्तप्तगात्री।
न बहु न लघु चात्ति प्रायशः पित्तला स्यात्
पिशुनमलिनचित्ता शङ्खिनी रासभोक्तिः ॥ २० ॥

---

[1] तनुरतनुवपुः—र. ए.

हस्तिनीलक्षणम्

अललितगतिरुच्चैः स्थूलवक्राङ्गुलीकं
वहति चरणयुग्मं कन्धरां ह्रस्वपीनाम् ।
कपिलकचकलापा क्रूरचेष्टातिपीना
द्विरदमदसगन्धिः स्वाङ्गकेऽनङ्गके च ॥ २१ ॥

द्विगुणकटुकषायप्रायभुग्वीतलज्जा
चलदतिविपुलोष्ठी दुःखसाध्या प्रयोगे ।
बहिरपि तनुलोमाऽत्यन्तमन्तर्विशालं
वहति जघनरन्ध्रं हस्तिनी गद्गदोक्तिः ॥ २२ ॥

चित्रिण्यादीनां प्रीतिकरास्तिथयः

नयनयुगशरर्तुब्रह्मदिङ्नागसङ्ख्या-
स्तिथय इह रते स्युः प्रीतये चित्रिणीनाम् ।
ग्रहतिथिभुवनाख्यद्वीपयुक्ताः करिण्या-
स्तदितरतिथयः स्युः शङ्खिनीनां चतस्रः ॥ २३ ॥

पङ्कजासनपदेन पद्मिनीं
नागरेण रमयन्ति चित्रिणीम् ।
वेणुदारितपदेन शङ्खिनीं
स्कन्धपादयुगलेन हस्तिनीम् ॥ २४ ॥

तासामुपभोगयोग्ययामाः

व्रजति रतिसुखार्थं चित्रिणीमग्रयामे
भजति दिनरजन्योर्हस्तिनीं च द्वितीये ।
रमयति च तृतीये शङ्खिनीमार्द्रभावां
गमयति रमणीयां पद्मिनीं तुर्ययामे ॥ २५ ॥

तदुपभोक्तृपुरुषविशेषः

चित्रिणीगुणसंयुक्तः पुमान् भद्रो नवाङ्गुलः ।
हस्तिनीगुणसम्पन्नो हयः स्याद्द्वादशाङ्गुलः ॥ २६ ॥

शङ्खिन्याः कुचुमाराख्यः पुरुषः स्याद्दशाङ्गुलः ।
पद्मिन्याः स तु पाञ्चालो नायकः स्यात् षडङ्गुलः ॥ २७ ॥

तिथिक्रमेण स्त्रीणां मदनावासस्थानानि

अङ्गुष्ठे पदगुल्फजानुजघने नाभौ च वक्षःस्तने
कक्षाकण्ठकपोलदन्तवसने नेत्रेऽलके मूर्धनि ।
शुक्लाशुक्लविभागतो मृगदृशामङ्गेष्वनङ्गस्थिति-
श्चोर्ध्वाधोगमनेन वामपदगाः पक्षद्वये लक्षयेत् ॥ २८ ॥

कामरञ्जनम्

के गृह्णन्ति कचान् ललाट[1]नयने चुम्बन्ति दन्तच्छदं
दन्तोष्ठेन निपीडयन्ति बहुशश्चुम्बन्ति गण्डस्थलीम् ।
कक्षाकण्ठतले लिखन्ति नखरैः गृह्णन्ति गाढं स्तनौ
मुष्ट्या वक्षसि ताडयन्ति दधते नाभौ [2] चपेटाहतिम् ॥ २९ ॥

कुर्वन्ति स्मरमन्दिरे करिकरक्रीडां स्त्रियो जानुनी
गुल्फाङ्गुष्ठपदानि च प्रतिमुहुर्लिम्पन्ति तैरात्मनः [3]।
पादे जङ्घोरुदेशे च गले कक्षे स्तने श्रुतौ ।
नखमात्रं प्रदातव्यं भगे नाभौ च मर्दनम् ॥ ३० ॥

गण्डे नेत्रे ललाटे च चुम्बनं कामुकैरिह ।
इति कामुकसङ्घातैः कर्तव्यं कामरञ्जनम् ॥ ३१ ॥

द्रवत्यनेन कामो हि घृतभाण्डमिवाग्निना ।

समोच्चनीचरतानि नव

आरोहपरिणाहाभ्यां षण्णवद्वादशाङ्गुलैः ॥ ३२ ॥

गुह्यैः शशो वृषोऽश्वो ना, हरिण्यश्वेभिकाः स्त्रियः ।
हरिणीशशयोर्योगे बडबावृषयोस्तथा ॥ ३३ ॥

---

[1] वदने–मु. [2] चपेटां शनैः–मु. [3] अस्योत्तरार्धं—इत्येवं कथयन्ति ये 'शशिकलामालिङ्ग्य मज्जन्ति ते शीताम्बूपलपुत्रिकां शशिकरस्पृष्टामिव प्रेयसीम् ॥

हस्तिनीहययोश्चैव मतं समरतं त्रयम् ।
मृगीवृषं च बडवाहयमुच्चरतं द्वयम् ॥ ३४ ॥

नीचद्वयं ज बडवाशशकं हस्तिनीवृषम् ।
अत्युच्चमतिनीचं च मृग्यश्वं हस्तिनीशशम् ॥ ३५ ॥

इति प्रमाणभेदेन नवधा रतमुच्यते ।
उत्तमानि समान्याहुर्मध्यमुच्चरतद्वयम् ॥ ३६ ॥

नीचद्वयं तथाऽत्युच्चमतिनीचं विगर्हितम् ।
कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात् ॥ ३७ ॥

न द्रवन्ति न तृप्यन्ति योषितो नीचमेहने ।
उच्चेऽपि मृदुगुह्यान्तः सपीडा सव्यथा हृदि ॥ ३८ ॥

न द्रवन्ति न रज्यन्ते मनस्तन्त्रो हि मन्मथः ।
रक्तजाः कृमयः सूक्ष्मा मृदुमध्योग्रशक्तयः ॥ ३९ ॥

सन्ति कामालये कण्डूं जनयन्ति यथाबलम् ।
चण्डध्वजाभिघातेन कण्डूत्यपनयादनु ॥ ४० ॥

क्षरणाच्च सुखं तासां विसृष्टेः स्यन्दनात्मनः ।
*निस्संज्ञत्वं ततो याति मुकुलीकृतलोचना ॥ ४१ ॥

रतभेदाः

स्त्रीपुंसयोर्विसृष्टिश्च लघुमध्यचिरोदया ।
नवधा रतमेवं स्यात्कालतोऽपि प्रमाणवत् ॥ ४२ ॥

मन्दमध्यमचण्डाः स्युर्वेगतोऽप्युभये तथा ।
वेगः कामुकभावेन तेनापि नवधा रतम् ॥ ४३ ॥

---

* प्रारम्भात्प्रभृति स्यन्दः क्लेदात्मा सुखलेशदः ।
अन्ते तु नरवत्तासां विसृष्टेर्मूर्च्छनासुखम् ॥
क्षणं रटन्ती नृत्यन्ती मदती चातिविह्वला ।
निस्संज्ञत्वं ........................ ॥ इति रतिरहस्ये ।

वीर्यं बहुक्षताघातसहत्वं रतिलोलता ।
चण्डवेगस्य चिह्नानि मन्दवेगे विपर्ययः ॥ ४४ ॥

एतेषां मध्यमत्वे तु मध्यमत्वं समुन्नयेत् ।
कालप्रमाणभावैः स्युरित्येवं सप्तविंशतिः ॥ ४५ ॥

उत्तमरतम्

रतानि, तत्र साम्ये स्यात्त्रिभिः सुरतमुत्तमम् ।
सर्ववैषम्यतस्तु स्यादधमं पशुचेष्टितम् ॥ ४६ ॥

शेषे तु मध्यमत्वं स्यादेकत्रापि जुगुप्सितम् ।
अत्युच्चमातिनीचं च संक्षेपादिति भाषितम् ॥ ४७ ॥

मृग्यादिस्त्रीचिह्नानि

उक्तमृग्यादिभेदानामिदानीं चिह्नमुच्यते ।

समसूर्धा कुञ्चितघन-
केशी [1] तुच्छोदरी नितम्बाढ्या ।
अल्पविवरनासापुट-
[2] घटितरदनपक्ष्मलक्ष्मी च ॥ ४८ ॥

अरुणाधरकरचरणा
कोमलतरसरलसान्द्रभुजलतिका ।
आयतकर्णकपोल-
ग्रीवाऽनतिमांसलोरुजघना च ॥ ४९ ॥

समगुल्फा वरगज-
गतिरीर्ष्यावलितोन्नतस्तनी तन्वी ।
तरलमनाः सुकुमारा
लघुकोपा सुरतलम्पटा लघुभुक् ॥ ५० ॥

---

[1] तुच्छरतिः–मु. [2] विकटरुचिरपक्ष्मलाक्षी च–र. र.

सुमसुरभिसुरतसलिला
  सरलाङ्गुलिरलसमधुरोक्तिः ।
निम्नषडङ्गुलगुह्या
  ऋजुतनुरतिरागिणी हरिणी ॥ ५१ ॥

निम्नसमुन्नतमूर्धा
  स्थूला बहुसान्द्राशिरसिजप्रचया ।
उत्पलदलचलनयना
  स्थूलायतफालनेत्रगलवदना ॥ ५२ ॥

स्थूलरदराजिरायत-
  दन्तच्छदपीनकठिनकुचकलशौ ।
सुललितमांसलबाहुः
  तुच्छोदरकमलमुकुलमृदुपाणिः ॥ ५३ ॥

विस्तृतहृदयकवाटा
  गद्गदमधुरोक्तिरीर्ष्ययोद्विग्ना ।
निम्नसुवर्तुलनाभिः
  वृत्तरुचिरजघनसमलघूरुश्च ॥ ५४ ॥

विपुलकटिर्नतमध्या
  खेलालसगमनरक्तसमचरणा ।
चपलहृदय[1]तनुकोमल-
  निद्राहारप्रिया प्रियप्रवणा ॥ ५५ ॥

प्रथमचरमधात्वधिका
  पूतिपललगन्धि ुरताम्बुः ।
क्षणमात्रमदनगुणिनी
  वहति हि बडबा नवाङ्गुलं गुह्यम् ॥ ५६ ॥

पृथुभिरलकगण्डश्रोत्रनासापुटैर्या
  करचरणभुजोरुद्वन्द्वकैर्ह्रस्वपीनैः ।
दरविनमितखर्वस्थूलया ग्रीवया च
  प्रकटरदशिखाभिः कुन्तलैः स्थूलनीलैः ॥ ५७ ॥

---
[1] कोमलतनुः.

अनवरतरतेच्छा कुम्भिगम्भीरकण्ठ-
स्वरशबलशरीरा स्फार[1]लम्बाधरोष्ठी ।
विपुलमदनमोहा कोपना पिङ्गलाक्षी
करिमदमदनाम्बुः प्रायशो गूढपापा ॥ ५८ ॥

अतिबहुतरदोषा हस्तिनी दण्डसाध्या
वहति च रविसंख्यैरङ्गुलैर्गुह्यदेशम् ॥ ५९ ॥

प्रायः कोमलकुन्तलाः पृथुदृशः शान्ताश्च तुच्छाशयाः
सूक्ष्माङ्गाः शुचयः सुवर्तुलमुखास्तुल्याल्पदन्तास्तथा ।
बिभ्राणाः करजानुपादजघनग्रीवोरुषु क्षामतां
धन्याः स्वल्परताः सुगन्धिमदनस्यन्दा विनीताः शशाः ॥६०॥

क्रूराः प्रोन्नतमौलयो दृढभुजाः सुप्रौढवक्षस्थलाः
रूक्षाः कूर्मनिभोदराश्च कठिनास्त्यागान्विताः पीवराः ।
शोणान्तःस्थितदीर्घलोचनभृतस्त्वारक्तहस्तोदराः
व्यालोला वृषभा नवाङ्गुलमितं कामाङ्कुशं बिभ्रति ॥ ६१ ॥

दीर्घस्थूलशिरोरुहाश्चलदतिस्फारेक्षणाः क्रोधनाः
अत्यन्तं कृशदीर्घकन्दररदश्रोत्राननना लोभिनः ।
पीनोरुस्थलदीर्घबाहुयुगला निद्रालवश्चालसाः
प्रौढा वक्रनखाङ्घ्रिजानुयुगला गम्भीरसंभाषणाः ॥ ६२ ॥

दृष्टाः खण्डरते रतास्त्वतितरां दीर्घाङ्गुलिश्रेणयः
स्थूलस्त्रीरतिलालसा बहुभुजो गत्या तु पृथ्व्यान्विताः ।
भूरिक्षारविगन्धिमन्मथजलप्रायास्तथाऽस्थ्याकुला
आदित्याङ्गुलिसम्मितं च तुरगा लिङ्गं सदा बिभ्रति ॥ ६३ ॥

कफप्रकृतिलक्षणम्

सुस्निग्धदन्तनखलोचनपक्ष्मयुग्मा
मानोन्नता प्रियतमे सुदृढानुरागा ।
श्यामाथ शीतमृदुमांसलगुह्यरन्ध्रा
प्रोक्ता कफप्रकृतिरेव वरा पुरन्ध्री ॥ ६४ ॥

---

[1] बिम्बाधरोष्ठी.

पित्तप्रकृतिलक्षणम्

स्यात्पित्तला तु गौराङ्गी शोणलोचनपाणिजा ।
क्षणक्रुद्धा प्रसन्ना च पीनश्रोणिपयोधरा ॥ ६५ ॥

बिभर्ति घर्मसलिलं विस्रगन्धि सुबुद्धिका ।
श्लथकोष्णवराङ्गी च कुशला सुरते मृदुः ॥ ६६ ॥

वातप्रकृतिलक्षणम्

वातुला तु कठोराङ्गी रूक्षकेशी प्रलापिनी ।
चञ्चला बहुभोज्या च कृष्णपाणिजलोचना ॥ ६७ ॥

श्यामा धूसरवर्णा च सुरते कठिना भृशम् ।
गोजिह्वाभखरस्पर्शं बिभर्ति मदनालयम् ॥ ६८ ॥

देवसत्त्वालक्षणम्

प्रसन्नवक्त्राम्बुजसौरभाङ्गी
सन्तोषयुक्ता शुचिकर्मदक्षा ।
प्रियंवदा भूरिजना धनाढ्या
नारीयमुक्ता किल देवसत्त्वा ॥ ६९ ॥

गन्धर्वसत्त्वालक्षणम्

सङ्गीतलीलारसिकाऽतिशान्ता
सुगन्धमाल्यादिरुचिः शुभाङ्गी ।
विलासिनी निर्मलचारुवेषा
गन्धर्वसत्त्वा वनिता प्रदिष्टा ॥ ७० ॥

यक्षसत्त्वालक्षणम्

अपेतलज्जा मधुमांससक्ता
पीनस्तनी चम्पकगौरदेहा ।
रोषान्विता सन्ततभोगवाञ्छा
प्रोक्ता कवीन्द्रैः खलु यक्षसत्त्वा ॥ ७१ ॥

मनुष्यसत्त्वालक्षणम्

आतिथ्यसख्यादिषु वल्लभा[1]वाऽ-
नुरागिणी निर्मलचित्तवृत्तिः ।
नानाव्रतैरेति न च प्रयासं
मनुष्यसत्त्वा परिकीर्तिता सा ॥ ७२ ॥

पिशाचसत्त्वालक्षणम्

दुश्चारिणी कुत्सितभूरिभोज्यैः
हृष्टाऽतिधृष्टा परितप्तगात्रा ।
खर्वातिकृष्णा सविकारवक्त्रा
मालिन्ययुक्ता च पिशाचसत्त्वा ॥ ७३ ॥

नागसत्त्वालक्षणम्

व्याकुला भ्रान्तिशीला च सोच्छ्वासं बहु जृम्भते ।
निद्रासक्ता च सततं नागसत्त्वेति सा स्मृता ॥ ७४ ॥

काकसत्त्वालक्षणम्

उद्योगं निष्फलं कुर्यान्नेत्रे संभ्रामयेन्मुहुः ।
अतिक्षुधार्ता सततं काकसत्त्वेति सोच्यते ॥ ७५ ॥

कपिसत्त्वालक्षणम्

अत्यन्तचपला या तु सततोद्भ्रान्तलोचना ।
दन्तसंघट्टसक्ता च कपिसत्त्वेति तां विदुः ॥ ७६ ॥

खरसत्त्वालक्षणम्

स्वभावाद्दुष्टवाक्यानि विप्रियाण्येव भाषते ।
अपेतरागा स्नानादौ खरसत्त्वेति [2] सा स्मृता ॥ ७७ ॥

---

[1] वा सुरागिणी–मु. [2] कीर्तिता–मु.

राक्षससत्त्वालक्षणम्

उद्विग्नमानसा या तु [1] उग्रं कटु च भाषिणी ।
नित्यं हिनस्ति भर्तारं राक्षसीं तां विनिर्दिशेत् ॥ ७८ ॥

गुह्यकसत्त्वालक्षणम्

दीर्घानना दीर्घनासा मृदुरोमा च जङ्घयोः ।
निगूहयन्ती गुह्यानि गुह्यकांशसमुद्भवा ॥ ७९ ॥

पितृसत्त्वालक्षणम्

कातरा गूढभक्त्या च परवेश्माशनप्रिया ।
तमःप्रिया च सन्तानापेक्षिणी पितृसम्भवा ॥ ८० ॥

ऋषिसम्भवालक्षणम्

गौराङ्गी दृढचित्ता च देवभक्ता पतिव्रता ।
स्वल्पाशना च धर्मज्ञा कृशा ऋष्यंशसम्भवा ॥ ८१ ॥

किन्नरांशसम्भवा

ईषद्वक्रोरुजङ्घा च स्फुटिताङ्घ्रितला मनाक् ।
नात्यायतमुखी दीर्घलोचना समनासिका ॥ ८२ ॥
श्यामा कर्कशहस्ता च किन्नरांशसमुद्भवा ।

वर्ज्याः स्त्रियः

अन्यासामपि जातीनामंशेभ्यश्च समुद्भवाः ॥ ८३ ॥
रूपस्वभावसुख्यैश्च दूषिताः परिवर्जयेत् ।

मध्यदेशसम्भवा

विचित्रवेषा शुचिकर्मदक्षा
सुशिल्पिनी दन्तनखादिरक्ता ।
मनोजसङ्ग्रामविनोदरङ्गा
स्यान्मध्यदेशप्रभवा पुरन्ध्री ॥ ८४ ॥

---

[1] कटुकोग्रैकभाषिणी—मु.

मालवदेशसम्भवा

उपभोगकलानुरागिणी
चिरसम्भोगरसप्रतोषिणी
करघातनतुष्टमानसा
वनिता मालवदेशसम्भवा ॥ ८५ ॥

आभीरसमुद्भवा

अभिघातरुचिर्विरज्यते
नखदन्तैः परिरम्भलालसा ।
बहुचुम्बनहार्यमानसा
वनिताभीरसमुद्भवा स्मृता ॥ ८६ ॥

लाटदेशीया

परिरम्भणलोलुपा रद-
क्षतघातैर्द्रवमेति सत्वरम् ।
सुकुमारतनुर्मनोरमा
सुरते नृत्यति लाटकामिनी ॥ ८७ ॥

आन्ध्रकर्णाटदेशीया

मृद्वी दुराचाररता वहन्ती
रतार्तिमुच्चैरपि नर्मदक्षा ।
त्रपाविहीनातिमनोरमाङ्गी
स्यादान्ध्रकर्णाटभवा पुरन्ध्री ॥ ८८ ॥

कोसलदेशीया

नितान्तकण्डूतियुतस्मरालया
द्रवन्ति चण्डध्वजघातनाच्चिरम् ।
रतिप्रयोगे चतुराश्च योषितः
प्रकीर्तिताः कोसलराष्ट्रसम्भवाः ॥ ८९ ॥

पाटलिपुत्रमहाराष्ट्रजाताः

ईषद्धासमनोरमाश्च नितरां साक्षेपवाग्विभ्रमाः
निर्लज्जाश्चपलाः कलासु कुशला गाढानुरागान्विताः ।
नार्यः पाटलिपुत्रजा अपि महाराष्ट्रोद्भवाः सन्ततं
नानावेषविनोदभावरसिकाः संकीर्तिताः सूरिभिः ॥ ९० ॥

वङ्गगौडदेशीयाः

कुसुममृदुशरीरा चुम्बनालिङ्गनादौ
बहुतरधृतभावा क्रूरचेष्टा विरक्ता ।
विषमविशिखयुद्धे स्तोकवेगा पुरन्ध्री
भवति तरलनेत्रा वङ्गजा गौडजा च ॥ ९१ ॥

उत्कलदेशीया

विपरीतरताभिलाषिणी
गतलज्जा नखदानतोषिणी ।
नितरामनुरागशालिनी
मदनार्ता कथितेयमुत्कली ॥ ९२ ॥

कामरूपसम्भवा

प्रियंवदा कोमलदेहवल्ली
भृशं द्रवन्ती स्मरकेलिरङ्गे ।
विलासदक्षा प्रचुरानुरागा
स्यात्कामरूपप्रभवा पुरन्ध्री ॥ ९३ ॥

वनवासजाता

निजदोषनिगूहने रता
परदोषग्रहणे च तत्परा ।
वनिता वनवाससंभवा
दृढदेहा परिकीर्तिता बुधैः ॥ ९४ ॥

घूर्जरदेशीया

उपभोगरता सुलोचना
लघुसम्भोगविधिप्रतोषिणी ।
शुभवेषधरा विचक्षणा
कथिता सा खलु घूर्जरी बुधैः ॥ ९५ ॥

सिन्ध्ववन्तीबाह्लीकजाताः

प्रचण्डवेगा अतिकष्टसाध्याः
सुकोपवत्यश्चलनेत्रपाताः ।
भवन्ति दुष्टाः किल सिन्धुजाता
अवन्तिबाह्लीकभवाश्च नार्यः ॥ ९६ ॥

द्रविडसौवीरमलयजाताः

मृद्व्यः सुवाचो लघुभोगसाध्याः
ससाहसा वीतभयत्रपाश्च ।
समानरूपा द्रविडे प्रजाताः
सौवीरदेशे मलयेऽपि नार्यः ॥ ९७ ॥

काम्भोजपाण्ड्यजाताः

नखादिविन्यासकला[1]विधिज्ञाः
सम्भोगसम्मर्दनजातरोषाः ।
स्वभावतो दुष्टतमाः प्रचण्डाः
काम्भोजपाण्ड्यप्रभवाः पुरन्ध्र्यः ॥ ९८ ॥

म्लेच्छाङ्गनाः पर्वतगान्धारकाश्मीरभवाश्च नार्यः

दुर्गन्धगात्रा लघुभोगतुष्टाः
सुचुम्बनाश्लेषणभावहीनाः ।
म्लेच्छाङ्गनाः पर्वतजाश्च नार्यो
गान्धारकाश्मीरभवास्तथैव ॥ ९९ ॥

---

[1] विहीनाः—अनङ्गरङ्गे.

पुष्पपुरमद्रजाताः

सम्भोगदक्षाः कुशलाः [1]सुलज्जाः
प्रियोपभोगा अतिचण्डवेगाः ।
मनोरमाः पुष्पपुरे प्रसूताः
स्युरङ्गना मद्रसमुद्भवाश्च ॥ १०० ॥

जात्यादिसाम्यमिति तत्त्वत एव यस्तु
ज्ञात्वा नरः सकलकामकलाप्रवीणः ।
सन्तोषयेच्च सततं सुरतप्रयोगैः
प्राणैः समत्वमुपयाति स कामिनीनाम् ॥ १०१ ॥

देवादिसत्त्वानि यथा वधूनां
तथैव पुंसामपि संभवन्ति ।
यो देशधर्मः प्रकृतिश्च वापि
सर्वं समानं विबुधा वदन्ति ॥ १०२ ॥

स्त्रीणां विनाशहेतवः

पितृसदननिवासः सङ्गतिः पुंश्चलीभिः
प्रवसनमपि पत्युर्वार्धके [2]सेर्ष्यता च ।
वसतिरपि च पुंभिर्दुष्टशीलैरवश्यं
क्षतिरपि निजवृत्ते योषितां नाशहेतुः ॥ १०३ ॥

वयोभेदेन बालादिनिर्णयः

यावत् षोडशसङ्ख्यमब्दमुदिता बाला, ततस्त्रिंशकं
यावत्सा तरुणीति, बाणविशिखैः सङ्ख्या तु यावद्भवेत् ।
सा प्रौढेत्यभिधीयते कविवरैर्वृद्धा तदूर्ध्वं मता
निन्द्या कामकलाकलापविधिषु त्याज्याः सदा कामिभिः ॥१०४॥

बालादीनां रञ्जने कालविशेषः

बाला नवीनसुरते मुदिता तमिस्रे
संजायतेऽथ तरुणी महति प्रकाशे ।

---

[1] सुशीलाः- सु.   [2] सेवनं च-मु.

प्रौढा प्रकाशतमसोः समुपैति सौख्यं
वृद्धा न च क्वचन जीवनहारिणी सा ॥ १०५ ॥

बालादीनां रञ्जसाधनानि

बाला ताम्बूलमाल्याद्यैस्तरुणी भूरिभूषणैः ।
सुप्रेमा रज्यते प्रौढा वृद्धा [1] स्वालापगौरवैः ॥ १०६ ॥

स्त्रीणां वैराग्यकारणानि

कार्पण्याददतिमानरोगविरहोद्यो[2]गादिपारुष्यतो
मालिन्यात्समयज्ञतादिभयतः शोकाच्च दारिद्र्यतः ।
भर्तॄणां तनुतादिभिश्च वपुषः काठिन्यतः[3] शङ्कनात्
दोषाणां च वृथा प्रयाति वनिता वैराग्यमुच्चैः सदा ॥ १०७ ॥

विरागिण्याः स्त्रियश्चेष्टाः

नाभिपश्यति भर्तारं नोत्तरं संप्रयच्छति ।
वियोगे सुखमाप्नोति संयोगे चातिसीदति ॥ १०८ ॥

शय्यामुपगता शेते वदनं मार्ष्टि चुम्बिता ।
तन्मित्रैर्द्वेष्टि मानं च विरक्ता नाभिवाञ्छति ॥ १०९ ॥

दम्पत्योश्चतुर्विधा प्रीतिः

नैसर्गिकी विषयजा समा चाभ्यासकी तथा ।
चतुर्विधेति विद्वद्भिर्दम्पत्योः प्रीतिरुच्यते ॥ ११० ॥

नैसर्गिकी प्रीतिः

अभ्यासविषयासाध्या दम्पत्योः सहजा तु या ।
सान्द्रा निसर्गभूता च प्रीतिर्नैसर्गिकी मता ॥ १११ ॥

विषयजासमे प्रीती

मालाचन्दनभोज्याद्यैर्विषयैर्वर्धिता तु या ।
प्रीतिर्विषयजा प्रोक्ता, समयोगे समा स्मृता ॥ ११२ ॥

---

[1] सल्लाप–मु. [2] गाच्च पारु–मु. [3] शङ्किता–मु.

आभ्यासिकी प्रीतिः

आखेटदेवपूजादिकेलीसङ्गीतकर्मसु ।
अभ्यासयोगाद्या वृद्धिं याति साभ्यासिकी मता ॥ ११३ ॥

स्त्रीगुह्यस्थानस्थितलक्षणानि

योनिरभ्यन्तरे कापि पद्मकिञ्जल्ककोमला ।
कापि स्याद्धटिकाकीर्णा काचिद्वलिचयाकुला ॥ ११४ ॥
गोजिह्वाभखरस्पर्शा काचिदभ्यन्तरे भवेत् ।
पूर्वपूर्वतरा तासु श्रेष्ठा ज्ञेया विचक्षणैः ॥ ११५ ॥

कामाङ्कुशनाडी

योनिमध्येऽस्ति नाड्येका कामाङ्कुशसमा हि सा ।
लिङ्गेन शोभिता सैव मदवारि निरन्तरम् ॥ ११६ ॥
कामातपत्रात्सृजति स स्यन्द इति कीर्त्यते ।

मन्मथच्छत्रम्

वराङ्गरन्ध्रादूर्ध्वं तु नासिकाभं यदस्ति तत् ॥ ११७ ॥
मन्मथच्छत्रमित्याहुराढ्यं मदसिराचयैः ।

पूर्णचन्द्रा नाडी

योनिरन्ध्रे नातिदूरात्पूर्णचन्द्रास्ति नाडिका ॥ ११८ ॥
मनोजवारिसंपूर्णा स्त्रीणां तिष्ठति सर्वदा ।
तद्विसृष्ट्या द्रुता नारी प्रोच्यते पूर्वसूरिभिः ॥ ११९ ॥

अल्पसाध्या

[1] रागादिश्रान्तदेहा चिरविरहवती मासमात्रप्रसूता
गर्भालस्या च नव्या ज्वरयुततनुका त्यक्तमानप्रसन्ना ।
स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते
प्रायः संपन्नरागा मृगशिशुनयना स्वल्पसाध्या रते स्यात् ॥

---

[1] मार्गादिश्रान्तदेहा—अनङ्गरङ्गे.

कन्दर्पयुद्धे प्रथमेऽल्पभावा-
श्चिरेण तृप्तिं वनिता लभन्ते ।
शीघ्रं द्वितीये धृतभूरिभावाः
पुंस यं विपरीत उक्तः ॥ १२१ ॥

स्त्रीणां सुरतस्पृहाचिह्नानि

संगृह्णात्यलकान्मुहुः कुचयुगं वस्त्रेण चाच्छादयेत्
दन्तेनाप्यधरं दशेच्च विरमेत्संजातलज्जा क्षणम् ।
प्रायश्चुम्बति बालकं निजवपुः सम्मृज्यते जृम्भते
[1]रथ्यां चापि रुणद्धि पश्यति च दोर्मूलं हसत्यादरात् ॥ १२२ ॥

आलिङ्गेत्स्वसखीं प्रियं प्रलपति प्रत्युत्तरं याचते
प्रव्यक्तं न च भाषते स्मितमुखी व्रीडां वृथा धारयेत् ।
व्याजेनैव विलम्बते प्रकुरुते मौलौ च कण्डूयनं
सा प्रोद्यत्सुरतस्पृहा बुधजनैर्ज्ञेयेति भावैः सदा ॥ १२३ ॥

सुलभसाध्या नारी

निर्लज्जा विधवा कलासु कुशला गोष्ठीपरा दुर्भगा
क्लीबस्थूलकठोरवामनजरद्वैरूप्यभार्या तु या ।
द्वारावस्थितिशीलिकाऽतिचपला वन्ध्या महामानिनी
प्रत्यग्रा तरुणी महाविरहिणी साध्या सुखेनाङ्गना ॥ १२४ ॥

अनुरागिणीचिह्नानि

लज्जां न धत्तेऽभिमुखं च पश्येत्
पादेन भूमिं विलिखेत्स्थिता च ।
व्यनक्ति गात्रं कुरुते च हास्यं
[2]दृष्ट्वा कटाक्षैर्नयने पिदध्यात् ॥ १२५ ॥

पृष्टाऽस्फुटं सस्मितमेव वाक्यं
शनैर्वदेच्चानुसरेद्व्रजन्तम् ।
विलोक्य तं व्याजकथाप्रसङ्गा-
दुच्चैर्वदेत्स्वं परिदर्शयन्ती ॥ १२६ ॥

---

[1] मार्गं चापि–अ. र. [2] दृष्ट्वा कटाक्षं नयने विदध्यात्–अनङ्गरङ्गे.

तन्मित्रवर्गै प्रणयं विदध्या-
दित्यादिवार्तामसकृच्च पृच्छेत् ।
कति स्त्रियोऽस्यालयगाः सुरूपाः
कस्यामयं प्रेम भृशं विधत्ते ॥ १२७ ॥

मृद्नाति दृष्ट्वा स्वकुचं करेण
संस्फोटयेदङ्गुलिकाः सजृम्भम् ।
भूषाविहीना न ददाति तस्मै
स्वदर्शनं याचितमप्यजस्रम् ॥ १२८ ॥

पुष्पादिना हन्ति तथातितारं
सञ्चालयेन्मार्ष्टि भुजं करेण ।
व्याजेन गच्छेत्सदनं कराङ्घ्रि-
वक्त्रेषु घर्माम्बु वहेद्विलोक्य ॥ १२९ ॥

इत्यादिचिह्नैरनुरागयुक्तां
ज्ञात्वा विदग्धां मृगशावकाक्षीम् ।
सम्प्रेषयेत्तां प्रति निर्विशङ्कं
दूतीं वरां कामकलाप्रवीणः ॥ १३० ॥

पुंसः प्रथमादियामेषु शङ्खादिसंज्ञाभेदाः

आद्ययामे तु शङ्खः स्यान्महाशङ्खो द्वितीयके ।
पद्मस्तृतीयके यामे महापद्मश्चतुर्थके ॥ १३१ ॥

रामस्तु पञ्चमे यामे विरामः षष्ठके स्मृतः ।
प्रवरः सप्तमे ज्ञेयः प्रत्यक्षश्चाष्टमे मतः ॥
दाडिमं तु द्विजे ज्ञेयं पनसं क्षत्रिये स्मृतम् ॥ १३२ ॥

कदलीफलकं वैश्ये चाम्रकं शूद्रके मतम् ।
राजपुत्रे द्विजेन्द्रश्च सम्पूर्णेन्दुश्च भूपतौ ॥ १३३ ॥

ब्राह्मण्यां कुन्दपुष्पं स्याद्राजपुत्र्यां च मालती ।
मल्लिका वैश्यपुत्र्यां च शूद्रपुत्र्यां तु कैरवम् ॥ १३४ ॥

कामुके भ्रमरः प्रोक्तः कामिन्यां चूतमञ्जरी ।
भल्लातकफलं भीरौ भयाभावे हरीतकी ॥ १३५ ॥

छिन्नवस्त्रं तु विच्छेदे दशाग्रन्थिश्च सङ्गमे ।
एकस्नेहे तथा चैको द्वयोः स्नेहे च तद्द्वयम् ॥ १३६ ॥

दूतीलक्षणम्

मालाकारवधूः सखी च विधवा धात्री नटी शिल्पिनी
सैरन्ध्री प्रतिगेहिकाथ रजकी दासी च सम्बन्धिनी ।
बाला प्रव्रजिता च भिक्षुवनिता तक्रस्य विक्रेयिका
मान्या कारवधूः विदग्धपुरुषैः प्रेष्या इमा दूतिकाः ॥१३७॥

सुरते निषिद्धप्रदेशकालौ

वह्निब्राह्मणपूज्यवर्गनिकटे नद्यां च देवालये.
दुर्गादौ च चतुष्पथे परगृहेऽरण्ये श्मशाने दिवा ।
सङ्क्रान्तौ शशिसंक्षयेऽथ शरदि ग्रीष्मे ज्वरार्तौ व्रते
सन्ध्यायां च परिश्रमेषु सुरतं कुर्यान्न विद्वान् क्वचित् ॥ १३८ ॥

सुरतयोग्यस्थानविशेषः

विस्तीर्णे ललिते सुधाधवलिते चित्रादिनाऽलङ्कृते
रम्ये प्रोन्नतचत्वरेऽगुरुमहाधूपादिपुष्पान्विते ।
सङ्गीताङ्गविराजिते स्वभवने दीपप्रभाभासुरे
निश्शङ्कं सुरतं यथाभिलषितं कुर्यात्समं कान्तया ॥ १३९ ॥

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले कामशास्त्रे जातिस्वभावगुणदेशधर्मचेष्टादिनिरूपणं नाम द्वादशस्तरङ्गः

---

## अथ त्रयोदशस्तरङ्गः

* जातिस्वभावादिकमीरितं प्रा-
गथोच्यते बाह्यरतोपयोगः ।
आदौ रतं बाह्यमिह प्रयोज्यं
तत्रापि चालिङ्गनपूर्वमेतत् ॥ १ ॥

---

* अस्मिंस्तरङ्गे रतिरहस्य-अनङ्गरङ्गग्रन्थाभ्यां विषयाः सङ्गृहीताः.

अजातजातस्मरकेलिभेदा-
द्विधा पुनर्द्वादशधा च तत्स्यात् ।

स्पृष्टकम्—(असञ्जातरत्योरालिङ्गनभेदाः)

यद्योषितः सम्मुखमागताया
अन्यापदेशाद्व्रजतो नरस्य ॥ २ ॥
गात्रेण गात्रं घटते रतज्ञाः
आलिङ्गनं स्पृष्टकमेतदाहुः ।

विद्धकम्

यद्गृह्णती कञ्चन वञ्चिताक्षं
स्थितोपविष्टं पुरुषं स्तनाभ्याम् ॥ ३ ॥
नितम्बिनी विध्यति, तां च गाढं
गृह्णात्यसौ विद्धकमुच्यते तत् ।

उद्घृष्टकपीडिते

यात्रोत्सवादौ तिमिरे घने वा
यद्गच्छतोः स्याच्चिरमङ्गसङ्गः ॥ ४ ॥
उद्घृष्टकं, तत्पुनरेव कुड्ये
निपीडनात्पीडितसंज्ञकं स्यात् ।
भावप्रबोधार्थमजातरत्यो-
श्चतुर्विधोक्ता परिरम्भलीला ॥ ५ ॥
सञ्जातरत्योस्त्वनुरागवृद्धै-
र्बुधैरसावष्टदिशोपदिष्टा ।

वल्लरीवेष्टितं (जातरत्योः)

प्रियमनुकृतवल्लीविभ्रमा वेष्टयन्ती
द्रुममिव सरलाङ्गी मन्दसीत्का तदीयम् ।
वदनमुदितलीला[1]क्रन्दना चुम्बनार्थं
नमयति, [2] कथितं तद्वल्लरीवेष्टितं च ॥ ६ ॥

---

[1] क्रन्दमाचुम्बनार्थं—र. र. [2] विनमन्ती तल्लतावेष्टितं स्याद्—र. र.

वृक्षाधिरूढम्

रमणचरणमेकेनाङ्घ्रिणाक्रम्य [1]भिन्न-
श्वसितमपरपादे[2]नाक्रमन्ती तदूरुम् ।
निजमथ भुजमेकं पृष्ठतोऽस्यार्पयन्ती
पुनरपरपदेन [3]प्रार्थयन्ती तदंसम् ॥ ७ ॥

तरुमिव कमितारं चुम्बनार्थाधिरोढुं
यदभिलषति नारी तच्च वृक्षाधिरूढम् ।
स्थितपतिमधिकृत्य प्रोक्तमाश्लेषयुग्मं
सपदि च कथनीयाः सुप्तसंश्लेषभेदाः ॥ ८ ॥

तिलतण्डुलितम्

भुजगुह्यविपर्ययान्मिथो
घटयेच्चेन्मिथुनं सुनिश्चलम् ।
तिलतण्डुलसंज्ञकं तदा
परिरम्भं कथयन्ति सूरयः ॥ ९ ॥

क्षीरनीरम्

अङ्केऽथ तल्पे पतिसम्मुखस्था
कान्ता समालिङ्गति यत्र गाढम् ।
मिथः प्रवेशं कुरुते निजाङ्गैः
स्यात् क्षीरनीरं परिरम्भणं तत् ॥ १० ॥

ऊरूपगूढम्

मनसिजतरलायाः सम्भृतानङ्गरागो
यदि पतिरबलायाः पीडयेदूरुयुग्मम् ।
दरदलितनिजोरुद्वन्द्वसन्दंशयोगात्
तदिह मुनिमतज्ञैरुक्तमूरूपगूढम् ॥ ११ ॥

---

[1] भिन्नं–र. र. [2] नाश्रयन्ती–र. र. [3] प्राश्नयन्ती.

जघनोपश्लेषः

जघनकलितकान्तश्रोणिरन्योपरिष्टात्
[1](व्रजति यदिह नारी स्रस्तकेशोत्तरीया ।
करजरदनकृत्यं चुम्बनं वा विधित्सुः)
कथयति जघनोपश्लेषमेनं मुनीन्द्रः ॥ १२ ॥

स्तनालिङ्गनम्

उरसि कमितुरुच्चैराविशन्ती वराङ्गे
स्तनभरमुपधत्ते यत्स्तनालिङ्गनं तत् ।

लालाटिकम्

मुखमसिमुखमक्ष्णोरक्षिणी न्यस्य हन्या-
दलिकमलिकपट्टेनेति लालाटिकं तत् ॥ १३ ॥

चुम्बनस्थानानि

नयनगलकपोलं दन्तवासो मुखान्तः
स्तनयुगलललाटं चुम्बनस्थानमाहुः ।

लाटानां चुम्बनस्थानानि

दधति जघननाभीमूलकक्षासु चुम्ब-
व्यतिकरसुखमुच्चैर्देशसात्म्येन लाटाः ॥ १४ ॥

मिलितम्

नारीमुखान्ते वदनं स्वकीयं
समानयेद्यत्र बलेन कान्तः ।
सा नैव चुम्बेदतिकोपयुक्ता
स्याच्चुम्बनं तन्मिलिताभिधानम् ॥ १५ ॥

स्फुरितम्

दयितस्य निवेश्य वक्त्रके
निजवक्त्रं परिचुम्बिताधरम् ।

[1] रतिरहस्यपाठः.

न पिबेदबला तदाननं
स्फुरिताख्यं किल चुम्बनं तथा ॥ १६ ॥

घट्टितम्

करेण कान्तस्य निमील्य नेत्रे
जिह्वां मुखान्तर्विनिधाय यत्र ।
चुम्बेद्विलोला परिमीलिताक्षी
तद्घट्टिताख्यं मुनयो वदन्ति ॥ १७ ॥

तिर्यक्चुम्बनम्

करेण कान्ताचुबुकं गृहीत्वा
पिबेत्पतिः पश्चिमभागवर्ती ।
[1] मिथोऽधरं यत्र तु तिर्यगाख्यं
प्रोक्तं कवीन्द्रैः खलु चुम्बनं तत् ॥ १८ ॥

उत्तरौष्ठम्

दन्तैर्गृहीत्वा मदनार्तिलोला-
धरं विचुम्ब्याशु दशेत्स्वभर्तुः ।
कान्ता तदीयं कथितं मुनीन्द्रै
[2] रत्युत्तराख्यं परिचुम्बनं हि ॥ १९ ॥

पीडितकम्

आदाय दन्तच्छदमाशु भर्तुः
कराङ्गुलीसंपुटकेन नारी ।
जिह्वाग्रदेशेन घटेद्दशेच्च
तच्चुम्बनं पीडितसंज्ञकं स्यात् ॥ २० ॥

सम्पुटम्

[3] प्रियामुखं स्वाधरसम्पुटेन
विशेत्पतिः सापि तथैव भर्तुः ।

---

[1] प्रियाधरं–अ. न. [2] रित्युत्तरौष्ठं–अ. न. [3] प्रियाधरं–अ. न.

[1]तत्सम्पुटाख्यं हनुवक्त्रसंज्ञं
सत्केलिजिह्वाननकण्ठदेशम् ॥ २१ ॥

प्रतिबोधम्

सम्प्राप्तनिद्रां रहसि स्वकान्तां
चिरागतश्चुम्बति यत्र भर्ता ।
प्रोक्तं कवीन्द्रैः प्रतिबोधसंज्ञं
तच्चुम्बनं सर्वरसातिरेकम् ॥ २२ ॥

समौष्ठम्

अधरोष्ठयुगेन कामिनी
पतिवक्त्रोष्ठयुगं स्वजिह्वया ।
परिपीय विचुम्ब्य [2]नर्तये-
त्कथितं तद्धि समौष्ठसंज्ञकम् ॥ २३ ॥

नखक्षतम्

कक्षाकरोरुजघनस्तनपार्श्वपृष्ठ-
हृत्कन्धरासु नखराः खरवेगयोः स्युः ।
अप्यन्ययोर्नवरते विरते च माने
पुष्पे मदे प्रसवने विरहे प्रयोज्याः ॥ २४ ॥

सात्म्येन वा रदविधेरपि निर्णयोऽयं
प्रत्यग्रभूरिशिखरा अतिवेगयोः स्युः ।

नखानां गुणाः

वर्धिष्णुता मलिनता मृदुतोज्ज्वलत्वं
नीरेखताऽस्फुटिततेति गुणा नखानाम् ॥ २५ ॥

नखविलेखनप्रभेदाः (ललितम्)

अव्यक्तरेखमणिकर्म नखैः समस्तैः
रोमाञ्चकृच्चटचटाध्वनियोजितान्तम् ॥

---

[1] परस्परं प्रेमरसातिरेकात्स्याच्चुम्बनं सम्पुटकं तथैव—अन.    [2] नृत्यते—र. र.

अङ्गुष्ठजाग्रनखताडनतो नखानां
गण्डस्तनाधर[1]गले ललितं लिखन्ति ॥ २६ ॥

मण्डलकम्

वक्रोऽर्धचन्द्र इति च स्तनकन्धराग्रे
तौ सम्मुखौ वदति मण्डलकं मुनीन्द्रः ।
स्थानं च तस्य भगमूर्धककुन्धरोरु
द्वित्राङ्गुलं परित एव लिखन्ति रेखाः ॥ २७ ॥

मयूरपदकम्

अङ्गुष्ठजं नखमधो विनिवेश्य कृष्ट्वा
सर्वाङ्गुलीकररुहैरुपरि स्तनस्य ।
यच्चूचुकाभिमुखमेत्य भवन्ति रेखा-
स्तज्ज्ञा मयूरपदकं तदुदाहरन्ति ॥ २८ ॥

शशप्लुतम्

सर्वैः शशप्लुतमिदं करजैः कुचाग्रे

उत्पलपत्रम्

[2]तत्तिर्यगुत्पलदलं स्तनगुह्यपृष्ठे ।

लेखा

रेखा घनास्त्रिचतुरा जघने स्तने वा
[3]भर्तुः प्रवासगमने विदधुर्विदग्धाः ॥ २९ ॥

दशनच्छेद्यम्

[4](स्निग्धत्विषः शितशिखानतिदीर्घखर्वा
रागस्पृशः समघना दशनाः प्रशस्ताः ।)
तेऽन्तर्मुखोत्तररदच्छदनेत्रवर्जं
स्थानेषु चुम्बनविधिः कथितेषु योज्यः ॥ ३० ॥

---

[1] गमाच्छुरितं वदन्ति–र. र. [2] ह्यन्वर्थमुत्पल–र. र. [3] स्मर्तु–र. र.
[4] रतिरहस्यपाठः.

गूढकम्

रागैकलिङ्गमधरे किल गूढकं स्यात्

उच्छूनकम्

उच्छूनकं दशनवाससि वामगण्डे ।

प्रवालमणिः

स्यात्पीडनात्तदधरोष्ठविशेषयोगात्
तत्र प्रवालमणिरभ्यसनेन साध्यः ॥ ३१ ॥

बिन्दुः

मध्येऽधरं तिलश एव विखण्डने स्यात्
बिन्दू रदद्वयकृते,

मणिबिन्दुमाले

सकलैः कृते तु ।
स्यातां शिताग्रदशनैर्मणिबिन्दुमाले
कक्षाललाटगलवङ्क्षणभूषणे ते ॥ ३२ ॥

खण्डाभ्रकम्

खण्डाभ्रकं स्तनतटे दशनाग्रलेख्यं
स्यान्मण्डलाकृतियुतं विषमैश्च कूटैः ।

वराहचर्वणम्

ताम्रान्तरा रदनराजिरखर्वसान्द्रा
स्यात्कोलचर्वितमियं स्तनपृष्ठभूषा ॥ ३३ ॥

केशग्रहणम्

स्निग्धा घनाः कुञ्चितनीलवर्णाः
केशाः प्रशस्तास्तरुणीजनानाम् ।
प्रेमप्रवृद्ध्यै विधिनैव मन्दं
ग्राह्या नरैश्चुम्बनदानकाले ॥ ३४ ॥

समहस्ततरङ्गरङ्गके

चिकुरान्परिगृह्य चुम्बति
करयुग्मेन पतिः प्रियां यदि ।
समहस्तकमित्यथैकतो
यदि हस्तेन तरङ्गरङ्गकम् ॥ ३५ ॥

भुजङ्गवल्लिकम्

[1] परिकृष्य करेण कुन्तलान्
मदनार्तो यदि धारयेत्प्रियाम् ।
रतिकेलिकलापकोविदाः
कथयन्तीति भुजङ्गवल्लिकम् ॥ ३६ ॥

कामावतंसः

कर्णप्रदेशस्थकचान् विकृष्य
[2] पतिं मुदा चुम्बति यत्र नारी ।
पतिश्च रागात् सुरतावतारे
कामावतंसः स कचग्रहः स्यात् ॥ ३७ ॥

इति प्रदिष्टाः कतिचित्प्रसिद्धाः
क्रमान्मयोक्ताः सुरतप्रकाराः ।
[3] प्रसिद्धबुद्ध्या बहुशोऽपरत्र
न दर्शिता विस्तरशङ्कयात्र ॥ ३८ ॥

सुरतभेदाः

सात्म्यानुरूपांश्च विधाय पूर्वं
पुमांश्चरेद् बाह्यरतोपचारान् ।
अथ श्लथीभूतवराङ्गदेशां
भजेत कान्तां स्मरकेलिरङ्गे ॥ ३९ ॥

---

[1] परिवेष्ट्य—अन. [2] परस्परं—अन. [3] प्रसिध्यभावात्—अन.

दृढापि नारी श्लथतामुपैति
प्रसारणादूरुयुगस्य सद्यः ।
अपि श्लथा संयमितोरुयग्मा
गच्छेद् दृढत्वं सुरतप्रयोगे ॥ ४० ॥

सुरतभेदाः पञ्च

उत्तानकं तिर्यगथोत्थिताख्यं
स्थितं तथैवानतकं रतज्ञैः ।
पञ्चप्रकारं सुरतं प्रदिष्टं
तस्य प्रभेदान् क्रमशो वदामि ॥ ४१ ॥

(उत्तानबन्धे)—समपादबन्धः

निधाय पादौ रमणांसयोश्चे-
दुत्तानसुप्ता रमते पुरन्ध्री ।
रतिप्रबन्धं समपादसंज्ञं
प्रोचुस्तदा भोगविशेषदक्षाः ॥ ४२ ॥

नागरबन्धः

उत्तानितायाः [1] स्मरमन्दिरे यः
स्थितस्तदूरुद्वयमुद्गृहीत्वा ।
संस्थाप्य बाह्यं कटितो रमेच्चेत्
कान्तस्ततः स्यात्किल नागराख्यम् ॥ ४३ ॥

त्रैविक्रमबन्धः

स्त्रियोऽङ्कमेकं विनिधाय भूमा-
वन्यं स्वमौलौ निजपादयुग्मम् ।
पृथ्व्यां समाधाय रमेत भर्ता
त्रैविक्रमाख्यं करणं तदा स्यात् ॥ ४४ ॥

---

[1] स्मरमन्दिरोपस्थितः—अन.

व्योमपादबन्धः

[1](तल्पप्रसुप्ता निजपादयुग्म-
मूर्ध्वं विधत्ते रमणी, कराभ्याम् ।
स्तनौ गृहीत्वाथ भजेत कान्तो
बन्धस्तदा व्योमपदाख्य उक्तः ॥

स्मरचक्रबन्धः

कान्तोरुयुग्मान्तरगौ स्वहस्तौ
निधाय भूमौ रमते यदि स्यात्)
बन्धस्तदोक्तः स्मरचक्रनामा
श्रेष्ठः सदा कामिजनस्य लोके ।

अविदारितबन्धः

[2](नारी स्वपादौ दयितस्य वक्ष-
स्स्थितौ समालिङ्ग्य करद्वयेन ।
किञ्चिन्नतोरू रमते तदासौ
प्रोक्तो मुनीन्द्रैरवदारिताख्यः ॥)

सौम्यबन्धः

उत्तानितोरुद्वयमध्यगामी
दृढं समालिङ्ग्य भजेत यत्र ॥ ४५ ॥

कान्तो विलासप्रिय एष बन्धः
सौम्याख्य उक्तः कविभिः प्रवीणैः ।

जृम्भितबन्धः

[3](ऊरुद्वयं वक्रमुदञ्चितं च
कृत्वाम्बुजाक्षी भजते पतिं चेत् ।
आनन्दकर्ता तरुणीजनानां
बन्धोऽयमुक्तः किल जृम्भिताख्यः ॥)

---

[1] अनङ्गरङ्गपाठः. [2] अनङ्गरङ्गपाठः. [3] अनङ्गरङ्गपाठः.

वेष्टितबन्धः

कान्तोरुयुग्मं परिवर्तनेन
निपीड्य कामाकुलचित्तवृत्तिः ॥ ४६ ॥
रमेत भर्ता यदि वेष्टिताख्यं
तदा हि बन्धं मुनयो वदन्ति ।

वेणुविदारितबन्धः

स्कन्धप्रदेशे विनिधाय जङ्घा-
मेकां स्त्रियोऽन्यामथ संविदार्य ॥ ४७ ॥
अधो विनीय प्रबलं रमेत
भर्ता तदा वेणुविदारितं तत् ।

उद्भुग्नकबन्धः

[1] विलासिनीसंहतमूरुयुग्मं
कृत्वोर्ध्वमालिङ्ग्य भजेत भर्ता ॥ ४८ ॥

स्फुटनबन्धः

उद्भुग्नकं स्यात्, प्रमदाङ्घ्रियुग्मे
कान्तोरसिस्थे स्फुटनं प्रदिष्टम् ।

(तिर्यग्बन्धाः)—वीणिकाबन्धः

कान्ताङ्घ्रिमेकं हृदये स्वकीये
निधाय भर्ता शयने द्वितीयम् ॥ ४९ ॥
कुर्याद्रतिं चेदिति वीणिकाख्यः
प्रौढाङ्गनायां परिकल्पनीयः ।

सम्पुटबन्धः

[2] (पार्श्वप्रसुप्तप्रमदोपरिस्थः
कान्तः समालिङ्ग्य रतिं करोति ।

---

[1] यदा स्त्रियः–अन.  [2] अनङ्गरङ्गपाठः.

यत्र प्रदिष्टो मुनिभिः पुराणै-
बँन्धस्तदा सम्पुटनामधेयः ॥)

कर्कटबन्धः

यद्यङ्गनाकुञ्चितपादयुग्मं
स्वनाभिदेशे परिकल्प्य भर्ता ॥ ५० ॥

रतिं प्रकुर्यादिति कर्कटाख्यं
तदा कवीन्द्रैः करणं प्रदिष्टम् ।

(उपविष्टबन्धाः)—पद्मासनम्

[1]प्रेङ्खा च पादभ्रमणैरिह स्या-
द्विपर्ययाज्जङ्घयुगस्य नार्याः ॥ ५१ ॥

अर्धपद्मासनम्

पद्मासनं स्यात्, अथ चैकजङ्घा-
विपर्ययेऽर्धोपपदं प्रदिष्टम् ।

उच्छुरिका (बन्धुरिता)

स्वजानुयुग्मान्तरनिर्गतौ चेद्
भुजौ स्वकण्ठे विनयेन्मृगाक्षी ॥ ५२ ॥

कान्तोऽपि कृत्वेति विधिं प्रगच्छे-
द्बन्धो [2]बुधैरुच्छुरिकाख्य उक्तः ।

युग्मपादः

[3]स्थितां स्त्रियं कुञ्चितपादयुग्मां
तथैव भर्ता कृततिर्यगङ्गः ॥ ५३ ॥

भजेत चेत्कामकलाविदग्धो
बन्धं तदा युग्मपदं वदन्ति ।

---

[1] प्रेङ्खाविलासं प्रसभं वहन्त्याः—अन. [2] बुधैर्बन्धुरिताख्य—अन. [3] अत्रानुल्लिखिताः केचन बन्धाः अनङ्गरङ्गे द्रष्टव्याः.

(उत्थितबन्धाः)—जानुकूर्परबन्धः

संवेष्टय कान्तो निजकूर्परेण
जान्वङ्गनाया अवलम्ब्य कक्षाम् ॥ ५४ ॥
रतिं प्रकुर्यादिति कूर्पराख्यो
बन्धः प्रदिष्टः स च जानुपूर्वः ।

हरिविक्रमः

[1] उक्तप्रकारे करणे यदैकः
पादो भवेदूर्ध्वरतेऽङ्गनायाः ॥ ५५ ॥
तदा प्रदिष्टो हरिविक्रमाख्यो
बन्धः प्रियोऽयं तरुणीजनानाम् ।

(व्यानतबन्धाः)—इभबन्धः

अधोमुखीं मस्तकदोःकुचास्यै-
र्भुवं गतां क्रामति यत्र नारीम् ॥ ५६ ॥
करीव भर्ता रतिलोलचित्त-
स्तदेभसञ्ज्ञं करणं प्रदिष्टम् ।
ऐणसूकरकगार्दभादिका-
न्यप्रयोजनतयात्र भूरिशः ॥ ५७ ॥
अप्रसिद्धकरणानि नो मया
दर्शितान्यतिविनिन्दितानि च ।

पुरुषायितम्

अनेकरूपैः सुरतप्रभेदै-
र्जातश्रमं वीक्ष्य पतिं पुरन्ध्री ॥ ५८ ॥
कन्दर्पवेगाकुलिता नितान्तं
कुर्वीत तुष्ट्यै पुरुषायितं तत् ।

---

[1] उक्तप्रकारैः—अन.

विपरीतबन्धः

उत्तानसुप्तं दयितं भुजाभ्या-
मालिङ्ग्य लिङ्गं विनिवेश्य योनौ ॥ ५९ ॥

भजेन्नितम्बं परिचालयन्ती
नारी तदा स्याद्विपरीतबन्धः ।

भ्रामरबन्धः

सुप्तस्य पुंसो जघनोपरि स्थिता
सम्भ्रामयंत्यङ्घ्रियुगं विकुञ्चितम् ॥ ६० ॥

चक्राकृतिः स्त्रीनरवद्विचेष्टते
तद्भ्रामराख्यं करणं समीरितम् ।
विपरीतरते ससीत्कृता
दरहासातिमनोरमानना ॥ ६१ ॥

कितवाद्य वशं गतोऽसि मे
स्मरयुद्धे विजितोऽसि चाप्यलम् ।
इति मञ्जु रटन्त्यथाकुला
सकचाकर्षणचुम्बिताधरा ॥ ६२ ॥

श्रममीलितचारुलोचना
द्रवतां याति तदा विलासिनी ।
श्लथदेहलतां समूर्छनां
दरसंमीलितलोचनोत्पलाम् ॥ ६३ ॥

समवेक्ष्य नितान्तनिस्सहा-
मवगच्छेदबलां द्रुतामिति ।

विपरीतरते वर्ज्याः

करिणीं हरिणीं च गर्भिणीं
नवसूतामपि पुष्पिणीं कृशाम् ॥ ६४ ॥

ज्वरितां च कुमारिकां रते
विपरीते परिवर्जयेत्सुधीः ।

ताडनसीत्कृतयोर्मदनयुद्धाङ्गत्वम्

मोहनं मदनयुद्धमूचिरे
तस्य ताडनमिहाङ्गमिष्यते ॥ ६५ ॥
आर्तिरूपमपि तत्र सीत्कृतं
तच्च नैकविधमुच्यते बुधैः ।

समतलादिताडनानि पृष्ठादिस्थानानि च

ताडनं समतलापहस्ततो
मुष्टिना प्रसृतिकेन चोदितम् ॥ ६६ ॥
पृष्ठपार्श्वजघनस्तनान्तरे
मूर्ध्नि चेति मदनस्य भूमयः ।

सीत्कारभेदाः

हुङ्कृतं [1] स्तनितसीत्कृतोत्कृतं
फूत्कृतं श्वसितरोदनादिकम् ॥ ६७ ॥
मुञ्च पीडय गृहाण जीवय
त्राहि हा धिगिति सीत्कृतं विदुः ।
तच्च लावककपोतकोकिला-
हंसकेकिसदृशै रुतैः क्रमात् ॥ ६८ ॥
मिश्रितं प्रहरणे प्रयुज्यते
चान्यथा विरुतमिष्यते बुधैः ।
ऊर्ध्वमुन्नमितकण्ठनासिकं
हुङ्कृतं स्तनितमभ्रघोषवत् ॥ ६९ ॥
वंशविस्फुटनवच्च सीत्कृतं
फूत्कृतं बदरपातवज्जले ।

चतुर्विधताडनलक्षणानि

[2] रोदितं ध्वनिकरं कराहितं
हृत्प्रयोज्यमपहस्तकं विदुः ॥ ७० ॥

---

[1] स्वनित—ग. [2] रोदनध्वनिकरीं कराहतिं—र. र.

मुष्टिरत्र विदितस्तु पृष्ठतो
मूर्धनि प्रसृतिकः फणाकृतिः ।
हस्तनालहननं तु जाघने
पार्श्वयोः समतलं प्रयुज्यते ॥ ७१ ॥

### स्वस्त्रीवशीकरणानि

रूपेण वा धनैर्वस्त्रैः चेष्टाभिर्भूषणैरपि ।
मन्त्रैरौषधजालैश्च वशीकार्याः स्त्रियो नरैः ॥ ७२ ॥

### परस्त्रीवशीकरणानि

वश्यं भुक्तिश्च ताम्बूलं फूत्कारं तिलकं तथा ।
स्तम्भनं मोहनं मायामञ्जनं द्रावकं तथा ॥ ७३ ॥
भ्रमणं चोषणं लेपः स्पर्शनं मार्जनं तथा ।
पञ्चैतानि परस्त्रीणां दशपूर्वाणि कारयेत् ॥ ७४ ॥
वश्या भवन्ति मर्त्यानां वृषस्यन्त्यः परस्त्रियः ।

### वशीकरणे तिलकादिकम्

दूर्वाश्च शतपर्वण्यः समूलदलगुच्छकाः ॥ ७५ ॥
आनीय ता गृहस्तम्भे च्छायाशुष्काः प्रकल्पयेत् ।
गवां च कृष्णवर्णानां घृतेनाक्ताथ वर्तिकाम् ॥ ७६ ॥
प्रज्वाल्य दीपभागेन दाहयेच्छतपर्वकाम् ।
तद्भस्म मधुनालोड्य निक्षिपेच्छृङ्गपात्रके ॥ ७७ ॥
तर्जन्या तिलकं [1] धृत्वा दर्शयेच्चैव योषिताम् ।
तद्दर्शनप्रभावेन भवेद्वश्या पराङ्गना ॥ ७८ ॥
शष्कुल्यपूपचणका माषमुद्गतिला अपि ।
आत्मनिष्यन्दतोयेन क्षालयेद्धर्षयेत्ततः ॥ ७९ ॥

---

[1] कृत्वा—मु. पा.

शष्कुल्यादीनि कुर्वीत आज्येनाजभवेन च ।
भक्षणार्थं ततो दद्याद्वश्याः स्युस्तेन योषितः ॥ ८० ॥

खात्वाऽर्कवारे मध्याह्ने चित्रमूलं समूलकम् ।
सपुष्पं कोशसंयुक्तं नावलोक्य गृहं नयेत् ॥ ८१ ॥

छायाशुष्कं ततः कृत्वा [1] सम्पातेनैव सर्पिषा ।
गृहीत्वा चैव तद्भस्म निक्षिपेच्छृङ्गमध्यतः ॥ ८२ ॥

देवनक्षत्रसंयुक्ते दिने चणकमानतः ।
प्रणवेन त्रिरामन्त्र्य मुखफूत्कारवायुना ॥ ८३ ॥

तद्भस्मस्पर्शमात्रेण स्त्रियो यास्यन्ति वश्यताम् ।
पुंसोऽप्यश्वत्थवृक्षस्य फलान्यष्टशतं पुनः ॥ ८४ ॥

आनीय च गृहे सम्यक्पेषयेदात्मवारिणा ।
यावद्भवति तत्पिष्टं तावन्नग्नत्वमाचरेत् ॥ ८५ ॥

निक्षिपेदायसे पात्रे श्रीगन्धेनैव मर्दयेत् ।
परस्त्रीसङ्गमे काले लेपयेदात्मदेहकम् ॥ ८६ ॥

उपगुह्य ततो नारीं कुर्याद्रतिमिहादरात् ।
षण्मुहूर्तं भवेन्नारी स्तम्भवत्तेन सङ्गता ॥ ८७ ॥

ततः परमसौ नारी वश्या भवति सर्वदा ।

### वश्ये मन्त्रप्रयोगः

मन्त्रं च मोहनं नाम जपेत्कामी प्रयत्नतः ॥ ८८ ॥

तां पश्यन् मनसा ध्यात्वा न्यासध्यानपुरस्सरम् ।
वह्निबीजं नमश्शब्दं वह्निबीजं सदीर्घकम् ॥ ८९ ॥

वह्निना मूलमन्त्रेण जपेदष्टशतं बुधः ।
जायते मोहिता नारी कपोतेव पतिं यथा ॥ ९० ॥

---

[1] संहितेनैव—मु. पा.

वश्ये चूर्णप्रयोगः

कुम्भिकामूलमादाय स्वात्मतोयेन पेषयेत् ।
तावत्काले ऋतौ नार्या अभ्यङ्गे च विलेपयेत् ॥ ९१ ॥

देहे सम्मर्दनं कुर्यात्तदारभ्य पराङ्गना ।
मायया वशमायाता सर्वदा रतिमिच्छति ॥ ९२ ॥

वटशृङ्गं समादाय पेषयेदात्मवारिणा ।
नूतनेन शरावेण धारयेच्चूर्णमुत्तमम् ॥ ९३ ॥

वस्त्रेण चूर्णमात्रस्य दाहयेदर्कवह्निना ।
तच्चूर्णं सर्वमादाय नवनीतेन मर्दयेत् ॥ ९४ ॥

मर्दितं कज्जलं दद्यात्परनार्यै रताप्तये ।
नेत्रयोर्धारणेनैव भवेत्तद्वशगा सती ॥ ९५ ॥

पर्पाटकफलं धृत्वा हिंगुदीफलसंयुतम् ।
पेषयेत्कन्यकासूत्रे वटकं [1] कारयेत्ततः ॥ ९६ ॥

वटके क्षीरपानेन गुह्यस्थानमुपागते ।
शुक्लं स्रवत्यहोरात्रं तत्पुंसो दर्शनादितः ॥ ९७ ॥

कर्मणा मनसा वाचा तं स्मरेत्सा स्रवद्भगा ।
अश्मातं बृहतीमूलं जम्बीररसपेषितम् ॥ ९८ ॥

कृत्वा शलाटुवद्धीमान् छायाशुष्कं च कारयेत् ।
बध्वा तत्पट्टसूत्रेण दर्शयित्वा पराङ्गनाम् ॥ ९९ ॥

बध्नीयाद्बाहुमूले च रमयेत्परयोषितम् ।
तदारभ्य विटं नारी न त्यजेद्यत्र कुत्रचित् ॥ १०० ॥

केतकीमूलमादाय खण्डयेत्कणशः क्षणात् ।
तत्सर्वं सुशृतं कृत्वा ह्यात्मतोयेन मर्दयेत् ॥ १०१ ॥

[2] मिथस्तच्चूर्णमादाय परनारीस्तनान्तरे ।
मर्दयेन्निद्रितां काले वायुना तद्विशोषयेत् ॥ १०२ ॥

तदौषधप्रभावेन सा नारी वशमाप्नुयात् ।

---

[1] धारयेत्–मु. पा. [2] अथ तच्चूर्ण–मु. पा.

### स्तनपृथूकरणलेपः

वाजिगन्धावचा[1]कुष्टाटङ्कणैश्च लवङ्गकैः ॥ १०३ ॥

नवनीताम्बुसम्मिश्रैर्लेपं कुर्यात्कुचौ पृथू ।
कोलमज्जा हयारिश्च भुजङ्गस्य वसाः समाः ॥ १०४ ॥

एतेषां मर्दनात् स्त्रीणां कुचाः संयान्ति पीनताम् ।
श्रीपर्णिरससंसिद्धं तिलतैलं विलेपनात् ॥ १०५ ॥

पतितावपि [2]जायेतां पीनोत्तुङ्गौ कुचौ स्त्रियाः ।
दाडिमीकल्कसंसिद्धं कटुतैलं विमर्दनात् ॥ १०६ ॥

(स्तनौ चारुतरौ पीनौ नित्यं कुर्यान्मृगीदृशः ।
तैलं तिलोद्भवं गव्यं घृतं चार्कपयः समम् ॥)
बला [3]श्यामलता व्योषा लज्जालुश्च निशाद्वयम् ।
एतेषां कल्कसहितं पचेन्मृद्वग्निना सुधीः ॥ १०७ ॥

[4]ततः क्षामकुचाः स्त्रीणां शीघ्रं यान्ति विशालताम् ।
[5]बलातण्डुलतोयेन तैलमेतत्पिबेद्यदि ॥ १०८ ॥

पीनोत्तुङ्गौ कुचौ तस्या न पतेतां कदाचन ।

### गुह्यसुगन्धीकरणम्

लघ्वग्नौ सार्षपं तैलं जातीपुष्पैः प्रसाधयेत् ॥ १०९ ॥

नारीगुह्यं तदभ्यङ्गात्सुगन्धि सुरते भवेत् ।

### गुह्यसंकोचकविधिः

प्रौढानवप्रसूतानां श्लथं गुह्यं न रोचते ॥ ११० ॥

अतश्च कामिनां प्रीत्यै विधिं संकोचकं ब्रुवे ।
सनाळं कमलं पिष्ट्वा पयसा कारयेद्गुटीम् ॥ १११ ॥

तां निधाय क्षणाद्योनौ वृद्धाऽपि स्यात्कुमारिका ।
देवदारुनिशायुग्मसरसीरुहकेसरैः ॥ ११२ ॥

---

[1] कुष्ठकणाश्वारिलवङ्गकम्—अन. [2] संस्कुर्यात—अन. [3] चामलकं—ग.
[4] तल्लेपेन—अन. [5] शालितण्डुल—मु. पा.

संलिप्तं मदनच्छत्रं संकोचं परमं व्रजेत् ।
त्रिफलाधातकीपुष्पजम्बूत्वक्सारकैः समैः ॥ ११३ ॥

सक्षौद्रैर्लिप्तगुह्या च कन्येव जरती भवेत् ।
मधूककाष्ठसारेण श्लक्ष्णेन मधुना सह ॥ ११४ ॥

वराङ्गं पूरितं यत्नादत्यन्तं दृढतां व्रजेत् ।

मदनाम्भस्स्तम्भनम्

पतनान्मदनाम्भसः पुरा
परितोषो न भवेद्विलासिनीनाम् ।
सुरतोत्सवसिद्धिहेतवे
तदयं स्तम्भविधिर्निरूप्यते ॥ ११५ ॥

लज्जामूलं च गोक्षीरैर्वज्रीक्षीरेण वा पुनः ।
पिष्ट्वा स्वपादौ संलिप्य [1] चिराद्वीजं विमुञ्चति ॥ ११६ ॥

सितकोकिलनाम्नश्च बीजं पुष्योद्धृतं कटौ ।
बद्धं लोहितसूत्रेण बीजस्तम्भं करोत्यलम् ॥ ११७ ॥

बीजं सितपिकाख्यस्य वटक्षीरेण पेषितम् ।
[2] करञ्जसहितं बीजस्तम्भनं वदने धृतम् ॥ ११८ ॥

वाजीकरणम्

शक्तेरभावे स्तम्भादि सर्वमेवाप्रयोजकम् ।
अतः शरीरपुष्ट्यर्थं वाजीकरणमुच्यते ॥ ११९ ॥

चूर्णं विदार्याः स्वरसैर्भावितं भानुशोषितम् ।
मध्वाज्यमिश्रितं [3] भुक्त्वा भजते वनिता दश ॥ १२० ॥

स्वरसैर्भावितं धात्रीचूर्णमाज्यसितान्वितम् ।
क्षौद्रेण विलिहन् रात्रौ वृद्धोऽपि तरुणायते ॥ १२१ ॥

---

[1] चिराद्वीर्यं न मुञ्चति–अन.  [2] करजबीजमध्यस्थं स्तम्भनं–अन.
[3] लीढ्वा–अन.

मधुकं मधुना घृतेन च
  प्रलिहन् क्षीरमनुप्रयोजयन् ।
लभते स न चात्मनः क्षयं
  प्रमदानां प्रियतां च गच्छति ॥ १२२ ॥

स्त्रियो द्रवीकरणसाधनम्

अथ लोकहितार्थाय दम्पत्योः सुखसिद्धये ।
नवौषधविधानेन द्रवमुक्तिरुदीर्यते ॥ १२३ ॥

मधुना सहितं घोषाचूर्णं यस्या वराङ्गके ।
[1] क्षिपेत कामी सा पुंसः प्रागेव द्रवतां व्रजेत् ॥ १२४ ॥

चिञ्चाफलं ससिन्दूरं माक्षिकेण समन्वितम् ।
क्षिप्तं गुह्ये रते योषां प्रागेव द्रवतां नयेत् ॥ १२५ ॥

कर्पूरं टङ्कणं शम्भुबीजं चेति त्रिभिः समैः ।
सक्षौद्रैः[2] लिङ्गलेपाच्च नरः संद्रावयेत्प्रियाम् ॥ १२६ ॥

जीर्णो [3]गुडस्तिन्त्रिणिकाफलं च
  घोषारजः क्षौद्रयुतं समांशम् ।
एभिर्ध्वजं यः परिलिप्य शेते
  कुर्यात्स रेतश्च्युतिमङ्गनायाः ॥ १२७ ॥

वेङ्कटभूपालचरितम्

कामशास्त्रोदिता एवं पदार्थाः परिकीर्तिताः ।
अथ वेङ्कटभूपालचरित्रं परमारभे ॥ १२८ ॥

एवं वेङ्कटभूपालः कामशास्त्रोक्तवर्त्मना ।
भार्यया सार्धमुद्यानसौख्यं समधिकं भजन् ॥ १२९ ॥

राज्यं सुविलसन्नीतिप्राज्यं रक्षन्नवर्तत ।

---

[1] निक्षिप्यते नताङ्गे सा पुंसः प्राग्द्रवतां व्रजेत्–अन.    [2] लिप्तलिङ्गश्च–अन.
[3] गुडश्चिञ्चिणिका–अन.

भद्रप्पनायकजननम्

तस्मादजायत सुतो नाम्ना भद्रप्पनायकः ॥ १३० ॥

उद्गूढदीधितिः क्षीरवाराशेरिव कौस्तुभः ।
तस्य बाल्ये वीरभद्रप्रसादप्राप्तसम्भवः ॥ १३१ ॥

वीरभद्रजननम्

तन्नामा तनुजो जज्ञे श्रिया तत्समतां गतः ।
तं वीरभद्रनामानं पिता भद्रप्पनायकः ॥ १३२ ॥

स्वतनूजं वेङ्कटप्पनायकस्य वशं व्यधात् ।
ततो विषयवैराग्यवशाद्भद्रप्पनायकः ॥ १३३ ॥

जानन्ननेहसाऽल्पेन परमाश्रममाश्रयत् ।
अनन्तरं वेङ्कटप्पनायकः पुत्रसूनुना ॥ १३४ ॥

वीरभद्राभिधानेन साकं सुखमवर्तत ।
ततः कतिपयानेवमतिनीय स वासरान् ॥ १३५ ॥

होळेहोन्नूरुस्थिते वेङ्कटप्पनायके हनुमनायकेन युद्धार्थमागमानम्

होळेहोन्नूरु नामाङ्के प्राकारेऽस्मिन्निवेदुषि ।
सहायमधिकं लब्ध्वा म्लेच्छानां विपुलं बलम् ॥ १३६ ॥

आगत्य चावृणो[1]त्सप्तसालं हनुमनामकः ।
तदैकाकी वेङ्कटप्पनायको हयमुत्तमम् ॥ १३७ ॥

आरुह्य निर्गतः सालाद्बहिर्देशमवाप्य च ।
सङ्गृह्य कियतीं सेनां पुनर्गत्वा च साहसी ॥ १३८ ॥

तं हत्वा पूरयामास वरणाक्रमणं ततः ।

मञ्जलखानं पलाययित्वा हानगल्लुस्थले जयस्तम्भस्थापनम्

[2] तत्सहायागतं म्लेच्छं नाम्ना मञ्जलखानकम् ॥ १३९ ॥

---

[1] द्रुतः सालं–मु. पा.  [2] तत्साहाय्यगतः–मु. पा.

योधयित्वा चिरं तस्यापसर्पणमकारयत् ।
हानगल्लुस्थले कीर्त्यै जयस्तम्भं चखान च ॥ १४० ॥

हनुमप्पज्येष्ठसुतस्य शरणागतिः

हनुमप्पस्य सुतो ज्येष्ठः सन्धित्सुरमुना सह ।
लक्कुवल्लि गाजनूरु शिमोग्गे नामभिः श्रुतान् ॥ १४१ ॥
प्राकारा[1]नुपदं कृत्वा शरणं तं समाश्रयत् ।
शरणागतमत्यर्थं मानयित्वा सहामुना ॥ १४२ ॥
पारे तु तुङ्गभद्रायाः परस्मिन् शिबिरेऽवसत् ।

पराजितस्य हनुमप्पकनिष्ठसुतस्य बाणावरप्रवेशः

तस्यानुजोऽग्रजं दृष्ट्वा तं वैरिशरणागतम् ॥ १४३ ॥
अभ्याययौ योधयितुं बलेन महता सह ।
ततश्चायं नृपो जित्वा दूरमद्रावयच्च तम् ॥ १४४ ॥
विद्रुतः प्राविशत्पश्चाद्बाणावरपुरान्तरम् ।
ततोऽयं स्वपुरं प्राप्य राजा सुखमवर्तत ॥ १४५ ॥

दानिवासादिस्थलस्थितक्षुद्ररिपूणां जयः

ततः परं दानिवासकुम्भसेप्रमुखस्थले ।
स्थितान् क्षुद्ररिपून् सर्वानुन्मूल्य तदनन्तरम् ॥ १४६ ॥
हेब्बे चागरमुख्येषु तेषां स्थानेषु सर्वतः ।
कारयामास दुर्गाणि दुष्प्रधर्षाणि विद्विषाम् ॥ १४७ ॥
सन्मण्डलिकसामन्तराजनामाङ्कितान् रिपून् ।
गलिताहंकृतीन् कृत्वा तेषां स्थानेषु भूयसा ॥ १४८ ॥
चतुर्विधानि मार्गाणि दुष्प्रधर्षाण्यकल्पयत् ।
[2]ततस्तालवराज्यस्य शासित्रीं बहुविक्रमाम् ॥ १४९ ॥

---

[1] नुपधां–मु. पा. [2] ततस्तौलव–मु. पा.

उपद्रुतप्रजां स्वैरं भैरादेवीं पराभवन् ।
बन्दीचकार तां तस्या राज्यमप्याक्रमत्समम् ॥ १५० ॥

ततः परं कतिपयदिनेभ्यः स महीपतिः ।
भट्टं वेणुपुरस्थं शङ्करनारायणाभिधम् ॥ १५१ ॥

सीमान्तस्थायिनां स्वैरमुपद्रवविधायिनम् ।
तं ब्राह्मणतया निन्ये भङ्गं वधविनाकृतम् ॥ १५२ ॥

विप्राणामुचितो दण्डो यत्पुनर्मानखण्डनम् ।
इति नीतिमुपाश्रित्य गर्वनिर्वापणं व्यधात् ॥ १५३ ॥

यथाभिलषितैर्भोग्यभोज्यैस्तं प्रत्यपालयत् ।
जातु कौरवदुर्गाख्ये दुर्गे दुष्टैरधिष्ठिते ॥ १५४ ॥

तान्निगृह्याथ तद्दुर्गं बलिष्ठं विरचय्य च ।
ततो [1]भुवनदुर्गाख्यां दुर्गस्यास्य प्रदाय च ॥ १५५ ॥

तस्योपरिष्टाच्छिखरेश्वरविश्वेश्वराभिधौ ।
लक्ष्मीनारायणं चैव मैलारमपि संज्ञया ॥ १५६ ॥

दुर्गाद्बहिर्विरूपाक्षविठ्ठलौ नरसिंहकम् ।
वृषेन्द्रं वीरभद्रं च गुरुनाथं च कालिकाम् ॥ १५७ ॥

संस्थाप्य कारयामास भवनानि समन्ततः ।

श‍ृङ्गेरिमठस्थापनम्

तत्र श‍ृङ्गपुराधीशस्वामिनां मठमातनोत् ॥ १५८ ॥

अग्रहारं च तत्रैव ब्राह्मणानामकल्पयत् ।
भूरुद्रास्पदमत्यर्थं महान्तं मठमातनोत् ॥ १५९ ॥

तेषामनितरापेक्षां भुवं भूयो वितीर्णवान् ।
अनन्तरं चोच्चसार्वभौमसंस्थानतां गते ॥ १६० ॥

---

[1] वनमु–मु. पा.

अनन्तशिव[1]पुर्याख्ये स्थले चानन्दनामकम् ।
पुरं निर्माप्य तस्यान्तः प्राकारं निरमापयत् ॥ १६१ ॥

तस्यान्तस्ताण्डवेशाख्यमालयेऽस्थापयच्छिवम् ।
तथैव रङ्गनाथाख्य देवस्याप्यालयं नवम् ॥ १६२ ॥

निर्माप्य तस्य पूजार्थं क्षेत्रं भूरि विसृष्टवान् ।
तत्र निःश्रेयसार्थं च भूरुद्राणां महात्मनाम् ॥ १६३ ॥

सन्मठं चम्पकसरोनामकं पर्यकल्पयत् ।
इक्केरी नाम्नि देशे च स सदाशिवसागरम् ॥ १६४ ॥

निर्माप्य नगरं तत्र राजगेहं विधाय च ।
मनोहरं जलक्रीडाप्रासादं चाप्यकारयत् ॥ १६५ ॥

वरदातटनीतीरे विश्वनाथपुराह्वयम् ।
अग्रहारं च विद्वद्भ्यः कारयामास सादरम् ॥ १६६ ॥

वाजपेयादिकान् भूरि कारयन्नपि च क्रतून् ।
स्वमातृनाम्ना वीराम्बापुरमित्यतिविस्तृतम् ॥ १६७ ॥

वधूनाम्नाप्यभिनववीराम्बापुरनामकम् ।
अग्रहारद्वयं कृत्वा विद्वद्भ्यो व्यतरद्वरम् ॥ १६८ ॥

आदिशक्तेर्महेशस्य मूकाम्बाया विशेषतः ।
सुब्रह्मण्यस्य तद्वच्छङ्करनारायणेशितुः ॥ १६९ ॥

देवानामेतदादीनामुपचारक्रिया अपि ।
वर्धयामास तादर्थ्यात्क्षेत्राणि व्यतरत्तथा ॥ १७० ॥

कृतीश्च कारयामास विद्वत्कृतचमत्कृतीः ।
काव्ये च नाटके धर्मशास्त्रादौ च महत्तराः ॥ १७१ ॥

---

[1] पूर्वाख्ये–मु. पा.

एवं तटाकमुख्यं च प्राप्य सन्तानसप्तकम् ।
अष्टैश्वर्ययुतो रक्षन् सप्ताङ्गं राज्यमोजसा ॥ १७२ ॥

धर्मार्थकीर्तिलक्ष्मीभिरिवासौ वयसापि च ।

वीरभद्रप्पनायकस्याभिषेकः

वृद्धत्वं प्राप्तवान् पौत्रं वीरभद्रप्पनायकम् ॥ १७३ ॥

अयोजयद्राज्यलक्ष्म्या जरयाश्लिष्टविग्रहः ।
तस्मै राज्योपभोगांश्च सप्रपञ्चमुपादिशत् ॥ १७४ ॥

पितृव्यचिक्कसङ्कण्णनायकस्य तु पौत्रयोः ।
शिवप्पवेङ्कटप्पाख्याजुषोर्नायकयोर्द्वयोः ॥ १७५ ॥

शिवप्पनायकायात्र सर्वनिर्वहणोद्यमम् ।
उपादिशद्वीरभद्रनायको राज्यशासनम् ॥ १७६ ॥

इति श्रीशिवतत्त्वरत्नाकरे षष्ठकल्लोले बाह्यरतकरणभेदयौवनस्थिरीकरणादिवेङ्कटप्पनायक-
चारित्रवर्णनं नाम त्रयोदशस्तरङ्गः

---

# अकारादिक्रमेण विशेषपदानामनुक्रमणिका

## अ

S. RATNAKARA

छ

## न

फ

भ

म

## ल

